# पाणिनीयव्याकरणे प्रमाणसमीक्षा

कुलपतेः डॉ. मण्डनमिश्रस्य प्रस्तावनया समलङ्कृता

प्रणेता

आचार्यश्रीरामप्रसादत्रिपाठी

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः

वाराणसी

सरस्वतीभवन-अध्ययनमाला

[ ३० ]

# पाणिनीयव्याकरणे प्रमाणसमीक्षा

कुलपतेः डॉ. मण्डनमिश्रस्य प्रस्तावनया समलङ्कृता

प्रणेता

आचार्यश्रीरामप्रसादत्रिपाठी



सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः

SARASVATĪ BHAVANA-STUDIES
[ Vol.20 ]

# PĀṆINĪYA VYĀKARAṆE PRAMĀṆASAMIKṢĀ

*FOREWORD BY*
**DR. MANDAN MISHRA**
**VICE-CHANCELLOR**

*WRITTEN & EDITED BY*
**ĀCĀRYAŚRĪ RĀMAPRASĀDA TRIPĀṬHĪ**
Ex-Professor & Head of Department
Vyākaraṇa-Yoga-Tantra & Āgama
Sampurnanand Sanskrit University
Varanasi



VARANASI
1997

*Research Publication Supervisor—*
**Director, Research Institute,**
Sampurnanand Sanskrit University
Varanasi.



*Published by—*
**Dr. Harish Chandra Mani Tripathi**
Publication officer,
Sampurnanand Sanskrit University
Varanasi-221 002.



*Available at—*
**Sales Department,**
Sampurnanand Sanskrit University
Varanasi-221 002



**Second Edition** — 500 Copies
**Price** — Rs. 400.00



*Printed by—*
**Ratna Printing Works**
B 21/42A, Kamachha,
Varanasi-221 010.

सरस्वतीभवन-अध्ययनमाला

[ २० ]

# पाणिनीयव्याकरणे प्रमाणसमीक्षा

कुलपतेः डॉ. मण्डनमिश्रस्य प्रस्तावनया समलङ्कृता


*प्रणेता*

**आचार्यश्रीरामप्रसादत्रिपाठी**

व्याकरण-योग-तन्त्रागमविभागाध्यक्षचरः,
वेदवेदाङ्गसङ्कायाध्यक्षचरश्च
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी






**वाराणस्याम्**

२०५३ तमे वैक्रमाब्दे १९१८ तमे शकाब्दे १९९७ तमे ख्रैस्ताब्दे

*अनुसन्धानप्रकाशनपर्यवेक्षकः –*
**निदेशकः, अनुसन्धानसंस्थानस्य**
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी ।



*प्रकाशकः –*
**डॉ. हरिश्चन्द्रमणित्रिपाठी**
प्रकाशनाधिकारी,
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
वाराणसी-२२१ ००२



*प्राप्तिस्थानम् –*
**विक्रय-विभागः,**
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
वाराणसी-२२१ ००२



**द्वितीयं संस्करणम्–** ५०० प्रतिरूपाणि
**मूल्यम्–** ४००.०० रूप्यकाणि



*मुद्रकः –*
**रत्ना प्रिंटिंग वर्क्स**
बी. २१/४२ ए, कमच्छा,
वाराणसी-२२१ ०१०.

# प्रस्तावना

न्याय-मीमांसा-वेदान्तादिशास्त्रेष्वाकरग्रन्थानालोड्य तत्रत्यां प्रमाणपरिपाटीं च समूलं विमृश्य प्राक्तनपद्धतिमनुसृत्य पाणिनि-कात्यायन-पतञ्जलि-भर्तृहरि-कैयट-भट्टोजिदीक्षित-कौण्डभट्ट-नागेशभट्टप्रभृतीनां शाब्दिकमूर्द्धन्यानां प्रमाणप्रमेयपद्धतिं सम्यक् परिशील्यैषा समीक्षा षट्सु भागेषु विहिताऽस्ति । समीक्षयाऽनया व्याकरण-शास्त्रस्य प्राचीनतमं दर्शनशास्त्रत्वं प्रकाशितमभवत् ।

अत्र **प्रथमे भागे** व्याकरणदर्शनपद्धत्या प्रमाणसामान्यस्य प्रत्यक्षप्रमाणस्य च लक्षणमव्याप्त्यतिव्याप्त्यसम्भवाख्यदोषत्रयरहितं परिष्कृतमस्ति । एकस्येन्द्रियस्य स्वविषयकप्रत्यक्षकरणेऽन्येषामिन्द्रियाणां सहकारित्वरूपं कर्तृत्वम् । 'अहं पश्यामि', 'वयं पश्यामः' इत्यनयोर्वाक्ययोर्वाचनव्यवस्थाविषये उपपत्तिप्रकारः, इन्द्रियान्तरेणे-न्द्रियान्तरस्यापि विषयस्य सामान्यज्ञानं भवत्येव, अत एव आम्रफलादौ दृष्टे रसविशेषस्य जिज्ञासा भवति, विशेषजिज्ञासां प्रति सामान्यज्ञानस्य हेतुत्वात् । न्यायदर्शनविदस्तु तत्रानुमानप्रमाणेन रसविशेषस्यानुमितिं प्रख्यापयन्ति । तत्तु गौरवदोषदूषितमनुमानस्वरूपम् ।

**द्वितीये भागे** बौद्धपदार्थवादिनां शाब्दिकाचार्याणां पद्धतिमभ्युपगम्य अनुमान-पक्ष-पक्षता-व्याप्ति-परामर्शादीनां निर्दुष्टानि लक्षणानि, अनुमानभेदाः, प्रतिज्ञाहेत्वो-र्लक्षणम्, वाक्यपदीयाभिमतं द्विविधमनुमानम्, तर्क-आत्माश्रय-अन्योन्याश्रय-चक्रक-अनवस्थादिस्वरूपम्, हेत्वाभासानां स्वरूपनिरूपणम्, सर्वं चैतत् स्वशास्त्रदृष्ट्या विमृष्टम् ।

**तृतीये भागे** वाक्यस्य स्फोटरूपता, शक्तिसम्बन्धस्य लक्षणम्, शक्तिभेदाः, शक्ति-नियामक-संयोग-विप्रयोगादयः, लक्षणा-व्यञ्जनयोर्लक्षणम्, आसत्ति-योग्यता-तात्पर्य-ज्ञानादिशाब्दबोधकारणानां सोपपत्तिकं निरूपणम्, शाब्दबोधस्य नानुभवत्वव्या-प्यत्वम्, अपि तु ज्ञानत्वव्याप्यत्वमेव शास्त्रान्तरापेक्षया वैशिष्ट्यातिशयमादधाति ।

**चतुर्थे भागे** अर्थापत्तिप्रमाणसमर्थको वृद्धकुमारीतिवृत्तगर्भः 'नमुने' इति सूत्रीय-महाभाष्यसंवादः, श्रुतार्थापत्ति-दृष्टार्थापत्तिभेदाभ्यामर्थापत्तेर्द्वैविध्यकथनम्, तयोर्लक्षण-स्य परिष्कृतं स्वरूपं च सुष्ठु विवेचितमस्ति ।

**पञ्चमे भागे** चोपमानस्य प्रमाणत्वप्रत्याख्यानं महाभाष्याभिमतम्, अनुमान-प्रमाणेऽस्यान्तर्भावनिरूपणम्, प्रायेण प्रत्यक्षेऽस्या अन्तर्भावः, परन्तु धर्मादिविषये न

प्रत्यक्षस्य योग्यता, अतस्तत्र श्रुति-स्मृत्यादिशब्दस्य प्रमाणत्वम्, अत्यन्ताभावप्रत्यक्षे प्रतियोगिनो योग्यता, अन्योऽन्याभावप्रत्यक्षेऽधिकरणस्य योग्यताऽपेक्ष्यते । क्वचिदनुमानेऽप्यन्तर्भावः, क्वचिच्चार्थापत्तौ, क्वचिदागमे चान्तर्भावो विशदरूपेण विवेचितो वर्तते ।

**षष्ठे शकले** प्रत्यभिज्ञायाः क्वचिदनुमाने क्वचिच्च शब्दादावन्तर्निवेशः, संस्कारेन्द्रियसन्निकर्षाभ्यां सहकृताभ्यां प्रत्यक्षेऽप्यन्तर्भावो वक्तुं शक्यः । अभ्यासस्य, अदृष्टस्य, प्रतिभायाश्च क्लृप्तेषु प्रत्यक्षादिप्रमाणेष्वेवान्तर्भावः स्वीकृतोऽस्ति । एवमेव लोकस्य, कोशस्य, चेष्टायाश्चापि तत्तत्प्रमाणेषु समावेशो द्रष्टव्यः ।

प्रमेयसमीक्षायां शब्द-अर्थ-सम्बन्ध-प्रयोजनानां द्वैविध्येनाष्टौ प्रमेयाः प्रदर्शिताः गुण-क्रिया-लिङ्ग-संख्या-कारकाणि च निरूपितानि, स्फोटानामष्टविधत्वमेव भूषणादि-ग्रन्थेषु प्रोक्तमस्ति; परन्त्वत्र द्वात्रिंशत्संख्याकाः स्फोटाः सप्रमाणं निरूपिताः सन्ति । अनया रीत्याऽत्र ग्रन्थे प्रत्यक्षादिप्रमाणचतुष्टयी विमृष्टा, प्रमेयविषयेऽपि प्रसङ्गत ईषद् विमर्शो व्यधायीति ।

अयमस्ति सौभाग्यस्य विषयो यदस्य ग्रन्थस्य द्वितीयं संस्करणं विश्वविद्यालयेन प्रकाश्यते । एतादृशानां गभीराणां शास्त्रीयाणां ग्रन्थानां लेखकस्य जीवन एव द्वितीयसंस्करणस्य प्रकाशनं किमप्यपूर्वं माहात्म्यं प्रकटयति ग्रन्थस्य लेखकस्य च । अयमस्ति मौलिको ग्रन्थो यस्य लेखका वाराणस्या गौरवभूताः साक्षात्पाणिनेरवतार-भूताः श्रद्धेयाः **आचार्यश्रीरामप्रसादत्रिपाठि**महाशयाः सन्ति । वन्दनीया आचार्यवर्या विश्वविद्यालयस्यास्य कृते विशेषतः प्रतिष्ठास्थानम् । अत्र च पूर्वं व्याकरण-विभागस्याचार्यपदं साङ्ख्ययोगतन्त्रागमविभागस्याप्यध्यक्षपदम्, अनन्तरं वर्तमाने च काले सम्मानिताचार्यत्वं च निर्वहन्तो विदुषामपि मार्गदर्शनं कुर्वन्ति । तेषाञ्च गृहं सर्वदा स्नातकैः शोधार्थिभिः परिपूर्णं भवति, यत्र चाहर्निशं केवलं विद्यायाः साधना प्रचलति, प्रदर्शयति चास्माकं राष्ट्रस्य गौरवास्पदीमाचार्यपरम्पराम् । तेषां समस्तमपि जीवनं प्रेरणादायकम् । एते विद्यया विनयेन विवेकेन च समानरूपेण सम्भूषितायाः सरलतायाः शिष्यजनवत्सलतायाश्च प्रतिमूर्त्तित्वेन राराज्यन्ते । शिष्यसम्पद्-दृष्ट्याऽप्याचार्यत्रिपाठिनो महान्तः सौभाग्यशालिनः । एतेषां शिष्या देशस्य विभिन्नेषु विश्वविद्यालयेषु विद्यापीठेषु च आचार्य-प्राचार्य-प्रभृति-पदेषु विराजमानाः संवर्द्धयन्ति प्राचीनां पाण्डित्यपरम्पराम् । यथा संस्कृतं संस्कृतिश्च वाराणसीं विना तथैव वाराणस्यपि आचार्यत्रिपाठिमहोदयं विना विद्यायाः क्षेत्रे न प्राप्नोति परिपूर्णतामिति सर्वसम्मतं सत्यम् । भारतराष्ट्रपतिभिरेते संस्कृतवैदुष्यक्षेत्रे आजीवनं विंशति-

सहस्ररूप्यकमितेन वार्षिकेण मानदेयेन सह सम्मानप्रमाणपत्रेण सम्मानिताः, उत्तरप्रदेशसंस्कृताकादम्या एकलक्षरूप्यकमितेन **'विश्व-संस्कृत-भारती-'**पुरस्कारेण, नवदेहलीस्थश्रीलालबहादुरशास्त्रिराष्ट्रियसंस्कृतविद्यापीठेन (मानितविश्वविद्यालयेन) च **'महामहोपाध्याय'** इति सम्मानोपाधिना विभूषिताः । अस्यां सम्मानपरम्परायां श्रद्धेयाः श्रीत्रिपाठिमहोदया रामकृष्णडालमियाश्रीवाणीन्यासेन प्रवर्तितेन द्विलक्ष-रूप्यकमितेनाखिलभारतीयपुरस्कारेणापि सम्मानिताः । अयमस्ति दुर्लभः संयोगो यत् तेऽध्यापने लेखने भाषणे उपदेशप्रदाने पौराणिकाख्यानविवेचने च समानरूपेण दक्षाः कुशलिनश्च । ते च सन्ति वाराणस्या विद्वत्परिषदोऽध्यक्षाः । तेषामुपस्थित्यैवासौ विश्वविद्यालयो विविधाश्च शास्त्रीयाः कार्यक्रमा अलङ्कृता भवन्ति ।

तेषामनेन प्रकाशनेनाप्यस्माकं प्रकाशनकार्यक्रमस्य गरिमा सम्पोषितः । अत-स्तेभ्योऽहं विश्वविद्यालयपक्षतः सविनयं कृतज्ञताविनयाञ्जलिं प्रकाशनाधिकारिणे **डॉ. हरिचन्द्रमणित्रिपाठिने,** रत्नामुद्रणालयसञ्चालकाय **श्रीविपुलशङ्करपण्ड्या**महोदयाय धन्यवादान् विज्ञापयन् ग्रन्थमिमं व्याकरणशास्त्रानुरागिभ्यः सादरं सप्रश्रयं समर्पयामि ।

**वाराणसी**
महाशिवरात्रिः,
वि.सं. २०५३

**मण्डनमिश्रः**
कुलपतिः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

# किञ्चिन्निवेदनम्

महतः प्रमोदस्यैतत् स्थानं यत् **"पाणिनीयव्याकरणे प्रमाणसमीक्षा"**-ग्रन्थरत्नस्य चिरात् प्रतीक्ष्यमाणं द्वितीयं संस्करणं सम्पूर्णानन्दसंस्कृतविश्वविद्यालयेन प्रकाश्य भवतां समक्षमुपस्थाप्यते। अदसीयभूमिकाभागे संस्कृतभाषाया वैदिकलौकिकभेदाभ्यां द्वैविध्यम्, लौकिक्या अपि तस्या द्वैविध्यम्, पाणिनीयव्याकरणस्य वैशिष्ट्यम्, पाणिनेः प्राक्तनानां वैयाकरणानां संक्षिप्तः परिचयः, पाणिनिप्रणीतग्रन्थानां नामोल्लेखः, पाणिनीयव्याकरणस्य दार्शनिकत्वपोषकः शब्दब्रह्मवादः, प्रसङ्गतः परमेश्वराद्वयवादः शङ्कराद्वयवादश्च, शब्दब्रह्मणो विवर्तभूताया वैखर्य्या वाच उत्पत्तिविषये मतत्रयम्, व्याकरणशास्त्रस्य लक्षणम्, श्रीमद्भागवतीयं स्फोटश्रुत्या परमात्मपरिचयश्च सङ्कीर्तितोऽस्ति।

**'पाणिनीयव्याकरणे प्रमाणसमीक्षा'**-ग्रन्थस्य अतिसंक्षिप्तो विशेषः प्रस्तूयते–

न्याय-मीमांसा-वेदन्तादिशास्त्रेष्वाकरग्रन्थानालोड्य तत्रत्यां प्रमाणपरिपाटीं च समूलं विमृश्य प्राक्तनपद्धतिमनुसृत्य पाणिनि-कात्यायन-पतञ्जलि-भर्तृहरि-कैयट-हरदत्त-भट्टोजिदीक्षित-कौण्डभट्ट-नागेशभट्टप्रभृतीनां शाब्दिकमूर्धन्यानां प्रमाणप्रमेय-पद्धतिं सम्यक् परिशील्य समीक्षैषा षट्सु भागेषु विहिताऽस्ति।

तत्र **प्रथमे भागे** व्याकरणदर्शनरीत्या प्रमाणसामान्यस्य प्रत्यक्षप्रमाणविशेषस्य च लक्षणम् , एकस्येन्द्रियस्य स्वविषयकप्रत्यक्षकरणेऽन्येषामिन्द्रिणां सहकारित्वरूपं कर्तृत्वम्, 'वयं पश्यामः, अहं पश्यामि' इत्यनयोरुपपत्तिप्रकारः, इन्द्रियान्तरेण इन्द्रियान्तरस्यापि विषयस्य सामान्यज्ञानं भवत्येव, अत एव आम्रफलादौ दृष्टे रसविशेषजिज्ञासा उदेति, विशेषजिज्ञासां प्रति सामान्यज्ञानस्य हेतुत्वात्।

**द्वितीये भागे** – बौद्धपदार्थवादिनां दृष्ट्या अनुमान-पक्ष-पक्षता-व्याप्ति-परामर्शा-दीनां लक्षणानि, अनुमानभेदाः प्रतिज्ञाहेत्वोर्लक्षणम्, वाक्यपदीयाभिमतं द्विविध-मनुमानम्, तर्क-आत्माश्रय-अन्योन्याश्रय-चक्रकादिस्वरूपम्, हेत्वाभासनिरूपणं च।

**तृतीये भागे** – शब्दस्य स्फोटरूपता, शक्तिस्वरूपम्, शक्तिभेदाः, शक्ति-नियामकाः, लक्षणा, व्यञ्जना, शाब्दबोधहेतूनां च विमर्शः, शब्दप्रमाया नानुभवत्व-मपि तु ज्ञानत्वमेव।

**चतुर्थे भागे** – अर्थापत्तिप्रमाणसमर्थको वृद्धकुमारीवृत्तगर्भो 'नमुने'-सूत्रीय-भाष्यसन्दर्भः, अर्थापत्तिभेदाश्च।

**पञ्चमे भागे** – उपमानस्य अनुपलब्धेश्च प्रमाणकोटितो बहिर्भावः ।

**षष्ठे भागे** – व्याकरणदर्शनेऽष्टौ प्रमेयाः, गुण-क्रिया-लिङ्ग-संख्या-कारकाणि, द्वात्रिंशत्संख्याकाः स्फोटाश्च उपवर्णिताः सन्ति ।

अनया रीत्या प्रमाणचतुष्टयी विमृष्टा, प्रसङ्गतः प्रमेयस्यापि ईषद् विमर्शः कृतोऽस्ति ।

**परिशिष्टभागे** – वाक्यस्य स्वरूपविन्यासविवेचने उद्देश्यविधेयवाचकयोः प्रकृति-विकृतिवाचकयोः समभिव्याहारे उद्देश्याद्यनुगुणमाख्यातवचनम्, अथवा विधेया-द्यनुगुणम्, अर्थाद् वेदाः प्रमाणं सन्ति, अस्ति वा, वृक्षः पञ्चनौका भवति, भवन्ति वा, मैथिली रामचन्द्रस्य दारा अस्ति सन्ति वा इत्येवं जिज्ञासायां सप्रमाणं निर्णयो द्रष्टव्यः ?

**'तन्त्रागमशास्त्रदृष्ट्या बौद्धपदार्थविमर्शः'** – तत्र शब्दब्रह्मणा उभयात्मकं रूपम्– शब्दब्रह्म, अर्थब्रह्म च । अपरप्रणवात्मकं शब्दब्रह्म, परप्रणवात्मकमर्थब्रह्म । एतन्नये सृष्टिः परब्रह्मणः परिणामभूता, परिणतेऽपि ब्रह्मणि विकाराभावः, मूलतः सृष्टेर्द्वौ भागौ शब्दमयी अर्थमयी च सृष्टिः । अनयोः सृष्टयोः युगपत्प्रवृत्तिः बीजाङ्कुरच्छा-ययोरिव । वाचकात्मा शक्त्यात्मा च शब्दः, वाच्यात्मकः शिवात्मकश्चार्थः, उभयोरभेदः सम्बन्धः । अन्तःसंजल्परूपायां संविदि अनयोर्द्वयोः समस्फुरणम् । एतत्सर्वं विस्तरेण तत्र द्रष्टव्यम् ।

प्रमाणसमीक्षायां प्रमात्वस्य स्वतः परतो वा उभयथा वा ग्राह्यत्वमित्यत्र नैयायिक-बौद्ध-मीमांसक-जैन-विशिष्टब्रह्माद्वैतवादि-नकुलीश-पाशुपत-शैवाद्यागमिक-सत्कार्य-वादि-विद्याविद्ययोर्ब्रह्मशक्तिवादि-अहं ब्रह्मास्मीत्यपरोक्षसाक्षात्कारवादि-ब्रह्मात्मवादि-कथाकार-नाटकीयपात्र-आगमिक-स्फोटवादि-अस्फोटवादि-आभिचारिक-आलंकारिक-शिवाद्वयवादि-वीरशैव-प्रत्यभिज्ञावादि-क्रमवादिप्रभृतीनां तत्तत्साम्प्रदायिकानां मतान्यनु-सृत्य प्रमात्वं स्वतो ग्राह्यं परतो वा? इत्यादिकं सम्यग् विचारितमस्ति ।

**प्रमात्वस्य परतो ग्राह्यत्वे बीजम्** – प्रमात्वं यदि स्वतो ग्राह्यं स्यात्तदा अनभ्यस्त-प्राथमिकस्फटिकादिज्ञानोत्तरदशायां दूरादवलोकिते स्फटिके, स्फटिकज्ञानं प्रमा न वा ? इत्यनुभवसिद्धप्रमात्वसंशयो नोपपद्येत, तत्र स्फटिकज्ञानप्रामाण्यस्यानुव्यव-सायेन निश्चितत्वात् । तस्माज्ज्ञानप्रामाण्यमनुमेयम् । स्फटिक इति ज्ञानं प्रमा-संवादिप्रवृत्तिजनकत्वात् । शुक्तौ रजतज्ञानम् अप्रमा, विसंवादिप्रवृत्तिजनकत्वात्–

इत्येवमनुमितिग्राह्यत्वं प्रमात्वाप्रमात्वयोः । एवमेव समेषां दर्शनानां पक्षतो भूयान् विचारः कृतो वर्तते – परिशिष्टे प्रमात्वविषयके विमर्शे, तत्र द्रष्टव्यः ।

प्रमादात् त्रुटयोऽवश्यं सम्भवन्ति, ताः संशोध्य विद्वांसो गृह्णन्तु, यदि तैस्त्रुटयः सूचिता भविष्यन्ति, तदाऽग्रिमे संस्करणे संशोधनं भविष्यति ।

एतस्य द्वितीयसंस्करणस्य प्रकाशने भूतपूर्वकुलपतेर्माननीयस्य **श्रीवेङ्कटाचलम्**-महोदयस्य, वर्तमानकुलपतेः परमश्रद्धेयस्य श्रीमतो **मण्डनमिश्र**महोदयस्य चानुग्रहः, प्रकाशनाधिकारिणः पण्डितप्रवर**श्रीहरिश्चन्द्रमणित्रिपाठिनः**, **श्रीहरिवंशकुमारपाण्डेयस्य** तद्विभागीयानामन्येषां च कर्मचारिणां समीचीनः सफलः प्रयत्नश्च प्रयोजक इति कृत्वा ते यथायोग्यमभिवादनेन शुभाशीर्वचसा च सत्क्रियन्त इति ।

**वाराणसी**
मकरसङ्क्रान्तिः,
वि. सं. २०५३

**रामप्रसादत्रिपाठी**
सम्मानितप्राध्यापकः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

|| श्रीहरिः शरणम् ||

# भूमिका

**पाणिनिं सूत्रकारं च भाष्यकारं पतञ्जलिम् ।**
**वाक्यकारं वररुचिं प्रणतोऽस्मि मुनित्रयम् ॥**

स्थावरजङ्गमात्मिकां सृष्टिं विरचय्य असन्तुष्टमना ब्रह्मदेवो ब्रह्मावलोकधिषणं मनुजं निर्माय परमं मुदमवाप्तवान् । अत्र ब्रह्मावलोकधिषणे विशेषणस्य चारितार्थ्यसम्पत्तये काचन भाषाऽपि तेन प्रदत्ता स्यात्, यया मानवेषु ब्रह्मतत्त्व-ज्ञानार्थं गुरुशिष्यपरम्परा, समाजरचना च स्यात् । सा च भाषा संस्कृता एव भवितुमर्हति, सैव सृष्टिकालतः प्रचलन्ती आस्ते । अस्याश्च संस्कृतभाषाया वैदिक-लौकिकभेदाभ्यां द्वैविध्यमस्ति । तत्र वैदिकी भाषा अपौरुषेयी परमेश्वरवाणी इत्युच्यते, वेद-ब्राह्मणारण्यकोपनिषदात्मिका सा । लौकिकी संस्कृतभाषाऽपि द्विविधा, द्विजातिकृतव्यवहारविषयभूता, तदितरमानवसाधरणव्यवहारविषयमाप्ता च ? उक्तं च वाल्मीकीयरामायणे सुन्दरकाण्डे –

**यदि वाचं प्रदास्यामि द्विजातिरिव संस्कृताम् ।**
**रावणं मन्यमाना मां सीता भीता भविष्यति ॥**
**वाचं चोदाहरिष्यामि मानुषीमिह संस्कृताम् ॥** इति ।

तत्राऽस्याः संस्कृतभाषायाः स्वरूपज्ञानाय तद्रक्षायै च व्याकरणशास्त्रमपि नितरामावश्यकतां बिभर्ति, तदपि सृष्टिकालत एव प्रादुरभवत् । उक्तं च–

**सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत ।**
**अत्रा सखायः सख्यानि जानते, भद्रैषां लक्ष्मीर्निहिताऽधिवाचि ॥**

अस्मिन् मन्ये 'तितउ' (चालनी) यथा सक्तुं पुनाति, तथैव व्याकरणं शब्दं पुनाति, अनया रीत्या व्याकरणं सङ्कीर्तितमस्ति । तत्र वाजसनेयि-गोपथप्रभृति-विविधप्रातिशाख्येषु व्याकरणशास्त्रीयनियमादीनां विशेषतो विवरणं समुपलभ्यते । प्राच्य-नव्यबहुतरव्याकरणेषु ऐन्द्र-काश्यप-भारद्वाज-शाकटायन-शौनकीय-पाणिनीयानि व्याकरणानि लौकिक-वैदिकसमस्तसंस्कृतशब्दानुशासकत्वेन नितरां विशिष्यन्ते । यथा प्रमाण-प्रमेयादि-विवेचकं न्यायदर्शनं सूक्ष्मतमं विप्रतिपन्नमर्थं परीक्ष्य निर्णयति,

मीमांसादर्शनं वाक्यार्थनिश्चये सामर्थ्यमादधाति, तथैव व्याकरणदर्शनं संस्कृत-शब्दानां स्वर-वर्ण-मात्रादिज्ञापनपूर्वकं साधुत्वं ज्ञापयति। एतच्च साधुत्वमर्थविशिष्ट-शब्दनिष्ठः पुण्यजनकताऽवच्छेदको जातिविशेषः। एतज्ज्ञापनं व्याकरणशास्त्रस्या-नितरसाधारणं कृत्यं मन्यते।

अपौरुषेयार्षग्रन्थेषु सम्प्राप्तप्रमाणानुसारं संस्कृतव्याकरणस्यादिवक्ता ब्रह्मा आसीत्, तेन समुपदिष्टो बृहस्पतिर्द्वितीयः प्रवक्ता बभूव। तेन बृहस्पतिना प्रशिक्षितः कश्यपमहर्षेरात्मज इन्द्रदेवः प्रकृतिप्रत्ययविभागगर्भस्य व्याकरणस्यादि-संस्कर्ताऽभवत्। इदमैन्द्रं व्याकरणं सर्वेषु व्याकरणेषु प्राचीनतमं मन्यते, इतराणि तस्मादर्वाक्तनानि मन्यन्ते। उक्तं च मुग्धबोधकृतकविकल्पद्रुमे ग्रन्थे प्रारम्भ एव–

**इन्द्रश्चन्द्रः काशकृत्स्नश्चापिशली शाकटायनः।**
**पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादिशाब्दिकाः॥**

सर्वाणि संस्कृतव्याकरणानि त्रिधा विभक्तुं शक्यन्ते –

१. केवलानि प्रातिशाख्यादीनि वैदिकव्याकरणानि।

२. केवलानि लौकिकशब्दपराणि कातन्त्रादीनि।

३. लौकिक-वैदिकोभयविधशब्दसंस्कारकरणानि आपिशलीय-पाणिनीयानि[1]।

तत्रापि पाणिनिमुनिमवधिं कृत्वा वैयाकरणानां द्वेधा विभागः कर्तुं शक्यते–

१. पाणिनेः पूर्वभवा भरद्वाजापिशलिप्रभृतयः।

२. पाणिनेः पश्चाद्भवा वामन-भोजराजादयः।

पाणिनिमुनेः प्राक्तना अपि वैयाकरणा द्विविधा भवन्ति–

१. पाणिन्यनुल्लिखिता इन्द्र-भरद्वाज-व्याडिप्रभृतयः।

२. पाणिन्युल्लिखिताः शाकटायन-गार्ग्य-गालव-सेनकप्रभृतयः।

पाणिनिनाऽनुत्कीर्तिता वैयाकरणा अग्रलिखिता द्रष्टव्याः –

---

1. पणनं पणः। पणव्यवहारे स्तुतौ च इत्यस्माद् 'घञर्थे कविधानम्' इति कप्रत्ययः सोऽस्यास्तीति पणी, 'अत इनिठनौ' इति सूत्रेण इनिप्रत्ययः। तस्य गोत्राऽपत्यं पाणिनिः। 'तस्यापत्यम्' इत्यणप्रत्ययः। अत्र 'नस्तद्धिते' इति टिलोपो न भवति। 'गाथिविदथिकेशिगणिपणिनश्च' इति सूत्रेण अणप्रत्यये परे प्रकृतिभावविधानात्। ततोऽनन्तरापत्ये, पणिनो युवापत्ये वा 'अत इञ्' इत्यनेन इञ्प्रत्यये सति अकारलोपे च पाणिनिशब्दो निष्पद्यते।
अत्र 'ण्यक्षत्रियार्षञितो यूनि लुगणिञोः' इति सूत्रेण इञो लुक् कस्मान्न भवति? इति शङ्कायामुच्यते सिद्धान्तकौमुद्याम्–आर्षग्रहणेन प्रतिपदोक्तस्य ऋष्यण एव ग्रहणात्। अत्र तु तादृशोऽण् नास्ति। पुनश्च पाणिनिना प्रोक्तं पाणिनीयम्। 'वृद्धाच्छः' इति छप्रत्यये सति ईयादेशः। 'इञश्च' इति अण् तु न शङ्क्यम्, गोत्रे य इञ् तदन्तादिति उक्तत्वात्।

**१. इन्द्रः** – विक्रमपूर्वीयेभ्यः ८५०० वर्षेभ्यः प्राक्तन आसीत्[1] । एतत्प्रणीतं व्याकरणं जैनशाकटायनव्याकरणे सङ्कीर्तितमस्ति ।

**२. वायुः** – विक्रमपूर्वीयेभ्यः ८५०० वर्षेभ्यः पूर्वकालिक आसीत् । एतद्विरचितं वायुनामकं व्याकरणं कवीन्द्राचार्यस्य ग्रन्थसूच्यामुल्लिखितमस्ति ।

**३. भरद्वाजः** – विक्रमपूर्वीयेभ्यः ८३०० वर्षेभ्यः प्राक्कालिक आसीत् । ऋक्तन्त्रे एतदीयं व्याकरणं सङ्कीर्तितमस्ति ।

**४. भागुरिः** – विक्रमपूर्वीयेभ्यः ३१०० वर्षेभ्यः पूर्वसामयिक आसीत् । अदसीय-व्याकरणस्य चर्चा शब्दशक्तिप्रकाशिकायामस्ति ।

**५. पौष्करसादिः** – असौ विक्रमपूर्वीयेभ्यः ३१०० अब्देभ्यः पूर्वकालिक आसीत् । एतत्प्रणीतस्य पौष्करसादिव्याकरणस्य तैत्तिरीये प्रातिशाख्ये, मैत्रायणीये प्रातिशाख्ये च सान्दर्भिकः सङ्केतः प्राप्यते ।

**६. चारायणः** – असावपि विक्रमपूर्वीयेभ्यः ३१०० वर्षेभ्यः प्राक्तन आसीत् । चारायणव्याकरणस्यास्य पतञ्जलिविरचिते व्याकरणमहाभाष्ये सन्दर्भो दृश्यते ।

**७. काशकृत्स्नः** – अयं महान् वैयाकरणः विक्रमपूर्वीयेभ्यः ३१०० वर्षेभ्यः पूर्व-सामयिक आसीत् । अस्याध्यायत्रयसंवलितस्य काशकृत्स्नव्याकरणस्योक्तव्याकरण-महाभाष्ये उल्लेखः प्राप्यते ।

**८. वैयाघ्रपद्यः** – अयं विक्रमपूर्वीयेभ्यः ३१०० अब्देभ्यः पूर्वकालिक आसीत् । अस्य दशाध्यायोपेतस्य वैयाघ्रपद्यव्याकरणस्य जयादित्यवामनाभ्यां रचितायां पाणिनीया-ष्टाध्यायीपाठस्य काशिकावृत्त्यां सङ्केतो वर्त्तते ।

**९. माध्यन्दिनिः** – असौ विक्रमपूर्वीयेभ्यः ३००० संवत्सरेभ्यः पूर्वकालिक आसीत् । एतत्प्रणीतस्य माध्यन्दिनव्याकरणस्य समुल्लेखः काशिकावृत्तौ कृतो दृश्यते ।

**१०. रौढिः** – अयमपि विक्रमपूर्वीयेभ्यः ३००० वर्षेभ्यः प्राक्तन आसीत् । रौढि-व्याकरणस्योट्टङ्कनं काशिकावृत्तौ दृश्यते ।

**११. शौनकिः** – अयं विक्रमपूर्वीयेभ्यः ३००० समाभ्यः पूर्वसामयिक आसीत् । शौनकिव्याकरणस्यास्य समुल्लेखः जेज्जटप्रणीतायां चरकसंहितायाष्टीकायां कृतो दृश्यते ।

**१२. गौतमः** – असावपि विक्रमपूर्वीयेभ्यः ३००० वर्षेभ्यः पूर्वसामयिक आसीत् । गौतमव्याकरणस्योल्लेखो व्याकरणमहाभाष्ये उपलभ्यते ।

---

1. द्रष्टव्यम्–संस्कृतवाङ्मयम् – आचार्यहरिकृष्णशास्त्रिदातारः ।

१३. **व्याडिः** – विक्रमपूर्वीयेभ्यः २८५० वत्सरेभ्यः पूर्वसामयिक आसीत् । अस्य व्याकरणम् ऋक्प्रातिशाख्ये विनिर्दिष्टं वर्त्तते ।

एतदतिरिक्ताः पाणिन्यनुल्लिखिताः, अपि तु वैदिकप्रातिशाख्येषु समुदाहृता वैयाकरणाः, द्विचत्वारिंशत्संख्याका अधोलिखिता वर्त्तन्ते –

अग्निवेश्यः, अग्निवेश्यायनः, अन्यतरेयः, अगस्त्यः, आत्रेयः, उख्यः, उत्तमोत्तरीयः, औदव्रजिः, औपशविः, काण्डमायनः, कात्यायनः, काण्वः, कौण्डिन्यः, कौहलिपुत्रः, जातूकर्ण्यः, दाल्भ्यः, नैगी, पञ्चालः, प्राच्यपञ्चालः, प्लाक्षायणः, प्लाक्षिः, बाभ्रव्यः, माक्षव्यः, माचाकीयः, माण्डुकेयः, मीमांसकः, यास्कः, वाडवीकरः, वात्सप्रः, वाल्मीकिः, वेदमित्रः, शाकलः, शाकल्यपिता, शाङ्खमित्रिः, शाङ्खायनः, शूरवीरः, शूरवीरसुतः, शैत्यायनः, स्थविरकौण्डिन्यः, स्थविरशाकल्यः, साङ्कृत्यः, हारीतश्च ।

महर्षिपाणिनिना समुल्लिखिता व्याकरणप्रणेतारोऽधोनिर्दिष्टाः –

१. **आपिशलिः** – अयं विक्रमपूर्वीय-२९०० वर्षपूर्वसामयिक आसीत् । अस्योल्लेखो महर्षिणा पाणिनिना स्वकीये सूत्रपाठे (अष्टाध्यायीसूत्रपाठे–६/१/ ९२) कृतो दृश्यते । अनेन विरचिता ग्रन्थाः – आपिशलिव्याकरणम्, धातुपाठः, गणपाठः, उणादिसूत्रम्, शिक्षा, कोशः, अक्षरतन्त्रम्, सामप्रातिशाख्यञ्च ।

२. **काश्यपः** – असौ विक्रमपूर्वीय-२९०० वत्सरपूर्वसामयिक आसीत् । अस्योट्टङ्कनं पाणिनिना स्वीये सूत्रपाठे (१/२/२५) कृतमस्ति । ग्रन्थोऽस्य काश्यपव्याकरणमिति ज्ञायते ।

३. **गार्ग्यः** – महर्षिगार्ग्यः विक्रमपूर्वीय-३१०० वर्षपूर्वकालिक आसीत् । अस्योल्लेखः पाणिनेः सूत्रपाठे (८/३/२०) विद्यते । एतद्विरचितं गार्ग्यव्याकरणं श्रूयते ।

४. **गालवः** – अयं विक्रमपूर्वीय-३१०० संवत्सरपूर्वसामयिक आसीत् । अस्योल्लेखः पाणिनेः सूत्रपाठे (६/३/६१) कृतो दृश्यते । एतत्प्रणीतं गालवव्याकरणं विद्यमानमस्तीति वयं शुश्रुमः ।

५. **चाक्रवर्मणः** – अयं विक्रमपूर्वीय-३१०० वर्षपूर्वकालिक आसीत् । अस्योल्लेखः पाणिनीयसूत्रपाठे (६/१/३०) कृतो दृश्यते । अनेन विरचितं चाक्रवर्मण-व्याकरणमिति श्रूयते ।

६. **भारद्वाजः** – अयं विक्रमपूर्वीय-२८०० वर्षपूर्वकालिक आसीत् । अस्य सङ्कीर्तनं पाणिनीयसूत्रपाठे (४/२/१४५) कृतं दृश्यते । एतेन विरचितं भारद्वाजव्याकरणं वर्त्तते ।

**७. शाकटायनः** – अयं विक्रमपूर्वीय-३००० वर्षसामयिक आसीत् । अस्य नाम सङ्कीर्तनं पाणिनिना स्वीये सूत्रपाठे (३/४/११) कृतमस्ति । एतेन प्रणीता ग्रन्था इमे सन्ति –

(१) शाकटायनव्याकरणम्
(२) दैवतग्रन्थः
(३) कोशः
(४) ऋक्तन्त्रम्
(५) लघुऋक्तन्त्रम्
(६) सामतन्त्रम्
(७) पञ्चपादी-उंणादिसूत्रम्
(८) श्राद्धकल्पश्च

**८. शाकल्यः** – असौ विक्रमपूर्वीय-४००० वर्षपूर्वसामयिक आसीत् । अस्य नामग्रहणं पाणिनिना स्वीये सूत्रपाठे (१।१।१६) कृतमस्ति । अस्य नाम्ना शाकल्यव्याकरणमिति उपलभ्यते ।

**९. सेनकः** – अयं विक्रमपूर्वीय-२९०० संवत्सरेभ्यः: प्राक्कालिक आसीत् । अस्योल्लेखः पाणिनिना स्वीये सूत्रपाठे (५।४।११) कृतोऽस्ति । एतस्य नाम्ना शाकल्यव्याकरणं समुपलभ्यते ।

**१०. स्फोटायनः** – अयं विक्रमपूर्वीय-२९०० वर्षेभ्यः प्राक्तन आसीत् । अस्योल्लेखः पाणिनिना स्वीये सूत्रपाठे (६।१।१२३) कृतो दृश्यते । स्फोटायनव्याकरणमस्य कृतिरिति श्रूयते । असावेव स्फोटवादोद्भावक आसीत् ।

## पाणिनीयं व्याकरणम्

विक्रमपूर्वीय-२८०० वर्षपूर्वकालिकस्ततपःपूतान्तःकरणः मुनिपुङ्गवः (शालङ्किः) पाणिनिर्व्यरीरचद् व्याकरणं व्याकरणान्तरविलक्षणं लक्षणं प्रेक्षाप्रकर्षस्य, परमेश्वर-शिवस्य प्रसादादासादितं वैदिकावैदिकसंस्कृतशब्दानुशासनात्मकं कृत्स्नम् । इदानीं यावत् समुपलब्धेषु प्रतननूतनेषु नितरां समाद्रियते विद्वज्जनैः । छान्दसलौकिकोभयविधानां संस्कृतशब्दानां संशुद्धि-साधुत्वादीनां नियमव्यवस्थापकमेतत् पाणिनिप्रणीतं शब्दानुशासनं वास्तविकशब्दार्थावबोधनार्थं प्रतिपदं पदानि (शब्दान्) परिव्याकरोति । परिष्करणार्थं परिष्करोति च ।

**अज्ञानान्धस्य लोकस्य ज्ञानाञ्जनशलाकया ।**
**चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥**

इति पाणिनिप्रशस्तिपद्यानुसारेण, अनितरकृतप्रयत्नफलमिदं व्यकरणं प्रेक्षावतां जनुष्मतां कृते संस्कृतं चाविकलस्वरूपं नूनं निपुणं निर्दिशति ।

**पाणिनिप्रणीता ग्रन्थाः**

अष्टाध्यायीशब्दानुशासनम्, सूत्रात्मकं व्याकरणम्, धातुपाठः, गणपाठः, परिभाषापाठः, उणादिसूत्रम्, लिङ्गानुशासनम्, अष्टाध्यायीसूत्रपाठस्य स्वोपज्ञवृत्तिः, अष्टाध्यायीप्रवचनम्, शिक्षा, द्विरूपकोशः, जाम्बवतीविजयकाव्यञ्च ।

पाणिनीयव्याकरणस्य (अष्टाध्यायीसूत्रपाठस्य) वार्तिककारेषु विक्रमपूर्वीय-२७०० वर्षपूर्वसामयिको वररुचिकात्यायनो भृशं विशिष्यते ।

पाणिनीयाष्टाध्यायीसूत्रपाठस्य वृत्तिप्रणेतृषु जयादित्यवामनौ, एताभ्यां प्रणीतया काशिकावृत्त्या सम्प्रत्यपि विशेषतयाऽध्ययनाध्यापनादिषु नितरां समाद्रियेते ।

पाणिनीयव्याकरणस्य (अष्टाध्यायीसूत्रपाठस्य) महाभाष्यप्रणेता विक्रमपूर्वीय-१२०० वर्षपूर्वकालिकः पतञ्जलिरासीत् । पतञ्जलिनाऽस्मिन् भाष्ये न केवलाः पाणिनिप्रोद्भाविताः शब्दानुशासनविषयकाः सिद्धान्ता विवृताः, अपि तु दार्शनिक-धार्मिकैतिहासिकव्यावहारिकादिविषयान् समधिकृत्य प्रतिपादिताः सिद्धान्ता अपि यथास्थानं सपरिकरं विवेचिता ज्ञायन्ते ।

अतस्तावत् पाणिनिविरचितं व्याकरणं व्याकरणान्तरेषु समेषु, कात्यायन-विरचितवार्तिकेन, पतञ्जलिप्रणीतमहाभाष्येण च महनीयं पदमेतावतापि सम-लङ्करोति ।

संस्कृतभाषाऽनुशासकस्य पाणिनीयव्याकरणस्यालौकिकमांध्यात्मिकं पक्षं प्रौढ-त्वेन प्रस्थापयन् व्याकरणमर्मज्ञस्तार्किकप्रवरो भर्तृहरिर्व्याकरणदर्शनस्य समुद्भावनं स्वप्रणीते वाक्यपदीयग्रन्थे सविस्तरं प्रत्यपादयत् ।

एतस्मिन् समाख्यातेषु दार्शनिकसिद्धान्तेषु विवर्तवाद-स्फोटवादौ विशेषतो विवृतौ संविभाव्येते ।

"अतत्त्वतोऽन्यथाप्रथा विवर्त इत्युदीरितः" इत्यनुसारं रज्ज्वाः सर्परूपेणेव शब्दब्रह्मणो जगद्रूपेण (पदार्थरूपेण) विवर्त इति ज्ञायते । 'स्फोटाख्यो निरवयवो नित्यशब्दो ब्रह्मैवेति' इति वाक्यपदीयोक्तदिशाऽर्थाभिव्यक्तिजनकनित्यशब्दस्फो-टस्य, वाक्यस्फोटस्य वा ब्रह्मरूपत्वं प्रतिपद्यते ।

**व्याकरणदर्शनीयः शब्दब्रह्मवादः**

यथा 'सच्चिदानन्दं ब्रह्म' इत्यनया श्रुत्या ब्रह्मणः सद्रूपत्वं चिद्रूपत्वमानन्दरूपत्वं च प्रतिपादितमस्ति, तथैव 'वाग्वै ब्रह्म' इत्यनया श्रुत्या ब्रह्मणो वाग्रूपत्वमपि विज्ञापितमस्ति ।

'ते मृत्युमतिवर्तन्ते, ये वै वाचमुपासते' इत्यनया श्रुत्या वाग्देव्या उपासनया मृत्युसन्तरणं फलं बोधितमस्ति । यथा 'तमेव विदित्वातिमृत्युमेति, नान्यः पन्था विद्यतेऽयनाय' अस्य वेदवचसोऽवधारणात्रितयगर्भव्याख्यानेन मृत्युसन्तरणं बोध्यते, तथा हि 'तमेव विदित्वाऽतिमृत्युमेति', 'तं विदित्वैवातिमृत्युमेति, तं विदित्वा मृत्युमत्येत्येव' इति । एवमेवोक्तश्रुत्याऽपि 'वाग्देव्या एवोपासनया मृत्युमतिवर्तन्ते, वाग्देव्या उपासनयैव मृत्युमतिवर्तन्ते, वाग्देव्या उपासनया मृत्युमतिवर्तन्त एव' इति ।

'असति बाधके सर्वं वाक्यं सावधारणं भवति' इति न्यायमनुसृत्येदं विधीयमानं व्याख्यानं विद्वद्वरेभ्यो भृशं रोचये । यदि तु तमेव विदित्वेत्यत्र ब्रह्मतत्त्वस्य साक्षात्कारो मृत्युतरणे उपायत्वेन सङ्केतितोऽस्ति, तर्ह्यत्रापि ब्रह्मरूपाया वाग्देव्या उपासना तादात्म्येन साक्षात्कार एवेति नास्ति लेशतोऽपि विसंवादः ।

एतस्य शब्दब्रह्मणः परावाग्रूपता प्रतिपादिता भगवता महाभाष्यकृता । तथा च–

**चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः ।**
**गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति ॥**

अत्र प्रदीपकृता श्रीकैयटेन– 'गुहा'- पदस्याज्ञानमर्थः प्रत्यपादि, तुरीयं वाच इत्यादेस्तत्र चतुर्णां पदजातानामेकैकस्य चतुर्थं भागं मनुष्या अवैयाकरणा वदन्तीति व्याख्यानं कृतम् । उद्द्योतकृता श्रीनागेशभट्टेन–'पदजातानि' इत्यस्य परा-पश्यन्ती-मध्यमा-वैखर्यः, नामादीनि च । नामादीनां मध्ये चैकैकं चतुष्पादम्, मनस ईषिणश्चित्तशुद्धिक्रमेण वशीकर्तारो विषयान्तरे व्यावृत्त्या हिंसका वा, ते च वैयाकरणाः ।

**'चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य ।**
**त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ आविवेश' ॥**

इति ऋङ्मन्त्रस्य व्याख्याऽवसरे भगवान् भाष्यकारो व्याचष्टे–

"महो देवो मर्त्याँ आविवेश, महान् देवः शब्दः, मर्त्या मरणधर्माणो मनुष्याः-स्तानाविवेश । महता देवेन नः साम्यं यथा स्यादित्यध्येयं व्याकरणम्" इति ।

अत्र प्रदीपकारेण श्रीकैटेन – महतेत्यस्य 'परेण ब्रह्मणा' इत्यर्थः कृतः । उद्द्योतकृता श्रीनागेशभट्टेन – महान् परब्रह्मरूपो देवोऽन्तर्यामिरूपः शब्दो मर्त्येष्वाविष्ट इत्यर्थः, तदावेशकत्वमाह – महता देवेनेति । साम्यं सायुज्यम् । तदुक्तं हरिणा –

**अपि प्रयोक्तुरात्मानं शब्दमन्तरवस्थितम् ।**
**प्राहुर्महान्तमृषभं येन सायुज्यमिष्यते ॥** इति ।

आह च – **"चत्वारि शृङ्गा त्रयो अस्य पादा"** इत्यादि - ऋङ्मन्त्रः ।

इह द्वौ शब्दात्मानौ– कार्यो नित्यश्च । तत्रान्त्यः सर्वेश्वरः सर्वशक्तिर्महान् शब्द-वृषभस्तस्मिन् खलु वाग्योगवित् शास्त्रजशब्दज्ञानपूर्वकं प्रयोगेण क्षीणपापः पुरुषो विच्छिद्याहङ्कारग्रन्थीनत्यन्तं संसृज्यत इति तदर्थं तथा व्याख्यातारः । एभिर्भाष्य-प्रदीपोद्द्योतग्रन्थैः साधुशब्दस्य शास्त्रजन्यज्ञानपूर्वकप्रयोगेण शब्दब्रह्मणा सह सायुज्यावाप्तिरूपं फलं सम्यगवबोधितम् ।

आचार्यश्रीभर्तृहरिरपि एतद्विषये सुस्पष्टं प्रतिपादयति–

**अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।**
**विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः** ॥ इति ।

(वा. प. १।१)

अस्मिन्नेव ब्रह्मकाण्डे त्रयोदशकारिकायामुच्यते–

**"तत्त्वावबोधः शब्दानां नास्ति व्याकरणादृते"** । इति ।

अत्र शब्दानां तत्त्वं साधुत्वं तस्यावबोधो निश्चयो व्याकरणादेव भवति, न श्रोत्रादिभ्य इति भावः ।

इत्थं व्याकरणस्य प्रयोजनमभिधायापवर्गसम्पादनरूपं मुख्यं प्रयोजनमग्रिम-चतुर्दशकारिकायामुच्यते –

**तद्द्वारमपवर्गस्य वाङ्मलानां चिकित्सितम् ।**
**पवित्रं सर्वविद्यानामधिविद्यं प्रकाशते** ॥ इति ।

अयं भावः – तद् व्याकरणमपवर्गस्य द्वारम् – उपायः, तद्यथा साधुशब्द-ज्ञानपूर्वकात् प्रयोगाद् अभिव्यक्तधर्मराशिर्महान्तं शब्दात्मानं प्राप्नोति । तथा हि – व्याकरणसंस्कृतचेतसा पूर्वं वैखरीद्वारा मध्यमामधिगम्य शब्दार्थ-ज्ञानहेतुभूतां पश्यन्तीं पश्यति, तदनु शब्दप्रयोगाभ्यासभावनावशाद् अनावृतां विशुद्धां पराख्यां वाचं प्राप्नोति, तत्तादात्म्यमाप्नोति, इदं तादात्म्यमेवापवर्गः । प्रत्यवायजनकापभ्रंश-प्रयोगरूपस्यापवर्गप्रतिबन्धकस्यापनयनाय व्याकरणस्योपयोग उच्यते – वाङ्मलानां प्रत्यवायहेतूनां वाचोमलानां दुष्टोच्चारणरूपाणां चिकित्सितं सर्वविद्यानां पवित्रम्, तथा चोक्तम् –

**"आपः पवित्रं परमं पृथिव्याम् अपां पवित्रं परमं च मन्त्रः ।**
**तेषां च सामर्ग्यजुषां पवित्रं महर्षयो व्याकरणं निराहुः" ॥**

तथा च सर्वासु विद्यासु प्रकाशते, अपभ्रंशप्रयोगाभावाय अपेक्ष्यत इत्यर्थः । अथ च मोक्षमाणानां कृते निष्कपटमार्गरूपं व्याकरणम् –

**इयं सा मोक्षमाणानामजिह्मा राजपद्धतिः**[1] ।

अतश्च पुनरपि–

**अत्रातीतविपर्यासः केवलामनुपश्यति ।**

अत्र व्याकरणशास्त्रेऽपगतशब्दार्थविपर्यासः सन् छन्दस्यः छन्दसे वेदाय हितो वेदग्रहणसमर्थ आत्मा केवलां परां पश्यति । सा च –

**स्वरूपज्योतिरेवान्तः परावागनपायिनी ।**
**तस्यां दृष्टस्वरूपायामधिकारो निवर्तते ॥**

यदिदं केचनाचार्याः कथयन्ति– वाक्यपदीये पराख्याया वाचः सङ्केतो नास्ति, वैखर्या मध्यमायाः पश्यन्त्याश्चेति तिसृणामेव वाचां चर्चा वर्तते, तद् दूरापास्तम् । "अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्" इति प्रथमया एव कारिकया, "अत्रातीतविपर्यासः केवलामनुपश्यति" इति सप्तदशकारिकया च तस्या एव सन्देशः प्रस्तावितोऽस्ति । किञ्च –

**वैखर्य्या मध्यमायाः पश्यन्त्याश्चैतदद्भुतम् ।**
**अनेकतीर्थभेदायास्त्रय्या वाचः परं पदम् ॥**

(वा. प.१।१४३ )

इत्यनया कारिकयाऽपि परमिति नपुंसकलिङ्गीयप्रथमैकवचनान्तेन पदेनापि तस्याः सङ्केत आयाति, तथा हि 'त्रय्या वाचः पदं प्रतिष्ठास्थानं परं परावाक्तत्त्वमस्ति' इत्येवं व्याख्यानेन, कारिकायाश्चास्याः टीकादर्शनेन[2] च तस्याः सूचना भृशं प्राप्यते । यत्तु महाभाष्येऽपि – 'चत्वारि वाक् परिमिता पदानि' इति मन्त्रस्य व्याख्याऽवसरे 'चत्वारि पदजातानि, नामाख्यातोपसर्गनिपाताश्च इति व्याख्यातम्, तेन ज्ञायते यद् भाष्ये परा-पश्यन्ती-मध्यमा-वैखरी इति चतसृणां वाचां सङ्केतो नास्ति, तन्न समीचीनम्, 'गुहायां त्रीणि निहितानि नेङ्गयन्ति' इत्युक्त्या परा-पश्यन्ती-मध्यमानां

1. अम्बाकर्त्री गुरुवर्यकृता, विद्वत्प्रवरसूर्यनारायणशुक्लकृता च ।
2. तदेव ।

सङ्केतः कृतप्राय एव । एतद्भाष्यं विवृण्वता श्रीनागेशेन वैखर्य्या मध्यमायाः पश्यन्त्याश्चैतदद्भुतमिति हरिकारिकामादाय पश्यन्ती तु लोकव्यवहारातीता, योगिनां तु तत्रापि प्रकृतिप्रत्ययविभागाऽवगतिरस्ति । परायां तु नेति त्रय्या इत्युक्तम् । अनेन व्याख्यानेन स्पष्टमायाति यद् व्याकरणस्य सामर्थ्यं तिसृष्वेव वाक्षु वर्तते, परायां नास्ति, तस्याः साक्षात्कारे जाते तु जीवनस्य चरमं फलं सिद्ध्यति । अभिनवगुप्तपादाचार्यस्तु प्रकाशो विमर्शश्चेति वस्तुद्वयम्, प्रकाश एव शिवः, विमर्शस्तु तस्य स्वातन्त्र्यशक्तिः, उमा इति चाख्यायते । अथापि प्रकाशस्य विमर्शव्यतिरेकेण, विमर्शस्य प्रकाशव्यतिरेकेणासत्त्वादेकमेव तद्द्वयमिति मन्यन्ते तन्मतानुसारेणाद्वैतिनः । विमर्शश्च परावाक्, प्रकाशश्च अर्थ इति । यदाहुः –

**शब्दजातमशेषं तु धत्ते शर्वस्य वल्लभा ।**
**अर्थजातमशेषं तु धत्ते मुग्धेन्दुशेखरः ॥**

इति सामरस्यमुपगतमनादिमिथुनं वागर्थयुगलं निरञ्जनं परब्रह्मपदमित्यद्वयविदां परिभाषा । विमर्श एव च पूर्णाहन्ता, यदा च शिवः स्वकीयस्वातन्त्र्येण स्वातन्त्र्यशक्तिं सङ्कोचयति, तदा अहमिदं जानामीति भेदमनुभवतीति स्वातन्त्र्यशक्तिरहितोंऽशो जडवर्गः, स्वातन्त्र्यशक्तिसहितश्चांशश्चेतनवर्गो जायत इति । अयमेव परमेश्वराद्वयवाद इत्युच्यते ।

शङ्कराद्वैतवादिनस्तु यत् प्रकाशः शिव इति विमर्शश्च तत्प्रकाशक इति परमेश्वराद्वैतवादिभिरभ्युपेतम्, तत्र प्रकाशस्यैव स्वप्रकाशत्वमभ्युपेत्य प्रकाशसम्भवे विमर्शो नाङ्गीक्रियते, प्रकाश एव ब्रह्म, तदेव अनिर्वाच्याविद्यया नानारूपं भासत इति विदन्ति । शब्दब्रह्मवादिनस्तु विमर्शः (परावाग्) एव ब्रह्म, तदेव अविद्यया नानारूपं भासत इति प्राहुः ।

यद्यपि परमार्थतः परमेश्वराद्वयवादस्य ब्रह्माद्वयवादस्य शब्दब्रह्माद्वयवादस्य च नात्यन्तं भेदः, यतः परमेश्वराद्वयवादे प्रकाशविमर्शयोर्भेदाप्रतिभासात् प्रकाश एव विमर्शः, ब्रह्मवादे च प्रकाश एवैकं तत्त्वम्, शब्दब्रह्मवादे च विमर्श एवेति, तथापि तत्त्वनिरूपणप्रणालीनां भिन्नतया त्रयाणां भिन्नतैव ।

अयमत्र निष्कर्षः – विमर्श एव च परावाक् शब्दब्रह्म इति च व्यपदिश्यते वैयाकरणैः । वैयाकरणमते शब्दब्रह्मणा तादात्म्यमेव जीवस्य मोक्षः, मोक्षेऽपि शब्दात्मनाऽवस्थितिरिति यावत् । सिद्धान्तशैवमते च मोक्षदशायामशुद्धवाग्रूपबन्धनस्यातिक्रमे शुद्धवाग्रूपस्यानुगमेऽपि तस्याः शुद्धतया चित्त्वेन प्रतिभासात् चिद्रूपेव तदानीं वाग्भवति जीवस्य च न वाक्तादात्म्यमिति ।

**परारूपशब्दब्रह्मणो विवर्तभूताया वैखर्य्या उत्पत्तिप्रक्रिया**

शब्दब्रह्मणः सर्वं जगद् विवर्तभूतमिति शाब्दिकाचार्याणां सिद्धान्त उक्तः । तत्र व्यवहारविषयतामापन्नाया वैखर्या उत्पत्तिप्रकार उक्तः श्रीहरिणा –

"**वायोरणूनां ज्ञानस्य शब्दत्वापत्तिशिष्यते**" इति । ( वा. प. १ । १०७ )

अनयोक्त्या वैखर्य्या वाच उत्पत्तिस्त्रिधा भवतीति ज्ञायते । प्रकारत्रयवर्णने तेन प्रथमतो वायोरुत्पत्तिः पाणिनीयशिक्षोक्तदिशा कथिता । तथा हि –

**लब्धक्रियः प्रयत्नेन वक्तुरिच्छानुवर्तिना ।**
**स्थानेष्वभिहतो वायुः शब्दत्वं प्रतिपद्यते ॥**

वक्तुः शब्दप्रयोगेच्छयोत्पन्नेन प्रयत्नेन प्राप्तक्रियः प्राणवायुः कण्ठताल्वादि-स्थानेष्वभिहतः सन् शब्दरूपतामाप्नोति ।

शुक्लयजुःप्रातिशाख्येऽपि 'वायुः खात्' इति सूत्रेण वायुः शब्दस्य कारणम्, स च खादाकाशाद् उत्पद्यते । वायोः परिणामः शब्द इति स्पष्टयितुं पुनरुच्यते 'शब्दस्तत्' इति सूत्रम् ।

शब्दस्तदात्मको वाय्वात्मक इत्यर्थः । तस्य वायुवत् सर्वगतत्वं वारयितुं 'संकरोपहितः' इति तृतीयं सूत्रमुक्तम् । संकरैः सम्यक्करणैरुपहितो वायुर्वेणु-वीणाशङ्खादिभिः शब्दीभवतीत्यर्थः ।

अणूनां शब्दीभवनप्रकारं दर्शयति –

**अणवः सर्वशक्तित्वाद् भेदसंसर्गवृत्तयः ।**
**छायाऽऽतपतमःशब्दभावेन परिणामिनः ॥**

छाया-आतप-तमःशब्द एतदन्यतमारम्भकाः परमाणवः संयोगविभागवृत्तयो भवन्त-स्तत्तद्रूपेण परिणमन्तीत्यर्थः ।

ज्ञानस्य शब्दभावापत्तिं भाष्यकारमतेनोच्यते –

**अथायमान्तरो ज्ञाता सूक्ष्मवागात्मना स्थितः ।**
**व्यक्तये स्वस्य रूपस्य शब्दत्वेन विवर्तते ॥**

आन्तरो ज्ञाता (वृत्तिविशिष्टमन्तःकरणम्) सूक्ष्मशब्दाकारशक्तिमत्वेन स्थितः स्वस्य रूपस्य प्रकाशाय श्रोत्रबोधाय शब्दत्वेन स्थूलशब्दभावेन विवर्तते । वृत्तिविशिष्टान्तःकरणस्य शब्दभावापत्तिरेव ज्ञानस्य शब्दत्वापत्तिः । प्रयोक्तृज्ञानस्य शब्देनैवाभिलापसम्भवादिति भावः ।

**ज्ञानस्य स्थूलशब्दभावापत्तौ क्रमविमर्शः**

**स मनोभावमापद्य तेजसा पाकमागतः ।**
**वायुमाविशति प्राणमथासौ समुदीर्यते ॥**
**अन्तःकरणतत्त्वस्य वायुराश्रयतां गतः ।**
**तद्धर्मेण समाविष्टस्तेजसैव विवर्तते ॥**
**विभज्य स्वात्मनो ग्रन्थीन्, श्रुतिरूपैः पृथग्विधैः ।**
**प्राणो वर्णानभिव्यज्य तेष्वेवोपलीयते ॥**

एभिस्त्रिभिः पद्यैः सुस्पष्टं वर्णोत्पत्तिक्रम उक्तः ।
अयमेव क्रमः पाणिनिशिक्षायामपि कथितोऽस्ति । तथा हि –

**आत्मा बुद्ध्या समेत्यार्थान् मनो युङ्क्ते विवक्षया ।**
**मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ॥**
**सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः ।**
**वर्णान् जनयते** ………………… ॥ इति ।

एतस्य शब्दब्रह्मवादस्य वैखर्य्या उत्पत्तिप्रकारस्य च वर्णनेन व्याकरणस्य दर्शनत्वं स्पष्टं भवति । शब्दनिष्ठसाधुत्वप्रकारकज्ञानजनकत्वमिति व्याकरणशास्त्रस्य लक्षणं व्याकरणशब्दव्युत्पत्तिलभ्यम् । तथा हि **'व्याक्रियन्तेऽसाधुशब्देभ्यः साधुशब्दाः पृथक्क्रियन्ते येन तद् व्याकरणम्'** असाधुशब्दावधिकसाधुशब्दकर्मकपृथक्कृतिकरणत्वमित्यायातम् ।

साध्वनुशासनेऽत्र शास्त्रे इत्याद्युक्त्या साध्वनुशासकत्वांश एव विशेषः । अतश्च साधुशब्दज्ञापकत्वम्, शब्दनिष्ठसाधुत्वप्रकारकज्ञानजनकत्वं वा व्याकरणशास्त्रस्य लक्षणं पर्यवसितम् । अत्र जनकताऽवच्छेदको धर्मः 'इको यणचि' इत्यादिसूत्रात्मकवाक्यनिष्ठवाक्यत्वम्, जनकताऽवच्छेदकसम्बन्धश्च वाक्यस्फोटस्य सखण्डत्वपक्षे 'इको यणचि' इत्यादिवाक्यघटकतत्तत्पदनिष्ठशक्तिविषयत्वम् । अखण्डत्वपक्षे तत्तत्सूत्रात्मकवाक्यनिष्ठशक्तिविषयत्वम् । शक्तिश्च प्राचीनवैयाकरणानां नये बोधजनकतारूपा । नव्यानां श्रीनागेशभट्टानां मते वाच्यवाचकभावरूपा । शब्दनिष्ठसाधुत्वप्रकारकं ज्ञानं शाब्दबोधरूपं ग्राह्यम् । तथा हि– 'इको यणचि' इत्यस्य वाक्यस्य कार्यभूतः शाब्दबोधः कीदृश इत्युच्यते–

"असवर्णानव्यवहितपूर्वत्वविशिष्टस्येकः स्थाने यणादेशः कर्तव्यः, यण्घटितः शब्दः साधुः स्यात्, स च प्रयोक्तव्यः" इत्येवं रीत्या इत्त्थं त्रिधा विधिः– यण्विधिः, साधुत्वविधिः, प्रयोगविधिश्च । एषां विधित्रितयबोधकखण्डवाक्यघटितं महावाक्यं द्रष्टव्यम् । इदमेवाभिप्रेत्योक्तं महाभाष्ये – 'शास्त्रजज्ञानपूर्वके प्रयोगे धर्मः' इति ।

'लक्ष्यलक्षणे व्याकरणम्' इति भाष्यस्यापि लक्ष्यविषयकसाधुत्वज्ञापकं लक्षणं (सूत्रात्मकम्) व्याकरणमिति । एवं च साधुशब्दानां प्रयोगानुशासने शास्त्रत्वमस्य व्यक्तं भवति, धर्मोत्पत्त्यर्थं प्रयोगमनुशास्ति इदं शास्त्रम् ।

अथ चास्य व्याकरणस्य मध्यमादिवाग्ज्ञानद्वारा परब्रह्माधिगमकत्वमुक्तं वाक्यपदीये – **'तद् व्याकरणमागम्य परं ब्रह्माधिगम्यते'** (वा. प. १/२२) यथा **'एकमेवाद्वितीयं ब्रह्म, ब्रह्मैवेदं सर्वम्, आत्मैवेदं सर्वम्'** इत्याद्याः श्रुतीराधारीकृत्य जगत्कर्तुरेकत्वम्, सत्यत्वम्, ब्रह्मरूपत्वम्, आत्मरूपत्वं चाभ्युपेयते । तथैव "वागेवार्थं विहितं सन्तनोति, वागेवार्थं पश्यति, वागेवार्थं ब्रवीति । ओमिति ब्रह्म, ओमितीदं सर्वम्" इत्यादिभिः श्रुतिभिः शब्दस्य जगत्कारणता प्रतिपादिताऽस्ति । एतस्य द्विविधस्य श्रुतिजातस्यैकवाक्यता तदैव सम्भवति, यदा शब्दतत्त्वस्य ब्रह्मशास्त्रभिन्नता सम्मान्येत । श्रीमद्भागवतेऽप्युक्तम् –

**शृणोति य इमं स्फोटं सुप्ते श्रोत्रे च शून्यदृक् ।**
**येन वाग्व्यज्यते यस्य व्यक्तिराकाश आत्मनि** ।। इति ।

अत्र स्फोटपदं शब्दब्रह्मपरम्, सुषुप्त्यवस्थायां हृदयाकाशे तस्यैव शब्दब्रह्मणोऽभिव्यक्तिर्भवति । भगवता श्रीशङ्करेणाप्युक्तम्–'सुषुप्त्येकसिद्धः' इति । एवं व्याकरणस्य दर्शनत्वं सिद्धमेव, वेदमूलकत्वमपि अस्य प्रसिद्धमेव, अन्ये च मोक्षसाधनताऽपि साधिता । अथ च "मानाधीना मेयसिद्धिः, मानसिद्धिश्च लक्षणात्" इति शिष्टोक्त्या प्रमेयज्ञानार्थं प्रमाणसमीक्षा आवश्यिकीति व्याकरणदर्शने प्रमाणसमीक्षा कृतेति ।

**वाराणसी**
मकरसङ्क्रान्तिः,
वि. सं. २०५३

**रामप्रसादत्रिपाठी**
सम्मानितप्राध्यापकः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

# प्रकृतनिबन्धे प्रवृत्तिबीजानि

अयि प्रमाणैकपक्षपातिनो मनीषिप्रवराः ! जानन्त्येव तत्रभवन्तो यत् 'जानाति, इच्छति, यतते, ततः प्रवर्तते' इति ज्ञानेच्छाकृतिप्रवृत्तीनां पूर्वस्य पूर्वस्य उत्तरं प्रति कारणत्वं लोके प्रसिद्धमिति । अतश्चात्र निबन्धलेखने मम या प्रवृत्तिस्तत्र मम कृतिः, तत्र च ममेच्छा कारणम् । सा च यद्विषयिणी भवति, तद्विषयकमिष्ट-साधनत्वादिप्रकारकं ज्ञानं तत्र कारणमिति इष्टसाधनताज्ञानबीजानि प्रदर्शनीयानि, तत एव प्रवृत्तिबीजानि प्रदर्शितानि भविष्यन्ति ।

१. प्रथमकक्षायां यदाहं तर्कसंग्रहमधीयान आसम्, तदा तत्र प्रमाणानां चर्चया मनसि इच्छा जागरूकाऽभवत्, लघुसिद्धान्तकौमुद्यामपि प्रत्यक्षादिप्रमाणचर्चया भाव्यम् । अन्यथा अप्रमितबोधनं प्रसज्येत, व्याकरणाध्येतारो वयं चाप्रामाणिका इत्युपहासभाजो भवेम इति प्रमाणसमीक्षाया इष्टसाधनत्वज्ञाने प्रथमं बीजम् ।

२. पुनर्व्याकरणस्य न्यायादिशास्त्रस्य चाधिकेऽध्ययने जाते ईदृशी धारणा समागता यद् द्विधा विभक्तं व्याकरणशास्त्रम् – प्रक्रिया दर्शनं चेति । तत्र बहुभिरा-चार्यैः प्रक्रियांशो भृशं पल्लवितः पोषितश्च । दर्शनांशस्तु महाभाष्य-वाक्यपदीय-भूषणसार-लघुमञ्जूषाख्यैः कतिपयैरेव ग्रन्थैः श्रीपतञ्जलिभर्तृहरिप्रभृतिभिः कतिपयैरे-वाचार्यैः कथञ्चित् सुरक्षितः । तत्रापि प्राचुर्य्येण प्रमेयांशा एव प्रतिपादिताः, प्रमाणानि तु यत्र तत्र विकीर्णानि अस्फुटानि, सन्दिग्धान्येव निरूपितानीत्येकों ग्रन्थ ईदृशः स्याद् व्याकरणजगति, येन दर्शनान्तरवदत्रापि प्रमाणानामेकत्रैव समुचितं ज्ञानं भवेदिति तत्र द्वितीयं बीजम् ।

३– ननु 'शब्दप्रमाणका वयम्'[1] इत्यादिना महाभाष्ये शब्दादीनां प्रामाण्यं स्फुटमेव प्रतिपादितमिति कथमुच्यते – 'अस्फुटानीत्यादि' इति चेन्न, तथा सत्यपि किं प्रमाणं सिद्धान्तनीयम्, किं चान्यथाकरणीयमिति निश्चेतुमशक्यत्वात् । "तत्समीपे यन्नात्यन्ताय । मिमीते तदुपमानम्"[2] इत्याद्युक्त्या उपमानस्याप्रामाण्यनिर्णयेऽप्यनुप-लब्ध्यादीनां तन्निर्णयस्यासम्भवाच्च पूर्वाचार्यैस्तेषां निश्चायनेऽपि तत्र तत्र तस्य तस्य

---

1. म. भा., पस्प. १।१, पृ. ६६ ।
2. म. भा. २।१।५५ ।

पृथङ्निर्देशेन करणत्वं कारणत्वं वेत्यस्य स्फुटमनिर्देशात्, तदङ्गभूतव्यापारस्य सन्निकर्षादेस्तत्तल्लक्षणस्यानुल्लेखाच्च । अतश्च लक्षणभेदप्रभेदोदाहरणोल्लेखगर्भा प्रमाणसमीक्षा अत्रापि शास्त्रे भवेदिति तत्र तृतीयं बीजम् ।

४. किञ्च, प्रमाणाभासप्रयोगे प्रवीणः कश्चन नास्तिकः समागत्य 'भोः ! क्व ते वेदाः ? क्व च धर्माधर्मौ ? क्व मोक्षः ? क्व च परमेश्वरः ? सर्वं मिथ्याभूतमाडम्बरमात्रम्' इत्यादि आक्षिपन् मन्दं मन्दं विहसन् कञ्चन आस्तिकं विद्वद्वरं यदि प्रतारयेत् । स च प्रमाणप्रयोगेण तं निग्रहीतुमसमर्थो मौनमाश्रयेत् । तदाऽऽसन्नवर्तिनः शिष्याः "मदीयो गुरुरेकेन प्रमाणपटीयसा विदुषा विजितः" इति कृत्वा वेदमार्गात् पलायिता भविष्यन्ति । ते तादृशा मा भूवन्, वैयाकरणो गुरुस्तादृशीमवस्थां न प्राप्नुयादिति व्याकरणशास्त्रेऽपि जिज्ञासवः प्रमाणसमीक्षया प्रमाणपटीयांसो भवेयुरिति तत्र चतुर्थं बीजम् ।

५. एकस्यां विद्वत्सभायां जायमाने पक्षद्वयीये शास्त्रार्थविमर्श एषा चर्चा प्रथमं समागता यद् भवद्भिः कियन्ति प्रमाणानि मत्वा शास्त्रार्थो विचारयिष्यते ? तदा एकपक्षेणोक्तं यद् वेदानामेव केवलं प्रामाण्यमस्मन्मत इति । तदनु अपरपक्षेणोक्तम्– आम् ! सम्मतमस्माभिरपि, किन्तु पूर्वं तावद् भवद्भिर्वेदानां प्रामाण्यं वेदेनैव साधनीयम्, ततो विचारः प्रचलेत् । श्रुत्वा चेदमपरपक्षीया वेदानां प्रामाण्यं वेदेन साधयितुमसमर्थाः पलायाञ्चक्रिरे– इत्येवं बहुविधघटनाश्रावणेन एतल्लेखने परमगुरुवर**श्रीरघुनाथशर्मपाण्डेय**महोदयानां प्रेरणादानं पञ्चमं बीजम् ।

६. किञ्च–'लक्षणप्रमाणाभ्यां वस्तुसिद्धिः' इति सिद्धान्तोऽत्र व्याकरणेऽपि पूर्णतया समादृतो भवेत् । पाणिनीयस्यास्य शास्त्रस्य प्राचीनं दर्शनत्वमपि सुप्तमिव जागरूकं स्यादिति षष्ठं बीजम् ।

●

# प्रस्तावना
## [ प्रथमसंस्करणस्य ]

**सामान्यतो निबन्धस्वरूपपरिचयः**

संस्कृतवाङ्मये महामुनिपाणिनिप्रणीतं व्याकरणं पाणिनीयव्याकरणनाम्ना सुप्रसिद्ध-मिति को न जानाति ? तत्रोपयुज्यमानानां प्रत्यक्षानुमानादिप्रमाणानां लक्षणस्य भेदस्य बाध्यबाधकभावादेश्च समीक्षाऽत्र निबन्धे प्रस्तूयते ।

यथा न्यायदर्शने प्रत्यक्षानुमानोपमानशब्दाख्यानि चत्वारि प्रमाणानि स्वीकृतानि सन्ति, अन्यथा प्रमेयभूतद्रव्यादीनां प्रमितिः कथं स्यात् ? तथैवात्र शास्त्रेऽपि प्रकृति-प्रत्यय-पद-वाक्य-तदर्थ-तत्सम्बन्ध-पदसाधुत्वादीनां प्रमितये यानि प्रमाणानि सूत्रकृदा-दिभिः समादृतानि सन्ति, तानि च कियन्ति ? किं लक्षणोदाहरणादीनि ? दर्शनान्तरे तेषां यल्लक्षणादिकम्, तदस्मत्संवादि विसंवादि वा, युक्तमयुक्तं वेत्यादि सर्वमत्र समीक्षाविषयः ।

पाणिनीयव्याकरणमेव प्रमेयत्वेनाभ्युपेत्य तत्र किं प्रमाणमिति तु तात्पर्यमस्य निबन्धस्य न चिन्तनीयम् । तथा सति 'पाणिनीयव्याकरणे प्रामाणिकत्वसमीक्षा' इति नाम्नाऽस्य सङ्केतः कृतः स्यात् ।

भूमिकां वर्जयित्वा अयं निबन्धः षड्भिः समीक्षाभिर्निबद्धो वर्तते, समीक्षाश्चेमा अध्यायस्थानीया लतारूपकेण निर्दिष्टास्सन्ति । तत्र प्रत्यक्षानुमानसमीक्षयोः पादस्थानीयानि प्रत्येकं त्रीणि पुष्पाणि विकसितानि सन्ति । शब्दसमीक्षायां चत्वारि, अर्थापत्तिसमीक्षायामेकम्, प्रत्याख्येयप्रमाणसमीक्षायां प्रमेयसमीक्षायां च प्रत्येकं द्वे द्वे पुष्पे इत्येवं सामान्यतो ग्रन्थशरीरं द्रष्टव्यम् ।

**किमिदं व्याकरणम्, किं च तत्र पाणिनीयत्वम् ?**

निबन्धस्य सामान्यतः स्वरूपमुक्त्वा विशेषतः स्वरूपमुच्यते । तत्रोद्देश्यभूतस्य पाणिनीयव्याकरणस्यातिप्रसिद्धत्वेऽपि 'प्रत्यक्षपरिकलितमप्यर्थमनुमानेन बुभुत्सन्ते तर्क-रसिकाः' इति नीत्या अयमंशोऽपि किञ्चिद् विविच्यते ।

तत्र 'व्याक्रियन्तेऽसाधुशब्देभ्यः साधुशब्दाः पृथक्क्रियन्ते (पृथक्कृत्य ज्ञायन्ते) येन तद् व्याकरणम्' इति करणव्युत्पत्त्या असाधुशब्दावधिकसाधुशब्दकर्मकपृथक्कृति-पूर्वकसाधुशब्दविषयकज्ञानकरणं व्याकरणमित्यर्थो लभ्यते । यथा 'गावी, गोणी,

गोता' इत्येवमादिभ्योऽसाधुशब्देभ्यो 'गो' इति साधुशब्दस्य पृथक्कृत्य बोधनं व्याकरणशास्त्राधीनम् । पृथक्करणं च 'गच्छति इति गौः, गमेर्डोप्रत्यय औणादिकः कर्तरि' इत्येवं प्रकृतिप्रत्ययविभागपूर्वकम् ।

एवं च साधुशब्दज्ञापकशास्त्रत्वं शब्दनिष्ठसाधुत्वज्ञानजनकशास्त्रत्वं वा व्याकरणस्य लक्षणं पर्यवसन्नम् । अन्यत् सर्वम् असाधुशब्दज्ञानं प्रकृतिप्रत्ययादिज्ञानं परिचायक-मात्रम्, न तु लक्षणशरीरे निविष्टम्, डित्थादिशब्दे प्रकृत्यादिविभागस्य प्रायः सर्वा-सम्मतत्वात् ।

"लक्ष्यलक्षणे व्याकरणम्" इत्युक्त्या[1] भाष्यकृतापि 'लक्ष्यगतसाधुत्वलक्षकशास्त्रं व्याकरणम्' इति पर्यवसितमस्य स्वरूपं बोध्यते । यद्यपि शब्दानां शब्दत्वेन ज्ञानमपि शब्दज्ञानम्, तच्च श्रोत्रेन्द्रियेणैव सम्पत्तुमर्हमिति किमर्थमिदं व्याकरणमिति जिज्ञासा उदेति, तथापि "साध्वनुशासनेऽत्र शास्त्रे"[2] इति भाष्योक्त्या साधुत्वेन तज्ज्ञानमेव लक्षणे प्रविष्टमिति न कोऽपि दोषः ।

आचार्येण श्रीहरिणाऽप्युक्तम्–

**साधुत्वज्ञानविषया सैषा व्याकरणस्मृतिः**[3] ।
**तस्मान्निबध्यते शिष्टैः साधुत्वविषया स्मृतिः**[4] ॥ इत्यादि ।

इदं च व्याकरणं पाणिनिमुनिप्रणीतमिति पाणिनीयमित्युच्यते । तत्र "ब्रह्मा बृहस्पतये प्रोवाच, बृहस्पतिरिन्द्राय, इन्द्रो भरद्वाजाय, भरद्वाज ऋषिभ्यः, ऋषयो ब्राह्मणेभ्यः, तं खल्विममक्षरसमाम्नायमित्याचक्षते" इति ऋक्तन्त्रोक्त्या परिज्ञायते यद् व्याकरणशास्त्रस्य प्रथम आचार्यो ब्रह्मा आसीत्, द्वितीयो बृहस्पतिः, तृतीय इन्द्रः, चतुर्थकोटौ भरद्वाजः, पञ्चमकोटौ अन्ये सर्वे ब्रह्मर्षयः । ततः सत्त्वरं गच्छति काले गार्ग्य-शाकल्य-सेनक-शाकटायन-स्फोटायन-प्रभृतीनां महावैयाकरणानां परम्प-रावसाने महर्षिपाणिनिः स्वीयातुलतपश्चर्यया भगवन्तं महेश्वरं प्रसाद्य ततोऽक्षर-समाम्नायं मन्त्रमिवावाप्य शिथिलप्रायं व्याकरणशास्त्रमष्टाध्यायीसूत्रनिर्माणेनोज्जी-वयामास ।

---

1. म. भा., पस्प. १।१ ।
2. म. भा. १।१।४४-१५ वा. ।
3. वा. प. १।१४२ ।
4. वा. प. १।२९ ।

तदेवं व्याकरणं वार्त्तिकनिर्माणेन कतिपयेष्टकासंयोजनेन राजभवनमिव परिष्कृतवान् महामुनिः कात्यायनः ।

पुनश्च तत्र महाभाष्यात्मकपरिखारचनया गभीरपदार्थविवेचनात्मकागाधजलपूरणेन तस्य सुस्थिरत्वमजेयत्वं च समपादयद् महामुनिः पतञ्जलिः ।

इत्थं मुनित्रयप्रचालितोऽयं व्याकरणसम्प्रदायः श्रीभर्तृहरि-कैयट-हरदत्त-वामन-जयादित्य-रामचन्द्र-भट्टोजिदीक्षित-कौण्डभट्ट-नागोजिभट्टप्रभृतिशाब्दिकमूर्धन्यैः सनाथितोऽद्यावधि अविच्छेदेन प्रचलन्नस्तीति महत् पुण्यम् "वृद्धिरादैच्" इति स्मरत आचार्यस्य ।

## अस्य व्याकरणस्य वेदमूलकत्वं वेदाङ्गत्वं च

वेदो हि विश्वस्य सनातनं सर्वश्रेष्ठं च साहित्यम् । तत्र ऋग्वेदे "यज्ञेन यज्ञमयजन्त देवाः"[1] इत्यत्र यज्ञशब्दस्य कीदृशी साधीयसी यजधातुघटिता व्युत्पत्तिः प्रदर्शितास्ति । एवमेव "धान्यमसि धिनुहि देवान्" इत्यत्र यजुर्वेदे[2], "येन देवाः पवित्रेणात्मानं पुनते सदा" इत्यत्र सामवेदे[3], "तीर्थैस्तरन्ति" इत्यादावथर्ववेदे[4] च धान्यादिशब्देषु प्रकृतिप्रत्ययविश्लेषणेन व्याकरणशास्त्रस्य मूलभूतः सङ्केतः सुष्ठूपलभ्यते ।

एतज्जातीयमन्यदपि वैदिकं निदर्शनम्,[5] "चत्वारि वाक्" इति मन्त्रस्य महर्षियास्ककृतं व्याख्यानम्,[6] "चत्वारि शृङ्गा" इत्यादीनां पञ्चमन्त्राणां महर्षिपतञ्जलिकृतं व्याख्यानं[7] चास्य शास्त्रस्य वेदमूलकत्वं सुष्ठु अवगमयन्ति । एवमेव गोपथब्राह्मणे[8], मुण्डकोपनिषदि[9], वाल्मीकीयरामायणे[10] महाभारतादिषु[11] च बहुत्र वेदे तदनुगुणग्रन्थेषु चास्य सङ्केतः स्फुटमुपलभ्यते ।

---

1. ऋग्. १।१६४।५० ।
2. यजु. १।२० ।
3. साम., उ. ५।२।८।५ ।
4. अथर्व. १८।४।७ ।
5. ऋग्. १।१६४।४५ ।
6. निरु. १३।२ ।
7. म. भा. प्र. उ., पस्प. १।१ ।
8. गो. ब्रा., पू. १।२४ ।
9. मुण्डक. १।१ ।
10. वा. रा., कि. का. ३।२९ ।
11. म. भार., उ. प. ४३।६१ ।

किञ्च, न हि वेदमूलकत्वमेवास्य शास्त्रस्य, अपि तु वेदानामङ्गत्वमपि । तथा हि– शिक्षा, कल्पः, निरुक्तम्, छन्दः, ज्योतिषम् इत्येतैः सहितं षष्ठं व्याकरणमिति मिलित्वा षट्संख्याकानि अङ्गानि सन्ति वेदानाम् । गोपथब्राह्मणे "षडङ्गविदस्तत्तथा धीमहे"[1] इत्युक्तौ एषां निर्देशः षडङ्गशब्देन प्राप्यते । भाष्यकृतापि "ब्राह्मणेन निष्कारणः षडङ्गो वेदोऽध्येयो ज्ञेयश्च" इत्यागमे षडङ्गपदेन एत एवार्थाः सङ्केतिताः सन्ति[2] । अपरं च शब्दशास्त्रेऽङ्गान्तरापेक्षया प्राधान्यमप्युक्तम् "प्रधानं च षट्सु अङ्गेषु व्याकरणम्"[3] इत्यनेन ।

एवं च यथा शरीरस्य रक्षार्थमङ्गानां महती आवश्यकताऽस्ति, तथैव वेदानां स्वरूपं तदर्थं चावगन्तुमेषामङ्गानां महत् प्रयोजनमस्ति, किं पुनस्तत्र मुखस्थानीयस्य व्याकरणस्य ।

अतश्च समूले सप्रयोजनेऽत्र शास्त्रे क्रियमाणा प्रमाणसमीक्षा पाणिनीयानां कृते महते कल्याणाय भविष्यतीति मन्ये ।

एतेन निर्मूले निष्प्रयोजने क्रियमाणोऽयं प्रयासो निरर्थक इति आक्षेपो निराकृतः ।

## अस्य व्याकरणस्य दर्शनत्वम्

अथ निबन्धस्वरूपपरिचयानन्तरमत्र शास्त्रे दर्शनत्वमवश्यमालोचनीयम्, यतश्च प्रमाणसमीक्षा प्रयोजनवती भवेत् । भारतीयदर्शनानामेष स्वभावो यज्जीवेन मानव-शरीरमवाप्य परमपुरुषार्थभूतो मोक्षोऽवश्यं साधनीय इति । स च मोक्षोऽशेषतो दुःखनिवृत्तिरूपः, परमानन्दावाप्तिरूपो वा नानाविधः । एतस्य साधने उपाया अपि वर्णिता नानाविधा दर्शनेषु । ईदृशस्य मोक्षतत्त्वस्य तदुपायानां च ज्ञानं प्रमाणैक-साध्यमिति सर्वेषु दर्शनेषु प्रमाणसमीक्षा कृताऽस्ति । व्याकरणमपि अस्ति दर्शन-विशेषः, अतोऽत्रापि प्रमाणचर्चयाऽवश्यं भाव्यम् ।

तत्र च "आत्मा वाऽरे द्रष्टव्यःश्रोतव्यो मन्तव्यो निदिध्यासितव्यः"[4] इति श्रुतिरात्म-साक्षात्कारलक्षणं मोक्षं तदुपायभूतं श्रवणादिकं च प्रतिपादयन्ती साक्षादेव दर्शनपद-व्यवहार्या । एवमेव "सच्चिदानन्दं ब्रह्म[5], सर्वं खल्विदं ब्रह्म[6], अयमात्मा ब्रह्म[7],

---

1. गो. ब्रा., पू. १।२७ ।
2. म. भा., पस्प. १।१ ।
3. म. भा., पस्प. १।१ ।
4. बृहदा. २।४।५ ।
5. वज्रसूचि., खण्ड. ९ ।
6. छान्दोग्य. ३।१४।१ ।
7. बृहदा. २।५।१९ ।

यतो वा इमानि भूतानि जायन्ते[1], तमेव विदित्वाऽतिमृत्युमेति"[2] इत्याद्याः श्रुतयोऽपि आत्मतत्त्वप्रतिपादकतया दर्शनपदेन व्यवहरणीयाः । एतदनुगुणं ब्रह्मसूत्रात्मकं दर्शनं वेदान्तदर्शनपदेन सम्बोध्यते । एतद्विषये एतद् व्याकरणमपि पश्चात् पदं नादधति । अस्यात्मानात्मविवेचकता वेदेऽपि संकीर्तिताऽस्ति । तथा हि–

**दृष्ट्वा रूपे व्याकरोत् सत्यानृते प्रजापतिः ।**
**अश्रद्धामनृते दधाच्छ्रद्धां सत्ये प्रजापतिः[3] ॥**

इति यजुर्वेदे व्याकरणस्य स्फुटं दर्शनत्वं प्रतिपादितमस्ति ।

अत्र "प्रजापतिर्वैयाकरणः शब्दोपादानकसृष्टिविधाता संश्लिष्टे सत्यानृते पृथक्कृत्य सत्ये परमार्थभूते वस्तुनि श्रद्धामसत्येऽनात्मनि अश्रद्धां कुर्यात्" इत्यर्थवर्णनेन सत्यासत्यविवेचनलक्षणं दर्शनत्वं व्याकरणस्य लभ्यत एव । किञ्च, उपाधिभूतो व्यञ्जको ध्वनिरसत्यः, तदपेक्षया स्फोटाख्यं शब्दब्रह्म सत्यम् । विवर्तभूतं पश्यन्त्यादिकं सर्वं जगदसत्यम्, तदुपादानभूतं पराख्यं ब्रह्म सत्यम् । बाह्यं जगदसत्यम्, तदपेक्षयाऽऽन्तरं जगत् सत्यम् । प्रकृतिप्रत्ययौ असत्यौ, तदपेक्षया पदानि सत्यानि, ततोऽपि वाक्यानि, सर्वापेक्षया परारूपं वाग्ब्रह्म सत्यमित्येवं निगूढं तात्पर्यम् ।

एवमेव "नामरूपे व्याकरवाणि"[4] इति श्रुतिरपि सम्पृक्तयोः शब्दार्थयोः पृथक्कृतिं प्रतिपादयन्ती व्याकरणस्य सत्यासत्यविवेचनलक्षणं दर्शनत्वं सूचयति ।

"वाग्वै ब्रह्म[5], ते मृत्युमतिवर्तन्ते ये वै वाचमुपासते"[6] इत्याद्याः श्रुतयोऽपि वाचो व्याकृतिरूपोपासनया व्याकरणं दर्शनं सम्यक् स्तुवन्ति । तथा चैकैव परा वाणी[7]

---

1. तै. उ. ३।१ ।
2. शुक्लयजु. ३१।१८ ।
3. शुक्लयजु. १९।७७ ।
4. छा. ६।३।२ ।
5. बृ. ४।१।२ ।
6. उद्धृताः शा. भा. १।३।८, सू. २८ ।
7. सूक्ष्मामर्थेनाप्रविभक्ततत्त्वामेकां वाचमभिष्यन्दमानाम् ।
   उतान्ये विदुरमृतामिव च पूतां नानारूपामात्मनि संविविष्टाम् ॥ (वा. प., टी. १।१)

व्याकृताव्याकृताभेदेन द्वेधा विभक्ताऽस्ति । तत्र व्याकृतापदेन पश्यन्तीमध्यमा-वैखरीणां ग्रहणम्, अव्याकृतापदेन सर्वधर्मविवर्जिताया नित्यायाः पराख्यवाचो ग्रहणं संस्कृतवाङ्मये सिद्धान्तितमस्ति ।

किञ्च, कालचक्रस्यैवायं प्रभावो यदद्य व्याकरणस्य दर्शनत्वं साधनीयं भवति । विदितमेवास्ति समेषां यत् पुरा सकलन्यायबीजगर्भितः संग्रहाभिधानो लक्षश्लोकात्मको ग्रन्थो महर्षिव्याडिना विरचित आसीत् । तत्र च प्राचानैर्दार्शनिकैः स्वयं वा दृष्टाः पदार्था निरूपिता आसन् । कियता कालेन क्षयं गमिते तस्मिन् संग्रहे व्याकरणस्य नष्टप्रायं दर्शनत्वं पुनर्भगवान् भाष्यकारोऽनुप्राणितवान् महाभाष्ये । तच्छिष्यपरम्परया आचार्यश्रीभर्तृहरिसम्पादितवाक्यपदीयरचनया च स व्याकरणदर्शनद्रुमो भृशं पल्लवितः पुष्पितश्चाभवत् । परं कालक्रमेण स पुनरपाचीयत । तस्यैव परिणामो यदद्यत्वे भवादृशा अपि वैयाकरणान् दार्शनिकभिन्नान् केवलं शब्दसाधुत्वप्रक्रियापण्डितान् मत्वोपहसन्ति ।

आचार्यश्रीहरिणाऽस्य दर्शनत्वमिवागमत्वमपि सम्मन्यते[1] । ततोऽपि प्रमाण-समीक्षा मानवत्येव । यतश्चागमेऽपि सर्वत्र मानाधीनैव मेयसिद्धिर्विहिताऽस्ति ।

एवमेवास्य दर्शनस्य स्फोटवाद-शब्दब्रह्मवाद-शब्दाद्वैतवादप्रभृतिसिद्धान्तान् खण्डन-मण्डनविधया व्याचक्षाणा अपरे दार्शनिका[2] अप्यस्य दर्शनत्वं सूचयन्त्येव ।

## प्रमाणस्य सामान्यलक्षणम्, भेदविषये नानामतानि च

अथ व्याकरणस्य दर्शनत्वे निर्णीते तत्र दर्शनस्वभावसिद्धा प्रमाणसमीक्षाऽवश्यं करणीया । अतः प्रमाणस्य सामान्यं लक्षणं भेदाश्च नानादर्शनसम्मताः पूर्वं प्रदर्श्यन्ते । तदन्तर्गततया व्याकरणदर्शनेऽपि लक्षणभेदादि कीर्तितं भविष्यति ।

---

1. यः पतञ्जलिशिष्येभ्यो भ्रष्टो व्याकरणागमः ।
   काले स दाक्षिणात्येषु ग्रन्थमात्रे व्यवस्थितः ॥
   पर्वतादागमं लब्ध्वा भाष्यबीजानुसारिभिः ।
   स नीतो बहुशाखत्वं चन्द्राचार्यादिभिः पुनः ॥
   न्यायप्रस्थानमार्गास्तानभ्यस्य स्वं च दर्शनम् ।
   प्रणीतो गुरुणाऽस्माकमयमागमसंग्रहः ॥
   प्रज्ञा विवेकं लभते भिन्नैरागमदर्शनैः ।
   कियद्वा शास्त्रमुन्नेतुं स्वतर्कमनुधावता ॥ (वा. प. २।४८२-८४,८६)
2. शिव. २।९-१० । न्या. म., प्र. भा., पृ. ३४३, शां. भा.–स्फोटवादः, इष्टसिद्धिः, त. स., मृगेन्द्रागम० ।

तत्र 'तद्वति तत्प्रकारकोऽनुभवः प्रमा, तत्करणं प्रमाणम्' इति न्यायदर्शनसम्मतं प्रमाणसामान्यलक्षणम् ।

'अनधिगतबाधितार्थविषयकं ज्ञानं प्रमा, तत्करणं प्रमाणम्' इति मीमांसादर्शन-सम्मतिस्तत्र ।

'अनिर्ज्ञातार्थाविषयकं सम्भावितसकलधर्मप्रकारकं ज्ञानं प्रमा, तत्करणं प्रमाणम्' इति व्याकरणदर्शनविदामभिमतिः ।

अथ सामान्यपरिचयानन्तरं प्रमाणभेदविषये नानामतानि दर्श्यन्ते ।

(१) तत्र प्रत्यक्षमेवैकं प्रमाणम्, अनुमानं तु प्रमाणपदवीं नाधिरोढुमर्हति; यतश्चानुमानं व्याप्तिज्ञानम् । तच्च 'यत्र यत्र धूमस्तत्र तत्राग्निः' इति सार्वदेशिकं धूममग्निं च विषयीकरोति । तादृशस्य धूमादेश्च ज्ञानं प्रत्यक्षात्मकमसम्भवमेव । आनुमानिकं चेत्, तर्हि अनवस्थादोषः ।

आप्तवाक्यमपि प्रमाणकोटौ प्रवेष्टुं नार्हति । श्रवणेन्द्रियेण गृह्यमाणं तद् वाक्यं वस्तुभूतं भवतु नाम । परन्तु तेनोपस्थापितोऽर्थो न श्रद्धास्पदम् । एवमेवार्थापत्त्यादिप्रमाणेनाप्युपस्थापितोऽर्थोऽश्रद्धेय एव । ततः प्रवृत्तौ सत्यामर्थोपलब्धिस्तु काकतालीयन्यायेनैवेति सिद्धान्तयन्ति चार्वाकमतानुयायिनः ।

(२) मा भूत् सकलधूमाग्न्योः प्रत्यक्षादिकम्, भूयोदर्शनेनैव व्याप्तिज्ञानं सुकरम् । न च व्यभिचारसंशयः, धूमाग्न्योः कार्यकारणभावस्य प्रत्यक्षेण तदुच्छेदस्य सुसाधत्वात् । अतश्चानुमानमपि स्वतन्त्रं प्रमाणम् । शब्दस्तु प्रत्यक्षानुमान-सिद्धार्थबोधक इति न स्वतन्त्रं प्रमाणम्, अपि त्वनुमानविधयैव । आप्तोच्चरित एव शब्दस्तद्रूपतयापि प्रमाणम्, न तून्मत्ताद्युच्चरितः । वक्तृप्रामाण्येन तदुक्तस्य शब्दस्य प्रामाण्यमनुमेयमित्यनुमानाधीनत्वं शब्दस्येति सिद्धान्तयन्ति बौद्ध-वैशेषिक-दर्शनाचार्याः ।

(३) प्रत्यक्षानुमानागोचरधर्माधर्मादिनिर्णयार्थं मन्त्रब्राह्मणात्मकवेदानामाप्तोक्तानां समेषां शब्दानां चापि स्वतन्त्रमेव प्रामाण्यमिति प्रत्यक्षानुमानशब्दाख्यप्रमाणत्रितय-वादिनः सांख्ययोगदर्शनाचार्याः ।

(४) गोसादृश्यज्ञानेन गवयपदार्थे गवयपदीयशक्तिग्रहार्थमुपमानमपि प्रमाणमिति प्रत्यक्षानुमानोपमानशब्दाश्चत्वारि प्रमाणानीति प्रमाणपटवो न्यायदर्शनाचार्याः ।

(५) दिवाऽभुञ्जानं देवदत्तं स्थूलं दृष्ट्वा 'रात्रिभोजनवानयमवश्यमस्ति' इत्युपपाद्य स्थौल्यज्ञानेनोपपादकं रात्रिभोजनं कल्पयन्तोऽर्थापत्तिमपि पञ्चमं प्रमाणमुपस्थापयन्ति मीमांसकविशेषाः प्राभाकराः ।

(६) प्रत्यक्षादिना अभावस्य ज्ञानं भवितुं नार्हति । अपि तु 'यथा यक्षस्तथा बलिः' इति न्यायेन तज्ज्ञानार्थमनुपलब्धिरपि षष्ठं प्रमाणमिति मीमांसकधौरेया भट्टपादानुयायिनः, अद्वैतवेदान्तिनोऽध्यात्मवित्तमाश्च ।

(७) प्रत्यक्षं परोक्षमिति द्विविधं प्रमाणम् । तत्र स्मृतिप्रत्यभिज्ञानोहानुमानागमभेदात् पञ्चविधं परोक्षमिति जैनदर्शनविशारदाः ।

(८) प्रत्यक्षमनुमानमुपमानं शब्दोऽर्थापत्तिरनुपलब्धिः सम्भव ऐतिह्यं चेत्यष्टौ प्रमाणानि इति पुराणविद्यावित्तमाः । चेष्टासहितान्येतानि नव इति तान्त्रिकसत्तमाः ।

(९) प्रत्यक्षमनुमानमर्थापत्तिः शब्दश्चेति चत्वारि प्रमाणानीति व्याकरणदर्शनविदः पाणिनीयाः ।

**प्रमाणेषूपजीव्योपजीवकभावः**

यस्य प्रमाणस्य प्रामाण्यं प्रमाणान्तराधीनम्, तत्तस्योपजीवकम्, प्रमाणान्तरं तूपजीव्यम् । यथा न्यायदर्शने वेदस्य प्रामाण्यमनुमानप्रमाणाधीनम् । सर्वज्ञेन परमेश्वरेण प्रणीततया वेदाः प्रमाणम् । तादृशः परमेश्वरस्तु पूर्वमनुमानैकगम्यः, पश्चात्तु वेदैरपि इति अनुमानमुपजीव्यम्, वेदास्तूपजीवकाः । एवमेव स्मृतीनां प्रामाण्यं श्रुतिप्रमाणाधीनमिति स्मृतीनामुपजीवकत्वम्, तदपेक्षया श्रुतीनामुपजीव्यत्वम् ।

वेदान्तदर्शने–"अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत्" इति सिद्धान्तेन परमेश्वरादिविषये न पूर्वमनुमानस्य प्रवृत्तिः, अपि तु वेदेन प्रमिते सत्येवानुमानस्योपस्थितिः । अतस्तत्र नये वेदानामुपजीव्यता, अनुमानस्योपजीवकता ।

एवमेव अग्न्यनुमाने धूमस्य ज्ञानं यत्र चक्षुरादिप्रत्यक्षप्रमाणाधीनम्, तत्र प्रत्यक्षमुपजीव्यम्, अनुमानमुपजीवकम् । यत्र च शब्दप्रमाणाधीनम्, तत्र शब्दस्योपजीव्यता । यत्र चानुमानाधीनम्, तत्रानुमानस्यैवोपजीव्यता । 'घटोऽस्ति' इति वाक्यजन्यबोधे शब्दस्य ज्ञानं तु श्रवणेन्द्रियप्रत्यक्षमानायत्तमिति प्रत्यक्षशब्दयोरप्युपजीव्योपजीवकभावो बोध्यः ।

**प्रमाणेषु बाध्यबाधकभावः**

अथैकत्र प्रमेये एकदा प्रमाणद्वयसामग्रीसन्निपाते केन प्रमाणेन तत्र प्रमा जायते? अर्थात् कस्य किं बाधकं स्यादिति विचारः प्रस्तूयते । तत्रैतत् प्रमाणमस्य प्रमाणस्य

बाधकमेवेति नियमो नास्ति । सदोषसामग्रीकं हि बाध्यं भवति, निर्दोषसामग्रीकं तु बाधकं भवति । यथा क्वचन स्थले सदोषचक्षुषा रजतस्य प्रत्यक्षं क्रियते 'इदं रजतम्' इति । तच्च 'नेदं रजतम्' इति आप्तवचनेन बाध्यते । क्वचन स्थले वक्ता उन्मत्तो वर्तते, तेनोक्तं 'नेदं रजतम्' इति निर्दोषचक्षुषा जायमानेन 'इदं रजतम्' इत्यनेन प्रत्यक्षेण बाध्यते, द्वयोरपि दोषजन्यत्वे समानैव स्थितिः । यत्र पक्षे दोषः स्फुरेत् तस्य बाध्यत्वम्, अन्यस्य बाधकत्वम् । तत्रापि दोषस्फुरणे तस्यापि हेयत्वेन बाध्यत्वमेवोपनतं भवति ।

प्रमाणसंख्याविषये मतभेदे सत्यपि प्रत्यक्षानुमानशब्दरूपाणि त्रीण्येव प्रमाणानि प्रमुखाणि सन्ति । अन्येषामुपमानार्थापत्त्यनुपलब्धिरूपाणामेष्वेवान्तर्भावो भवितुमर्हति । तत्र यस्य यत्रान्तर्भावः, तस्य तदपेक्षं दौर्बल्यं मन्तव्यम्, तद्वदेव तस्य प्राबल्यं दौर्बल्यं वा स्वीकरणीयम् ।

यथा यत्र अग्न्यादिरूपे समानविषये प्रत्यक्षप्रमाणापेक्षया गुरुसामग्रीकमनुमानं दुर्बलम्, तत्रानुमानान्तर्गतस्यार्थापत्तिप्रमाणस्यापि तदपेक्षया दौर्बल्यं भवति । यत्र च समान एव विषयेऽन्यतरस्य सदोषसामग्रीकत्वम्, तत्र तस्य दौर्बल्यम् । यथा पर्वते धूलीपटले बाष्पे वा धूमभ्रमेण अग्नेरनुमितिः क्रियमाणाऽस्ति, अग्न्यभावश्च चक्षुषा गृह्यमाणोऽस्ति,तत्र सर्वथा प्रत्यक्षस्य प्राबल्यम् ।

यत्र च रक्तशीशकशकले गुञ्जादौ वा सादृश्यादग्नेः प्रत्यक्षात्मको भ्रमः, औष्ण्याभावादिना चाग्निभिन्नत्वस्य तत्रानुमितिः प्रसज्जति, तत्रानुमानस्यैव प्राबल्यम्, निर्दोषसामग्रीकत्वात् । एवमेव शैत्यातिशयवति पर्वते निवसतां जनानां स्थौल्यं दृष्ट्वा तदन्यथाऽनुपपत्तिरूपार्थापत्तिप्रमाणेन तत्राग्निः साध्यते । तदा सदोषमर्थापत्तिप्रमाणमपि प्रत्यक्षापेक्षया दुर्बलं भवति । दोषश्च शैत्यातिशयस्थले स्थौल्यस्य न कश्चनाग्निभिन्नो हेतुरित्याकारको भ्रमः । विशेषतः समीक्षा एतद्विषये प्रत्यक्षानुमानयोर्निरूपणावसाने कृताऽस्ति ।

## प्रमाणानां साधनीयानि

अथ केन प्रमाणेन किं साध्यत इति विमृश्यते । तत्र प्रमाणेन न हि कश्चन प्रमातिरिक्तः पदार्थ उत्पाद्यते, अपि तु पूर्वसिद्ध एवार्थस्तेन ज्ञाप्यते । स चार्थः प्रमाणसाध्यः प्रमेय इति वोच्यते । तत्र चेतनाचेतनभेदेन द्विविधेष्वर्थेषु अचेतनस्य चेतनाधीनतया चेतनं प्रधानमिति प्रथमतस्तदेव साधनीयम् । तच्चापि जीवब्रह्मभेदेन

द्विविधमस्ति । तत्र ज्ञानादिजनने जीवश्चित्तादिसापेक्षः, ब्रह्म तु तन्निरपेक्षमिति जीवस्याप्राधान्यम्, ब्रह्मणः प्राधान्यम् । एवं च प्रथमतो जिज्ञास्ये ब्रह्मणि प्रमाणानां प्रवृत्तिः कया विधया सम्भवतीति समीक्ष्यते । ब्रह्म वस्तुतः प्रमाणातीतं प्रमाणोपजीव्यं चेति तत्सत्तयैव हि सत्तावन्ति प्रमाणानि स्वोपजीव्ये ब्रह्मणि कथं प्रवर्तेरन्? न ह्यग्निर्दहनकर्माऽपि स्वोपजीव्यं वायुं दग्धुं शक्नोति । ननु ब्रह्मणः प्रमाणागम्यत्वेनासत्वमेव स्यादिति चेत्, उच्यते–प्रमाणोपजीव्यतयैव तस्य सिद्धत्वेनोक्तशङ्काया निरास इति । तथा च पदार्थानां प्रमाणसिद्धत्वं द्विविधम्–प्रमाणोपजीव्यतया प्रमाणविषयतया च । निर्गुणस्य ब्रह्मणः प्रथमम्, तदितरस्य प्रपञ्चजातस्य द्वितीयम् । सर्वं प्रमाणमपि प्रपञ्चान्तःपातितया प्रमेयमेव । तत्र कस्यचन प्रमाणस्य प्रमाणान्तराविषयतया स्वतः प्रमाणत्वमवश्यं वाच्यम्, अन्यथा तस्य सिद्धौ प्रमाणान्तरापेक्षा, तस्यापि प्रमाणान्तरस्यान्यप्रमाणापेक्षा, पुनस्तस्याप्यन्यापेक्षा इत्येवमनवस्थादोषः सुदृढमापतेत् । अत एव सर्वेष्वपि दर्शनेषु प्रत्यक्षं स्वतः प्रमाणमङ्गीकृतमस्ति, न तु तस्य प्रामाण्यमनुमानादिना साध्यते । अनुमानस्य प्रामाण्यं तु प्रत्यक्षेण सिद्धं भवति । यतः पर्वतेऽग्निमनुमानेन निश्चित्य पर्वतं गतः पुरुषोऽग्निं प्रत्यक्षीकरोति । एवमनेन दृष्टान्तेन सर्वत्रानुमानस्य प्रामाण्यमनुमानेनैव ज्ञातुं शक्यते ।

अनुमानाकारश्च–'अनुमानं प्रमाणं प्रमितिजनकतावच्छेदकधर्मवत्वात्, यथेन्द्रियम्' इत्येवं बोध्यः । एवमेव शब्दस्यापि प्रामाण्यं बहुत्र प्रत्यक्षमूलकमेव, ऋतेऽदृष्टार्थविषयकात् । एवं च प्रमाणस्य प्रामाण्यं प्रमाणान्तरेण ज्ञायते, न तूत्पाद्यते । तस्योत्पत्तिस्तु यथासम्भवं स्वतः परतो वा इत्यन्यत् । एवं च शब्दाद्वैतवादिनां वैयाकरणानां मते शब्दब्रह्मणो न कथमपि प्रमाणविषयत्वम् । मातृमेयभावस्तु द्वैतहेतुक इति शब्दब्रह्मणः साक्षात्कारे न प्रमातुः प्रमातृत्वम्, न वा ब्रह्मणः प्रमेयत्वम् ।

अथैतन्मते शब्दब्रह्मणः साक्षात्कारः कथं सम्भवेत्? तस्य प्रमात्रधीनत्वात्, कथं वा उपनिषदां तत्र प्रवृत्तिरिति चेत्, उच्यते–शब्दाद्वैतसाक्षात्कारो नाम द्वैतसाक्षात्काराभावः, द्वैतभावनायाः समूलनिवृत्तिरिति यावत् । उक्तसाक्षात्काराव्यवहितपूर्वक्षणपर्यन्तं प्रमाणानां प्रवृत्तिरप्यव्याहतैवास्ति । तादृशावस्थासम्पादनार्थतयैवोपनिषदां चारितार्थ्यम्, ईदृशी एव ब्रह्मणि प्रमाणानां प्रवृत्तिरिति दिक् । द्रव्यादीन्यचेतनानि प्रमेयाणि प्रमेयसमीक्षायां निबन्धावसाने द्रष्टव्यानि ।

**प्रमाणभेदाद् दर्शनभेदः**

जगतो हि मूलतत्त्वसम्प्रेक्षणं प्रमाणैकसाध्यम् । प्रमाणं तु नैकमेव, अपि त्वनेकम् । तथा च कारणभेदात् कार्यभेद इति सिद्धान्तेन प्रमाणभेदाद् दर्शनभेद इति निश्चप्रचम् । तत्र च मूलतत्त्वानुसन्धाने समर्थं प्रमाणं प्रत्यक्षमिति केचन मन्यन्ते, इतरे त्वनुमानम्; अपरे श्रुतितन्मूलकस्मृत्यादिजातमिति संगिरन्ते । एवं नीत्या सामान्यतो दर्शनानां त्रैविध्येऽपि प्रकारान्तरेण पुनरपि प्रत्येकं बहुविधत्वं सम्पद्यते । यथा चक्षुष्मतामपि मध्ये कश्चन दूरवर्ति वस्तु आलोचयितुं क्षमते, कश्चिदासन्नमेव, कश्चिदासन्नतरमेव । अनुमानेनापि कश्चन सूक्ष्मं वस्तु अनुमिनोति, कश्चन सूक्ष्मतरम्, कश्चन सूक्ष्मतममपि । एवं श्रुतावपि कश्चिद् वाच्यार्थमालोच्य कश्चन व्यङ्ग्यार्थमादाय, कश्चन निगूढव्यङ्ग्यार्थमादाय । अतश्च प्रमाणभेदन भिन्नान्यपि दर्शनानि पुनर्नैकविधानीति सिद्धान्तः ।

**दर्शनानां त्रैविध्यम्**

एवं च सामान्येन प्रात्यक्षिकम् आनुमानिकं श्रौतं चेति दर्शनानां त्रैविध्यं सम्पन्नम् । तत्र प्रत्यक्षमेव प्रमाणं मन्वानाः प्रात्यक्षिका अतीवस्थूलदृश्वानश्चार्वाका इत्युच्यन्ते । प्रत्यक्षप्रमाणं स्वीकुर्वाणा अपि आनुमानिकाः श्रौताश्च मूलतत्त्वं प्रत्यक्षेणैवान्वेष्टुं न प्रयतन्ते, अतस्ते प्रात्यक्षिका इति न कथ्यन्ते; अपि तु मूलतत्त्वन्वेषणे येऽनुमानप्रमुखास्ते आनुमानिकाः । ते च द्विविधाः – नास्तिका आस्तिकाश्च । तत्र श्रुतेः प्रामाण्यमनभ्युपगच्छन्त आद्याः, तदितरे द्वितीयाः । आद्याः पुनस्त्रिविधाः – चार्वाकाः, ऐकान्तिकाः, अनैकान्तिकाश्च । पृथिव्यादीनि चत्वार्य्येव भूतानि प्रत्यक्षप्रमाणगम्यानि सत्यानि, अन्यत् स्वर्गनरकादिकं सर्वमसत्यम् । वैषयिकं सुखमेव सारसर्वस्वम् । सङ्घातविशेषाद् देहचैतन्यमुपजायते, किण्वादिभ्यो मदशक्तिरिव तदपि न तत्त्वान्तरम् । मरणोत्तरं पुनर्जन्म न भवति । अत एव–

**यावज्जीवेत् सुखं जीवेद् ऋणं कृत्वा घृतं पिबेत् ।**
**भस्मीभूतस्य देहस्य पुनरागमनं कुतः ॥**

इत्यादिकं चारुवाक्यं ब्रुवाणाश्चार्वाकाः प्रोच्यन्ते । बौद्धास्त्वैकान्तिका इत्युच्यन्ते । एकान्तो निश्चयः । भगवान् बुद्धो हि मूलतत्त्वमन्विष्यन् अनुमानप्रमाणेन इदमीदृशमेवेति मनसि एकान्तीकृत्य (निश्चित्य) आर्यसत्याभिधं तत्त्वचतुष्टयं स्वशिष्येभ्य उपदिदेश–'सर्वं दुःखं दुःखम्, क्षणिकं क्षणिकम्, स्वलक्षणं स्वलक्षणम्, शून्यं शून्यम्' इति । द्विरुच्चारणमादरार्थं सद् निश्चयं द्योतयति ।

जैनाचार्यमहात्मानोऽनैकान्तिकाः । जिनस्य मूलतत्त्वान्वेषणे इदमीदृशमेवेति निश्चिता मतिर्नैव क्वचिदजायत, 'केनचिद् दुःखमित्युक्ते स्याद् दुःखम्, केनचित् सुखमित्युक्ते स्यात् सुखम्' इति मतिः सम्भूता, अत एवैतदनुयायिनः स्याद्वादिन इति कथ्यन्ते ।

श्रुतिप्रमाणेन परलोकविषयकप्रमावन्त आस्तिका माहेश्वर-वैशेषिक-नैयायिक-सांख्य-पातञ्जल-पूर्वमीमांसक-वैदान्तिक-वैयाकरणभेदेन बहुविधाः ।

तत्र श्रुतिरप्रमाणमिति नास्तिका इव स्पष्टतया अब्रुवाणा माहेश्वराः श्रुतौ मन्दतमश्रद्धाः । तत्र मन्दतरश्रद्धा वैशेषिका नैयायिकाश्च ।

एते हि स्वसिद्धान्तविरोधित्वेन ज्ञातस्य श्रुतिवचनस्य तदविरोधित्वेन योजनायां प्रवर्तमाना दृश्यन्ते । तत्र मन्दश्रद्धाः पुनः सांख्याः पातञ्जलाश्च । इमे हि– आनुमानिकस्य प्रधानादितत्त्वस्य श्रुतिसम्मतत्वं सम्पादयितुम् 'अजामेकाम्' इत्यादि-श्रुतिवाक्यान्युदाहृत्य स्वीयसिद्धान्तानुगुण्येन तानि योजयितुं प्रवर्तन्ते ।

श्रुतौ पूर्णश्रद्धाः पुनरितरेऽवशिष्टास्त्रयः, कर्मकाण्डज्ञानकाण्डोपासनाकाण्डभेदेन श्रुतीनां त्रैविध्यात् । तत्र कर्मप्रधानश्रुतिषु बद्धादराः पूर्वमीमांसकाः । ज्ञानप्रधान-श्रुतिषु निर्भरा उत्तरमीमांसका वेदान्तिनः । उपासनाप्रधानश्रुतिषु मुख्यतया कृताश्वासाः शब्दब्रह्मणि अद्वैतभावनया प्रवर्तमाना वैयाकरणाः । ते चाद्यत्वे पाणिनीया एव । तत्र पूर्वमीमांसासम्मतकर्मानुष्ठानेन चित्तशुद्धिर्भवति । ततश्च ज्ञानकाण्डे प्रवृत्तिरित्युत्तरमीमांसाधिकारः ।

व्याकरणदर्शनं तु–'शब्दानां साधुत्वविषयकसंस्काररूपोपासनया शुद्धचित्तः पुमान् पराख्ये शब्दब्रह्मणि संयुज्यते' इति शब्दब्रह्मणा सायुज्यलक्षणं मोक्षं प्रतिपाद-यन्नितरां राराज्यते । उक्तं च–

> **तस्माद्यः शब्दसंस्कारः सा सिद्धिः परमात्मनः ।**
> **तस्य प्रवृत्तितत्त्वज्ञः स ब्रह्मामृतमश्नुते** ॥ इति ॥

प्रतिभावन्तः सहृदया मनीषिणो दर्शनानि समालोच्य तेषु अद्वैतवादमेव सारभूतं निश्चितवन्तः । अद्वैतवादेऽपि भेदबाहुल्ये सत्यपि द्वयमेव समानजातीयं सिद्ध्यति, शाङ्करं पाणिनीयं च । आद्यं तु सच्चिदानन्दाभिधस्य परब्रह्मणो विवर्तभूतं सर्वं जगदिति मनुते । द्वितीयं तु वाग्ब्रह्मणो विवर्ततया प्रपञ्चजातमङ्गीकरोति । अखण्डानन्दैक-रसरूपस्यात्मनोऽभिव्यक्तिरेव सायुज्यलक्षणो मोक्ष उभयसम्मत इति शम् ।

●

# प्रत्यक्षप्रमाणसमीक्षायां
## प्रथमं पुष्पम्

अथ प्रत्यक्षप्रमाणसमीक्षायां प्रथमं तावत् प्रमाणलक्षणं समीक्ष्यते । तत्रानिर्ज्ञातार्थस्य साकल्येन ज्ञापकत्वं प्रमाणसामान्यलक्षणम्[1] । अत्र साकल्येनेति पदमबाधितार्थविषयकत्वं गमयति । बाधितार्थविषयकं हि ज्ञानं नानिर्ज्ञातमर्थं साकल्येन प्रकाशयति, अत एव संशयविपर्ययादीनां निरासो बोध्यः । अनिर्ज्ञातार्थेत्यत्र निरित्युपसर्गो नैरन्तर्यार्थकः, ततश्चाव्यवधानं लभ्यते । ज्ञातपदे क्तप्रत्ययस्यार्थः कर्मकारकम्, भूतकालश्च, कर्मता चात्र विषयताविशेषरूपा, तस्यान्वयश्च नञर्थाभावे । उपसर्गार्थस्य क्तार्थकालस्य च ज्ञाधात्वर्थे ज्ञानेऽन्वयः । एवं चाव्यवहितपूर्वकालवृत्ति यज्ज्ञानं तद्विषयत्वाभाववान् अर्थोऽनिर्ज्ञातार्थ इति सम्पन्नम् ।

अतश्च यत्र पूर्वक्षणे घटः प्रत्यक्षीकृतः, तदुत्तरक्षणे घटादिप्रत्यक्षोपक्रमे घटप्रत्यक्षं विनष्टम् । पुनश्च तृतीयादिषु क्षणेषु जायमाने घटप्रत्यक्षेऽव्याप्तिदोषाभावः, अव्यवहितपूर्वक्षणे घटप्रत्यक्षस्याभावात् । साकल्येनेति पदमबाधितार्थविषयकत्वं गमयति । बाधितार्थविषयकं हि ज्ञानं नानिर्ज्ञातमर्थं साकल्येन प्रकाशयति । एतेन संशयविपर्ययादीनां निरासः क्रियते, तेषां बाधितार्थविषयकत्वात् । अत्र व्याकरणशास्त्रे एकधर्मिकविरुद्धकोटित्रितयोऽपि संशयः स्वीक्रियते । अत एव त्रिषु संशयो यासु ता इति व्यधिकरणबहुव्रीहिरभ्युपगतः, 'त्रिसंशया' इति भाष्योक्ते पदे[2] । जैनदर्शने श्रीहेमचन्द्राचार्येणाप्येतादृशः संशयः समादृतोऽस्ति[3] । विपर्ययलक्षणं च तदाश्रयत्वाभाववति तदाश्रयत्वप्रकारकज्ञानत्वम्, न तु तदभाववति तत्प्रकारकज्ञानत्वम् । दार्शनिकसार्वभौमेन श्रीवाचस्पतिमिश्रेणाप्येतादृशमेव तल्लक्षणमङ्गीकृतमस्ति[4] । एवमेवाऽऽहार्यारोपनिर्विकल्पकप्रत्यक्षसामान्यज्ञानानामपि निरासः कृतप्राय एव, तेषामपि सकलार्थविषयकत्वाभावात् ।

---

1. म. भा., प्र. उ. २/१/५५ ।
2. म. भा. १/१/४३ ।
3. प्र. मी., टि., पृ. ५ ।
4. वै. सि. ल. म., र. प्र. टी., बौ. नि., पृ. २३३ ।

अनिर्ज्ञातार्थेत्यत्रार्थपदेन बौद्धो बाह्य इति द्विविधोऽपि ग्राह्यः, बौद्धस्यापि प्रत्यक्षादिविषयत्वात् । अर्थ्यते याच्यते इत्यर्थः, अर्थ्यते इति वा अर्थः । ऋ गतावित्यस्मात् थन्-प्रत्ययः औणादिकः । ज्ञापकत्वमित्यत्र प्रमारूपं ज्ञानं धात्वर्थः, णिजर्थः प्रयोजकव्यापारः, स चानुकूलव्यापारः । वुप्रत्ययार्थ आश्रयः । एवं च प्रमानुकूलप्रेरणाश्रय इति लभ्यते । तस्य च प्रमाकरणरूपेऽर्थे पर्यवसानम् । प्रमीयते येन तत्प्रमाणमिति व्युत्पत्तेः ।

अथ ईश्वरे प्रमातृत्वव्यवहारः, तज्ज्ञानस्य च प्रमाणत्वव्यवहारः कथं स्यात् ? तदीयज्ञानस्य नित्यत्वात् प्रत्यक्षरूपत्वादुक्तप्रमायाः प्रमाणजन्यत्वेनानित्यत्वादिति चेत्, उच्यते– तद्वन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशालिज्ञानत्वं प्रमालक्षणम् । ईदृश-प्रमाश्रयत्वमेवेश्वरे प्रमातृत्वम् । प्रमाया अयोगाभाव एव ईश्वरे प्रमाणत्वमिति कुसुमाञ्जल्युक्तदिशैव[1] समाधानं बोध्यम् । अनुक्तमपि अप्रतिषिद्धमनुमतमेवेति न्यायेनात्रापि[2] शास्त्रे तस्या रीतेः स्वीकारे न कापि हानिः । स्वीकृतं च तादृशं प्रमालक्षणं श्रीमता नागेशभट्टेन[3] ।

## अष्टाध्यायीसूत्रेषु प्रामाण्यम्

विधिसूत्रेषु "इको यणचि" इत्यादिषु अनिर्ज्ञातार्थस्य यणादिकार्यस्य तद्घटित-साधुत्वस्य च साकल्येन ज्ञापकतया प्रामाण्यं सुनिश्चितमेव । संज्ञापरिभाषाऽधिकार-सूत्रेषु अनिर्ज्ञातार्थस्य स्वस्ववाक्यार्थस्य सामस्त्येन प्रमापकतया अस्त्येव प्रामाण्यम् । नियमातिदेशसूत्रयोरपि तत्तद्विध्यङ्गत्वेन[4] तात्पर्यविषयीभूतस्यानिर्ज्ञातार्थस्य साधुत्व-रूपस्य बोधने पर्यवसिततया प्रामाण्यमक्षतमेव ।

"अन्नं ब्रह्म इत्युपासीत" इति श्रुतेरारोपितार्थविषयकबोधजनकत्वेऽपि यथा तादृशप्रवृत्तिफलकतयैव प्रामाण्यं तद्वत् । एवमेव "पूर्वत्रासिद्धम्" इत्यादीनामपि तत्त्वं बोध्यम्[5] ।

---

1. न्या. कु. ४।१।५ ।
2. म. भा., पस्पशा., पृ. ६६; न्या. द. भा. १।१।४ ।
3. वै. सि. ल. म., टीकाद्वय., बौ. नि., पृ. ३२९-३० ।
4. प्रौ. म., हलन्तपुं., "नलोपः सुप्स्वर." सूत्रम् ।
5. ल. श. शे., सं. प्र. ।

## प्रमात्वस्य स्वतस्त्वं परतस्त्वं वा ?

प्रमात्वस्य स्वतस्त्वं दोषविशेषाभावे सति स्वाश्रयग्राहकज्ञानसामग्रीग्राह्यत्वम्[1] । तादृशसामग्र्यतिरिक्तग्राह्यत्वं परतस्त्वम् । तत्र व्याकरणदर्शने ज्ञानगतं प्रमात्वं ज्ञानग्राहकसामग्र्या एव प्रकाशत इति तस्य स्वतस्त्वमेव । उक्तं च–

**आत्मरूपं यथा ज्ञाने ज्ञेयरूपं च दृश्यते**[2] ॥ इति ।

तन्निष्ठप्रकारत्वावच्छिन्नतद्वन्निष्ठविशेष्यतानिरूपकत्वं प्रमात्वमभ्युपयन्तः श्रीनागेशभट्टा अपि तस्य स्वतस्त्वं सूचयन्ति[3] । मीमांसादर्शनानुमोदितोऽयं सिद्धान्तः[4] । न्यायदर्शने तु ज्ञानस्यानुव्यवसायग्राह्यत्वम्, प्रमात्वस्य च संवादिप्रवृत्तिजनकत्वलिङ्गकानुमानग्राह्यत्वं सिद्धान्तितमस्ति[5] । किन्तु इदं मतं न युक्तिसहम् अनुव्यवसायस्यापि ज्ञानत्वेनानुव्यवसायान्तरग्राह्यत्वेनानवस्थाप्रसङ्गात् । एतद्विषये मतान्तराण्यपि द्रष्टव्यानि ।



---

1. ल. म., कु. टी., पृ. ३३१ ।
2. वा. प. १।५० ।
3. वै. सि. ल. म., र. प्र. युता, बौद्धार्थनिरू, पृ. ३०९ ।
4. न्या. सि. मु., का. १३६ ।
5. तदेव ।

# प्रत्यक्षप्रमाणसमीक्षायां

## द्वितीयं पुष्पम्

### अथ प्रत्यक्षं प्रमाणम्

अथ व्याकरणदर्शनसम्मतेषु चतुर्षु प्रमाणेषु किं तावत् प्रत्यक्षप्रमाणमिति चेत्, उच्यते– "इन्द्रियार्थसन्निकर्षजन्या या चित्तवृत्तिः, तत्प्रतिबिम्बितं चैतन्यं प्रत्यक्षप्रमा, तत्करणं प्रत्यक्षप्रमाणम्" इति[1] । यथा कूपादिजलं नालिकातो निर्गत्य केदारान् प्रविश्य तदाकारं भवति, तथैव तैजसमन्तःकरणम् (चित्तम्) अपि चक्षुरादि-प्रणालिकया घटादिदेशं गत्वा घटादिविषयाकारं भवति । तस्येयमेव घटादिविषया-कारता वृत्तिरिति परिणाम इति वोच्यते । सा चेयं वृत्तिर्बाह्यविषयाभेदेन बौद्धस्यार्थस्य भवति, बाह्यपदार्थाभावे तु बौद्धस्यैवेति विशेषः । अस्यां वृत्तौ चैतन्यस्य प्रतिबिम्बनम्, अथवा एनां वृत्तिं द्वारीकृत्य घटादीनां साक्षिरूपे चेतने प्रतिबिम्बनं वृत्तिजन्यं फलं प्रकटतारूपा प्रमा इत्युच्यते[2] ।

तत्साधनीभूता वृत्तिः प्रमाणपदेनोच्यते । विषयचैतन्यस्यावरणभङ्ग एव व्यापारः । क्वचन वृत्तावपि गौणः प्रमात्वव्यवहारः, तदा चक्षुरादीन्द्रियं प्रत्यक्षं प्रमाणं तत्सन्निकर्षो व्यापार इति मन्तव्यम् । तत्रेदं ज्ञानं प्रत्यक्षमिति ज्ञानगतप्रत्यक्षत्वप्रयोजकं किमिति जिज्ञासायामुच्यते– प्रत्यक्षविषये औपाधिकभेदेन त्रिविधं चैतन्यमुपयुज्यते, अन्तःकरणावच्छिन्नम्, वृत्त्यवच्छिन्नम्, विषयावच्छिन्नं चेति । तत्राद्यं प्रमातृचैतन्यम् (जीवः), द्वितीयं प्रमाणचैतन्यम्, तृतीयं प्रमेयचैतन्यमिति व्यपदिश्यते ।

तत्र प्रमाणप्रमेयचैतन्ययोरेककाले एकदेशस्थता यदा भवति, तदा ज्ञानस्य प्रत्यक्षत्वव्यवहारः[3] । घटादेर्विषयस्य प्रत्यक्षत्वे तु विषयस्य प्रमात्रभेदः प्रयोजकः । स च प्रमातृसत्तातिरिक्तसत्ताकत्वाभावः, न तु तदैक्यरूपः, घटादीनां सर्वेषां पदार्थानां चैतन्येऽध्यस्ततया विषयावच्छिन्नचैतन्यसत्तैव घटादिसत्ता भवति । अधिष्ठानसत्ता-

---

1. वै. सि. ल. म., टी. द्व., पृ. २४७; ल. म., र. प्र. टीका, पृ. ३०५ ।
2. वै. सि. ल. म., टी. द्व., पृ. ३३६; ल. म., र. प्र. टीका च, पृ. ३०४-३०५ ।
3. वै. सि. ल. म., टी. द्वय. बौ. नि., पृ. ३२७-३२८ ।

तिरिक्ताया आरोपितसत्ताया अनभ्युपगमादिति[1] वेदान्तपद्धतिरत्र शाब्दिकैरपि मन्तव्या, भाष्यकारादिभिरप्रतिषिद्धत्वाद् वृत्तेः प्रत्यक्षाय वृत्त्यन्तरं न भवति, अनवस्थाप्रसङ्गात्; किन्तु साक्षिणैवास्याः प्रत्यक्षं भवति[2]। वृत्तेर्विमर्शश्च कृतो भगवता भाष्यकृता–"मनसा संयुक्तानि इन्द्रियाणि उपलब्धौ कारणानि भवन्ति"[3] इति । अत्रोपलभ्यतेऽनया इति करणक्तिन्नन्तत्वेनोपलब्धिशब्दो[4] वृत्तिरूपार्थपरो भवितुमर्हति । "अपक्रामति तत्तस्माद् दर्शनम्" इति भाष्यवाक्ये[5] दर्शनपदेन वृत्तिरेवाभिमता । न हि करणसाधनयोरुपलब्धिदर्शनशब्दयोः कोऽपि अर्थकृतो विशेषः । अत एव च– "आत्मा बुद्ध्या समेत्यार्थान् मनो युङ्क्ते विवक्षया" इति पाणिनीयशिक्षां व्याचक्षाणेन श्रीनागेशभट्टेन–"आत्मान्तःकरणं संस्काररूपेण स्वगतान् अर्थान् बुद्ध्या स्ववृत्त्या समेत्य एकबुद्धिविषयान् कृत्वा तद्बोधनेच्छया मनो युक्तं करोति" इत्युक्तं सुष्ठु संगच्छते[6] । सा चेयं वृत्तिर्बुद्धितत्त्वरूपस्यान्तः- करणस्य विषयाकारता एव । पुनश्च 'मनो युङ्क्ते' इत्यनेन मनसोऽपि तदाकारा वृत्तिरित्युच्यते । तत्र प्रत्यक्षस्थले इन्द्रियद्वारा मनसो विषयेण सह संयोगोऽपि नियामकः, परोक्षस्थले तु तमन्तरैव बौद्धपदार्थाकारा मनसो वृत्तिर्भवतीति विशेषः ।

### सांख्यनये प्रत्यक्षोत्पत्तिकालः

१. प्रथमक्षणे महत्तत्त्वस्य (बुद्धेः) अहंतत्त्वेन सह संयोगः ।
२. द्वितीयक्षणेऽहंतत्त्वस्य मनसा सह संयोगः ।
३. तृतीयक्षणे मनस इन्द्रियेण सह संयोगः ।
४. चतुर्थक्षणे इन्द्रियस्य घटादिविषयेण सह संयोगः ।
५. पञ्चमक्षणे इन्द्रियेण विषयस्य मनसे समर्पणम् ।
६. षष्ठे क्षणे तस्य विषयस्य मनसा अहङ्काराय समर्पणम् ।
७. सप्तमक्षणेऽहङ्कारेण बुद्धौ समर्पणम् ।

---

1. वे. प., टी. द्वय., शि. म., पृ. ६५-६८ ।
2. ल. म., टी. द्वय., पृ ३२७-२८ ।
3. म. भा. ३।२।११८ ।
4. म. भा. "अइउण्" इति सूत्रे उद्द्योतः ।
5. म. भा., उ. २।३।२८ ।
6. ल. श. शे., सं. प्रकरणम्, पूर्वत्रासिद्धम् ।

८. अष्टमे क्षणे तादृश्यां बुद्धौ आत्मनः प्रतिबिम्बनम्, अथवा तस्या बुद्धेरात्मनि प्रतिबिम्बनम् ।

एवंरीत्या अष्टौ क्षणा उपयुज्यन्ते । चक्षुरादीन्द्रियस्य, अथवान्तःकरणानां बुद्ध्यहङ्कारमनसां चक्षुरादीन्द्रियस्य युगपद् व्यापारो भवतीति पक्षे तेषामेकक्षण एव विषयेण सह संयोगे सति द्वितीयक्षणे चितिच्छायया आलोचनसङ्कल्पाभिमानाध्यवसाया भवन्ति । अत एव सन्तमसे विद्युत्सम्पातमात्रेण यदा व्याघ्रमतिसन्निहितं पश्यति, तदा झटित्येव तत उत्प्लुत्य अपसरति । प्रथमपक्षे तु यदा मन्दालोके प्रथमं तावद् वस्तुमात्रमालोचयति, ततोऽवहितमना व्याघ्रोऽयमिति निश्चिनोति । अथ च मां प्रत्येति– इत्यभिमन्यते । अथ अध्यवस्यति अपसरणीयमितः स्थानादिति[1] ।

**न्यायनये प्रत्यक्षोत्पत्तिक्रमः**

यद्यप्यात्मनः संयोगेनात्मनि प्रयत्न उत्पद्यते, ततस्तेन प्रयत्नेन द्वितीयक्षणे मन-इन्द्रियसंयोगः, ततस्तृतीयक्षणे इन्द्रियविषयसंयोगः, ततश्चतुर्थक्षणे विषयप्रत्यक्षं जायत इत्यस्ति क्रमविमर्शः । तथापि प्रथमक्षणीय आत्ममनःसंयोगः प्रयत्नमुत्पाद्य प्रत्यक्षं प्रति अन्यथासिद्धं भवति । तर्हि कस्तावदात्ममनःसंयोगोऽत्र पक्षे हेतुतयाऽभ्युपेयत इति चेत्, मन-इन्द्रियसंयोगाधिकरणीभूत एव क्षणे जायमान इति विभावनीयम् । एवं च प्रथमक्षण एव आत्ममनःसंयोगः, मन-इन्द्रियसंयोगः । ततो द्वितीयक्षणे विषयेण सह संयोगः । ततस्तृतीयक्षणे प्रत्यक्षं भवति, इति बाह्यविषयप्रत्यक्षोत्पत्तिक्रमः[2] । आन्तरसुखादिप्रत्यक्षे तु प्रथमक्षणे तदनुगुण आत्ममनःसंयोगः, द्वितीयक्षण एव संयुक्तसमवायसन्निकर्षेण सुखादिप्रत्यक्षमुत्पद्यत इति विशेषः ।

**वेदान्तिनये प्रत्यक्षोत्पत्तिक्रमः**

अद्वैतदर्शने प्रथमक्षणे मनस इन्द्रियप्रणाल्या विषयेण सह सम्बन्धः, द्वितीयक्षणे मनसो विषयाकारवृत्तिः, तत्र चेतनस्य प्रतिफलनम्, ततस्तृतीयक्षणेऽज्ञानध्वंसः ततश्च चतुर्थक्षणे विषयस्य प्रकाशः[3] ।

---

1. सां त. कौ., कारि. ३० ।
2. न्या. द. भा. १।१।४ ।
3. वे. प., प्र. परि. ।

### व्याकरणदर्शने प्रत्यक्षोत्पत्तिविषये विशेषः

अत्र व्याकरणदर्शनेऽपि प्रत्यक्षोत्पत्तिविषये क्रमविमर्शः सप्रमाणं कृतोऽस्ति । तत्र सांख्यदर्शनीयः क्रम एव यद्यपि समादृतः, तथापि वेदान्तदर्शनीयक्रमेऽपि श्रद्धा अस्त्येव, सर्ववेदपारिषदं हीदं शास्त्रमिति सिद्धान्तात् । तावतापीयान् विशेषोऽवश्यं द्रष्टव्यः, बाह्यविषयस्थले तदविभागेनैव बौद्धविषयस्य, अन्यत्र बौद्धस्यैवार्थस्याऽऽकारेण बुद्धेर्वृत्तिर्भवति । सा चेन्द्रियेण सहैव । तत्रेन्द्रियाणां विषयदेशे गमनेन प्रत्यक्षोत्पत्तौ प्राप्यकारित्वम्, अन्यथा अप्राप्यकारित्वम् । तत्र चक्षुष एव प्राप्यकारित्वम्,[1] न तु श्रोत्रादीनाम् । तत्र तु शब्दस्पर्शादिविषयाणामेवेन्द्रियदेशे सन्निधानमपेक्ष्यते, तथा सत्येव तेषां प्रत्यक्षं भवतीति विशेषः ।

### चक्षुषः प्राप्यकारित्वे आधुनिकानां जिज्ञासा, तत्समाधानं च

यदि चक्षुरिन्द्रियं विषयदेशं गत्वा प्रत्यक्षं जनयति, तर्हि सूर्यमण्डलस्य चाक्षुषकाले मध्यवर्तिनां ग्रहनक्षत्रादीनामपि चाक्षुषं कुतो न भवेदिति जिज्ञासा जायते आधुनिकानां मनीषिणाम् । अत्रेदं समाधानं निबन्धे कृतं दृश्यताम्– यथा सन्निहिता अपि सूच्यादयः सूक्ष्मपदार्था मध्ये स्थिता अपि न दृश्यन्ते, दूरे स्थिता अपि वृक्षादयो दृश्यन्ते । तत्र सूक्ष्मपदार्थानामदर्शने अल्पपरिमाणत्वमेव हेतुर्मन्तव्यम् । सूर्यमण्डलं तु दूरत्वदोषयुक्तमपि महापरिमाणतया प्रत्यक्षीक्रियते । मध्ये स्थितानामपि ग्रहनक्षत्रादीनामल्पपरिमाणत्वेन ग्रहणं न भवति । किं च सौरालोकेनाभिभवान्न तेषां प्रत्यक्षमित्येवमभिभवरूपो हेतुः शास्त्रेषु उक्त[2] एवेति यद्युच्यते, तर्हि दूरवर्तिनामपि पृथिवीस्थानां पर्वतादीनां प्रत्यक्षं भवति, मध्ये स्थितानां लघुपदार्थानां तद् न भवति, तत्कस्य हेतोः ? इति सौरालोकादिना येषां नाभिभवस्तद्विषये प्रश्नसङ्गतिरानेया, समाधिस्तूक्त एव । यदि तूपनेत्रसहकृतं नेत्रं सूच्यादिदर्शनेऽपि समर्थमित्यनुभूयते, तर्हि प्रकृतेऽपि दूरवीक्षणयन्त्रसहकृतं नेत्रं गृह्णात्येव दिवा नक्षत्रादिमण्डलमिति सर्वमुपपन्नमिति शम् ।

### इन्द्रिय-समीक्षा

शाब्दिकनये–महदहङ्कारचेष्टाभिन्नत्वे सति प्रतिशरीरमात्मतत्त्वानुमापकत्वमिन्द्रियसामान्यलक्षणम्[3] । महत्तत्त्वे अहन्तत्त्वे चेष्टायां चातिप्रसङ्गनिरासाय सत्यन्तदलम् ।

---

1. वा. प. १।८० ।
2. सा. त. कौ., का. ७ ।
3. पा. सू. ५।२।९३ ।

एकादशसंख्याकानि इन्द्रियाणि सांख्यशास्त्रवदत्रापि मन्यन्ते । इन्द्रियविषयकं विशदं व्याख्यानमत्र निबन्धे द्रष्टव्यम् ।

### प्रत्यक्षोत्पादे व्यापारभूताः सन्निकर्षाः

घटादिविषयके प्रत्यक्षे जननीये आत्मबुद्ध्यहङ्कारमन-इन्द्रियविषयाणां षण्णां सन्निकर्षो व्यापारतया सम्मतः । आन्तरे सुखादिविषयके प्रत्यक्षे तु चक्षुरादीनाम-योगात् पञ्चानामेव, आत्मविषयके प्रत्यक्षे तु चतुर्णामेवेति विशेषः । स च सन्निकर्षः संयोगसमवायविशेषणतादिघटितो न्यायशास्त्र इवात्रापि[1] स्वीकृतः ।

### शब्दस्य प्रत्यक्षे कश्चन विशेषः

अत्र दर्शने शब्दस्य द्वे स्वरूपे– व्यञ्जकम्, व्यङ्ग्यं च[2], अनित्यम्, नित्यं[3] च, ध्वनिः[4], स्फोटश्चेति[5] ।

तत्र ध्वनिरूपशब्दस्य प्रत्यक्षे करणीये तेन सह श्रोत्रेन्द्रियस्य समवायः सम्बन्धः, श्रोत्रस्याकाशरूपत्वात्, ध्वनिरूपशब्दस्य गुणत्वात् । स्फोटात्मकशब्दस्य श्रावणप्रत्यक्षे तु स्वसमवेत-(ध्वनि)तादात्म्यं सम्बन्धः । मनसा तस्य ग्रहणमिति मते तु स्वसंयुक्तात्मविशेषणतारूपः सन्निकर्षो मन्तव्यः, "न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते" इति सिद्धान्तेन चाक्षुषादिप्रत्यक्षे तु स्वसंयुक्त-(घटादि)विशेषणता-सन्निकर्षो बोद्धव्यः[6] । सन्निकर्षविषये संवादितया विसंवादितया च बहूनि न्यायदर्शनजैनदर्शनादिमतानि उपस्थापितानि निबन्धे द्रष्टव्यानि ।

### चाक्षुषादिप्रत्यक्षे सहकारीणि

चाक्षुषप्रत्यक्षे आलोकः, द्रष्टुर्मनसश्चक्षुषः समाधानम्, महत्परिमाणम्, विषयगत-मुद्भूतरूपं चैतानि सहकारीणि स्वीकृतान्यत्र दर्शने ।

---

1. तर्कसं., प्र. परि. ।
2. म. भा., प्र. उ., नवा., पृ. १४ ।
3. म. भा., प्र. उ., नवा., पृ. १२-१३ ।
4. म. भा., प्र. उ., नवा., १।१।६९ ।
5. म. भा., श. कौ., नवा., प्रारम्भ एव ।
6. म. भा., श. कौ., नवा., प्रारम्भ एव ।

आलोकोऽयं द्विविधः । एकस्तु नेत्रस्थः, यथा सिंहव्याघ्रविडालानां नेत्रेष्वस्ति आलोकः, यस्तु सौरालोकेन नाभिभूतो भवति, अत एव ते दिवापि पश्यन्ति, उलूकस्य तु नयनालोको दिवा सौरप्रभयाभिभूतो भवति, अत एव स दिवा न पश्यति, रात्रौ तु स्वीयनयनालोकस्तस्यापि चाक्षुषे सहकारी भवति । द्वितीयस्तु सौराद्यालोकः प्रसिद्ध एव ।

न्यायदर्शने तु षड्विधेऽपि प्रत्यक्षे महत्त्वम्[1], चाक्षुषे तु प्रत्यक्षे उद्भूतरूपमालोकञ्च[2] सहकारितया सम्मन्यन्ते । अत्र दर्शने तु मनःप्रणिधानादीनामपि यत् सहकारित्वमभिमतम्, तदप्यन्वयव्यतिरेकाभ्यां समीचीनमेव । एवमेव चाक्षुषेऽञ्जनलेपजनितसंस्कारस्यापि व्यापारविधया हेतुत्वमभ्युपेयते शाब्दिकनये ।

"अञ्चोऽनपादाने" इति सूत्रीयभाष्यप्रदीपोद्द्योतानामध्ययनेन अञ्जनव्यञ्जनाभ्यां नयनरसनयोः संस्कारो भवतीति स्पष्टमुपलभ्यते[3] । वाक्यपदीये श्रीहरिणापि तेज आदिना इन्द्रियस्य संस्कारो भवतीत्यादि प्रतिपादयता संस्कारविषये मतत्रयं प्रदर्शितम्[4] ।

तत्रायं संस्कारो द्विविधः – १. इन्द्रियदोषापनायकः, २. इन्द्रियेषु शक्त्यतिशयाधायकश्च[5] । तत्राद्यस्तु प्रतिबन्धकाभावसम्पादकत्वेनान्यथासिद्धिमेव भजते । द्वितीयस्तु इन्द्रियजन्ये प्रत्यक्षे व्यापारविधया हेतुतामेवानुभवति ।

●

---

1. न्या. सि. मु., का. ५८ ।
2. न्या. सि. मु., का. ५५ ।
3. म. भा., प्र. उ. ८।२।४९ ।
4. वा. प. १।७८-८० ।
5. वा. प., अम्बा. टी. १।७८ ।

# प्रत्यक्षप्रमाणसमीक्षायां

## तृतीयं पुष्पम्

यथा शैलेयस्य कुङ्कुमस्य वा गन्धः स्वाश्रयसंयोगिगोघृतगन्धेनैव अभिव्यक्तो भवति, यथा वा जलस्य मधुरो रसो हरीतक्या मधुरेणैव अनुद्भूतेन रसेनाभिव्यज्यते, तथैव घ्राणरसनचक्षुरादिवृत्तयोऽनुद्भूता गन्धरसरूपादयो गुणा बाह्यार्थवृत्तिस्व-सजातीयगन्धरसरूपादीनां प्रत्यक्षे हेतुतयाभिमताः । चाक्षुषे स्पार्शने मानसे च प्रत्यक्षे रूपादिगुणवत्तदाश्रयद्रव्याणामपि प्रत्यक्षमेतैर्गुणैर्भवतीत्यपि स्पष्टं वाक्यपदीये[1] ।

प्रत्यक्षहेतुतया न्यायदर्शनसम्मतानां त्रयाणामलौकिकसन्निकर्षाणां शब्दशास्त्रज्ञैः समादरो न क्रियते । तथा हि– "वृद्धिरादैच्" इति सूत्रीयं भाष्यं विवृण्वन् श्रीभट्टोजिदीक्षितः – "आत्वसामान्यलक्षणप्रत्यासत्त्या 'मार्ष्टि' इत्यादिप्रयोगसमवायिनां सर्वेषामाकाराणां वृद्धिशब्दवाच्यताग्रहात्" इत्युक्त्या[2] यद्यपि सामान्यलक्षणसन्निकर्षं सम्मनुते । "सामान्यलक्षणया भूतभाविसकलव्यक्तिविषयकशक्तिग्रहः सम्भवत्येव" इत्युक्त्या[3] श्रीनागोजिभट्टश्चापि तं सम्मन्यते, तथापि सामान्यलक्षणानभ्युपगमे त्वात्वजातौ शक्त्यनुभवपदार्थस्मरणवाक्यार्थबोधानां समानप्रकारकत्वेनैवातिप्रसङ्गभङ्गाभ्युपगमाद्वा । अन्यथा "गेहे घटोऽस्तीति वाक्यादपूर्वव्यक्तिर्न गृह्येतेति दिक्" इति वदन्[4] श्रीदीक्षितः, "सामान्यलक्षणानङ्गीकारेऽपि शक्तिग्रहबोधादीनां समानप्रकारकत्वेनैव कार्यकारण-भावाभ्युपगमान्न दोषः" इति वदन्[5] श्रीनागेशश्च नैव सम्मन्वाते सन्निकर्षमेनम् ।

एवमेव– "प्रत्यक्षेणैकस्यैव शब्दस्य श्रवणाद् भेदावगमे प्रमाणाभावः" इत्युक्त्या[6] "नैवाभ्युपेयतेऽयं सन्निकर्षः" इति भाष्योक्तं तात्पर्यं वर्णयता श्रीकैयटेनापि । अन्यथाऽस्य स्वीकारे भेदावगमेऽस्यैव प्रमाणत्वे "प्रमाणाभावः" इत्युक्तिः कथं सङ्गच्छेत ?

---

1. वा. प. १।५६-५७ ।
2. श. कौ. १।१।१, पृ. १७६ ।
3. म. भा., उ. १।१।१, पृ. १७५ ।
4. म. भा., श. कौ. १।१।१, पृ. १७६ ।
5. म, भा., उ. १।१।१, पृ. १७५ ।
6. म. भा., प्र. १।२।२७ ।

अत एव चोक्तं श्रीनागोजिभट्टेन–"प्रथमतो बालस्य यद्यपि विशेषव्यक्तावेव शक्तिग्रहः, तथापि आवापोद्वापन्यायेन आनयनादि दृष्ट्वा पूर्वं जातशक्तिग्रहस्य जात्याश्रयमात्रे व्यवस्थितिरिति तत्त्वम्"[1] इति । एवञ्च तत्तदर्थाश्रितजात्यादिरूपं सामान्यधर्मं द्वारीकृत्य तदाश्रयीभूतसकलव्यक्तीनां बोधः सम्पादयितुं सुशकः । अथ च तत्तद् धूमत्वेन तत्तद्वह्निव्याप्तिनिश्चयेऽपि धूमो वह्निव्याप्यो न वा ? इति संशयोऽपाकर्तुं कथमपि न शक्यते, उक्तनिश्चयस्य समानप्रकारकत्वाभावेनास्य संशयस्याविरोधित्वात् । समानप्रकारकस्यैव निश्चयस्य संशयविरोधित्वनियमादिति हृदयम्[2] ।

**ज्ञानलक्षणप्रत्यासत्तेरनभ्युपगमः**

'सुरभि चन्दनम्' इत्यत्र चन्दनांशे. चक्षुःसंयोगात्मकेन लौकिकसन्निकर्षेण, सौरभांशे चक्षुःसंयुक्तमनःसंयुक्तात्मसमवेतस्मृतिरूपज्ञानविषयत्वाख्येनालौकिकसन्निकर्षेणैकं चाक्षुषं प्रत्यक्षमुत्पद्यत इति न्यायविदां सिद्धान्तं[3] न सम्मन्वते शब्दशास्त्रविदः । तथा हि ज्ञानलक्षणप्रत्यासत्तिरित्यस्य ज्ञानस्वरूपसन्निकर्ष इत्यर्थः । तत्र ज्ञानस्य सन्निकर्षत्वं नैव सम्भवति, प्रतियोगित्वनिरूपकत्वाभावात्, उभयवृत्तित्वाभावाच्च । नापि ज्ञानलक्षणेत्यस्य ज्ञानविषयत्वमर्थः, ज्ञानविषयोभयरूपाया ज्ञानविषयताया ज्ञाननाशान्नाशे सम्बन्धत्वस्य सुतरामसम्भवात्[4] । किञ्चास्याः प्रत्यासत्तित्वे 'पर्वतो वह्निमान्' इत्यादावपि ज्ञानलक्षणसन्निकर्षेणाग्न्यादिसाध्यस्य चक्षुःसंयोगेन पर्वतरूपपक्षस्य च प्रत्यक्षमेव किं न स्यात्[5] ?

अतश्च सौरभांशे संस्कारः, चन्दनांशे चक्षुःसंयोग इत्युभयजन्यमिदं नरसिंहाकारं ज्ञानान्तरमेवेति प्राहुः श्रीनागोजिभट्टाः[6] । अद्वैतवेदान्त इवात्रापि संस्कारस्य सहकारित्वमभ्युपगम्येन्द्रियासन्निकृष्टस्यापि सौरभस्य प्रत्यक्षे भानमभ्युपेयते, भ्रमस्थले प्रमात्वाप्रमात्वयोरिव एकस्मिन् ज्ञाने परोक्षत्वापरोक्षत्वयोरपि सत्त्वे बाधकाभावात्[7] । एवमेव ज्ञानं

---

1. म. भा., प्र. उ. १।२।६४ ।
2. वे. प., म. प्र., शि. म., अनु. परि. ।
3. न्या. सि. मु., कारि. ६५ ।
4. ल. म., र. प्र. टीका, पृ. २१८ ।
5. ल. म., कु. टीका., पृ. २५७ ।
6. ल. म., र. प्र. टी,पृ. २१८ ।
7. वे. प., शि. म., म. प्र., प्र. परि., ११७ ।

स्वप्रकाशमिति सिद्धान्तयतां शाब्दिकानां नयेऽनुव्यवसायानङ्गीकारे तत्रापि नास्त्यावश्यकताऽस्याः प्रत्यासत्तेरिति न तिरोहितं सचेतसाम् ।

## योगजसन्निकर्षे शब्दशास्त्रस्य दृष्टिः

यद्यपि "अस्तीति तां वेदयन्ते त्रिभावाः, सूक्ष्मो हि भावोऽनुमितेन गम्यः" इति वदन् महाभाष्यकारो योगिनां त्रिकालदर्शित्वं स्वीकरोति ।[1] अत्रैव प्रदीपकारोऽपि भाष्यीयप्रत्यक्षपदं योगिप्रत्यक्षरूपमिति मन्वानो योगजसन्निकर्षं विलक्षणप्रत्यक्षे हेतुतयाऽङ्गीकरोति ।[2] तथापि न्यायदर्शनवदत्र शास्त्रे स्वतन्त्रमस्य सन्निकर्षत्वं नाभ्युपेयते, अपि तु योगजधर्मेण मनस इन्द्रियाणां च नैर्मल्यसम्पादनपुरस्सरं सामर्थ्यातिशयः सम्पाद्यत इत्येव कल्पना ज्यायसी । क्लृप्तसन्निकर्षैः कार्यनिर्वाहे गौरवादक्लृप्तस्यास्य तत्त्वं नैव सम्मन्यते शब्दतत्त्वविद्भिः ।[3] श्रीनागेशभट्टोऽपि "तमोरूपदोषस्य निरासे एवास्योपयोगः, प्रत्यक्षं तु संयोगादिरूपैः क्लृप्तसन्निकर्षैरेव, भूतभाविनोरपि तदीयसूक्ष्मावस्थासन्निकर्षेणैव इदमेवं भावि भूतं चेति प्रत्यक्षं भवत्येव, भग्नघटीयकपालेनापि चक्षुषः संयोगे सति घट आसीदिति अस्मदादिज्ञानमिव" इति सिद्धान्तयन्निमं सन्निकर्षं प्रतिक्षिपत्येव ।[4] किं च बौद्धपदार्थस्वीकर्तॄणां वैयाकरणानां मते सर्वेऽर्थाः संस्काररूपेण बुद्धौ वर्तमाना एव, नातीताः, नाप्यनागताः, अतोऽपि हेतोः सामान्यलक्षणादीनां नास्ति आवश्यकता ।

## प्रत्यक्षस्य द्वैविध्यम्

तदिदं प्रत्यक्षं घ्राणजादिभेदैः षड्विधमपि निर्विकल्पकसविकल्पकभेदाभ्यां द्विविधम् ।[5] तत्र निर्विकल्पकं प्रकारत्वादिविषयतानामनिरूपकं शब्देनाभिलापानहं भवति ।[6] अत एव निर्गतो विकल्पो यस्मात्तद् निर्विकल्पकमिति व्युत्पत्तिरपि सुष्ठु संगच्छते ।

उक्तं च हरिणा– प्रत्ययैरनुपाख्येयैर्ग्रहणानुगुणैस्तथा[7] । इति ।

---

1. म. भा., प्र. ३/२/१२३ ।
2. म. भा., प्र. ३/२/१२३ ।
3. म. भा., प्र. उ. ४/१/३ ।
4. ल. म., कु. क. टीकाद्वयोपेता, पृ. ७१-७२ ।
5. न्या. सि. मु., कारि. १३६ ।
6. न्या. द. भा. १/१/४ ।
7. वा. प. १/८३ ।

अत्रानुपाख्येयत्वं शब्दाभिलापायोग्यत्वमेव ।

विशिष्टबुद्धौ विशेषणज्ञानं हेतुरिति नियमानुरोधेन घट इति विशिष्टबुद्धौ घटत्व-रूपविशेषणस्य पूर्वं ज्ञानमावश्यकमिति तद्विषयकं ज्ञानं निर्विकल्पमिति स्वीक्रियते[1] । किं च 'घटो रूपवान्' इत्यादि प्रत्यक्षमपि एतद्बलेनैव व्यवस्थितं भवितुमर्हति, अन्यथा 'घटे रूपम्' इत्येवं रीत्यापि तद् अभिलप्येत, इन्द्रियसन्निकर्षाणां तुल्यत्वात् । मन्मते तु घटे रूपं रूपे रूपत्वं च विशेषणमिति तज्ज्ञानं पूर्वमपेक्षितमस्ति । तदनु रूपविषयकस्य विशिष्टज्ञानस्य घटत्वनिर्विकल्पकस्य चापेक्षा, ततो घटो रूपवानिति प्रत्यक्षस्य उदयः, न तु घटे रूपमित्यस्य ।

यत्तु– "न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते" इति सिद्धान्तमभ्युपगच्छतां शब्दशास्त्रविदां नये 'शब्दानभिलप्यं निर्विकल्पकं स्वीकर्त्तुं न युज्यते' इत्यादि उच्यते न्यायमञ्जर्यां[2] मानमेयोदयादौ[3] च । तत्तु शाब्दिकमूर्द्धन्यानां तात्पर्यमनालोच्यैवेति स्पष्टं वच्मि । तथा हि सर्वं ज्ञानं शब्दानुविद्धमिति सत्यम्, परन्तु शब्दानुविद्धमित्य-स्य शब्दविषयकमित्यर्थः, न तु शब्दाभिलपनीयमिति । एवं च निर्विकल्पकेऽपि सूक्ष्मशब्दविषयकत्वमस्तु नाम, का हानिः ? न हि स्थूला वैखरीशब्दा एव सर्वत्र विषयाः सन्ति इति प्रतिज्ञातं श्रीहरिणा । अत्रेदमपि ज्ञातव्यमस्ति यन्न्यायवेदान्त-दर्शनयोर्निर्विकल्पकविषयेऽस्ति विशेषः । न्यायदर्शने संसर्गानवगाहि सदिदं चतुर्थ-विषयतानिरूपकमनुमेयमभ्युपेयते[4] । वेदान्तदर्शने तु संसर्गानवगाहि अखण्डार्थ-विषयकं साक्षिभाष्यमिदमुच्यते[5] । "अत्रा सखायः सख्यानि जानते" इति भाष्य-व्याख्यावसरे श्रीनागोजिभट्टेन वेदान्तिसम्मतमेव निर्विकल्पकं चर्चितम्[6] । तदपि शाब्दिकसम्मतमेव, 'अप्रतिषिद्धमनुमतं भवति' इति न्यायात् ।

निर्विकल्पकप्रत्यक्षानन्तरं जात्यादिधर्मविशिष्टवस्तुविषयकं 'गौरयम्' इत्यादिरूपं व्यक्तविज्ञानं सविकल्पकं प्रत्यक्षं जायते । गवादिद्रव्याणां प्रत्यक्षे तदीयगुणक्रियादीना-

---

1. ल. म., र. प्र., बौ. प्र., पृ.३३७-४० ।
2. न्या. म., प्र. मा., पृ. ७५-७६ ।
3. मा. मे., प्र. परि. ।
4. न्या. सि. मु., प्र. ख. ।
5. वे. परि., प्र. परि. ।
6. म. भा., पस्पशा. ।

मपि प्रत्यक्षं जायते । एवं शुक्लादिगुणसमवेतानां शुक्लत्वादिजातीनामपि प्रत्यक्षं भवत्येव । न हि जात्याद्यनुगमकधर्मं विहाय गवादिद्रव्यमात्रस्य प्रत्यक्षं भवितुमर्हति, अन्यथा 'गौरयम्' इत्यनुगताकारा प्रतीतिः कथमुदियात् ? गुणक्रियादिप्रत्यक्षे भूयो विमृष्टमस्ति[1] ।

## सतामपि पदार्थानामप्रत्यक्षता

महाभाष्यकृता सतामपि पदार्थानामप्रत्यक्षतायां षट् कारणानि सङ्केतितानि सन्ति,[2] अतिसन्निकर्षात्, अतिविप्रकर्षात्, मूर्त्यन्तरव्यवधानात्, तमसावृतत्वात्, इन्द्रियदौर्बल्यात्, अतिप्रमादादिति । अत्र प्रदीपोद्द्योतयोरुक्तं[3] सांख्यमतोक्तं[4] च व्याख्यानं निबन्धे द्रष्टव्यम् ।

अत्रेदमवधेयम्– यथा शशशृङ्गादीनामप्रत्यक्षतया तेषामभावो निश्चीयते, तथान्यत्राप्यप्रत्यक्षत्वमात्रेण पदार्थानामभावो निश्चेतुं न शक्यः । गृहान्निर्गतस्य गृहजनमप्रत्यक्षयतो देवदत्तस्य रोदनशिरस्ताडनादिप्रसङ्गात्; किन्तु प्रत्यक्षयोग्य एव अप्रवर्तमानं प्रत्यक्षं तस्याभावं निश्चाययति इत्येव नियमः ।

## शब्दशास्त्रीयाः प्रत्यक्षविषये कतिपये विशेषाः

घटादिप्रत्यक्षे चक्षुराद्येकस्येन्द्रियस्य प्रवृत्तौ अन्येषामिन्द्रियाणामौदासीन्यलक्षणः सहयोग आवश्यकः । अन्यथा एकेनेन्द्रियेण स्वविषयस्य प्रत्यक्षे यदा प्रयत्यते, तदैवापरेणेन्द्रियेण स्वविषये प्रत्यक्षार्थं प्रयतमानेन मन आकृष्येत । एवं किमपि प्रत्यक्षं नोदेतुं शक्येत । अत एकस्य कार्यकालेऽपरेषां यदिदमौदासीन्यं तदेव संविधातृत्वरूपं कर्तृत्वमुच्यते । अत एव 'वयं पश्यामः' इति प्रयोगोऽपि सङ्गच्छते । यदा चेन्द्रियस्य करणत्वविवक्षा, तदा 'अनेन चक्षुषा पश्यामि' इत्यादिप्रयोगः । पूर्वत्रेन्द्रियाणां स्वातन्त्र्यलक्षणकर्तृत्वविवक्षा । अत एव च शरीर इव इन्द्रियेष्वपि 'अहं काणः', 'अहं वधिरः' इत्यादयो व्यवहारा अनुभूयन्ते[5] ।

किञ्च, सामान्यविशेषभेदेन एकत्र स्थल एव प्रत्यक्षस्य द्वैविध्यमभ्युपेयते शाब्दिकाग्रेसरैः । यथा चक्षुषा घटस्य प्रत्यक्षे क्रियमाणे रूपस्य विशेषतः प्रत्यक्षम्, तत्रत्य-

---

1. अत्रैव निबन्धे, प्र. स., ३ पुष्पे ।
2. म. भा. ४।१।३।
3. म. भा., प्र. उ. ४।१।३।
4. सा. त. कौ., कारि. ७ ।
5. म. भा., प्र. उ. १।२।५९।

गन्धरसादीनां तु सामान्यतः प्रत्यक्षम् । एवमेव घ्राणेन गन्धस्य प्रत्यक्षे क्रियमाणे सहवर्तिरसरूपादीनामपि सामान्यं प्रत्यक्षं भवत्येव । एवं च यत्र प्रत्यक्षे यस्येन्द्रियस्य प्राधान्यम्, तेन जायमानं प्रत्यक्षं विशेषत एव, यस्य तु सहकारित्वम्, तज्जन्यं प्रत्यक्षं सामान्यत इत्यप्यस्ति विशेषः ।

अत एवाम्रफलादौ दृष्टे श्रुते वा रसगन्धादिविशेषविषयिका जिज्ञासाऽनुभूयते[1] । विशेषविषयकजिज्ञासायाः सामान्यज्ञानहेतुकत्वात् । तच्च सामान्यज्ञानं स्मृत्यादिरूपमिति कथनं तु गौरवदोषसंक्रान्तम् । अत एव च प्रत्यक्षसामान्याभावे तद्विशेषाभावकूटस्य हेतुत्वमपि नादर्त्तव्यम् । सामान्यप्रत्यक्षस्य कारणानां मध्ये एकतमस्याभावे तदभावस्य सुष्ठु वक्तुं शक्यत्वात् ।

किञ्च, स्वसंयुक्तसमवायरूपसन्निकर्षस्य सत्त्वे चक्षुरादिभिरपि रसादिग्रहणे किमपि न प्रतिबन्धकं पश्यामः । तदभावेऽदृष्टस्य कस्यचित् प्रतिबन्धकस्य वा कल्पने सुदृढो गौरवदोषः पुनरपि शिरस्यापतेदेव । एकदेशेन चक्षुरादिसंयोगेऽपि घटस्य प्रत्यक्षम्, प्रमाया गुणजन्यत्वमस्ति न वा ? इत्यादिविषये शाब्दिकानां सिद्धान्ता निबन्धे द्रष्टव्याः[2] ।

●

1. म. भा. १।१, पृ. ८ ।
2. अत्र निबन्धे, पृ. ९९ ।

# अनुमानसमीक्षायां

## प्रथमं पुष्पम्

अयं वादी—'अस्मिन्नर्थे अज्ञानवान्, संशयवान्, भ्रमवान् वा, अहं न जानामि, सन्देह्मि, विपर्यस्यामि वा' इत्यादिवाक्यप्रयोक्तृत्वाद् इत्यनुमानेन परकीयज्ञानादिकमनुमाय वादिनं प्रति तत्तद्वाक्यमुच्चार्य्यते, तदीयाज्ञानादि निवर्तयितुम् । यदि तु तदीयमज्ञानादिकमज्ञात्वैव तं प्रति वाक्यं प्रयुज्यते, तदा प्रयोक्ता उपेक्षणीयः स्यात् । किञ्चानुमानं न प्रमाणमिति येनोच्यते, मन्येऽशिरस्कमेव वचस्तेन प्रयुज्यते । यद्यनुमानं न स्वीक्रियते, तदा पक्षस्यैवाप्रसिद्धिः, किमुद्दिश्याप्रामाण्यं विधीयेत ?

पराभिमतमुद्दिश्य तस्य साधने त्वागतमेवानुमानं प्रमाणम्, केनचिल्लिङ्गेनैव तस्य साधनीयत्वात्[1] । किं बहुना, दण्डोत्त्थापनादिकं दृष्ट्वा पशवोऽपि पलायन्ते, तत्र निश्चितं वक्तुं शक्यते यत् पशवोऽपि दण्डोत्त्थापनादिरूपलिङ्गज्ञानेन 'अयं मां प्रहरिष्यति' इत्यनुमिमते[2] इत्येवमादिभिर्बहुभिर्युक्तिभिरनुमानस्य सार्वजनीनं प्रामाण्यं व्यवस्थापितम् । अत्र व्याकरणदर्शनेऽपीन्द्रियमिन्द्रलिङ्गमित्यादि सूत्रं विदधता सूत्रकृता[3] । 'साऽसावनुमानगम्या' इत्याद्युक्त्या भाष्यकृता[4] चेदमनुमानं प्रमाणतया समादृतमेव ।

### अनुमानस्य सामान्यलक्षणम्

प्रत्यक्षपूर्वकत्वमनुमानसामान्यलक्षणम् । अत एव प्रत्यक्षाद् अनु (पश्चात्) मीयतेऽनेनेति करणव्युत्पत्तिः सङ्गच्छते ।

आनुकूल्यञ्च भजते सरूपाणामिति सूत्रीयं भाष्यम्—तस्यैवोपोद्बलकमेतदिति । तत्रत्यः प्रदीपश्च—"उपोद्बलकमिति=उद्गतं बलं प्रत्यक्षं तत्पूर्वकत्वादनुमानस्य । उद्बलस्य समीपमनुमानमित्यर्थः" इति[5] । "चार्थे द्वन्द्वः" इत्यत्रापि एतदनुगुणं भाष्यमुपलभ्यते[6] ।

---

1. स. द. स., बौ. द., पृ. १८-१९; सा. त. कौ., का. ५ ।
2. शां. भा., भामती. ३।३।५४।
3. पा. सू. ५।२।९३।
4. म. भा. १।३।१।
5. म. भा., प्र. १।२।६४।
6. म. भा., प्र. २।२।२९।

तत्र कस्य पूर्वं प्रत्यक्षमपेक्ष्यत इति जिज्ञासायामुच्यते – 'लिङ्गस्य व्याप्तिरूपसम्बन्धस्य च' इति । उक्तं च भगवता श्रीपतञ्जलिना – "धूमं दृष्ट्वा वह्निरत्रेति गम्यत इति प्रत्यक्षस्तेनाग्निधूमयोरभिसम्बन्धः कृतो भवति त्रिविष्टब्धकपरिव्राजकयोश्च । स तद् विदेशस्थमपि दृष्ट्वा जानाति 'अग्निरत्रेति' 'परिव्राजकोऽत्रेति' इति च[1] ।" अत्र लक्षणे प्रत्यक्षपदं शाब्दज्ञानादेरप्युपलक्षणम्[2] । अनुमितेर्मूले क्वचिदपि प्रत्यक्षस्य सत्ता नियमेन पूर्वं भवतीत्येव लक्षणे प्रत्यक्षपदस्य तात्पर्यम् । यत्र क्वापि लिङ्गस्य शाब्दज्ञानादिकम्, तत्रापि लिङ्गस्य चाक्षुषादिकं तद्बोधकशब्दस्य श्रावणं प्रत्यक्षं वा कदाचित् पूर्वं भवत्येव । उक्तञ्च–

**यत्राप्यनुमिताल्लिङ्गाल्लिङ्गिनि ग्रहणं भवेत् ।**
**तत्रापि मौलिकं लिङ्गं प्रत्यक्षादेव गम्यते**[3] ॥ इति ।

## अनुमानस्य लक्षणान्तरम्

अनुमीयतेऽनेनेति करणव्युत्पत्त्या अनुमितिकरणत्वमपि अनुमानस्य सामान्यं लक्षणं वक्तुं शक्यते[4] । अत्र लक्षणे पदकृत्यं प्रासङ्गिकं करणलक्षणं सुष्ठु व्याख्यातं द्रष्टव्यं निबन्धे । तत्र लिङ्गज्ञानरूपे प्रथमानुमाने व्याप्तिरूपसम्बन्धस्य स्मरणमनुमितिः शाब्दबोधादिकं वा ज्ञानं व्यापारः, व्याप्तिज्ञानत्वेन व्यापारता इति भावः । व्याप्तिज्ञानं हि लिङ्गज्ञानजन्यमनुमितिजनकञ्च ।पक्षान्तरे व्याप्तिज्ञानात्मकेऽनुमाने तु नियतसम्बन्धविशिष्टलिङ्गस्य पक्षवृत्तित्वज्ञानमेव व्यापारतयाऽभ्युपेयम् । "स तद् विदेशस्थमपि दृष्ट्वा जानाति" इति भाष्यस्य[5] तत्रैव तात्पर्यात् । तथा हि–तत्र तत्पदेन नियतसम्बन्धविशिष्टलिङ्गस्य, विदेशस्थमित्यनेन पक्षवृत्तित्वस्य च ग्रहणमुचितं प्रतिभाति । इदमेव न्यायदर्शने व्याप्तिविशिष्टपक्षधर्मताज्ञानं परामर्शात्मकमुच्यते । इदं च व्याप्तिज्ञानजन्यं तज्जन्यानुमितिजनकं चेति व्यापारलक्षणमत्र सुष्ठु संघटते । वस्तुतस्तु बौद्धार्थवादिनां शब्दशास्त्राचार्याणां दर्शने धूमादिव्याप्याकारा याऽन्तःकरणवृत्तिः, तत्र चैतन्यप्रतिबिम्बनमेव धूमादिव्याप्यस्य ज्ञानम् ।तत्प्रयोज्या या बौद्धव्यापकवह्न्याकारान्तःकरणवृत्तिः, तत्र यच्चैतन्यप्रतिबिम्बनम्, प्रतिफलनमिति यावत्, तदेव वह्न्यनु-

---

1. म. भा. ३।२।१२४।
2. म. भा., प्र. उ. १।२।६४।
3. न्या. म., प्र. भा., पृ. १४४।
4. म. भा., प्र. उ. १।३।१।
5. म. भा. ३।२।१२४।

मितिरिति सिद्धान्तः । तत्रापि पक्षे हेतोः प्रत्यक्षस्थले तस्यापरोक्षा वृत्तिः, व्याप्तिरूपसम्बन्धस्य तु परोक्षा वृत्तिः, हेतोः परोक्षतादशायामुभयोरपि परोक्षैव वृत्तिः ।

धूमादिव्याप्यज्ञानस्यानुमानत्वपक्षे व्याप्तिविषयकवृत्तेर्व्यापारत्वम् । व्याप्तिविषयकज्ञानस्यानुमानत्वपक्षे व्याप्तिविशिष्टपक्षवृत्तित्वविषयिका वृत्तिर्व्यापारतया मन्तव्या इति निष्कर्षः[1] । एवञ्च व्याप्तिज्ञानकरणकज्ञानत्वमनुमितेर्लक्षणमपि सुष्ठु वक्तुं शक्यते[2] ।

यदि त्वत्र लक्षणे साध्यतावच्छेदकसम्बन्धादिप्रवेशे गौरवमनुभूयते, तदा यां काञ्चिदेकां व्याप्तिमादाय तज्ज्ञानकरणकज्ञानवृत्त्यनुभवत्व-व्याप्यजातिमत्त्वमेव न्यायशास्त्रोक्तं लक्षणं[3] स्वीकरणीयम् । अत्रापि व्याप्तिप्रवेशेन गौरवमस्त्येवेति यदि विभाव्यते, तदा तु यां काञ्चिदनुमितिव्यक्तिमादाय तद्वृत्तिप्रत्यक्षावृत्तिजातिमत्त्वमेव लघु लक्षणम्[4], बौद्धपदार्थाकारान्तःकरणवृत्तिमुद्रया समाद्रियतां शाब्दिकैरपि इति संक्षेपः ।

**पक्षतास्वरूपम्**

तत्र कस्मिंश्चित् पक्ष एव साध्यस्यानुमितिः क्रियत इति पक्षतास्वरूपे ज्ञाते सत्येव तद्वान् पक्षो ज्ञातुं शक्यते । अतः पक्षतास्वरूपं व्याकरणदर्शनदिशा निर्णीयते । तत्र पक्षे साध्यसन्देहः पक्षता इति वक्तुं युज्यते । महाभाष्ये–"किं पुनरिमे वर्णा अर्थवन्तः, आहोस्विद् अनर्थकाः ?" इति प्रघट्टके वर्णात्मके पक्षेऽर्थवत्त्वरूपस्य साध्यस्य सन्देहरूपा पक्षता सुष्ठु संकेतिताऽस्ति[5] । उद्द्योतकृता तु वर्णरूपे पक्षे विद्यमानायाः पक्षताया अवच्छेदकं वर्णत्वमित्यपि उक्तम्[6] । एवमेव बहुत्र स्थलेषु पक्षतायाः संकेतः प्राप्यते[7] । न्यायशास्त्रदृष्ट्या महता समारोहेण परिष्कृतं पक्षतास्वरूपमेतच्छास्त्रसंवादितया निबन्धे लिखितमस्ति ।

बहुत्र सन्देहमकृत्वैवानुमानवाक्यं प्रयुञ्जता भाष्यकृताऽनुमित्युद्देश्यत्वमेव पक्षता इति सूच्यते[8] । तर्कसङ्ग्रहे न्यायबोधिन्यामपि इयं पक्षता प्रदर्शिताऽस्ति[9]; परन्तु एतस्या

---

1. ल. म., र. प्र. युता., पृ. ३१६-१७ ।
2. न्या. सि. मु., प्र. ख., का. ५२ ।
3. तदेव ।
4. न्या. सि. मु., दि. रा. च, का. ५२ ।
5. म. भा. १।१, मा. सू. ५ ।
6. म. भा., प्र. उ. १।१ मा, सू. ५ ।
7. म. भा. १।१।४, १।२।२७, १।३।९।
8. म. भा. १।१।१, १।२।२७। म. भा., प्र. उ. ६।१।३७ ।
9. त. सं., न्या. बो., पृ. ४०-६४ ।

अनभ्युपगमपक्षो निबन्धे सम्यगुक्तो द्रष्टव्यः । ईदृशपक्षतावान् पक्षः । तस्य तदाभासस्य बहवो भेदा दर्शनान्तरदृष्ट्या निबन्धे वर्णिताः । अत्र व्याकरणशास्त्रे तु तेषामियत्ताविषये आग्रहो नास्ति इत्यपि निर्णीतम् ।

### हेतुस्वरूपविमर्शः

पक्षे साध्यस्यानुमितिः केनचिद्धेतुनैव क्रियते, अयं हेतुर्लिङ्गपदेनापि व्यवह्रियते[1] । अस्य च लक्षणमनुमितिकरणज्ञानविषयत्वं भवितुमर्हति । व्याप्तिज्ञानस्यानुमितिकरणत्वपक्षे तु साध्यभिन्नत्वे सति पक्षधर्मत्वम्, साध्यनिरूपितव्याप्तिमत्त्वं वा लक्षणमभ्युपेयम् । इदं च हेतुहेत्वाभासयोः सामान्यं लक्षणम् । सद्धेतवश्च– अन्वयव्यतिरेकी, केवलान्वयी, केवलव्यतिरेकी चेति त्रिविधा भवन्ति । तत्रान्वयव्यतिरेकी हेतुः पक्षसत्त्वसपक्षसत्त्वविपक्षासत्त्वाबाधितत्वासत्प्रतिपक्षितत्त्वेति पञ्चरूपोपपन्नः सन् व्याप्तिपक्षधर्मताविशिष्टो भवति । यथा पर्वते पक्षे वह्नौ साध्ये धूमो हेतुः, केवलान्वयी हेतुस्तु व्याप्त्यादिविशिष्टः सन् चतूरूपोपपन्न एव साध्यसाधने क्षमो भवति। तत्र विपक्षाप्रसिद्ध्या विपक्षासत्त्वस्यासम्भवात् । यथा–'घटोऽभिधेयः, प्रमेयत्वात्' इत्यत्र प्रमेयत्वहेतुः । एवं केवलव्यतिरेकी अपि चतूरूपयुत एव साध्यं साधयति, तत्र सपक्षाप्रसिद्ध्या सपक्षासत्त्वस्यासत्त्वात् । यथा पृथिव्यामितरभेदसाधने गन्धवत्त्वं हेतुः[2] । एषां पञ्चरूपाणां मूलं व्याकरणशास्त्रे कुत्र कुत्र प्राप्यत इत्येतत्सर्वं निबन्धे द्रष्टव्यम् । इमानि रूपाणि तु सद्धेतुतापरिचायकान्येव, न तु लक्षणशरीरे प्रविष्टानि, गौरवात् । पक्षवृत्तित्वे सति साध्यनिरूपितव्याप्तिमत्त्वस्यैव सद्धेतुलक्षणत्वात् ।

### व्याप्तिस्वरूपम्

विशिष्टा आप्तिः = सम्बन्धो व्याप्तिरिति व्युत्पत्त्या नियतसम्बन्ध एव व्याप्तिपदेन ग्रहीतुं युज्यते । "प्रत्यक्षस्तेनाग्निधूमयोरभिसम्बन्धः कृतो भवति" इति भाष्येऽपि[3] अभिसम्बन्धपदेन अमितः सम्बन्ध इति व्युत्पत्त्या नियतसाहचर्यलक्षण एव सम्बन्धो ग्रहीतुमुचितः । एवमेवान्यत्रापि भाष्ये व्याप्तिपदेनास्यैव सम्बन्धस्य संकेतो लभ्यते[4] ।

1. पा. सू. ५।२।९३; म. भा., प्र. उ. १।३।१ ।
2. न्या. सि. मु., किर. टीका, का. ७१ ।
3. म. भा. ३।२।१२४ ।
4. म. भा. १।४।१०५ ।

अविनाभावलक्षणा व्याप्तिरभ्युपेयते वाक्यपदीयदृष्ट्या[1] । अन्ययोगव्यवच्छेदरूपा व्याप्तिः स्वीक्रियते नियमस्थले । यथा कृत्तद्धितेति सूत्रे[2] समासग्रहणस्य नियमत्वेन समासातिरिक्ते वाक्ये प्रातिपदिकसंज्ञाया व्यवच्छेदः । अयोगव्यवच्छेदरूपा व्याप्तिस्तु "कर्मणि द्वितीया" इत्यस्यार्थनियमपक्षे[3] बोध्या । तत्र कर्मणि विभक्तिश्चेत्, तर्हि द्वितीयैव इति नियमेन कर्मणि द्वितीयाया अयोगस्य व्यवच्छेदः फलति । अत्यन्तायोग-व्यवच्छेदरूपा व्याप्तिः परश्चेति सूत्रे द्रष्टव्या[4] । तत्र हि प्रत्ययः परो भवत्येवेति क्रियासङ्गतेनैवकारेण प्रत्ययांशे परीभवनस्यात्यन्तायोगव्यवच्छेदरूपा व्याप्तिर्लभ्यते ।

### व्याप्तिभेदनिरूपणम्

सामान्यतोमुखी विशेषतोमुखी इति भेदाभ्यां व्याप्तेर्द्वैविध्यं भवति । "लटः शतृशानचौ"[5] इत्यादिषु सूत्रेषु तदुदाहरणानि निबन्धे सुष्ठु प्रदर्शितानि । पुनश्च समविषमभेदाभ्यां व्याप्तेर्द्वैविध्यं दर्शितम् । तदुदाहरणान्यपि निबन्धे सम्यक् प्रदर्शितानि तत्रैव द्रष्टव्यानि । नित्यवीप्सयोरिति सूत्रीयभाष्यप्रदीपोद्द्योतानां[6] पर्यालोचनया द्रव्यस्य द्रव्येण, गुणेन, क्रियया, तदभावेन च सह व्याप्तिरूपः सम्बन्धो भवतीति निश्चीयते । सा च व्याप्तिरविनाभावरूपा, नियतसम्बन्धरूपा वा भवतु । 'ग्रामे ग्रामे पानीयम्' इत्यत्र वक्तृबुद्धिविषयाः सकला ग्रामा व्याप्यत्वेनाभिमताः पानीयं व्यापकत्वेनाभिमतम् । तादात्म्यसम्बन्धेन व्याप्यता, संयोगेन च व्यापकता । एवञ्च तादात्म्येन बुद्धिविषयो यो यो ग्रामः, सः सः संयोगेन पानीयवानिति नियतं साहचर्यमत्र पर्यवस्यति ।

"आनुपूर्व्ये द्वे भवत इति वक्तव्यम्" इति वार्त्तिकस्य व्याख्यानभूतेन भाष्येण एकजातीयानामेकजातीयमात्रे व्याप्तिर्भवतीति प्रतीयते, यथा रूपे रूपे आकर्षकता, रसे रसे मादकता, शब्दे शब्दे माधुर्यम्, हासे हासे वैलक्षण्यम्, गमने गमने अध्ययनमित्यादिस्थलेषु[7] । अधिकं निबन्धे द्रष्टव्यम् ।

●

---

1. वा. प., साध. स., कारि. २४ ।
2. पा. सू. १।२।४६।
3. पा. सू. २।३।२।
4. पा. सू. ३।१।२।
5. म. भा., प्र. उ. ३।२।१२४।
6. म. भा., प्र. उ. ८।१।४।
7. म. भा., प्र. उ. ८।१।१२।

# अनुमानसमीक्षायां
## द्वितीयं पुष्पम्

### अनुमानभेदविमर्शः

पूर्वमुक्तमनुमानं द्विविधम्--स्वार्थं परार्थञ्च । तत्र स्वानुमितिहेतुभूतमनुमानं स्वार्थमित्युच्यते । वाक्यपदीये द्वितीयकाण्डे टीकाकृता श्रीपुण्यराजेन स्पष्टमस्योल्लेखः कृतोऽस्ति, यथा "धूमेन स्वार्थानुमाने शब्दमन्तरेण वह्नेराक्षेपः"[1] इति । परानुमितिकारणीभूतमनुमानं परार्थमित्युच्यते । परार्थमनुमानं यस्मात्तदिति व्युत्पत्त्या परार्थानुमानप्रयोजकं वाक्यपञ्चकमपि परार्थानुमानपदेन व्यपदिश्यते । तच्च प्रतिज्ञाहेतूदाहरणोपनयनिगमनात्मकं न्यायदर्शनवदत्रापि[2] समादर्तव्यम् ।

सरूपाणामिति सूत्रीयभाष्यं विवृण्वता प्रदीपकारेण "ततो विप्रतिपन्नप्रतिपादनायानुमानम्" इत्युक्त्याऽस्यानुमानस्य पूर्णं समर्थनं कृतम्[3] । शब्दशास्त्रीयं प्रतिज्ञाया लक्षणमुदाहरणञ्च पक्षधर्मिकसाध्यप्रकारकबोधजनकवाक्यत्वं प्रतिज्ञावाक्यत्वम् । ध्वनितं चैतल्लक्षणम्--"पक्षे साध्यनिर्देशः प्रतिज्ञा" इति श्रीहेलाराजोक्त्या[4], सरूपसूत्रीयभाष्यप्रदीपोद्द्योतोक्तिभिश्च[5] । तत्र प्रतिज्ञाहानेर्दोषत्वमुक्तम्, तच्च तदैव सङ्गच्छते, यदा प्रतिज्ञाया न्यायाङ्गत्वमुक्तलक्षणकत्वञ्च स्यात् ।

### हेतुवाक्यस्य लक्षणम्

तत्र व्याप्यतया प्रतीयमानत्वं हेतुसामान्यलक्षणम् । सद्धेतुलक्षणन्तु पक्षवृत्तित्वे सति साध्यनिरूपितव्याप्तिमत्त्वम् । तद्बोधकवाक्यं हेतुवाक्यम् ।

वाक्यपदीयव्याख्यायां श्रीहेलाराजेन हेतोर्लक्षणपदेन व्यपदेशः कृतोऽस्ति, त्रैविध्यं च तस्य प्रादर्शि । तत्रैकं लक्षणमवधिभावेन दर्शितम्, यथा--"वृक्षं प्रति विद्योतते विद्युत्" इत्यत्र वृक्षोऽवधित्वेन लक्षणम्, विद्योतमाना विद्युद् लक्ष्यभूता । द्वितीयं तु

---

1. वा. प., पुण्य. टीका २।३२७।
2. त. स., अनु. परि., पृ. ९८ ।
3. म. भा., प्र. १।२।६४।
4. वा. प. ३।३।२७-२८ ।
5. म. भा., प्र. उ. १।२।६४ ।

करणविच्छेदेन, यथा—वह्निरूपकारणस्य धूमो लक्षणं भवति परिच्छेदकत्वेन । तृतीयं कार्यविच्छेदेन, यथा–'मेघादयः कारणानि वृष्टिरूपकार्यस्य परिच्छेदकतया लक्षणानि' इति[1] । ज्ञापककारकभेदाभ्यां पुनरपि हेतुर्द्विविधो भवति, तत्रानुमितौ ज्ञापक एव, न तु कारकः, धूमादीनां वह्न्यनुमितौ ज्ञापकत्वात् ।

हेतुबोधकपदात् तृतीया पञ्चमी इति विभक्तिद्वयं नियमेन भवति, यत इत्यादिपदसमभिव्याहारे क्वचित् प्रथमाऽपि, निमित्तपर्यायप्रयोगे तु प्रायः सर्वा भवन्ति ।

## उदाहरणवाक्यलक्षणम्

व्याप्तिगर्भदृष्टान्तबोधकवाक्यत्वमुदाहरणवाक्यस्य लक्षणम् । दृष्टोऽन्तो निश्चयो यस्येति व्युत्पत्त्या वादिप्रतिवादिनोरुभयोरपि सम्मतो विषयो दृष्टान्त इत्युच्यते[2] । उदाहरणं चेदं द्विविधं भवति, साधर्म्येण वैधर्म्येण च । तत्राद्यम्–'यो धूमवान्, सोऽग्निमान्, यथा महानसम्', द्वितीयम्–'योऽग्निमान्न स धूमवान्, यथा जलह्रदः' । "वृद्धिरादैच्" इति सूत्रे[3] भाष्ये आद्यम्, 'वर्णा अनर्थकाः' इति भाष्ये[4] द्वितीयं च प्रदर्शितम् । सरूपसूत्रीयभाष्यालोचनेन हेतुरहितोऽपि दृष्टान्तो भवतीति प्रतीयते[5], भूवादिसूत्रस्थभाष्येण पक्षैकदेशस्यापि दृष्टान्तता निश्चीयते[6] ।

## उपनयवाक्यलक्षणम्

उपनीयते उपसंह्रियतेऽनेनासौ उपनयः । दृष्टान्ते स्थितस्य साधनस्य साध्यधर्मिणि पक्षे, उपसंहार आनयनमिति यावत्, तत्प्रतिपादकवाक्यत्वमुपनयवाक्यस्य लक्षणम् । 'तथा चायम्, तथा च नायम्' इति भेदाभ्यामस्य द्वैविध्यम् । आद्यं यथा "वृद्धिरादैच्" इति सूत्रे भाष्ये, 'एवमिहापि' इत्युक्तम्[7] । द्वितीयं तु 'अनर्थका वर्णाः' इत्यत्र भाष्ये 'न चेह तद्वत्' इत्युक्तमुपनयवाक्यमेव'[8] ।

---

1. वा. प. ३।७।२४ ।
2. म. भा. १।१।४५ ।
3. म. भा. १।१।१ ।
4. म. भा. १।१, मा. सू. ५ ।
5. म. भा. १।२।६४ ।
6. म. भा. १।३।१ ।
7. म. भा. १।१।१ ।
8. म. भा. १।१, मा. सू. ५ ।

## निगमनवाक्यलक्षणम्

नितरां गम्यते पूर्वेषामवयवानामर्थोऽनेनेति निगमनम्, तत्प्रतिपादकवाक्यत्वं. निगमनवाक्यत्वम् । अनेन पक्षे साध्यस्योपसंहारः क्रियते । आद्यन्ताविति सूत्रीयभाष्य-व्याख्याने उद्द्योतकृता निगमनवाक्यस्योक्तलक्षणकत्वं न्यायाङ्गत्वञ्च स्पष्टं द्योतित-मस्ति[1] ।

## अवयवसंख्यानिर्णयः

यद्यपि महाभाष्यादौ बहुत्र वाक्यद्वयस्यैव प्रयोगो दृश्यते[2], क्वचिद् वाक्यत्रयस्य[3] क्वचित्तत्पञ्चकस्यापि[4] । अतश्चानुमीयते यदवयवसंख्यायामाग्रहं न कुर्वन्ति शाब्दिकाः । बोधनीयस्य यस्य यावद्भिरवयवैरनुमितेः सम्भवः, तस्य कृते तावन्त एवावयवाः सञ्चारणीयाः । वस्तुतस्तु – लिङ्गदर्शनस्यानुमानत्वपक्षे तु पञ्चापि इति निष्कर्षोऽवयवेषु प्रमाणानुग्राहकता क्रम-निर्णयश्च निबन्धे द्रष्टव्याः ।

## प्रकारान्तरेणानुमानत्रैविध्यम्

पूर्ववत्, शेषवत्, सामान्यतो दृष्टं चेति भेदेन पुनरनुमानं त्रिविधम् । यत्र कारणेन कार्यमनुमीयते, तत् पूर्ववदित्युच्यते । यथा मेघोन्नत्या वृष्टेरनुमितिः[5] । यत्र कार्येण कारणमनुमीयते, तत् शेषवदित्युच्यते, यथा–नद्यां वेगं जलमालिन्यादिकं च दृष्ट्वा उपरितनदेशे वृष्टेरनुमितिः । एतदुभयभिन्नमनुमानं सामान्यतोदृष्टम्, यथा–आदित्यस्य देशान्तरप्राप्त्या तत्कर्तृकगमनस्यानुमितिः । सर्वमिदं शब्दशास्त्रीयदृष्ट्या सप्रमाणमुपनिबद्धं निबन्धग्रन्थे । पुनश्चेदमनुमानं प्रकारान्तरेण त्रिविधं व्याख्यातम् । यथा–केवलान्वयि, केवलव्यतिरेकि, अन्वयव्यतिरेकि चेति । तत्र केवलमन्वेति न क्वचिदपि व्यभिचरतीत्यन्वयमात्रव्याप्तिकं केवलान्वयि । यथा– मेयत्वादिलिङ्गकमनु-मानम्[6] । व्यतिरेकमात्रव्याप्तिकं केवलव्यतिरेकि । यथा– "प्रत्याहारेषु अनुबन्धानां कथमज्ग्रहणेषु न" इत्युक्त्या, अनुबन्धमात्रे प्रत्याहारग्राह्यत्वाभावं साधयता भाष्य-कृता इदमेवानुमानमादृतम्[7] । "लोपश्च बलवत्तरः" इति हेतोः सपक्षो नास्ति– इति

1. म. भा., उ. १।१।४५ ।
2. म. भा., नवा. १।२।५ ।
3. म. भा. १।३।९ ।
4. म. भा. १।१।५ ।
5. न्या. म., अनु. प्र. ।
6. त. स., अनु. परि. ।
7. म. भा. १।१।१, मा. सू. ५ ।

व्यतिरेकव्याप्तिरेव तत्र शरणम् । अन्वयेन व्यतिरेकेण च व्याप्तिमत्–अन्वय-व्यतिरेकि । यथा--वर्णानामर्थवत्त्वसाधने वर्णत्वलिङ्गकमनुमानम् । तत्र वर्णत्वहेतौ उभयविधापि व्याप्तिरस्ति[1] । वाक्यपदीयं व्याचक्षाणेन श्रीपुण्यराजेन सामान्यतोदृष्टं विशेषतोदृष्टं चेति द्विविधमेवानुमानं संकेतितम्[2] ।

**तर्कलक्षणम्**

कार्यमात्रे प्रतिबन्धकाभावो हेतुरिति नियमेन व्याप्तिज्ञानेऽपि तत्प्रतिबन्धकीभूत-व्यभिचारसंशयस्य निवृत्तिरावश्यकी इति तादृशनिवृत्तिजनको ज्ञानविशेषस्तर्क इत्यु-च्यते । उक्तं च भाष्यकृता–"तस्यैवोपोद्बलकमेतत्" इति । अत्र प्रदीपः–"बलमुद्दीप-यति–उपोद्बलकमुपबृंहकमुच्यते" इति । अत्रोद्द्योतः –"उपबृंहकमिति, भ्रान्तत्वाशङ्का-निवर्तनेन प्रमात्वनिर्वाहकस्तर्कः"[3] इत्यर्थः । अत्र भ्रान्तत्वाशङ्का इत्यादेरयमाशयः–हेतौ साध्यनिरूपिताया व्याप्तेर्यो भ्रमस्तन्निवर्तनेन हेतुधर्मिकव्याप्तिज्ञाने यः प्रमात्वं सम्पादयति, स तर्कपदेन व्यपदिश्यते ।

एवं च व्यभिचारशङ्कानिवर्तकत्वम्, अनुमानबलोद्दीपकत्वं वा तर्कस्य सामान्य-लक्षणमवगन्तव्यम्[4] । "लटः शतृ." इति सूत्रीयभाष्यप्रदीपं विवृण्वन् श्रीनागोजिभट्टोऽ-न्यथासिद्धात् प्रत्यक्षात् शतृशास्त्रवैयर्थ्यरूपानुकूलतर्केण सहितस्यानुमानस्य प्राबल्यं दर्शितवान्[5] । अस्य स्पष्टं स्वरूपं निबन्धे द्रष्टव्यम् । आचार्यश्रीहरिर्वेदशास्त्रस्यानु-गुणं तर्कं प्रशंसति[6] । क्वचन शब्दशास्त्रे तर्कपदेन ऊहस्य ग्रहणं कृतम् ।

**तर्कस्य भेदाः**

आत्माश्रयान्योन्याश्रयचक्रकानवस्थादिभिर्भेदैस्तर्को नानाविधोऽस्ति । तत्र प्रथम आत्माश्रय आत्मानमेवाश्रयते । यथा–एकवचनप्रत्ययस्य एकत्वे शक्तिः, तत्र एकत्व-निरूपितवाचकताया अनुगमको धर्म एकवचनशब्दे कः ? इति जिज्ञासायां यदि एकवचनत्वरूप उच्यते, एकवचनत्वं च एकत्ववाचकत्वमिति निर्धार्य्यते, तदा नून-मात्माश्रयदोष आपतितः[7] ।

---

1. म. भा. १।१।१, मा. सू. ५ ।
2. वा.प., पुण्य. टी. २।१९० ।
3. म. भा., प्र. उ. १।२।६४ ।
4. म. भा., प्र. उ. १।२।६४ ।
5. म. भा., प्र. उ. ३।२।१२४ ।
6. वा. प. १।१३५ ।
7. व्यु. वा., प्रथमाकारकं जयाटीकासहितम्, पृ. १५० ।

एकत्ववाचकत्वस्य एकत्वनिरूपितवाचकताऽनुगमकत्वे स्वस्यैव स्वानुगमकत्वप्रसङ्गात् । श्रीभट्टोजिदीक्षितो व्याकरणसूत्रीयशब्देषु साधुत्वज्ञानं यदि तत्सूत्रेणैव स्वीक्रियते, तर्हि आत्माश्रयो दुर्निवारः, स्वेनैव स्वस्य साधनादित्येवमात्माश्रयदोषमुपस्थापितवान्[1] ।

**अन्योऽन्याश्रयः**

परस्परं सापेक्षत्वलक्षणकोऽन्योन्याश्रयोऽपि व्याकरणेऽनेकत्र व्यवहृतोऽस्ति । यथा–"वृद्धिरादैच्" इति सूत्रभाष्ये "का इतरेतराश्रयता ? सतामादैचां संज्ञया भवितव्यम्, संज्ञया चादैचो भाव्यन्ते, तदेतदितरेतराश्रयं भवति" इत्युक्त्या स्फुटीकृतोऽयमन्योऽन्याश्रयः[2] ।

द्वयोरुत्पत्तौ स्थितौ ज्ञप्तौ वा परस्परं सापक्षत्वेऽयं दोषः प्रसजति । सर्वं स्पष्टीकृतं निबन्धे द्रष्टव्यम् ।

**चक्रकदोषः**

त्रयाणां तदधिकानां वा परस्परं सापेक्षत्वस्थलेऽयं दोष आगच्छति । यथा "धातोः" इति सूत्रे भाष्यकारेण स्वयमेवायं दोषः प्रस्तावितः । तथा हि "लूञ् धातोः लङि प्रथमपुरुषबहुवचने 'अलुनन्' इति रूपं भवति, तत्र लोप ईत्वेन, ईत्वमन्तिभावेन, अन्तिभावो जुस्भावेन, जुस्भावो लोपेन बाध्यत इति चक्रकदोषप्रसक्त्या किमपि कार्यं तत्र सेद्धुं नार्हति" इत्युक्तम्[3] । एवमेव व्याकरणशास्त्रे बहुत्रायं दोषः सङ्कीर्तितः[4] ।

एवमेवानवस्थात्मकतर्कविषये भूयांसो विचारा निबन्धे उपस्थापिताः ।

**उपाधिनिरूपणम्**

परकीयव्याप्तिज्ञानप्रतिबन्धाय आत्मविजयरूपफलाय च हेतुदोषभूत उपाधिरपि शाब्दिकनिकाये पदे पदे कीर्तित एव । तल्लक्षणञ्च "साध्यव्यापकत्वे सति साधनाव्यापकत्वरूपम् । विषम उपन्यासः, नैको द्रष्टाऽऽदित्यमनेकाधिकरणस्थं युगपद् देशपृथक्त्वेषूपलभते, अकारं पुनरुपलभते"[5] इति भाष्यसन्दर्भेणोक्तं लक्षणं

---

1. श. कौ. १।१।१ ।
2. म. भा. १।१।१ ।
3. म. भा.. ३।१।९१ ।
4. म. भा., प्र. उ. १।२।२१, ६।४।२२ ।
5. म. भा., नवा. १।१, मा. सू. १ ।

स्पष्टं प्रतीयते । तथा हि–अत्र अनेकदेशेषु उपलभ्यमानोऽकारः पक्षतया गृह्यते, ऐक्यं साध्यत्वेन निर्दिश्यते, प्रत्यभिज्ञायमानत्वं हेतुतया उच्यते ?

अत्र हेतौ एकद्रष्टृकानेकदेशोपलब्धिविषयत्वाभावरूप उपाधिर्बोद्धव्यः । तत्र चैक्यरूपसाध्यस्य व्यापकता "यत्र यत्रैक्यं तत्र तत्रोक्त उपाधिः, यथा आदित्यादौ" इत्येवंरूपा । प्रत्यभिज्ञायमानत्वरूपसाधनस्य चाव्यापकता, अकारात्मके पक्षे व्यभिचारात् । भूषणसारादिरीत्याऽस्य परिष्कृतं लक्षणं निबन्धे निरूपितम् ।

●

# अनुमानसमीक्षायां
## तृतीयं पुष्पम्

### हेत्वाभासाः

तत्त्वनिर्णयस्यात्मविजयस्य च सिद्धये हेत्वाभासा अपि शब्दशास्त्रे समादृताः । तल्लक्षणं च यद्विषयकत्वेन ज्ञानस्य अनुमितिप्रतिबन्धकत्वरूपं न्यायशास्त्रोक्तमेवात्रापि स्वीक्रियते । हेत्वाभासविशेषेषु वक्ष्यमाणभाष्याद्यनुरोधात् । एते च सव्यभिचारविरुद्धसत्प्रतिपक्षासिद्धबाधितभेदैः पञ्चविधा अत्र शास्त्रेऽपि व्यवहृता इति क्रमशो निरूप्यन्ते ।

### सव्यभिचारः

व्यभिचारेण सहित इति व्युत्पत्त्या साध्यनिरूपितव्याप्तिशून्यत्वमस्य लक्षणं मन्तव्यम् । यथा धूमे साध्येऽग्निरूपहेतुरनेन दोषेण ग्रस्तः ।

### बाधितो हेत्वाभासः

पक्षनिरूपितवृत्तित्वाभाववत्त्वं बाधितस्य लक्षणम् । यथा चोक्तमुद्द्योतकारेण– "प्रत्यर्थमित्यादिस्तु न हेतुः, अपक्षवृत्तित्वात्"[1] इति । अत्र सरूपैकशेषे पक्षे तस्य हेतोरसत्त्वेनायं दोष आपतति । परनये पक्षे साध्याभावो बाधदोषः, तद्वत्त्वं बाधितस्य लक्षणम् । अत्र शास्त्रे साधारणबाधबुद्धिप्रतिबन्धकत्वेनैव निर्वाहे[2] तस्य लक्षणस्यायुक्तत्वं मत्वा आदरो न कृतः ।

अव्याप्त्यतिव्याप्त्यसम्भवानां दोषाणां कस्मिन् कस्मिन् हेत्वाभासेऽन्तर्भाव इति प्रश्ने इदमुक्तं यत् पक्षैकदेशावृत्तित्वरूपभागासिद्धौ अव्याप्तेरन्तर्भावः, तस्या लक्ष्यैकदेशावृत्तित्वरूपत्वात् । सकललक्ष्यवृत्तित्वे सति अलक्ष्यवृत्तित्वरूपाया अतिव्याप्तेर्व्यभिचारेऽन्तर्भावः । लक्ष्यमात्रेऽवर्तनरूपासम्भवस्तु बाधेऽन्तर्भवति । वस्तुतस्तु– 'यादृशसाध्यपक्षहेतौ यावन्तो दोषास्तावदन्यान्यत्वं तत्र हेत्वाभासत्वम्[3], पञ्चत्वकथनन्तु प्रसिद्धस्थलाभिप्रायकम्' इति निष्कर्षः ।

---

1. म. भा., प्र. उ. १/२/६४ ।
2. ल. म., योग्यतानिरू. ।
3. न्या. सि. मु.,अनु. ख., का. ७१ ।

**निग्रहस्थानम्**

निग्रहः पराजयः, तस्य स्थानमाश्रयः कारणमिति यावद् निग्रहस्थानमुच्यते । प्रतिज्ञाहानिः[1], अनर्थकम्[2], अर्थान्तरम्[3] – इत्यादि बहुविधं निग्रहस्थानं तत्र भाष्ये सङ्कीर्तितमस्ति । एवमेव छलस्य[4] असदुत्तररूपाया जातेः[5], वाद[6] -जल्प-[7] वितण्डानां[8] च बहुत्र सङ्केतो लभ्यते । सर्वेषामेषां विशदं विवेचनं निबन्धे द्रष्टव्यम् ।

**प्रत्यक्षानुमानयोर्बाध्यबाधकभावः**

समाने विषये यौगपद्येन प्रत्यक्षानुमितिप्रमयोः सामग्री यद्युपतिष्ठति,तदा प्रत्यक्षसामग्री प्रबला भवतीति प्रत्यक्षप्रमैवोदेति, विभिन्नविषये तु उक्तपरिस्थितौ अनुमितिरेव भवति ।

द्रष्टव्यं तावद् विषयभेदेऽनुमानस्य प्राबल्यमूकालोऽजिति सूत्रीयं भाष्यं विवृण्वति प्रदीपे[9], प्रत्यक्षानुमानयोः क्वचित् समकक्ष्यत्वमपि । विस्तरेण सर्वं विवेचितं निबन्धे ।

●

---

1. म. भा., प्र. उ. १/२/६४ ।
2. म. भा. १/१/१ ।
3. न्या. म., द्वि. भा., पृ. १९७ ।
4. म. भा. १/१/४३ ।
5. म. भा., प्र. उ. १/४/८४ ।
6. म. भा., नवा., पृ. १६-१७ ।
7. म. भा., ४/१/३ ।
8. म. भा., प्र. उ. २/३/१ ।
9. म. भा., प्र. १/२/२७ ।

# शब्दसमीक्षायां

## प्रथमं पुष्पम्

आदौ तावत् शब्दस्य प्रामाण्यविमर्शे विसंवादिमतानि उद्धृत्य प्रत्याख्याय च संवादिमतानि प्रदर्श्य "शब्दप्रमाणका वयं यच्छब्द आह, तदस्माकं प्रमाणम्" इत्याद्युक्त्वाऽत्र[1], दर्शने शब्दप्रमाणं प्राण इत्यावेदितम् । दर्शनान्तरे शब्दस्य ज्ञानमात्रं शाब्दप्रमायां कारणतया सिद्धान्तितम्,[2] अत्र तु श्रावणप्रत्यक्षमेवेति विशेषः[3] ।

**शब्दप्रमाणे व्यापारः**

प्राचीनवैयाकरणाः शब्दनिष्ठवृत्तिज्ञानाधीनां पदार्थोपस्थितिं व्यापारतयाऽभ्युपयन्ति[4] । सा चोपस्थितिः स्मृतिरूपा । "शब्दज्ञानोद्बुद्धः शक्त्यार्थविषयकः संस्कार एव व्यापारः" इति श्रीनागेशभट्टः[5] । "पदार्था एवोपस्थिताः सन्तो योग्यताज्ञानादिद्वारा वाक्यार्थं गमयन्ति" इत्यपि भाष्यीयमतविशेषः[6] ।

**वृत्तेः स्वरूपं तद्भेदाश्च**

शाब्दबोधानुकूलपदार्थज्ञानजनकज्ञानविषयपदपदार्थयोः सम्बन्धविशेषत्वं शब्दनिष्ठाया वृत्तेर्लक्षणम्[7] । अत्र लक्षणे विषयान्तरस्य प्रवेश उपलक्षणमुद्रया, न विशेषणविधया, अन्योन्याश्रयप्रसङ्गात् । लघुमञ्जूषायाम् "शक्तिर्लक्षणा व्यञ्जना चेति तिस्रो वृत्तयः" उक्ताः । तत्र परमतानुरोधेन लक्षणायाः प्रवेशः कृतः, स्वमते तु शक्तिर्व्यञ्जना इति द्वे एव ।

●

---

1. म. भा. पस्पशा., पृ. ५८ ।
2. न्या. सि. मु. का., ८१ ।
3. म. भा. १/१/६८ ।.
4. म. भा. १/१/६७ ।
5. ल. म., प्र. टी., पृ. ४०८-११ ।
6. म. भा. १/२/४५ ।
7. म.भा., प्र. उ. १/१/७ ।

# शब्दसमीक्षायां

## द्वितीयं पुष्पम्

तत्र "तादात्म्यलक्षणः सम्बन्धः शक्तिः" इति भगवान् सूत्रकारः[1] । "योग्यतारूपा शक्तिः" इति श्रीभर्तृहरिः[2] । "सैव बोधजनकता" इति भूषणकारः[3] । "वाच्य-वाचकभावसम्बन्धरूपा सा" इति मञ्जूषाकारः[4] । "एकस्मिन् शब्दे अनेकार्थनिरूपितं तादात्म्यमेकमनेकं वा"[5] इत्यत्र भाष्याभिमतं पक्षत्रयमुक्तम् ।

अपशब्देऽपि शक्तिरस्ति[6] । ततोऽपि शाब्दबोधो भवति; किन्तु साधुत्वाभावात् पुण्यजनकता तत्र नास्ति[7] इति शाब्दिकसिद्धान्तः । सा चेयं शक्तिः, योगो रूढिर्योगरूढिश्चेति त्रिविधाऽस्ति[8] । संयोगविप्रयोगादिभिरस्याः शक्तेर्नियमनमपि हर्य्यादिसम्मतम्[9] । संयोगादीनां 'सवत्सा धेनुः' इत्यादीन्युदाहरणानि लघुमञ्जूषायां[10] सुष्ठु दर्शितानि, तानि निबन्धे विशदीकृतानि ।

**लक्षणाविमर्शः**

शक्यतावच्छेदकारोपरूपां लक्षणां वदन्तो वैयाकरणाः शक्तिस्वरूपामेव लक्षणां मन्यन्ते[11] । यथा 'गङ्गायां घोषः' इत्यत्र सामीप्यसम्बन्धमूलकं गङ्गात्वारोपं तीरे विधाय,

---

1. पा. सू. १/१/१ ।
2. वा. प. ३/३/२८ ।
3. भू. सा., शक्तिनिरू. ।
4. ल. म., शक्तिनिरू. ।
5. म.भा. १/२/६४ ।
6. म.भा., नवा. १/१/१, ल. म., शक्तिनि., पृ. ६९ ।
7. वा. प. १/२७, १५३-१५४ ।
8. ल. म., शक्तिनि., पृ. ८८-८९ ।
9. वा. प. २/३१७-१८ ।
10. ल. म., श. नि., पृ. ९०-९१ ।
11. म. भा. ४/१/८; ल. म., लक्षणानिरू. ।

'तीरे घोषः' इति बोधः क्रियते । 'काकेभ्यो दधि रक्ष्यताम्' इत्यत्र काकाकाक-समुदाये काकत्वारोपरूपा लक्षणा । तत्र यद्यपि तादृशसमुदाये काकोऽप्यस्ति, तत्र काकत्वमस्त्येव, तथापि दध्युपघातकत्वाऽवच्छेदेन तत्समुदाये काकत्वाभावोऽ-स्त्येवेत्यारोपः सूपपन्नः । 'कमलानि कमलानि' इत्यत्र तु सौरभातिशयविशिष्टे कमले कमलत्वारोपः, सौरभातिशयरूपविशेषणांशमादायोपपादनीयः, अर्थाद् विशेषणे कमलत्वाभाव इति तद्विशिष्टेऽपि तदभावो बोध्यः ।

'कचतस्त्रस्यति वदनम्' इत्यत्र राहुं कच इति जानीयामित्यारोपः । 'तत्र कचो राहुः' इत्यभेदबोधोऽनुयोगिमुखेनेति राहोरभेदस्य कचेऽपि भानेन त्रासप्रयोजकता सुष्ठु सङ्गच्छते । किं वा तत्र कचत्वाऽरोपेऽपि राहुत्वेनापि तस्य ज्ञानमस्त्येवेति सम्यक् त्रासोपपत्तिः । कचत्वारोपस्य फलं तु सौन्दर्यातिशयादिप्रतीतिरूपं सर्वं निबन्धे द्रष्टव्यम् । आरोपरूपलक्षणायां महर्षिगौतमस्य[1] आलङ्कारिकाणां[2] चापि सम्मतिः । शक्यसम्बन्धरूपा लक्षणा इति नैयायिकनव्याः ।[3] ज्ञाप्यसम्बन्धरूपा सा इति पूर्व-मीमांसाविदः[4] ।

सर्वविधलक्षणासूक्तारोपरूपलक्षणा एव युक्तिभिः सिद्धान्तिता । तात्पर्यानुप-पत्तिरेवास्या बीजं भाष्यानुमोदितम् । अन्यथा 'यष्टीः प्रवेशय' इति आरोप-स्थलमभ्युपेत्य लक्षणाया उदाहरणं न सूचयेद् भगवान् भाष्यकारः[5] । गौणी शुद्धा चेति भेदाभ्यां सा द्विविधा । 'गौर्वाहीकः' इत्यादावाद्या, 'गङ्गायां घोषः' इत्यादौ द्वितीया । पुनरपि अजहत्स्वार्था–जहत्स्वार्था इति भेदाभ्यामियं द्विविधा । 'छत्रिणो यान्ति, गां वाहीकं पश्य' इति चोदाहरणे । निरूढा प्रयोजनवती इति भेदाभ्यां पुनरपि एषा द्विविधा । 'त्वचा ज्ञातम्', 'गङ्गायां घोषः' इति चोदाहरणे । एवमेवास्या भूयान् भेदप्रभेदादिप्रपञ्चः कृतोऽस्ति साहित्यशास्त्रे ।

## व्यञ्जनावृत्तिविमर्शः

शब्दनिष्ठा व्यञ्जनावृत्तिरपि वैयाकरणैरवश्यमभ्युपेयते, अन्यथा स्फोटस्य व्यङ्ग्यता[6] प्रादीनां क्रियाविशेषव्यञ्जकता[7] च कथं सिद्ध्येत्, पदपदार्थयोर्वाक्यवाक्यार्थयोः व्यङ्ग्य-

---

1. न्या. द. २/२/६४ ।
2. का. प्र., द्वि. उ., का. १० ।
3. न्या. सि. मु., कारि. ८२ ।
4. वै. सि. ल. म., लक्षणानिरू. ।
5. म. मा. ४/१/४८ ।
6. वा. प. १/७६-८८ ।
7. पा. सू. १/३/१,१/४/५९ ।

व्यञ्जकभावसम्बन्धो व्यञ्जना, संस्कारविशेषस्तूद्बुद्धः सन् तद्द्योतकः । इयं ज्ञाता सती स्वरूपसती वा शाब्दबोधहेतुः? अस्याः कियन्तो भेदप्रभेदा वा? अस्या अनङ्गीकारे मतान्तरयुक्तय इत्यादि विशदं विवेचितं निबन्धे द्रष्टव्यम् ।

**संक्षिप्तो व्यञ्जनावृत्तिस्थापनप्रकारः**

यत्तु स्मृतिसहकृतेन मनसाऽस्या गतार्थता कैश्चित् क्रियते, तत्तु न समीचीनम्, स्मृतोऽर्थो हि शब्देन सम्बद्धः सन्नेव वाक्यार्थं गमयितुं क्षमिष्यत इति । स एव सन्बन्धविशेषो व्यञ्जनात्वेन स्वीक्रियते सहृदयैरिति मन्मत एव प्रवेशः । असम्बद्धपक्षे नियमाभावः । किञ्च शैत्यपावनत्वरूपमर्थं 'मनसा साक्षात्करोमि' इति नानुव्यवसायः, अपि तु व्यञ्जनया जानामि इत्येवेति सोऽपि चैतत्स्वीकारे सुदृढं मानम्[1] ।

अत एवानुमानेन तात्पर्यवृत्त्या अर्थापत्त्या वृत्त्या वाऽस्या गतार्थतावादिनोऽपि पराकृता भवन्ति, व्याप्तिज्ञानाद्यभावेऽपि वाक्यश्रवणानन्तरं व्यङ्ग्यार्थस्य निःसंशयं प्रतीतेः । तात्पर्यवृत्तिस्तु यदि साहित्यशास्त्रोक्ताऽस्ति, तदा तया व्यञ्जनायाः कथं गतार्थता? वाक्यार्थरूपस्य पदार्थद्वयसंसर्गस्य बोधनाय तस्याः स्वीकारात् । शाब्दबोधकारणीभूतं तात्पर्यज्ञानं चेत् सा, तदाऽपि न गतार्थता, विषयभेदात् । व्यतिरेक्यनुमानेनार्थापत्तेर्गतार्थत्वेऽनुमानपक्षीयदोषप्रसरात्, अर्थात् 'आपादयामि' इत्यनुव्यवसायाभावाच्च । सर्वं विस्तरतो निबन्धे द्रष्टव्यम्[2] ।

●

1. सा. द., परि. ५, का. ९ ।
2. अत्र निबन्धे शब्दप्रमाणसमी., २ पुष्पे ।

# शब्दसमीक्षायां

## तृतीयं पुष्पम्

**आकाङ्क्षाविमर्शः**

आकाङ्क्षायोग्यताऽऽसत्तितात्पर्यज्ञानानि अपि शाब्दबोधे हेतुभूतानि[1] । तत्राकाङ्क्षाविमर्शः क्रियते । एकार्थकर्तृका स्वान्वययोग्यापरार्थविषयिणी या जिज्ञासा सा आकाङ्क्षा, एतज्ज्ञानं शाब्दबोधे कारणम् । एषा आकाङ्क्षा यद्यपि पुरुषनिष्ठैव, तथापि समवायसम्बन्धेनार्थेऽस्या आरोपं कृत्वोक्तलक्षणं संगमनीयम्[2] । शाब्दबोधरूपकार्यसमकालवृत्तित्वेनास्याः कारणत्वमिति, एतस्याः स्थितिक्षणे एकस्मिन् शाब्दबोधे जाते, द्वितीयस्तु आपादयितुं न शक्यते[3] । अत्र निष्कर्षो निबन्धे द्रष्टव्यः ।

**योग्यताविमर्शः**

एकपदार्थेऽपरपदार्थस्य सम्बन्धो योग्यता, तज्ज्ञानं कारणमिति न्यायविदः[4] । एवमेव– 'तात्पर्यविषयसंसर्गाबाधो योग्यता' इत्युत्तरमीमांसाचार्याः[5] । तदेतत् किमपि योग्यातास्वरूपं न स्वीक्रियते शाब्दिकाचार्यैः, नाऽपि तज्ज्ञानं हेतुतयाऽभ्युपेयते, 'अग्निना सिञ्चति' इत्यादितोऽपि शाब्दबोधस्यानुभवसिद्धत्वात् ।

अन्यथा ईदृशवाक्यश्रवणोत्तरं हास-रोदनादि न स्यात् । वैयाकरणनये सर्वत्र बौद्धपदार्थस्यैव बोधविषयतया कुत्रापि बाधो न स्वक्रियते । 'अत्यन्तासत्यपि स्वार्थे ज्ञानं शब्दः करोति हि' इति स्मरणात् ।

अत एव बाधज्ञानसमकालमपि शाब्दबोधो जायत एव । तत्र स्वस्वसामग्रीबलेन जातयोर्द्वयोर्ज्ञानयोर्मध्ये यत्र ज्ञाने सदोषसामग्रीजन्यताग्रहः, तत्राप्रमात्वग्रह इत्येव कल्पना श्रेयसी । यथा 'गेहे घटोऽस्ति', 'गेहे घटो नास्ति' इति परस्परं प्रयुक्ते विरुद्धवाक्यद्वये[6] ।

---

1. वै. सि. ल. म., आकाङ्क्षानिरू., तात्पर्यनिरू. ।
2. म. भा. २/१/१ ।
3. ल. म., आकाङ्क्षानिरू. ।
4. न्या. सि. मु., कारि. ८३ ।
5. वे. प., आगमपरि. ।
6. ल. म., योग्यतानिरू. ।

नन्वेवं बाधज्ञानेनाप्रामाण्यज्ञानोत्पत्तौ गालिदानादिस्थले दुःखादिकं नोत्पद्येत इति चेत्, उच्यते – तत्र व्यञ्जनया जायमानेन गालिदातृगतदुष्टत्वज्ञानेन तदुपपत्तिरिति न किञ्चित् हीयते[1] । एतस्या विशदो विमर्शो हर्य्यादिसम्मतं विलक्षणं योग्यतास्वरूपं च निबन्धे द्रष्टव्यम् ।

**आसत्तिविमर्शः**

पदयोरव्यवधानरूपा आसत्तिः, तज्ज्ञानमपि शाब्दे हेतुः[2] । वस्तुतः 'अनानुपूर्व्येणापि सन्निविष्टानां यथेष्टमभिसम्बन्धो भवति' इत्यादिभाष्योक्त्याऽस्या हेतुत्वाभाव एव गम्यते[3] ।

**तात्पर्यस्वरूपम्**

वक्तुरिच्छा तात्पर्यम्, तज्ज्ञानं शाब्दबोधे कारणम् । उक्तञ्चास्य कारणत्वं भाष्यकृताऽपि– "वाक्यं वक्तर्यधीनं हि" इत्युक्त्या[4] । एतद्ग्राहकं प्रकरणादिकम्, अत एव प्रकरणादिज्ञानाभावे इदं पदमेतदर्थमेतदर्थकं वा इति सन्देहो जायते । मौनिलिखितवाक्यस्थलेऽपि तस्य सूक्ष्ममुच्चारणमस्त्येवेति तत्रापि तदीयं तात्पर्यमस्त्येवेत्यनुमायैव शाब्दबोध इति न व्यभिचारः[5] ।

वस्तुतस्तद्धेतोरेव तत्त्वे किं तेन इति न्यायेन प्रकरणादिज्ञानेनास्य गतार्थत्वमेव । किञ्च देवताप्रसादादिना मूर्खबालकरचितश्लोकादिश्रवणे तदीयतात्पर्यनिश्चयाभावेऽपि शाब्दबोधदर्शनाद् व्यतिरेकव्यभिचारेणापि नाऽस्य कारणत्वम् । "वाक्यं वक्तर्यधीनं हि" इति भाष्यन्तु वक्तुस्तात्पर्यज्ञानं वाक्यार्थबोधस्य प्रमात्वं निर्णेतुमुपयुज्यत इत्येवं परतया नेयम् । सर्वं विस्तरेणोक्तं निबन्धे ।

●

1. ल. म., योग्यतानिरू. ।
2. म. भा., प्र. उ. १।१।५७ ।
3. म. भा., प्र. उ. १।१।५९ ।
4. म. भा. १।१।५६ ।
5. ल. म., तात्पर्यनिरू. ।

# शब्दसमीक्षायां

## चतुर्थं पुष्पम्

### शब्दस्वरूपसमीक्षा

व्याकरणदर्शने शब्दस्य द्विविधं स्वरूपमुपगम्यते, ध्वन्यात्मकं[1] स्फोटात्मकञ्च[2] । तत्र श्रोत्रेन्द्रियेण यो गृह्यते स ध्वनिरूपशब्दः । लोके शब्दपदेनायमेव व्यपदिश्यते । स्फोटात्मकस्तु चेतनो नित्यो विभुश्चानेन ध्वनिनाऽभिव्यज्यते । यथा घट इत्याकारके स्फोटेऽभिव्यञ्जनीये घकाराकारटकाराकाररूपाश्चत्वारो ध्वनयः प्रत्येकमभिव्यञ्जका भवन्ति । तत्र घकारस्तादृशं स्फोटमस्फुटं व्यनक्ति, अकारः स्फुटम्, टकारस्स्फुट-तरम्, अन्त्योऽकारः स्फुटतमम्[3] । अत एव स्फुट्यते ध्वनिनाऽभिव्यज्यते यः स स्फोट इति व्युत्पत्तिरपि सङ्गच्छते । किञ्च स्फुटत्यर्थो येनेति करणव्युत्पत्तिरपि स्फोटपदस्य न विस्मर्तव्या । तयैवास्य स्फोटात्मकशब्दस्यार्थविषयकबोधजनकत्वेनार्थ-निरूपितशक्त्याश्रयत्वं लभ्यते ।

अत एव चास्य स्फोटस्याभ्युपगमः । उपस्थितेन ध्वनिना एवार्थबोधनिर्वाहेऽस्य कल्पनाऽपार्था इति वक्तुं न साम्प्रतम् । तथा सति ध्वनिरूपवर्णानामुच्चरितप्रध्वंस-त्वेन[4] ध्वनिसमुदायस्यासम्भवेऽर्थनिरूपिता शक्तिराश्रयहीना स्यात् । प्रत्येकाद् ध्वनेरर्थबोधे तु बोधावृत्तिर्ध्रुवं प्रसज्येत । अस्य विशदो विमर्शः, शब्दप्रमाणस्य प्रमाणान्तरापेक्षया बलाबलविमर्शश्च निबन्धे पठनीयः ।

●

---

1. म. भा., नवा. १।२।७० ।
2. तदेव ।
3. वा. प. १।८३-८४-८८ ।
4. म. भा. १।४।१०९ ।

# अर्थापत्तिसमीक्षायां

## प्रथमं पुष्पम्

उपपाद्यज्ञानेनोपपादककल्पनमर्थापत्तिप्रमा । तत्कारणमुपपाद्यज्ञानमर्थापत्तिप्रमाणम् । एवञ्चोपपाद्यज्ञानत्वमर्थापत्तेर्लक्षणं मन्तव्यम्[1] । अर्थस्यापत्तिः ज्ञप्तिः इति षष्ठीतत्पुरुषेणार्थापत्तिशब्दः प्रमापरः । अर्थस्यापत्तिर्ज्ञप्तिर्येन इति व्यधिकरणबहुव्रीहिणाऽयं शब्दप्रमाणपर इति व्युत्पत्तिद्वयेनार्थद्वयं लभ्यते । "उपात् प्रतियत्नवैकृतवाक्याध्याहारेषु च" इति सूत्रयता भगवता पाणिनिनाऽपि समर्थितेयमर्थापत्तिः[2] ।

उपपाद्यज्ञानजन्य उद्बुद्धः संस्कार एवात्र व्यापारतया स्वीकरणीयः । "न मु ने" इति सूत्रीयभाष्यप्रदीपोद्द्योतानां दर्शनेनास्य प्रमाणस्य स्फुटाभ्युपगम आयाति । तथा हि 'ने' परतः प्राप्तं कार्यं प्रति मुभावस्यासिद्धत्वाभावोऽत्र उपपाद्यः, तज्ज्ञानं प्रमाणम्, नाभावेऽपि कर्तव्ये मुभावस्यासिद्धत्वाभाव उपपादकः, तत्कल्पनमर्थापत्तिप्रमा[3] । दृष्टार्थापत्तिश्रुतार्थापत्तिप्रभृतिभिर्भेदप्रभेदैरियं सुष्ठु व्याख्याताऽस्ति निबन्धे ।

---

1. म. भा., प्र. उ. १।१।५९, म. भा. प्र. १।१।५६ ।
2. पा. सू. ६।१।१३९ ।
3. पा. सू. ८।२।३ ।

# प्रत्याख्येयसमीक्षायां

## प्रथमं पुष्पम्

अत्र व्याकरणदर्शने उपमानस्य प्रामाण्यं न सम्मान्यते भाष्यकृदादिभिः शब्दशास्त्रमर्मज्ञैः । अस्यानुमानेनान्यथासिद्धिं प्रस्तौति श्रीहेलाराजः[1] । एवमेवानुपलब्धेरपि स्वतन्त्रं प्रमाणत्वं नेष्यते । "स्त्रियाम्" इति सूत्रस्थभाष्यग्रन्थदर्शनेन प्रत्यक्षप्रमाणत एवाभावस्य ग्रहणं लभ्यते[2] । अनुपलब्धिस्तु प्रत्यक्षप्रमाणे सहकारिणी इत्येव मन्तव्यं[3] न्यायदर्शनवत् ।

# प्रत्याख्येयसमीक्षायां

## द्वितीयं पुष्पम्

"तदेवेदं कार्षापणं यन्मथुरायां दृष्टम्" इत्यादिवाक्यैर्भाष्यकृता व्यवहृताया[4] अपि प्रत्यभिज्ञाया न स्वतन्त्रं प्रामाण्यम्; अपि तु तत्तत्सामग्रीकाले तत्तत्प्रमाणेष्वेवास्यान्तर्भावो मन्तव्यः ।

●

# प्रमेयसमीक्षा

यद्यपि प्रमेयसमीक्षापि व्याकरणदर्शने स्वतन्त्रो विषयः, तथापि प्रमाणसमीक्षायां सम्पादितायां प्रसङ्गतः प्रमेयाणां समीक्षाप्यावश्यकी इति अन्ते सापीषत्कृता वर्तते, तत्रैव द्रष्टव्या । पुनश्च सर्वान्ते ग्रन्थोपसंहारः, उपयुक्तग्रन्थानां सूची, शब्दविशेषाणां सूची चावलोकनीयेति शम् ।

●

---

1. वा. प., टी. ३।१४।३५९-६० ।
2. म. भा. ४।१।३ ।
3. म. भा., प्र. उ. ५।१।११९ ।
4. म. भा. १।१।२, मा. सू. १ ।

# कृतज्ञताप्रकाशनम्

शब्दब्रह्मवादो यद्यपि अद्वैतवाद एव पर्यवसन्न इति द्वैतवादीयं कृतज्ञताप्रकाशनमत्र मते न युक्तं प्रतीयते, तथापि व्यवहारदशायामौपाधिकभेदकल्पनायां सर्वं संघटत एव ।

अतः सर्वतः प्रथमं बाग्ब्रह्मण एव कृतज्ञतां प्रकाशयामि, यदन्तःप्रविष्टं सदिमां प्रमाणसमीक्षां समपीपदत् । उक्तं च–

**योऽन्तःप्रविश्य मम वाचमिमां प्रसुप्तां संजीवयत्यखिलशक्तिधरः स्वधाम्ना ।**
**अन्याँश्च हस्तचरणश्रवणत्वगादीन् प्राणान्नमो भगवते पुरुषाय तुभ्यम्** ॥ इति ।

तदनु वाग्ब्रह्मणो विवर्तभूतानामाविर्भूतप्रकाशानां समेषां वाग्योगविदामृषीणां योगिनां तत्तद्विद्यासु पारदृश्वनामद्यावधि जातानां शब्दशास्त्रनिष्णातानां कार्तज्ञ्यं शिरसाऽऽवहामि । यदीयप्रकाशेनास्मिन् कार्ये प्रकाशो लब्धः ।

पुनश्च तौ शिवसायुज्यमाप्तौ मातापितरौ, तादृशान्–वैयाकरणकेसरिणो भागवतैकप्राणान् गुरुवर **श्रीरामपदार्थशुक्लान्**, जगन्मान्यपाण्डित्यातिशयपाणिन्यवतारभूता–प्रतिमवैयाकरणान् परमगुरुवरान् **श्रीहरिनारायणत्रिपाठि**महानुभावान्, तदनुरूपान् तदन्तेवासिनो गुरुवरान् व्याकरणशास्त्रपारङ्गतान् **श्रीभास्करानन्दपर्वतीयान्**, न्यायव्याकरणाद्यनेकविद्यामर्मज्ञान् लोकहिताय साक्षाच्छ्रीदेव्या दत्तान् गुरून् **श्रीदत्तमिश्र**महाभागान्, न्याय-व्याकरण-मीमांसासु समधिगतप्रतिष्ठान् धर्मशास्त्रीयरहस्यज्ञान् परमगुरून् **श्रीगोपालशास्त्रिनेने**-महाभागान्, न्यायशास्त्रैकमूर्तीन् शास्त्रार्थकेसरिणः **श्रीकेशवद्विवेदिनः**, स्वपादचारेण भारतभुवं पावयतः, स्वजीवनेन भारतं भारतं विदधतश्चान्यान् गुरुवरान् हृदयेन नमस्करोमि । येषामसीमानुग्रहभरेणाशीर्वचसा मम पाञ्चभौतिकं चिन्मयं च शारीरमङ्कुरितं संवर्धितं च ।

पुनश्चात्र निबन्धे ये मां साक्षात् प्रवर्त्योत्साहितवन्तः, ये च व्याकरणशास्त्रे पतञ्जलिकल्पाः, दर्शनेषु च वाचस्पतिकल्पा विदुषां समवाये सम्मान्यन्ते । ते वाराणसेयसंस्कृतविश्वविद्यालयीय-भूतपूर्ववेदान्तविभागाध्यक्षा गुरुवराः सन्ति **श्रीरघुनाथशर्मपाण्डेय**महोदयाः । महामान्यानामेषामेवानुग्रहेणैष निबन्धो जनिमापत् । कैः शब्दैरेतेषां कृतज्ञतां प्रकाशयेयम्, हृदयेनैते केवलं नमस्क्रियन्ते ।

तदनु सर्वकार्येषु ये पदे पदे मां प्रेरयन्ति प्रोत्साहयन्ति च । ये च व्याकरणदर्शने दर्शनान्तरे शास्त्रार्थे च लब्धस्वातन्त्र्यसिंहासनदीक्षाः, समुल्लसितविद्याविद्योतितमानसाः, सनातनधर्मसंरक्षणैकव्रतिनः, येषां च निर्देशकत्वे कार्यमेतत् सम्पन्नमभूत्, ते सन्ति वाराणसेयसंस्कृतविश्वविद्यालयस्य सम्मानितप्राध्यापका गुरुवर**श्रीकालीप्रसाद-मिश्र**महोदयाः । एतेऽपि सर्वतोभावेन केवलं प्रणम्यन्ते ।

ततश्चात्र निबन्धे बहुविधं साहाय्यमाचरतां वाराणसेयसंस्कृतविश्वविद्यालयानुसन्धानसंचालकानां देशे विदेशे च प्रख्यातवैदुषीकाणां **श्रीबलदेवोपाध्याय**-महाभागानाम्, वा. सं. वि. विद्यालयोपकुलपतिमहोदयानां प्राच्यप्रतीच्योभयविधविद्यापारदृश्वनां **श्रीगौरीनाथशास्त्रिणां** चोपकारान् शिरसाऽऽवहामि ।

सर्वान्ते च निरन्तरं मद्धितचिन्तकान् तान् सुहृद्वरान् भूयसीभिर्धन्याख्याभिः, प्रेमप्रकर्षभाजस्तान् शिष्यांश्चाशीर्वचोभिः सततं सभाजयामि । यैरत्र निबन्धे शोधनादिकार्येषु बहु परिश्रान्तम् । भगवतः श्रीविश्वनाथादाशासे यत्तेऽचिरेणैव विशिष्टा विद्वांसो भूत्वा जगति सनातनं वैदिकं धर्मं संस्कृतविद्यां च संरक्षन्तो विराजन्तामिति शम् ।

●

# सङ्केत-सूची

अ०—अधिकरणम्
अधि०—अधिकरणम्
अ० — अम्बाकर्त्री—टीका
अ० क० — अम्बाकर्त्री—टीका
अम्बा० — अम्बाकर्त्री—टीका
अ० का० — अनुमानखण्डकारिका
अ० को० — अमरकोशः
अ० जा० — अनुमानजागदीशी
अ० पा० आ० सू० — अध्याय-पाद-आह्निक-सूत्राणि
अ० रा०—अध्यात्मरामायणम्
अवयवप्र० —अवयवप्रकरणम्
अ० सि० —अद्वैतसिद्धिः
अद्वैतसि० —अद्वैतसिद्धिः
अ० सि० प्र० परि०—अद्वैतसिद्धिः प्रथमपरिच्छेदः
अज० पुं० प्र० —अजन्तपुँल्लिङ्गप्रकरणम्
अजन्तपु० —अजन्तपुँल्लिङ्गम्
अथर्व० —अथर्ववेदः
अध्यासभा०—अध्यासभाष्यम्
अनु० ख० —अनुमानखण्डः
अनु० —अनुमानखण्डः
अनु०—अनुपसर्जनाधिकारः
अनु० गा० —अनुमानगादाधरी
अनु० गा० चि० —अनुमानगादाधरी, चिन्तामणिः
अनु० परि० —अनुमानपरिच्छेदः
अनु० स०—अनुमानसमीक्षा
अनुप० परि० —अनुपलब्धिपरिच्छेदः
अभिधर्म० —अभिधर्मकोशः
अर्था० परि० —अर्थापत्तिपरिच्छेदः
अर्था० —अर्थापत्तिपरिच्छेदः
आ० —आह्निकम्
आका० निरू० —आकाङ्क्षानिरूपणम्
आका० नि० —आकाङ्क्षानिरूपणम्
आग० प्र० —आगमप्रकरणम्
आ० परि० —आगमपरिच्छेदः
आव० नि० —आवश्यकनिर्युक्तिः
उ० —उद्धृतम्
उद्धृ० —उद्धृतम्
उ० रा० ल० —उत्तरार्धे राजलक्ष्मीटीका
उ० प्र० —उल्लासः प्रथमः
उप० परि० —उपमानपरिच्छेदः
उप० भा० —उपस्कारभाष्यम्
ऋग्० —ऋग्वेदः
ऋग्वेदभा० भू० —ऋग्वेदभाष्यभूमिका
औत्प० —औत्पत्तिकम्
क० टी० —कलाटीका
क० र० प्र० -कलारत्नप्रभा
का० —कारिका
कारि० —कारिका
कार० —कारकम्
का० प्र०—कारकप्रकरणम्
का० प्र० —काव्यप्रकाशः
का० प्र० उ० प्र०—काव्यप्रकाशे उल्लासः प्रथमः
कि० का० —किष्किन्धाकाण्डः
कि० टी० —किरणावलीटीका
कु० टी० —कुञ्जिकाटीका
कुसु० सा० द० टी०—कुसुमप्रतिमा, साहित्यदर्पणटीका

खद्योतटी० –खद्योतटीका
खं० खं० खा० –खण्डनखण्डखाद्यम्
गुणनिरू० –गुणनिरूपणम्
गूढा० व्यु० प्रथमाकार०–गूढार्थतत्त्वालोकः, व्युत्पत्तिवादे प्रथमाकारकम्
गूढा० व्यु० गूढार्थतत्त्वालोकः, व्युत्पत्तिवाद-टीका
गो० ब्रा० –गोपथब्राह्मणम्
गौ० सू ०–गौतमसूत्रम्
गौड० टीका–गौडब्रह्मानन्दी टीका
च० शा० अ० श्लो०–चरकः, शारीरकः, अध्यायः, श्लोकः
च० परि० –चतुर्थपरिच्छेदः
चा० द० –चार्वाकदर्शनम्
चा० म० –चार्वाकमतम्
चि० म० –चिन्तामणिः
चि० दी० –चिन्तामणि-दीधितिः
चि० म० दी० –चिन्तामणि-दीधितिः
चुरा० –चुरादिगणः
छा० –छान्दोग्योपनिषद्
जल्पप्र०–जल्पप्रकरणम्
जाग० प० –जागदीशीपक्षता
जै० द०–जैमिनिदर्शनम्
जै० द० –जैनदर्शनम्
जै० न्या० मा० अ० –जैमिनीयन्याय-मालाऽधिकरणम्
जै० सू० –जैमिनिसूत्रम्
ज्ञापकसमु० –ज्ञापकसमुच्चयः
टि० –टिप्पणी
टी० द्व० यु०–टीकाद्वययुता
टी ० द्व० –टीकाद्वयोपेता
टी० र० प्र० –टीका रत्नप्रभा
टी० वृ० –टीका-वृषभदेवीया
टी० हे० –टीका हेलाराजीया
त० प्र० –तर्कप्रदीपिका
त० बो० –तत्त्वबोधिनी
त० बि० –तत्त्वबिन्दुः
त० भा० –तर्कभाषा
तर्कभा० –तर्कभाषा
त० लो० –तत्त्वालोकः
त० वा० –तन्त्रवार्त्तिकम्
त० वा० त० पा०–तन्त्रवार्त्तिके तर्कपादः
त० स० –तत्त्वसङ्ग्रहः
तत्त्वचि० –तत्त्वचिन्तामणिः
त० प्र० परि० प्रा० वा० –तत्त्वप्रदीपिकोपरि प्रामाण्यवादः (चित्सुखाचार्यकृतः)
तत्त्वप्र० –तत्त्वप्रकाशिका
तत्त्व० सं० प० –तत्त्वसंग्रहपञ्जिका
तत्त्वसं० –तत्त्वसंग्रहपञ्जिका
तत्त्वार्थश्लो० वा० –तत्वार्थश्लोकवार्तिकम्
तत्त्वार्थसू० –तत्त्वार्थसूत्रम्
तत्त्वो० –तत्त्वोपप्लवः
तद्धितप्रक० –तद्धितप्रकरणम्
ता० टी० –तात्पर्यटीका
ता० र० टी० –तात्पर्यरत्नटीका
तिङर्थनिरू० –तिङर्थनिरूपणम्
तै० उ० –तैत्तिरीयोपनिषद्
तृ० का० –तृतीयकाण्डः
द० –दर्पणटीका
द० वै० भू० सा० टी०–दर्पणः ,वैयाकरणभूषण-सारटीका
द० स० अनि०–दर्शनसर्वस्वम्, अनिर्वचनी-यतावादः
दश० नि०–दशवैकालिकसूत्रनिर्युक्तिः
दि० रा० –दिनकरी-रामरुद्री
दि० रा० च–दिनकरी रामरुद्री

दि० –दिनकरी
दी० –दीधितिः
दी० –दीपिकाटीका
दी० नील० भा० सहिता–दीपिकानीलकण्ठी-भास्करोदयासहिता
दृष्टान्तबि० –दृष्टान्तबिन्दुः
द्र० –द्रष्टव्यम्
द्वि० उ० –द्वितीय उल्लासः
२ प्र० –द्वितीयप्रकरणम्
द्वि० का० –द्वितीयः काण्डः
द्वितीयाका० –द्वितीयाकारकम्
द्वि० भा० –द्वितीयो भागः
धा० पा० –धातुपाठः
नवा० –नवाह्निकम्
नि० –निरुक्तम्
निरु० –निरुक्तम्
निपातार्थनि० –निपातार्थनिर्णयः
नी० भा०–नीलकण्ठी भास्करोदया
न्या० कु०–न्यायकुमुदः
न्या० कुसु० –न्यायकुसुमाञ्जलिः
न्या० द०–न्यायदर्शनम्
न्या० दी०–न्यायदीपिका
न्या० प्र०–न्यायप्रवेशः
न्या० बि० टी–न्यायबिन्दुटीका
न्या० बो०–न्यायबोधिनी
न्या० भा०–न्यायभाष्यम्
न्या० म०–न्यायमञ्जरी
न्या० र० मा०–न्यायरत्नमाला
न्या० वा० –न्यायवार्त्तिकम्
न्या० सि० मु० –न्यायसिद्धान्तमुक्तावली
न्या० सू० –न्यायसूत्रम्
पद० –पदकृत्यम् (टीका)
प० जा० –पक्षता जागदीशी
प० शे० –परिभाषेन्दुशेखरः
परि० शे० टी०–परिभाषेन्दुशेखरटीका
परि० शे० तत्त्वप्र० –परिभाषेन्दुशेखर-तत्त्व-प्रकाशिका
पर० ल० म० –परमलघुमञ्जूषा
परिभाषेन्दु० –परिभाषेन्दुशेखरः
परिभाषे० –परिभाषेन्दुशेखरः
परी०–परीक्षामुखसूत्रम्
पस्प० –पस्पशाह्निकम्
पा० –पादः
पाञ्चमिकप्र० –पाञ्चमिकप्रकरणम्
पा० धा० पा० –पाणिनीयधातुपाठः
पा० शि० –पाणिनीयशिक्षा
पा० सू० –पाणिनीयसूत्रम्
पुण्य० –पुण्यराजीयटीका
पू० –पूर्वार्द्धम्
पू० मी०–पूर्वमीमांसा
पृ० –पृष्ठम्
प्र०–प्रकरणम्
प्र० कार० –प्रथमाकारकम्
प्र० ख० –प्रथमः खण्डः
प्र० ख० –प्रत्यक्षखण्डः
प्र० टीकोद्धृतम्– प्रकाशटीकोद्धृतम्
प्र० टी० –प्रकाशटीका
प्र० टी० –प्रभाटीका
प्र० त० –प्रथमतन्त्रम्
प्र० निरूपणम्– प्रत्यक्षनिरूपणम्
प्र० प० –प्रत्यक्षपरिच्छेदः
प्र० परि० –प्रत्यक्षपरिच्छेदः
प्र० परि० - प्रथमपरिच्छेदः
प्रशस्त० भा०–प्रशस्तपादभाष्यम्

प्रशस्तपा० भा० –प्रशस्तपादभाष्यम्
प्र० पा० भा० –प्रशस्तपादभाष्यम्
प्र० भा०– प्रथमभागः
प्र० प्र०– प्रकीर्णप्रकाशः
प्र० प्र०–प्रमाणप्रकरणम्
प्र० मी०–प्रमाणमीमांसा
प्र० र०–प्रस्थानरत्नाकरः
प्र० वा०–प्रमाणवार्त्तिकम्
प्र० वि०–प्रमाणविवेचनम्
प्र० स०–प्रमाणसमुच्चयः
प्र० समु०– प्रमाणसमुच्चयः
प्र० स०– प्रमाणसमीक्षा
प्रक० प०–प्रकरणपञ्चिका
प्रक० परि०–प्रकरणम्, परिभाषा
प्रमाणप्रमेयक०–प्रमाणप्रमेयकलिका
प्रमा० प्र० क०–प्रमाणप्रमेयकलिका
प्रमा० समु० –प्रमाणसमुच्चयः
प्रमाणसमु०–प्रमाणसमुच्चयः
प्रमेयकम०– प्रमेयकमलमार्त्तण्डः
प्रमेयकमलमा० –प्रमेयकमलमार्त्तण्डः
प्रमेयर० –प्रमेयरत्नमाला
प्रौ० म० – प्रौढमनोरमा
प्रौ० म० टी० – प्रौढमनोरमाटीका
बौ० नि० –बौद्धार्थनिरूपणम्
बौ० प्र० –– बौद्धार्थप्रकरणम्
ब्र० का० –ब्रह्मकाण्डम्
ब्र० सू० –ब्रह्मसूत्रम्
बृहदा०–बृहदारण्यकोपनिषद्
बृ०–बृहदारण्यकोपनिषद्
भा० –भास्करोदया टीका
भाम०– भामती
भूधा० –भूधातुः
भू० सा० –भूषणसारः
भूति० –भूतिटीका
भूति० –भूतितिलकः
भै० टी० –भैरवीटीका
भैर०– (परि० शे० टी० )–भैरवी (परिभाषेन्दुशेखर-टीका)
भ्वा० ग० –भ्वादिगणः
भ्वा० ग० प्र० –भ्वादिगणप्रकरणम्
म० प्र०– मणिप्रभा
म० स्मृ० – मनुस्मृतिः
मा० – माठरवृत्तिः
म० भा०– महाभाष्यम्
म० भार० – महाभारतम्
म० भा० उ० –महाभाष्योद्द्योतः
म० भा० प्र० –महाभाष्यप्रदीपः
म० भा० प्र० उ० –महाभाष्य-प्रदीपोद्द्योतः
मा० मे० –मानमेयोदयः
मा० सू० –माहेश्वरसूत्रम्
मी० द०–मीमांसादर्शनम्
मुण्डक० –मुण्डकोपनिषद्
मो० धर्मप० – मोक्षधर्मपर्व
मृगेन्द्रागम० –मृगेन्द्रागमवृत्तिः
यजु० –यजुर्वेदः
यो० द० –योगदर्शनम्
यो० द० व्या० भा० –योगदर्शन-व्यासभाष्यम्
यो० भा० स्वामिनारा० –योगभाष्यं स्वामिनारायणस्य
यो० वा० –योगवार्त्तिकम्
यो० सू० भा० विव० –योगसूत्रभाष्य-विवरणम्
र० का०–रत्नकारिका
रघु० –रघुवंशमहाकाव्यम्

र० प्र० –रत्नप्रभाटीका
रसगङ्गा० –रसगङ्गाधरः
रा० ल०– राजलक्ष्मी
रूपकनिरूप० –रूपकनिरूपणम्
ल०–लक्षणम्
ल० प्र० –लक्षणप्रकरणम्
ल० प्र० –लकारार्थप्रकरणम्
ल० म०– वैयाकरणसिद्धान्तलघुमञ्जूषा
ल० श० शे० –लघुशब्देन्दुशेखरः
लघी० –लघीयस्त्रयी
लि० – लिपिबद्धम् (हस्तलिखितग्रन्थः)
वज्रसूची०–वज्रसूचीखण्डः
वर० टीका–वरवर्णिनी टीका
वर० –वररुचिः
वा० टी० –वामनी टीका
वा० प० –वाक्यपदीयम्
वाद० प्र० –वादप्रकरणम्
वा० प० प्र० का० –वाक्यपदीय-प्रथमकाण्डम्
वा० रा० –वाल्मीकीयरामायणम्
विशेषका० –विशेषकाण्डः
वि० सू० वि० –विश्वनाथसूत्रवृत्तिः
विशुद्धि०–विशुद्धिमग्गः
वृ० –वृत्तिः
वे० प० –वेदान्तपरिभाषा
वै० भू० सा० –वैयाकरणभूषणसारः
वै० सि० कौ० –वैयाकरणसिद्धान्त-कौमुदी
वै० सि० ल० म० –वैयाकरणसिद्धान्त-लघुमञ्जूषा
व्य० निरू० –व्यञ्जनानिरूपणम्
व्या० प० –व्याप्तिपञ्चकम्
व्या० वा० –व्याप्तिवादः
व्यु० वा० व्युत्पत्तिवादः
व्यु० जया० प्र० –व्युत्पत्तिवादे जयाटीका प्रथमाकारकम्
श० कौ०–शब्दकौस्तुभः
श० ख० –शब्दखण्डः
श० र० –शब्दरत्नम्
श० वा० –शक्तिवादः
श० वा० सामान्यका० –शक्तिवादः, सामान्यकाण्डः
श० वा० वि० –शक्तिवादविवृतिः
शक्तिनिरू०–शक्तिनिरूपणम्
शक्तिनि० –शक्तिनिरूपणम्
शा० दी० –शास्त्रदीपिका
शा० भा०–शाङ्करभाष्यम्
शां० भा०– शाबरभाष्यम्
शाब० भा० –शाबरभाष्यम्
शिव०– शिवदृष्टिरहस्यम्
शि० म० टी० –शिखामणिटीका
शुक्लयजु० –शुक्लयजुर्वेदः
शुक्लयजुःप्राति० – शुक्लयजुःप्रातिशाख्यम्
श्रीमद्भाग० –श्रीमद्भागवतम्
श्लो० –श्लोकः
श्लो० वा० –श्लोकवार्त्तिकम्
स० द० सं०– सर्वदर्शनसंग्रहः
स० प्र० –समासप्रकरणम्
सं० प्र०–संज्ञाप्रकरणम्
संज्ञाप्र० – संज्ञाप्रकरणम्
संज्ञाप्रक०– संज्ञाप्रकरणम्
सत्प्रति० गा० –सत्प्रतिपक्षगादाधरी
सम्बन्धस० –सम्बन्धसमुद्देशः
समु० –समुद्देशः
सर्वद० जैमि० –सर्वदर्शने जैमिनिदर्शनम्
सर्वार्थ०– सर्वार्थसिद्धिः
सा० स० –साधनसमुद्देशः
साध० स० साधनसमुद्देशः
साधनसमु० –साधनसमुद्देशः
सां० त० कौ० –साङ्ख्यतत्त्वकौमुदी
सां० प्र० भा०– साङ्ख्यप्रवचनभाष्यम्
सा० द० –साहित्यदर्पणः

सा० द० कुसु० टी०—साहित्यदर्पण-कुसुमप्रतिमा-टीका
साम० – सामवेदः
सामा० नि० –सामान्यनिरुक्तिः
सामान्यनि० –सामान्यनिरुक्तिः
सा० ल० –सामान्यलक्षणा
सा० ल० प्र० –सामान्यलक्षणा प्रत्यक्ष-खण्डः
सि० कौ० –सिद्धान्तकौमुदी
सि० ल० –सिद्धान्तलक्षणम्
स्त्रीप्रत्ययप्र० – स्त्रीप्रत्ययप्रकरणम्
सु० का० –सुन्दरकाण्डः
सु० टी० – सुबोधिनी-टीका
सू० – सूत्रम्
स्फुटा०–स्फुटार्थाभिधर्मकोशः
स्फोटनि० –स्फोटनिरूपणम्
स्फोटनिरू० –स्फोटनिरूपणम्
स्फोटप्र०–स्फोटप्रकरणम्
स्फोटभेद०–स्फोटभेदनिरूपणम्
स्याद्वा० र० –स्याद्वादरत्नाकरः
स्याद्वाद० र० –स्याद्वादरत्नाकरः
ह० वृ० टी० –हरिवृषभटीका
हरि० टी० –हरिदासीयटीका
हरि० टी० –हरिनाथी टीका
हेतु० टी० –हेतुबिन्दुटीका
हेतुबि० टी० –हेतुबिन्दुटीका
हेला० टी० –हेलाराजीयटीका

# विषयानुक्रमणिका

## प्रत्यक्षसमीक्षायां प्रथमं पुष्पम्

## प्रत्यक्षसमीक्षायां द्वितीयं पुष्पम्

### इन्द्रियाणां प्राप्यकारित्वाप्राप्यकारित्व-विमर्शः



### इन्द्रियसामान्यलक्षणम्

# प्रत्यक्षसमीक्षायां तृतीयं पुष्पम्

## अनुमानसमीक्षायां प्रथमं पुष्पम्

## अनुमानसमीक्षायां द्वितीयं पुष्पम्

## अनुमानसमीक्षायां तृतीयं पुष्पम्

## शब्दसमीक्षायां प्रथमं पुष्पम्

## शब्दसमीक्षायां द्वितीयं पुष्पम्

## शब्दसमीक्षायां तृतीयं पुष्पम्

## शब्दसमीक्षायां चतुर्थं पुष्पम्

## अर्थापत्तिसमीक्षायां प्रथमं पुष्पम्



## प्रत्याख्येयसमीक्षायां प्रथमं पुष्पम्

## प्रत्याख्येयसमीक्षायां द्वितीयं पुष्पम्



## प्रमेयसमीक्षायां प्रथमं पुष्पम्

# प्रमेयसमीक्षायां द्वितीयं पुष्पम्

॥ श्रीहरिः शरणम् ॥

# पाणिनीयव्याकरणे प्रमाणसमीक्षा

## ॥ अथ प्रत्यक्षसमीक्षायां प्रथमं पुष्पम् ॥

**या शब्दरूपा विश्वस्मिन् मानमेयोभयात्मना ।**
**व्यवस्थिता महादेवी परा वाक् सा प्रसीदतु ॥ १ ॥**

**ज्योतिषामपि यज्ज्योतिश्चितिरूपेण संस्थिता ।**
**विश्वोपादानभूतासौ परा वाक् सम्प्रसीदतु ॥ २ ॥**

**बुद्धिप्राणौ व्यपाश्रित्य शब्दार्थोभयरूपतः ।**
**विवर्तते या सततं परा वाक् सा प्रसीदतु ॥ ३ ॥**

**यामन्तरा न प्रबोधो यां विना न प्रबोधतः ।**
**तद्विश्वपितरौ नित्यं मिलितौ समुपास्महे ॥ ४ ॥**

**प्रमाणेन परीक्ष्यार्थं शास्त्रे तस्यानुशासनम् ।**
**पाणिनीये ततः शास्त्रे प्रमाणं परिचिन्त्यते ॥ ५ ॥**

अथातः प्रमाणसमीक्षा । यतः सर्वोऽपि लौकिको वैदिको वा प्रवृत्ति-निवृत्त्यन्यतररूपो व्यवहारः प्रमाणपुरस्सर एव प्रवर्तते । सर्वाणि च शास्त्राणि प्रमाणं पुरस्कृत्यैव प्रवृत्तानि । किं बहुना, सर्वा अपि प्राणिनामसन्दिग्धाः संवादिन्यश्च प्रवृत्तयः प्रमाणपुरस्सरा एव । तत्र सामान्यज्ञानपुरस्सरैव विशेषजिज्ञासा समुदेती-त्यर्थस्य सर्वानुभवसिद्धत्वेन पूर्वं प्रमाणसामान्यमेव लक्षणेन[1] निरूप्यते ।

---

1. सामान्यलक्षणं त्यक्त्वा विशेषस्यैव लक्षणम् ।
   न शक्यं केवलं वक्तुमितोऽप्यस्य न वाच्यता ॥ (जै. सू. ५; श्लो. वा. श. परि., श्लो. २ )

तत्र प्रकर्षेण संशयविपर्ययादिव्यवच्छेदेन मीयते परिच्छिद्यते वस्तुतत्त्वं येन तत्प्रमाणमिति करणवव्युत्पत्त्या[1] प्रमां प्रति करणं प्रमाणमिति निष्कर्षे प्रमाणपदवाच्यं लक्ष्यम्, प्रमाकरणत्वरूपो धर्मो लक्षणमिति प्रतिपन्नं भवति[2] ।

## महाभाष्यसम्मतं प्रमाणसामान्यलक्षणम्

प्रमा चात्र 'अनिर्ज्ञातार्थस्य साकल्येन ज्ञानम्' । उक्तं चैतन्महाभाष्यप्रदीपोद्द्योतेषु । तथा हि—"मानं हि नाम तद् येनानिर्ज्ञातमर्थं ज्ञास्यामि, उप समीपे यन्नात्यन्ताय मिमीते तदुपमानम्" इति भाष्यम्[3] । अत्र प्रदीपः "मानं हीति—यथा प्रस्थादि । तेन हि साकल्येन मेयं परिच्छिद्यते" इति । उद्द्योतश्च "भाष्ये मानं हीति—अनिर्ज्ञातार्थस्य साकल्येन ज्ञापकत्वं हि तत्त्वम् । यथा प्रस्थादि अज्ञातस्य परिमाणरूपार्थस्य साकल्येन ज्ञापकम्, न तथोपमानम्"[4] । इति ।

उक्तलक्षणे साकल्येनेत्यनेन प्रमाया अबाधितार्थविषयकत्वं गम्यते । बाधितार्थविषयकं हि ज्ञानं नानिर्ज्ञातमर्थं साकल्येन परिच्छिनत्ति, विशेषधर्माविषयकत्वात् । साधारणधर्मदर्शने[5] हि विपर्ययः संशयो वा, विशेषदर्शने तु तद्बाधः । यथा 'इदं रजतम्' इत्यत्र इदंत्वं चाकचिक्यादिकं च साधारणो धर्मः प्रतीयते, न तु शुक्तित्वादिको विशेषः ।

तथा च साकल्येनेत्यस्य सामान्यरूपेण विशेषरूपेण चेत्यर्थः । 'अयं घटः' इति प्रत्यक्षप्रमायामिदन्त्वेन घटत्वेन च घटस्य भानम् । तत्रेदन्त्वं सामान्यधर्मः, घटत्वं विशेषधर्मः । केवले घट इत्याकारकप्रत्यक्षे तु घटत्वं सामान्यरूपम्, आकृतिविशेषो विशेषरूपम् । 'पर्वतो वह्निमान्' इत्याद्यनुमितावपि वह्नित्वेन पर्वतीयत्वेन च वह्नेर्भानम्, तत्र वह्नेः पर्वतसम्बन्धरूपं पर्वतीयत्वं विशेषो बोध्यः । एवं शाब्दप्रमायामपि पदात् पदार्थस्य सामान्यरूपेण भानम्, पदार्थान्तरसम्बन्धात्तु विशेषरूपेणेति साकल्योपपत्तिः ।

---

1. न च सामान्यलक्षणमन्तरेण शक्यं विशेषलक्षणं कर्तुमिति प्रमाणसामान्यं तावल्लक्षयति ।
(सा. त. कौ.पृ. ५१)
2. "करणाधिकरणयोश्च"(३।३।११७) पाणिनिसूत्रेण प्रपूर्वकान् मिमीतेर्मिनोतेर्वा करणे ल्युट् ।
3. प्रमीयतेऽनेनेति निर्वचनात् प्रमां प्रति करणत्वमवगम्यते । (सा. त. कौ.,पृ. ५१)
4. म. भा., अ. २, पा. १, आ. ३, सू. ५५, पृ. १२६ ।
5. न्या. सि. मु., दिनकरीरामरुद्रीसंवलिता, गुणनिरू., पृ. ४४१, कारि. १३० ।

उपमाने तु सामान्यरूपेणैव[1] भानम्, न तु विशेषरूपेणेति तस्य प्रमाणत्वं नाभिमन्यन्ते वैयाकरणा इति उपमानस्यंप्रामाण्यप्रत्याख्यानावसरे विस्तरेण निरूपयिष्यते ।

किञ्च, द्रव्यरूपेऽर्थे प्रमाविषये तदवयवजातिगुणक्रियादीनां गुणक्रियाद्यर्थे तथाभूते तु तद्गतजातिलिङ्गसंख्यादीनां साकल्यं बोध्यम्[2] । स्फुटीकृतं चैतत् "येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां सम्प्रत्ययो भवति स शब्दः" इति भाष्यं विवृण्वता श्रीनागोजिभट्टेनोद्द्योते "अत्र विषाणान्तैरवयवैर्गुणादयोऽप्युपलक्ष्यन्ते इत्येतत् कथनेन । तथा च सरूपाणामिति सूत्रे भाष्ये प्रदीपकृत्कैयटोऽपीदं समर्थयते । तथा हि– "प्रत्यर्थमिति यावन्ति द्रव्याणि विशिष्टगुणक्रियाविषयतया विवक्षितानि, तावतां शब्दानामेकार्थोपक्षयाणां प्रयोगे प्राप्ते एकशेषारम्भ इत्यर्थः[3]" इति ।

नन्वेवं शाब्दप्रमायां साकल्योपपत्तावपि प्रत्यक्षादिप्रमायां कथं तदुपपत्तिरिति चेत्, तन्न रामणीयकमावहति, अथ गौरित्यत्र कः शब्दः? इति प्रश्नभाष्ये व्याख्यानभूताभ्यां प्रदीपोद्द्योताभ्यां प्रमामात्रे साकल्यस्य सुष्ठूपपादनात् । तथा हि– "गौरिति विज्ञाने प्रतिभासमानेषु वस्तुषु कः शब्द इत्यर्थः" इति प्रदीपः[4] । अत्रोद्द्योतश्च "अत्र गौरिति विज्ञाने इति सामान्योक्त्या तदाकारप्रत्यक्षादिविज्ञानेऽपि गुणादीनां सामान्यरूपेण भानम्, अत एव प्रत्यक्षदृष्टेऽप्याम्रफलादौ रसविशेषजिज्ञासा, विशेषजिज्ञासायाः सामान्यज्ञानपूर्वकत्वादित्यन्ये"[5] इति ।

एवं च शाब्दिकनये प्रत्यक्षादिसर्वप्रमासु प्रमेयावयवजातिगुणक्रियादीनां शब्दरूपस्य च भानमिति दर्शनान्तराद् विशेषः । साकल्येनेत्यत्र स्वार्थे ष्यञ्प्रत्ययः[6], तृतीयार्थः प्रकारत्वम्[7], अनिर्ज्ञातार्थस्येत्यत्र षष्ठ्यर्थो विशेष्यत्वमिति[8] । अनिर्ज्ञातार्थ-

---

1. 'गौर्हि गवयं कतिभिश्चिद् धर्मैरेव तद्गतैर्ज्ञापयति, न साकल्येन । (म. भा. प्र. उ. २ अ., १ पा. ,५५ सू.)
2. म. भा. प्र. उ., अ. १, पा.१, आ.१, पृ. १३ ।
3. म. भा. प्र., १अ., २ पा., ६४ सू., पृ. ९९ ।
4. म. भा. प्र., १।१, पृ. ८ ।
5. म. भा. उ., १।१, पृ. ८ ।
6. "चतुर्वर्णादीनां स्वार्थे उपसंख्यानम्" । (म. भा. ५।१।१२४)
7. "प्रकृत्यादिभ्य उपसंख्यानम्" । (म. भा. २।३।१८)
8. पा. सू. २।३।५० ।

विशेष्यकं सामान्यविशेषधर्मादिरूपसम्भावितसकलधर्मप्रकारकं ज्ञानं प्रमा, तत्करणं प्रमाणमिति प्रमाणसामान्यलक्षणं पर्यवसन्नम् ।

**उक्ते प्रमांणसामान्यलक्षणे वार्त्तिककृत्सम्मतिः**

"लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमः" इति वार्त्तिके लोकशब्दो लोकात्मकेऽनुमानप्रमाणरूपेऽर्थे उक्तो भाष्यकृता[1] । तथा च लोकप्रमाणेन अर्थज्ञानरूपप्रयोजनाय शब्दप्रयोगो निर्ज्ञात इति शब्दानुशासनशास्त्रेणानिर्ज्ञातस्य तस्याबोधनात् कथं प्रामाण्यं लभ्येत? इति जिज्ञासायामुच्यते इदं महर्षिणा श्रीकात्यायनेन 'लोकत' इति । एवं च लोकतोऽनिर्ज्ञातस्य धर्मस्य साकल्येन निश्चायनेन तत्र शास्त्रे प्रामाण्यमवतिष्ठत एवेति तत्सम्मतमपीदं लक्षणम् । साधुशब्दप्रयोगाद् धर्मो भवतीति लोकतोऽवगन्तुं न शक्यम् । तत्प्रमायां तु इदं शास्त्रमेव एकं करणमिति हृदयम् ।

**उक्तलक्षणे महर्षिपाणिनिसम्मतिः**

लुपि युक्तवदिति पूर्वाचार्यसम्मतं सूत्रं प्रत्याचक्षाणस्तत्र भवान् सूत्रकारोऽप्याह– "तदशिष्यं संज्ञाप्रमाणत्वात्" इति[2] ।

एवमेव प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोः प्रत्ययार्थः प्रधानमित्यपि पूर्वाचार्यवचनं प्रतिक्षिपन् ब्रवीति–"प्रधानप्रत्ययार्थवचनमर्थस्याऽन्यप्रमाणत्वात्" इति[3] ।

उक्तसूत्रयोः प्रमाणशब्दस्य पूर्वोक्तविशेषज्ञानरूपप्रमितिकरणरूपार्थ एवाचार्यतात्पर्यम्, अन्यथा प्रत्याख्यानमसङ्गतं स्यात् ।

व्याख्यातं चात्र तथैव सिद्धान्तकौमुद्यां[4] तत्त्वबोधिन्यां[5] काशिकायां[6] च । तथा हि–

---

1. 'यदि तर्हि लोक एषु प्रमाणम् । म. भा. (१।१।१, पृ. ५५ )
2. पा. सू. १।२।५३ ।
3. पा. सू. १।२।५६ ।
4. 'युक्तवद्वचनं न कर्तव्यम्, संज्ञानां प्रमाणत्वात्, सि. कौ. पूर्वार्द्धे तद्धिते चातुरर्थिकप्रक., पृ. ३०१ ।
5. "तदशिष्यमिति पञ्चालाः, अङ्गा वङ्गाः कलिङ्गा इत्यादयो जनपदस्य यथायथं बहुवचनाद्यन्ता एव संज्ञाः, न त्वत्र यत्नेन लिङ्गसंख्ये प्रतिपादनीये । आपो दारा इत्यादिषु यथा । न हि तत्र शास्त्रेण लिङ्गसंख्ये प्रतिपाद्येते इति भावः" । (तत्त्वबोधिनी, पू. तद्धिते चातुर. प्र., पृ. ३०३)
6. "अन्यो लोकः । शब्दैरर्थाभिधानं स्वाभाविकम्, लोकत एवार्थगतेः" । (काशिका–१।२।५६)

संज्ञाभूतानां 'पञ्चालाः, अङ्गाः, वङ्गाः' इत्यादिबहुवचनान्तानामेव लिङ्गसंख्या-विषयकप्रमाकरणत्वेन लोके प्रसिद्धतया तत्प्रमितये लुपि युक्तवदिति वचनं प्रमाणतया न कार्यम्, अनिर्ज्ञातार्थस्याबोधकत्वात् । एवं चानिर्ज्ञातस्यैवार्थस्य ज्ञानं प्रमेति ध्वनितम् । लिङ्गसंख्ययोरपि बोधकथनेन साकल्येनेत्यंशोऽपि व्यक्तीकृतः ।

तत्र यद्यपि प्रकृष्टा मा प्रमा इति व्युत्पत्तिलभ्ये प्रमालक्षणे, प्रमाकरणं प्रमाणमिति व्युत्पत्तिलभ्ये च प्रमाणलक्षणे न कस्याऽपि कोऽपि विसंवादः, तथाऽपि प्रमापदार्थगते प्रकर्षे विप्रतिपत्तिरस्त्येव । स हि प्रकर्षः करणप्रकर्षाद् वा, विषयप्रकर्षाद् वा, प्रवृत्तिप्रकर्षाद् वा, स्वतो वेति चतुर्धा सम्भवति ।

तत्र करणगतं प्रकर्षं हेतूकृत्य प्रमागतं प्रकर्षमभिप्रयन् वदति भगवान् भाष्यकारः –"प्रमत्तगीत एष तत्रभवतः । यस्त्वप्रमत्तगीतस्तत्प्रमाणम्"[1] इति । अत्र भावक्तान्तः प्रमत्तशब्दः, प्रमाद इत्यर्थः, स च वेदविषयकविप्रतिपत्त्याश्रयत्वम्, तेन गीतः शब्दो न प्रमाणम्, शब्दे आप्तोक्तत्वाभावेन तदुपकरणस्य दुष्टत्वात् । यस्त्वप्रमादेन गीतस्तत्प्रमाणम् । स्पष्टं चैतदत्रैव प्रदीपोद्द्योतयोः[2] ।

विषयगतप्रकर्षप्रयुक्तमपि प्रमागतं प्रकर्षं सूचयति भगवान् भाष्यकारः साकल्ये-नेत्यर्थिकया 'अत्यन्ताय' इत्युक्त्या[3] । अत्र हि साकल्येनेत्यनेन प्रमाया अबाधि-तार्थविषयकत्वलाभः पूर्वमुक्त[4] इति विषयप्रकर्षनिबन्धनोऽबाधितार्थविषयकत्वरूपः प्रमाप्रकर्षो बोध्यः । तथा च स्मृतिव्यावृत्तये लक्षणेऽनिर्ज्ञातेति[5] वदन् भाष्यकारः प्रमायां स्मृतिभिन्नत्वरूपम्, ज्ञानेऽबाधितार्थविषयकत्वमभ्युपयन् संशयविपर्ययादिभिन्नत्वं च स्वतोऽपि (सहजमपि) प्रकर्षं दर्शयति ।

एतत् त्रिविधमपि प्रकर्षं प्रख्यापयन्ति श्रीकुमारिलभट्टपादाः स्वीये प्रमालक्षणे[6] । तथा हि– "अदुष्टकरणजन्यमनुपलब्धाबाधितार्थविषयकं ज्ञानं प्रमा" इति लक्षण-

---

1. म. भा. १।१।१, पृ. २८ ।
2. तदेव ।
3. "उप समीपे यन्नात्यन्ताय मिमीते तदुपमानम्" । (म. भा. २।१।३।३५, पृ. १२६ )
4. अत्रैव निबन्धे महाभाष्यसम्मतप्रमाणसामान्यलक्षणनिरूपणावसरे, पृ. २ ।
5. म. भा. २।१।५५, पृ. १२६ ।
6. औत्पत्तिकगिरा दोषः कारणस्य निवार्यते ।
   अबाधो व्यतिरेकेण स्वतस्तेन प्रमाणता ॥
   सर्वस्यानुपलब्धेऽर्थे प्रामाण्यं स्मृतिरन्यथा ॥ (श्लो. वा., औत्प., श्लो. १०-११)

करणे दुष्टत्वकथनेन करणप्रकर्षः, अर्थे चाबाधितत्वकथनेन अर्थप्रकर्षश्चेत्युभय-प्रयुक्त उभयविधः प्रकर्षः, अनुपलब्धेत्यनेन स्मृत्यन्यत्वरूपः, अबाधितार्थेत्यादिना संशयादिभिन्नत्वं च सहजः प्रकर्षः सूचितः प्रमायाम् ।

द्विविधं चैनं सूचयन्ति श्रीवाचस्पतिमिश्रा न्यायभाष्यव्याख्यायां[1] तात्पर्य-टीकायाम्[2] । तत्र हि प्रमालक्षणे उपलब्धिमात्रस्यार्थाव्यभिचारित्वं स्मृत्यन्यत्वं चेति विशेषणद्वयमुपात्तम् । अत्रार्थाव्यभिचारित्वमबाधितार्थविषयकत्वमिति अबाधितत्व-रूपोऽर्थप्रकर्षस्तन्मूलकः, द्वितीयविशेषणेन स्मृतिभेदाख्यः सहजश्च प्रकर्षः सङ्केतितः ।

"अदुष्टं विद्या"[3] इति सूत्रयन् भगवान् कणादः करणोत्कर्षेण तत्रोत्कर्षं ज्ञापयति ।

करणे इन्द्रियादौ दोषराहित्यं प्राशस्त्यम्, तादृशकरणजन्यत्वं प्रमारूपायां विद्यायां प्रकृष्टत्वमिति तदभिप्रायः[4] ।

"असन्दिग्धाविपरीताऽनधिगतविषयकचित्तवृत्तिः प्रमा" इति सांख्योक्ते लक्षणे[5] तु विषयनिष्ठासन्दिग्धाविपरीतत्वलक्षणोत्कर्षमूलकः असन्दिग्धेत्यादिना संशयविपर्यय-स्मृतिभेदात्मा स्वाभाविकश्चोत्कर्षः सूच्यते ।

अद्वैतवेदान्तनये "अनधिगताबाधितार्थविषयकं ज्ञानं प्रमा" इति लक्षणे[6] स्मृत्यन्यत्वं सहजं प्राशस्त्यमस्ति प्रमायाम् । अबाधितार्थविषयकं ज्ञानमिति स्मृतिसाधारणे द्वितीये लक्षणे [7]तु तन्नास्ति, अन्यांशे द्वयोः साम्यमेव ।

जैनाचार्येण श्रीमताऽकलङ्केन अविसंवादित्वानधिगतत्वेति विशेषणद्वययुतं तल्लक्षणं[8] समादृतम् ।

---

1. "उपलब्धिसाधनानि प्रमाणानि--इति समाख्यानिर्वचनसामर्थ्याद् बोद्धव्यं प्रमीयतेऽनेनेति करणार्थाभिधानशब्दो हि प्रमाणशब्दः" । (न्या. भा. १।१।३)
2. "उपलब्धिमात्रस्य अर्थाव्यभिचारिणः स्मृतेरन्यस्य प्रमाशब्देनाभिधानात्" । (तात्पर्यटीका, पृ. २१)
3. कणादसूत्रम्--९ अ., २ पा., १२ सू. ।
4. तत्रैव--द्र. उपस्कारभाष्यम् ।
5. सा. त. कौ., कारि. ४, पृ. ५१ ।
6. वे. प. (शि. म. म. प्र. टीकाद्वययुता) प्र. परि., पृ. १६ ।
7. तत्रैव ।
8. 'प्रमाणमविसंवादिज्ञानम्, अनधिगताधिगमलक्षणत्वात्" । (अष्टशती, पृ. १७५)

तत्राविसंवादित्वं च विसंवादिप्रवृत्तिजनकत्वाभावरूपम् । एतच्च लाघवात् संवादिप्रवृत्तिजनकत्वे पर्यवस्यति । अतश्च प्रवृत्तिप्रकर्षेणात्र प्रमाप्रकर्षोऽन्यांशे स्फुट एव ।

एवमेव प्रमाणवार्त्तिके[1] बौद्धाचार्यश्रीधर्मकीर्तिकृतलक्षणेऽपि अविसंवादित्वविशेषणेनायं प्रवृत्तिप्रकर्षः सूचितोऽस्ति ।

यथार्थानुभवः प्रमेति लक्षणे[2] तु यथार्थमनुभव इति अव्ययीभावगर्भस्तत्पुरुषः, तत्रानुभवेऽर्थानतिक्रमस्तद्वति तत्प्रकारकत्वरूपः, स च सहजः प्रकर्षोऽनुभवे वेदितव्यः । यथार्थोऽनुभव इति विग्रहेऽपि[3] इयं स्थितिः । अस्मिन् विग्रहे यथाभूतोऽर्थो यस्येति बहुव्रीहिरभ्युपेयः, यथाभूतोऽर्थ इति कर्मधारये तु अनुभवे भेदाऽन्वयानुपपत्तिः । यथाभूत इत्यस्य सत्यभूत इत्यर्थः ।

स चाबाधितत्वे पर्यवस्यति, विषयांशे बाधितत्वविशेषणघटितेषु सर्वेषु शाब्दिकादिसम्मतेषु लक्षणेषु अयं सहजः प्रकर्षस्तिष्ठत्येव । न हि कस्यचिदपि मते बाधितविषयके ज्ञाने प्रमेति व्यवहारः ।

अनुभूतिः प्रमेति गुरुमते स्मृतिभिन्नत्वमात्रं स्वतः प्रकर्ष एक एव । इदं रजतमिति बाधितस्थले इदमंशे प्रत्यक्षम्, रजतांशे स्मरणमिति ज्ञानद्वयमेव । विषययोर्ज्ञानयोश्चात्र भेदाग्रहेण प्रवृत्तिः । अयमेवाख्यातिवादः । एवं चैतन्मते बाधितार्थज्ञानस्थलमेव नास्ति, सर्वस्यैव ज्ञानस्य यथार्थत्वमिति स्वीकारात् ।

## धारावाहिकज्ञाने पूर्वोक्तस्य प्रमालक्षणस्याव्याप्तिनिरासः

ननु घटोऽयं घटोऽयमित्येकाकारमविच्छिन्नं जायमानंप्रत्यक्षात्मकं ज्ञानं धारावाहिकमित्युच्यते, तत्र द्वितायतृतीयचतुर्थादिक्षणेषु निर्ज्ञातविषयकमेव तज्ज्ञानमिति कथं तत्र प्रमात्वमिति चेत्, उच्यते–एकस्या एव स्थिराया वृत्तेस्तत्राभ्युपगमेन तेजोरूपस्य चक्षुरिन्द्रियस्य प्रतिक्षणं भिन्नस्य भिन्नस्योत्पादेन वा तत्र प्रामाण्यनिर्वाहः । स्पष्टं

---

1. "प्रमाणमविसँव्वादिज्ञानार्थक्रियास्थितिः, अविसँव्वादनं शाब्देऽप्यभिप्रायनिवेदनात्" । (प्र. वा. २।१)

2. तर्कसंग्रहः – प्र. परि. ।

3. "यथार्थोत्थानुभवः प्रमेति प्रामाणिकाः पश्यन्ति" । (न्या. कुमु. ४।१)

चैतत् "अपादाने पञ्चमी" इति सूत्रे भाष्यप्रदीपोद्द्योतेषु[1] । यथाऽत्यन्तरागवतः कामिनीसाक्षात्कारस्थले ज्ञानधाराकल्पने गौरवादेकत्वम्, तज्ज्ञानानामप्येतद्विषये स्थिरत्वमिति सोपपत्ति परिहरति उक्तां शङ्कां श्रीनागेशभट्टो लघुमञ्जूषायाम्[2] । तट्टीकासु[3] कलाकुञ्जिकादिषु स्वविरोधिज्ञानोत्पत्तिपर्यन्तमेकमेव ज्ञानं तत्रेति रीत्या वृत्तिस्थिरत्वसिद्धान्तो दृढीकृतः ।

**अद्वैतवेदान्तस्याऽप्यत्रैव सम्मतिः**

अद्वैतसिद्धान्तेऽपि धारावाहिकज्ञानस्थले न ज्ञानानन्त्यम्, किन्तु यावद् घट-स्फुरणं तावद् घटाकारा वृत्तिरेकैव न तु नाना, वृत्तेः स्वविरोधिवृत्त्युत्पत्तिपर्यन्तं स्थायित्वाऽभ्युपगमात्[4] ।

अनुमितौ शाब्दादौ वा नैतादृशबुद्धिसम्भवः, सामग्रीविरहात् । अनुमित्सया द्वितीयानुमितिसम्भवेऽपि तत्कालेऽधिकक्षणव्यवधानेन प्रथमानुमितेर्नष्टतया द्वितीय-स्याधिगतार्थविषयकत्वाभावाच्च[5] ।

**पूर्वमीमांसासिद्धान्ते उक्तस्थलेऽव्याप्तिनिरासः**

पूर्वमीमांसासिद्धान्ते तु एतत्स्थले अगृहीतस्य क्षणविशेषस्य प्राकट्यस्य वा ग्रहणेन प्रमात्वं निर्वहति । ननु सन्नपि क्षणविशेषोऽतिसूक्ष्मत्वान्न परामृष्टुं शक्य इति चेत्, अहो सूक्ष्मदर्शी भवान्, यो हि समानविषयया विज्ञानधारया सह चिरमव-

---

1. "तत्तर्हि इदं बहु वक्तव्यम्? न वक्तव्यम्, अपादान इत्येव सिद्धम् । इह तावत् प्रासादात् प्रेक्षते शयनात् प्रेक्षत इति । अपक्रामति तत्तस्माद् दर्शनम् । यद्यपक्रामति, किं नात्यन्तायापक्रामति? सन्ततत्वात् । अथवा अन्यान्यप्रादुर्भावात्, अन्या चान्या च प्रादुर्भवति" (म.भा.२अ., ३पा., २८ सू., २९१ पृ. ) । अत्र प्रदीपः - "क्षणिकपक्षाऽवष्टम्भेन भेदमाश्रित्याह–अथवा अन्यान्यप्रादुर्भावादिति । अन्यस्यान्यस्य तेजोरूपस्येन्द्रियस्योत्पादादि-त्यर्थः" इति । अत्रोद्द्योतः –"भाष्ये अन्या चान्या चेति दर्शनक्रियेत्यर्थः । अपक्रामति तस्माद् दर्शनमिति दर्शनपदेन वृत्तिरेवाभिमता । कैयटोक्तव्याख्याने तु चक्षुर्व्यक्तिरिति विशेष्यं बोध्यम् । वृत्तिपरत्वेन व्याख्याने चिरं ज्ञानानुभवानापत्तिरिति पूर्वपक्षः, तावत्कालं स्थिरत्वेनायमुत्तरम्, द्वितीयं तु स्पष्टमेवेति ध्येयम्" इति ।
2. ल. म., पृ. १८० । टी. र. प्र., पृ. १८१ ।
3. वै. सि. ल. म., शक्त्याश्रयनिरू., टीकाद्वययु., पृ. २१६ ।
4. वे. प. (शि. म., म. प्र. युता), पृ. २२-२३ ।
5. वे. प. (शि. म., म. प्र. युता), पृ. २१-२२ ।

स्थाय उपरतः, वृत्त्युपहितश्चिदात्मा सोऽनन्तरक्षणसम्बन्धितयाऽर्थं स्मरति । तथा हि किमत्र घटोऽवस्थित इति पृष्टः कथयति 'अस्मिन् क्षणे मयोपलब्धः' इति तथा प्रातरारभ्यैतावत्कालं मयोपलब्ध इति । कालभेदे त्वगृहीते कथमेवं वदेत्[1] ?

**प्राभाकरसम्मतोऽव्याप्तिनिरासः**

प्राभाकरसिद्धान्ते तु कालविशेषभानमन्तरैव अनुभूतिमात्रत एव तत्र प्रमात्व-निर्वाहः । तथा हि यया सामग्र्या धारावाहिकस्थले पूर्वज्ञानमुत्पद्यते, तथैव उत्तरोत्तराण्यपि इति सर्वाणि सर्वांशे तुल्यानि । यदि पूर्वस्यानुभवत्वमात्रेण समस्ति प्रमात्वम्, तर्हि उत्तरेषां तत्त्वं को निवारयेत्[2] ?

**न्यायनये शङ्काऽभावः**

"तद्वति तत्प्रकारकोऽनुभवः प्रमा"[3] इति वदतां तार्किकाणां मते तु अनि-र्ज्ञातत्वस्य लक्षणेऽप्रवेशादियं शङ्कैव नोपसरति ।

**अत्र जैनाचार्याभिप्रायः**

जैनाचार्याणां मध्ये ईदृशस्थले केचन प्रामाण्यमभ्युपगच्छन्ति, तत्र क्षणविशेष-भानं भवति । यदा तु न भानम्, तदा तु प्रामाण्यमपि न[4] ।

बहवस्तु स्मृताविव धारावाहिकेऽपि निश्शङ्कं प्रामाण्यमामनन्ति । अत एव लक्षणेऽनधिगतपदं तदर्थकमन्यद्वा पदं न निवेशयन्ति[5] ।

---

1. शास्त्रदीपिका प्र. पा., १२४-१२६ ।
2. प्रकरण-प., पृ. ४२-४३; बृहती, पृ. १०३ ।
3. तर्कसंग्रहः -प्रत्यक्ष-परि. ।
4. गृहीतमगृहीतं वा स्वार्थं यदि व्यवस्यति ।
   तन्न लोके न शास्त्रेषु विजहाति प्रमाणताम् ॥
   (तत्त्वार्थश्लो. वा. १।१३।१५)
   गृहीतग्रहणात्तत्र न स्मृतेश्चेत्प्रमाणता ।
   धारावाह्यक्ष विज्ञानस्यैवं लभ्येत केन सा ॥
   (तत्त्वार्थश्लो. वा. १।१३।१५)
5. "सम्यगर्थनिर्णयः प्रमाणम्" प्र. मी., पृ. २ ।
   "अन्ये तु अनधिगतार्थगन्तृत्वेन प्रमाणलक्षणमभिदधति, ते त्वयुक्तवादिनो द्रष्टव्याः । कथमयुक्तवादिता तेषामिति चेत्, उच्यते–विभिन्नकारकोत्पादितैकार्थविज्ञानानां यथा व्यव-स्थितैकार्थगृहीतिरूपत्वाऽविशेषेऽपि पूर्वोत्पन्नविज्ञानस्य प्रामाण्यम्, नोत्तरत्र इत्यत्र नियामकं

## अत्र बौद्धाचार्यतात्पर्यम्

अनधिगतत्वेति विशेषणं विषये निवेशयतां बौद्धाचार्याणां नये तु विकल्पे स्मृतौ च यथा प्रमात्वं नास्ति, तथैवात्राऽपि तन्नेष्यत एव[1]। केश्चित्तु योगिप्रत्यक्षे सूक्ष्म-कालकलाया भानं मत्वा तत्र प्रामाण्यमभ्युपेयते । अयोगिप्रत्यक्षे तु तदभानेना-प्रामाण्यमेवोरीक्रियते[2] ।

## अनिर्ज्ञातपदस्य कृत्यम्

एवमव्याप्तिनिरासं विमृश्य अतिव्याप्तिं निरसितुं लक्षणे पदानां व्यावर्त्यानि विमृश्यन्ते । पूर्वं तावदनिर्ज्ञातपदं स्मृतावतिप्रसक्तिः प्रमालक्षणस्य मा भूदित्यर्थकं बोध्यम् । ननु स्मृतेरपि संवादिप्रवृत्तिजनकतया प्रमात्वमिष्टमेवेति कुतस्तद् व्यावृत्तिरिति चेत्, तन्न सूक्ष्मेक्षिकागोचरीकृतम् । प्रवृत्त्यङ्गप्रामाण्यस्येहाऽ-निरूपणीयत्वात्, व्यावृत्तिव्यवहारान्यतरप्रयोजनेनेह प्रमात्वस्य निरूपणीयत्वात् । अनिर्ज्ञातेत्यंशं स्वीकुर्वतो मुनित्रयस्येदृशतात्पर्यकल्पनात् । उक्तं चैतद् वेदान्त-परिभाषाटीकायां शिखामणौ[3] ।

## स्मृतेरप्रमात्वे मञ्जरीकारमतम्

श्रीजयन्तभट्टा अपि अनर्थजन्यत्वेन स्मृतेः प्रमात्वं वारयन्ति, निर्दग्धपित्रादि-विषयकमनपेक्षितार्थमेव जायमानं दृष्टमित्यन्यत्र देशान्तरस्थितार्थस्मरणे तदर्थसत्त्व-मकारणमेवेति रीत्योपपादयन्ति"[4] ।

---

वक्तव्यम् । अथ यथाऽवस्थितार्थगृहीतिरूपत्वाविशेषेऽपि पूर्वोत्पन्नविज्ञानस्य प्रामाण्यमुपप-द्यते, न प्रथमोत्तरविज्ञानस्य । तदा अनेनैव न्यायेन प्रथमस्याप्यप्रामाण्यं प्रसक्तम्, गृहीतार्थ-ग्राहित्वाविशेषात्" । तत्त्वो. लि., पृ. ३० ।

1. "यद्गृहीतग्राहिज्ञानं न तत्प्रमाणम्, यथा स्मृतिः । गृहीतग्राही च प्रत्यक्षपृष्ठभावी विकल्प इति व्यापकविरुद्धोपलब्धिः" । तत्त्वसं.-प. का. १२९८ ।
2. "यदैकस्मिन्नेव नीलादिवस्तुनि धारावाहीनीन्द्रियज्ञानान्युत्पद्यन्ते, तदा पूर्वेणाभिन्नयोगक्षेमत्वा-दुत्तरेषामिन्द्रियज्ञानानामप्रामाण्यप्रसङ्गः । न चैवम्, अतोऽनेकान्त इति प्रमाणसम्प्लववादी दर्शयन्नाह—पूर्वप्रत्यक्षक्षणेनेत्यादि । एतत्परिहरति--तद् यदि प्रतिक्षणं क्षणिकविवेकदर्शिनोऽ-धिकृत्योच्यते, तदा भिन्नोपयोगितया पृथक्प्रामाण्यान्नानेकान्तः । अथ सर्वपदार्थेष्वेकत्वा-ध्यवसायिनः सांव्यवहारिकान् पुरुषान् अभिप्रेत्योच्यते, तदा सकलमेव नीलसन्तानमेकमर्थं स्थिररूपं तत्साध्यां चार्थक्रियामेकात्मिकामध्यवस्यन्ति इति प्रामाण्यमप्युत्तरेषामनिष्टमेवेति कुतोऽनेकान्तः?" हेतु. टी. लि., पृ. ३९ बी-४१ ।
3. वे. प. (शि. म. टीका) पृ. १६ ।
4. न्या. म.–प्रमाणप्रकरणम्, पृ. २१ ।

**उक्तविषये श्रीमदुदयनमतम्**

श्रीमन्त उदयनाचार्यास्तु यथार्थज्ञानत्वात् प्रत्यक्षाद्यनुभूतिवत् स्मृतेः प्रमात्वं सन्दिह्य सिद्धे व्यवहारे निमित्तानुसरणम्, न तु स्वेच्छया कल्पितेन निमित्तेन लोकव्यवहारनियमनम्, अव्यवस्थया लोकव्यवहारविप्लवप्रसङ्गात् । न च स्मृतिहेतौ प्रमाणाभियुक्तानां महर्षीणां प्रमाणव्यवहारोऽस्ति, पृथगनुपदेशादिति समादधुः[1] ।

**अद्वैतवेदान्तनये स्मृतेरपि प्रमात्वम्**

अद्वैतनये प्रवृत्त्यङ्गतया स्मृतिसाधारणमपि प्रमालक्षणमुक्तमिति यथार्थस्मृतेरपि पक्षे प्रमात्वं तन्मते इष्यते[2]।

**जैनदर्शनेऽपि स्मृतेः प्रामाण्यम्**

श्रीहेमचन्द्रादिजैनाचार्यैरपि ग्रहीष्यमाणग्राहिणः प्रामाण्यमिव गृहीतग्राहिणः स्मरणस्यापि तत्त्वमभ्युपेयते[3] । हानोपादानोपेक्षाबुद्धय एव हि प्रमाप्रयोजनम्, ततश्च संवादिनी प्रवृत्तिरपि भवन्ती अनुभूयत एव ।

**अत्र निष्कर्षः**

शाब्दिकैस्तु न चेष्यते स्मृतेः प्रमात्वम्, पिष्टपेषणवत् प्रयोजनाभावात् । प्रवृत्त्यङ्गतया प्रमालक्षणमिह न निरूप्यत इत्यस्यानुपदमुक्तत्वाच्च ।

**अनिर्ज्ञातपदे निरित्युपसर्गार्थविमर्शः**

अत्र लक्षणेऽज्ञातार्थेत्यनुक्त्वा अनिर्ज्ञातार्थेतिं कथनम्, निरित्युपसर्गस्य नैरन्तर्य्यमर्थं[4] विवक्षितुम् । ततश्चाऽव्यवधानं लभ्यते, अन्तरशब्दस्य व्यवहितार्थकत्वात्[5] ।

---

1. न्या. कु. टी. उदयनाचार्यकृता--४।१।
2. "स्मृतिसाधारणं त्वबाधितार्थविषयकज्ञानत्वम्" । (वे. प., टीका-द्वयोपेता, प्र. परि., पृ. १६) "स्मृतावपि यदि प्रामाण्यव्यवहारः, तदा तत्साधारणं लक्षणमाह स्मृतीति" । (वे. प., शि. म., पृ. १७,प्र. परि.)
3. "ग्रहीष्यमाणग्राहिण इव गृहीतग्राहिणोऽपि नाप्रामाण्यम् । स्मृतेश्च प्रमाणत्वेनाऽभ्युपगताया गृहीतग्राहित्वमेव सतत्त्वम्" । (प्र. मी. ४।५)
4. "निर्दिष्टग्रहणमिति निश्शब्दश्च नैरन्तर्ये वर्तते, दिशिरुच्चारणक्रियः" । (म. भा. प्र. १।१।६५, पृ. ५१० )
5. "अव्यवहितेऽपि अनन्तरशब्दो वर्तते, तद्यथा अनन्तराविमौ ग्रामौ इत्युच्यते" । (म. भा. १।१।७)

क्तप्रत्ययार्थः कर्म[1] भूतकालश्च[2] । कर्मता चात्र विषयताविशेषरूपा । तस्या अन्वयश्च नञर्थाभावे । उपसर्गार्थस्य क्तार्थकालस्य[3] च धात्वर्थे ज्ञानेऽन्वयः । एवं चाव्यवहितपूर्वकालवृत्ति यज्ज्ञानं तद्विषयत्वाभाववान् अर्थोऽनिर्ज्ञातार्थ इत्यायाति । अतश्च यत्र पूर्वक्षणे घटः प्रत्यक्षीकृतः, तदुत्तरक्षणे पटप्रत्यक्षोपक्रमे घटप्रत्यक्षं नष्टम् । पुनश्च घटेन सह चक्षुःसंयोगे सति तृतीयादिक्षणेषु जायमाने घटप्रत्यक्षे न अव्याप्तिः शङ्काविषयतामधिरोहति, अव्यवहितपूर्वक्षणे घटप्रत्यक्षस्याभावात् । व्यवहितेषु क्षणेषु तत्प्रत्यक्षादिकं भवति, तर्हि भवतु नाम का हानिः?

अत्राऽव्यवहितपूर्वक्षणवृत्ति यज्ज्ञानं तत् स्वजन्योद्बुद्धसंस्कारस्याऽप्युपलक्षणमिति अव्यवहितपूर्वक्षणे यज्ज्ञानं संस्कारो वा तदविषयोऽर्थो ग्राह्यः, तेन स्मृतौ नातिप्रसङ्गः, तादृशक्षणे स्वसमानविषयकसंस्कारेण तदर्थस्य विषयीकृतत्वात् । न्यूनविषयकसंस्कारेणाऽपि स्मृतिर्भवतीति स्वसमानविषयकत्वं स्वाऽन्यूनविषयकत्वरूपं बोध्यम् ।

अनिर्ज्ञात इत्यनेन प्रत्यासत्त्या स्वेनाऽनिर्ज्ञात एवार्थो गृह्यत इति परेण निर्ज्ञातेऽर्थे तदन्यस्यानुभवो नाऽप्रमा । इदं निगूढं तत्त्वं मनसिकृत्य निरित्युपसर्गपूर्वकं ज्ञाधातुं प्रयुक्तवांस्तत्र भगवान् पतञ्जलिः ।

### उक्तलक्षणे साकल्येनेति पदस्य कृत्यम्

साकल्येनेति पदेन संशयविपर्ययादीनां निरासो बोध्यः, तथा हि प्रत्यासत्त्या निर्ज्ञातार्थगतावयवगुणक्रियादिवत् तद्गतप्रवृत्तिनिमित्तरूपजात्यादिधर्मस्यापि तत्र भानायैव साकल्येनेत्युपात्तमिति तेनैव रूपेण प्रतिभासमानोऽर्थः प्रमाविषयः (प्रमितः) इत्युच्यते ।

न तेन तद्विरुद्धेन च रूपेण, नाऽपि तदवृत्तिना रूपेणेति संशयविपर्ययादीनां निराकरणं सम्पन्नम् ।

### संशयस्य लक्षणं तद्भेदाश्च

यद्यपि संशयस्य लक्षणं शब्दशास्त्राचार्यैर्न स्वातन्त्र्येण क्वचिदपि उक्तम्, तथाऽपि संशयमापन्न इति सूत्रयत[4] आचार्यस्य तत् सम्मतमेवेति लोकप्रसिद्धे तल्लक्षण एव

---

1. "तयोरेव कृत्यक्तखलर्थाः" । (पा. सू. ३ । ४।७०)
2. "भूते" । (पा. सू. ३।२।८४)
3. "कालस्तु धात्वर्थे व्यापारे विशेषणम्" । (वै.भू. सा., कारि. २ )
4. पा. सू. ५।१।७३।

तात्पर्यमनुमीयते । तच्च लक्षणम् एकधर्मिकविरुद्धनानाधर्मविशिष्टज्ञानत्वमिति[1], वैशिष्ट्यञ्च विषयितासम्बन्धेन । यथा स्थाणुर्वा पुरुषो वाऽयमिति ।

अयं संशयस्त्रिविधः – साधारणधर्मज्ञानजन्यः, असाधारणधर्मज्ञानजन्यः, विप्रतिपत्तिवाक्यजन्यश्च । तत्राद्यो यथा पूर्वोक्तस्थले स्थाणुपुरुषसाधारणमुच्चैस्तरत्वमवगत्य अयं स्थाणुर्वा पुरुषो वेति संशयो जायते ।

द्वितीयो यथा यो नित्यत्वेन निश्चितः, अनित्यत्वेन च यो निश्चितः,ताभ्यां व्यावृत्तं शब्दत्वमिति निश्चित्य शब्दो नित्यो न वेति संशयः ।

तृतीयस्तु पर्वतो वह्निमान् न वेत्यादिवाक्यजन्यः संशयः । वस्तुतस्तु शब्दस्य निश्चयमात्रजनकत्वं स्वभाव इति शब्देन कोटिद्वयज्ञानं जन्यते, संशयस्तु मानस एव । स्पष्टं चैतत्सर्वं न्यायदर्शने[2] ।

**साधारणधर्मधीजन्यः संशयः**

अत्राद्यस्तु संशयो महाभाष्ये लण् सूत्रे पूर्वेण वा स्युः परेण वेति वाक्येन प्रदर्शितः । अस्य संशयस्याकारस्तु ढ्रलोपे पूर्वस्येति सूत्रीयोऽणप्रत्याहारः प्रत्यासत्तिन्यायेन पूर्वणकारघटितः, आहोस्विद् व्याप्तिन्यायेन परणकारघटित इति । अत्राण्प्रत्याहारो धर्मी, तत्र पूर्वणकारघटितत्वपरणकारघटितत्वरूपनानाधर्मप्रकारकः संशयः । णकारघटितत्वमुभयसाधारणं धर्मं ज्ञात्वाऽयं सन्देहः कृतः प्रत्यासत्तिव्याप्तिन्यायौ सहकारिणावित्यन्यत्[3]। अयं संशयो विरुद्धभावद्वयकोटिक एव बोध्यः ।

**विरुद्धभावद्वयकोटिकोऽपि संशयो भाष्यसम्मतः**

यद्यपि एकधर्मिकविरुद्धभावाभावप्रकारकं ज्ञानं संशय इत्यादिरूपेण संशयलक्षणं सिद्धान्तयद्भिः[4] न्यायविद्याविशारदैस्तु विरुद्धभावद्वयकोटिकः संशयो नाऽभ्युपगम्यते, स्थाणुर्वा पुरुषो वाऽयमित्यत्राऽपि स्थाणुत्वतदभावपुरुषत्व-तदभावेति विरुद्ध-

---

1. त.सं., पृ. ८३ ।
2. न्या. सि. मु., द्वि.रा., गुणनिरू., कारि. १३०, पृ. ४४१-४४२ ।
3. "अयं णकारो द्विरनुबध्यते पूर्वश्चैव परश्च । तत्राण्ग्रहणेषु इण्ग्रहणेषु च सन्देहो भवति, पूर्वेण वा स्युः परेण वेति" । (म. भा. अ. १ आ. २, लण्--सूत्रे) अत्र प्रदीपः – 'लण् । सन्देहो भवतीति । किं प्रत्यासत्तिराश्रीयतेऽथ व्याप्तिरिति सन्देहः ।
4. न्या. सि. मु., टीकाद्वयवती, कारि. १३०, पृ. ४४१ ।

भावाभावद्वयेन द्विर्घटितश्चतुष्कोटिक एव संशयोऽङ्गीक्रियते,तथापि पूर्वेण वा परेण वेति संशयस्वरूपप्रदर्शनेन विरुद्धभावद्वयकोटिकोऽपि संशयः सम्मन्यते महर्षिणा । अत्र चतुष्कोटिकोऽपि फलितः सम्भवति ।

विरोधः सहानवस्थानरूपोऽत्र लक्षणे बोध्यः स च पूर्वत्वपरत्वयोरस्त्येव ।

**अन्यविधोऽपि संशयो भाष्यसम्मतः**

असाधारणधर्मदर्शनजोऽन्यविधोऽपि संशयो महाभाष्ये उपस्थापितः – किं पुनर्नित्यः शब्दः, आहोस्वित् कार्य इत्येवंरूपेण[1] शब्दत्वस्य नित्यानित्यव्यावृत्तत्वज्ञानेन शब्दासाधारणधर्मत्वज्ञानात् ।

प्रदीपकृद्भिस्तु विप्रतिपत्त्याऽयं संशय इति प्रादर्शि[2] । एवं चासाधारणधर्मदर्शनादयं संशयो यदि, तदा प्रत्यक्षाभास इत्युच्यते । यदा तु विप्रतिपत्तिवाक्येन जायते, तदा शाब्दबोधरूपस्तृतीयोऽयमित्युच्यते । शाब्दिकनये शाब्दबोधस्याऽपि संशयभ्रमरूपतयाऽङ्गीकारात्[3] । अत एव वह्निना सिञ्चतीत्यादौ भ्रमात्मकः शाब्दबोधोऽभ्युपगम्यत एव । निरूपयिष्यते चेदं शब्दप्रमाणसमीक्षायामत्र निबन्ध एव ।

न्यायनये तु शब्दस्य निश्चयमात्रजनकत्वमङ्गीकृतमिति तृतीयसंशयस्य मानसत्वमुक्तं तत्र[4]। रत्नकोशकृन्मतं[5] हित्वाऽन्यत्र संशयस्य प्रत्यक्ष एवाऽन्तर्भावात् ।

**महाभाष्ये तृतीयः संशयः**

अयं तृतीयः संशयोऽन्यत्रापि दर्शितो भाष्ये, यथा–तदेतदत्यन्तं सन्दिग्धं वर्तते आचार्याणां विभाषाऽनुवर्तते न वा इत्यादौ । अत्र विभाषारूपे धर्मिणि अनुवृत्तिकर्तृत्वतदभावरूपधर्मयोः संशयः शाब्दः, विप्रतिपत्तिवाक्यजनितत्वात् । एकेनाचार्येण

---

1. म. भा., १ अ., १ पा., १ आ., पृ. ४६ ।
2. किम्पुनरिति विप्रतिपत्त्याऽयं संशयः । केचिद् ध्वनिव्यङ्ग्यं वर्णात्मकं नित्यं शब्दमाहुः । अन्ये वर्णव्यतिरिक्तं पदस्फोटमिच्छन्ति, वाक्यस्फोटमपरे सङ्गिरन्ते । अन्ये तु ध्वनिरेव शब्दः, स च कार्यस्तद्व्यतिरेकेणान्यस्यानुपलम्भादित्याचक्षते ।
3. परिभाषेन्दु. भूतितिलके तत्त्वप्रकाशिकायुते,परि.१,पृ. ५ ।
4. न्या. सि. मु., गुणनिरू., टीकाद्वययुता,कारि. १३०, पृ. ४४२ ।
5. सत्प्रतिपक्षगादाधरी, र. को. का. मतम्, पृ. ६२ ।

अनुवर्तते विभाषा, इत्येतत्साधकं ज्ञापकवाक्यमुच्यते, अपरेण नैतदस्ति ज्ञापक-मित्यादिना तन्निरुध्यत इति अन्यस्य सन्देहोऽर्थादापन्नो भवति[1] ।

## विरुद्धकोटित्रितयोऽपि संशयो महाभाष्ये

भाष्यकृद्भिस्तु विरुद्धकोटित्रयकोऽपि संशयः समादृतो "न वेति विभाषा" इत्यस्य व्याख्याने "अप्राप्ते त्रिसंशयाः' इति कथनेन । अत्र त्रयः संशया इति न कर्मधारयः, "दिक्संख्ये संज्ञायाम्" इति नियमात्; अपि तु त्रिषु संशयो यासु ता इति व्यधिकरणबहुव्रीहिरिति कोटित्रितयविषयकत्वं सुस्पष्टमायाति[2]।

अत एव लक्षणे धर्मविशेषणताप्रयोजकं नानापदमुपात्तम्, न तु उभयपदम् । अनुसृतश्चायं पन्थाः श्रीमदन्नम्भट्टेन[3] ।

श्रीनागेशभट्टेनाऽपि उद्द्योते विरुद्धाऽनेककोटिविषयकज्ञानस्यैव संशय-त्वमुक्तम्[4] ।

परिभाषेन्दुशेखरेऽपि 'व्याख्यानतो विशेष'० इति परिभाषायाम् अन्यत-राद्यर्थरूपस्येत्यत्रादिपदकथनेनापि तदेव सूचितम्[5] ।

## एतादृशसंशये जैनदर्शनसम्मतिः

हेमचन्द्राचार्येण "अनुभयत्रोभयकोटिस्पर्शी प्रत्ययः संशयः" इति सूत्रितम्, तद् व्याख्यानभूते टिप्पणे उभयेत्यस्योपलक्षणत्वमुक्त्वा त्र्यादिकोटिस्पर्शी अपि संशयो गृहीतः[6] ।

किञ्च, सर्वात्मना शेते इवात्माऽन्तःकरणं वा यस्मिन् ज्ञाने सति तज्ज्ञानं संशय

---

1. म. भा. १ अ. । १ पा. । २ आ. । ५ सू. । पृ. १४७ ।
2. "इत उत्तरं' या विभाषा अनुक्रमिष्यामोऽप्राप्ते ता द्रष्टव्याः प्राप्ते अप्राप्ते उभयत्र वेति" । (म. भा., १ अ. । १ पा. । ६ आ. । ४३ सू.) अत्र प्रदीपश्च—"त्रिसंशय इति--त्रिषु संशयो यासु तास्त्रिसंशयाः" इति ।
3. "--एकस्मिन् धर्मिणि विरुद्धनानाधर्मं वैशिष्ट्यज्ञानं संशयः" । तर्कसं०—दीपिकानीलकण्ठी-भास्करोदययुते प्रमाणखण्डे, पृ. १७५ ।
4. म. भा.उ.–१ अ. । ३ पा. । १ आ. । ९ सू. । १९४ पृ. ।
5. परिभाषेन्दु. १, परिभाषा ५ (विशेषस्यान्यतराद्यर्थरूपस्य) । अत्र भूतिः – "अन्यतरादीति आदिपदमन्यतमपरिग्रहाय" ।
6. "उभयेत्युपलक्षणम्, आत्र्यादिकोटिसंस्पर्शेऽपि संशयस्य सद्भावात्" (प्र. मी., टि., पृ.५ )

इत्युच्यते[1], यथा अन्धकारे दूरादूर्ध्वाकारवस्तूपलम्भात् साधकबाधकप्रमाणाभावे सति स्थाणुर्वा पुरुषो वायमिति ज्ञानम् । एषा व्युत्पत्तिरपि तादृशे संशये अनुकूला वर्तते।

**प्रमेयकमलमार्तण्डेऽपि भावद्वयकोटिकः संशयः**

प्रमेयकमलमार्तण्डे जैनदर्शनग्रन्थेऽपि विरुद्धाभावद्वयकोटिकः संशयः प्रदर्शितः, सोपपत्ति संशयस्वरूपमपि साधितम् । तत्र हि सर्वप्राणिनां चलितप्रतिपत्तिरूपः संशयः स्वात्मसंवेद्यः । प्रत्यक्षसिद्धस्याऽप्यपलापे सुखादेरप्यपलापः प्रसज्येत सर्वानुभवविरुद्ध इत्याद्यर्थकमुक्तम्[2] ।

**विपर्ययव्यावृत्तिविमर्शः**

संशयवद् भ्रमोऽपि प्रमालक्षणतः प्रतिक्षिप्यते, सकलार्थाविषयकत्वात्, तदभाववति, तत्प्रकारकज्ञानस्य भ्रमत्वात्[3]। यथा पित्तोद्रेकाद् मधुरपदार्थे तिक्तताप्रतीतिः, पित्तदोषादेवापीतेऽपि शङ्खे पीतताप्रतीतिः, आशुभ्रमणादलातादावचक्रेऽपि चक्राकारप्रत्ययः । ध्वनितं चेदं महाभाष्ये "लटः शतृशानचौ" इति सूत्रे –'तद्यथाऽलातचक्रं प्रत्यक्षं दृश्यते, अनुमानाच्च गम्यते नैतदस्तीति' इति ब्रुवाणेन भाष्यकृता, अत्राचार्यभर्तृहरेर्वाक्यं प्रमाणयन् प्रदीपकृत्कैयटोऽपि भ्रमं प्रत्यक्षाभासपदेन स्मरन् परममानुकूल्यं भजते ।

तथा चोक्तं तेन--तद्यथेति--आशु संचाराद् भ्रान्तिरुत्पद्यते ।

रूपसहचारिणस्तु स्पर्शस्यानेकदिक्कस्य युगपदग्रहणादनवद्याऽनुमानेन प्रत्यक्षाभासो बाध्यते । तदुक्तं हरिणा--

---

1. 'एरच्' इति सूत्रेणाधिकरणेऽप्रत्ययः सम्पूर्वकात् शीङ्धातोः । ततश्च ज्ञानविशेषे योगरूढोऽयमिति भावः । (प्र. मी., पृ. ५ )
2. "ननु संशयादिज्ञानस्यासिद्धस्वरूपत्वात् कस्य व्यवसायात्मकविशेषणेन निरासः ? संशयज्ञाने हि धर्मी धर्मो वा प्रतिभाति, धर्मी चेत् स तात्त्विकः, अतात्त्विको वा, तात्त्विकश्चेत्, कथं तद्बुद्धे संशयरूपता ? अथातात्त्विकः, तथाप्यतात्त्विकार्थविषयत्वात् केशोण्डुकादिज्ञानवद् भ्रान्तिरेव संशयः । अथ धर्मः, स स्थाणुत्वलक्षणः, तत्र तात्त्विकाऽतात्त्विकयोः पूर्ववद्दोषः । अथ पुरुषत्वलक्षणः, तत्राऽप्ययमेव दोषः । अथोभयम् इत्यप्यसमीचीनम्, यतः संशयः सर्वप्राणिनां चलितप्रतिपत्त्यात्मकत्वेन स्वात्मसंवेद्यः । प्रत्यक्षसिद्धस्याप्यर्थस्यापह्नवे सुखदुःखादेरप्यपह्नवः स्यात्" । (प्रमेयक०, प्रथमपरि०, सू. १।३ । संशयस्वरूपसिद्धौ पृ. ४७-५१)
3. न्या० सि० मु०, कारि० १२७, पृ. ४४० गुणनिरू, अतस्मिंस्तदेवेति विपर्ययः । (प्र. मी., पृ. ५)

**स्पर्शप्रबन्धो हस्तेन यथा चक्रस्य सन्ततः ।**
**न तथाऽलातचक्रस्य विच्छिन्नं स्पृश्यते हि तत्**[1] ॥ इति ॥

एवमेव–'तेभ्य एवं विप्रतिपन्नबुद्धिभ्योऽध्येतृभ्यः' इति भाष्यप्रघट्टकेऽध्येतृषु विप्रतिपन्नबुद्धित्वं विपर्ययरूपमेवोच्यते । सप्रयोजने व्याकरणाध्ययनेऽनर्थकत्व-प्रत्ययात्[2] । किञ्चोत्तरकाले भ्रमस्य बाधो भवतीत्यपि 'इमानि प्रयोजनानि' इत्युत्तरवाक्येन प्रयोजनज्ञाने सति अत्र संघटत एव । एवमेवालातचक्रस्थलेऽपि उत्तरकालेऽनुमाने तद्बाधो भवति ।

## श्रीनागेशभट्टसम्मतं विपर्ययलक्षणम्

श्रीनागेशभट्टेन तु लघुमञ्जूषायां योगसूत्रानुसारि अन्यदेव विपर्ययलक्षणमुक्तम् । तथा हि–तेन तदभाववति तत्प्रकारकज्ञानस्य भ्रमत्वं नाङ्गीकृतम्; अपि तु ; तदाश्रयत्वाभाववति तदाश्रयत्वप्रकारकज्ञानस्य ।तत्रैव वाचस्पतिमिश्राणामपि सम्मतिः प्रदर्शिता[3] ।

किञ्च ज्ञानाकारस्यैव विषये आरोप इत्यादिनापि लघुमञ्जूषायां[4] भ्रमो वर्णितः ।

## आहार्य्यारोपस्य व्यावृत्तिविमर्शः

शुक्तिरियम्, न तु रजतमिति बाधज्ञानेन समाप्तेऽपि भ्रमे यदि शुक्तिं रजतत्वेन जानीयामिति इच्छया इदं रजतमिति ज्ञानमुत्पद्यते, तदा स आहार्यारोप इत्युच्यते, सोऽपि भ्रमवदेव प्रतिक्षिप्यते, सकलप्रकारकत्वाभावात् । समादृतश्चायमाहार्यारोपो वैयाकरणैः, यथा–"पूर्वत्राऽसिद्धम्" इति सूत्रेण सिद्धे शास्त्रेऽसिद्धत्वमारोप्यते, स चाहार्य एव, बाधज्ञानकाल एव वस्तुतः सिद्धं "रो रि" इति शास्त्रं "हशि च" इत्येतत्प्रति

---

1. म. भा., प्र. ३।२।१२४ ।
2. वेदान्नो वैदिकाः शब्दाः सिद्धाः, लोकाच्च लौकिकाः, अनर्थकं व्याकरणम् । तेभ्य एवं विप्रतिपन्नबुद्धिभ्योऽध्येतृभ्यः सुहृद् भूत्वा आचार्य इदं शास्त्रमन्वाचष्टे इमानि प्रयोजनानि, अध्येयं व्याकरणमिति । म० भा०, १ अ०, १ पा०, १ आ०, पृ. ३८ । अत्रोद्द्योतश्च–विप्रतिपन्नेति देहात्मप्रत्ययवद् भ्रान्तत्वशङ्क्येति भाव इति ।
3. तदुक्तं योगसूत्रे–"विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम्" इति । (योगद० ३।८) विपर्यय इति लक्ष्यम्, मिथ्याज्ञानमिति लक्षणम् । तद्विवरणम्–अतद्रूप इति, तद्रूपप्रतिष्ठत्वाभाववत् । यद् ज्ञानप्रतिभासि रूपं रजतत्वादि तदाश्रयत्वाभाववद्विशेष्यकमित्यर्थ इति मिश्राः । (ल० म०, बौद्धार्थनि० पृ. २३३) अत्र तद्रूपेण रजतत्वादिना प्रतिष्ठा यस्य ज्ञानस्य तत्तद्रूपप्रतिष्ठं तद्भिन्नमित्यर्थः । विपर्ययस्य तु तद्रूपेण प्रतिष्ठा नास्ति, उत्तरकाले बाधेन समाप्तत्वात् ।
4. ल० म०, बौ० प्र०, पृ० २११ । ल० म० टीकाद्वय०, बौ० प्र०., पृ० २४७ ।

असिद्धत्वेन जानीयामितीच्छया असिद्धत्वेन बोध्यते । एवमेव स्थानिवदित्याद्यतिदेशसूत्रैराहार्य्यारोप एव तत्र तत्र धर्मिणि तस्य तस्य धर्मस्य क्रियते । एतेषां शास्त्राणां प्रामाण्यविचारस्त्वनुपदमेव करिष्यते ।

**सामान्यज्ञानस्य निरासः**

एवमेव सामान्यज्ञानमनिश्चयात्मकमपि प्रमातः प्रतिक्षेपणीयम् । ध्वनितं चेदं स्वं रूपमिति सूत्रे भाष्ये योऽपि ह्यसावाहूयते नाम्ना, नाम च यदाऽनेन नोपलब्धं भवति, तदा पृच्छति किं भवानाह इति वदता महर्षिपतञ्जलिना[1] । अत्र च नामग्राहमाहूतः पुरुषः 'अनेन किञ्चिदुच्चरितम्, इति सामान्यतः किञ्चित्त्वेन रूपेण ज्ञानवानपि विशेषतो न निश्चयवानिति प्राथमिकं सामान्यज्ञानं यद् भवति, तदपि पूर्ववदेव सकलप्रकारकत्वाभावाद् व्यावृत्तं वेदितव्यम् ।

अतोऽनिर्ज्ञातरूपत्वात् किमाहेत्यभिधीयते, इति वदता[2] श्रीहरिणापि अनुमोदितोऽयं मार्गः ।

**निर्विकल्पकप्रत्यक्षस्याऽपि निराकृतिः**

एवमेव साकल्येनेत्यनेन वक्ष्यमाणं निर्विकल्पकमपि प्रत्यक्षं प्रतिक्षिप्तं भवति, विशेषोल्लेखस्य तत्राप्यभावात् तदपि सामान्यज्ञानमेव ।

**अनिर्ज्ञातार्थेत्यत्रार्थपदविमर्शः**

अथ साकल्येनेत्यनेन गृहीताः सकला धर्माः प्रत्यासत्त्या अनिर्ज्ञातार्थगता एव ग्राह्या इति पूर्वमुक्तम् । तत्र अर्थपदमधिकमनिर्ज्ञातेत्यत्र विषयार्थकक्तप्रत्ययेनैव गतार्थत्वादिति चेत्, उच्यते-"शब्दज्ञानाऽनुपाती वस्तुशून्यो विकल्पः" इति योगदर्शनीयसिद्धान्तस्याऽपि[3] व्यपदेशिवद्भावाभावपक्षे टिसंज्ञादिसिद्धये शब्दशास्त्रे स्वीकृततया तत्र बाह्यसत्ताशून्य एवार्थो विकल्पात्मकवृत्त्या गोचरीक्रियते, न प्रमया इति विकल्पवृत्तौ प्रमालक्षणं माऽतिप्रसाङ्क्षीदिति अर्थपदम् ।

---

1. "शब्दपूर्वको ह्यर्थसम्प्रत्ययः, आतश्च शब्दपूर्वकः । योऽपि ह्यसौ आहूयते नाम्ना, नाम च यदाऽनेन नोपलब्धं भवति, तदा पृच्छति किं भवानाहेति" । (म० भा० १।१।६७)
2. वा० प०, का. १।५७ ।
3. वस्तुतस्तत्र विकल्पात्मकमेव ज्ञानम् । शब्दज्ञानानुपाती वस्तुशून्यो विकल्प इति तल्लक्षणं पतञ्जल्युक्तम् । शब्दज्ञानजन्यो वस्तुशून्यो विकल्प इति तदर्थः । (ल० म०, टीकाद्वय०, पृ. ३७६ )

## द्विविधार्थसंग्रहायार्थग्रहणम्

वस्तुतस्तु प्रत्यक्षनिरूपणावसरे वक्ष्यमाणो बौद्धोऽर्थो बाह्यश्चेत्युभयविधस्याऽपि तस्य संग्रहायार्थपदम्, अन्यथा लोकप्रसिद्धो बाह्य एव क्तप्रत्ययार्थतया गृह्येत, तावतापि क्तप्रत्ययस्योपपत्तिः स्यादेव ।

## प्रकारान्तरेणार्थभेदनिरूपणम्

पुनश्च हेयोपादेयोपेक्षणीयभेदाद् विविधोऽयमर्थस्तत्र तत्र दर्शने सङ्केतितः । यच्च पुनरशिष्टाप्रतिषिद्धं नैव तद्दोषाय भवति, नाभ्युदयाय । तद्यथा "हिक्कितहसित-कण्डूयितानि" इति वदन्तो भाष्यकृतोऽपि अनुमोदन्ते प्रकारमिमम् । योऽर्थो वेदविहितः सोऽभ्युदयायोपादेयः, यस्तु निषिद्धः स दोषावह इति हेयः, यस्तु न विहितो नापि प्रतिषिद्धः स उपेक्षणीय इति तदाशयः[1] ।

अत्रोच्यते कन्दलीकृता "प्रमितिर्गुणदोषमाध्यस्थ्यदर्शनम्, गुणदर्शनमुपादेयत्व-ज्ञानम्, दोषदर्शनं हेयत्वज्ञानम्, माध्यस्थ्यदर्शनं न हेयं नोपादेयमिति ज्ञानं यतः सा प्रमितिः[2]" इति ।

न्यायभाष्येऽपि प्रमेयार्थजिज्ञासया जायमानस्य अर्थज्ञानस्य प्रमारूपस्य हानोपादानो-पेक्षाबुद्धयः फलत्वेनोक्ताः[3] ।

श्रीवाचस्पतिमिश्रा अपि इमं त्रिविधमर्थं स्वीयतात्पर्यटीकायां निरूपयामासुः[4] ।

## हेयापेक्षया उपेक्षणीयस्य पृथक्सत्ता

न च हेयोपादेयाभ्यामन्यो राशिरस्ति, उपेक्षणीयो ह्यनुपादेयत्वाद्धेय एवेति यदुक्तं बौद्धाचार्येण धर्मोत्तरेण[5], तत्तु न युक्तिसहम्, न ह्येवं भवति यदेतन्नपुंसकं स पुमान्,

---

1. म. भा., १ अ. । १ पा. । २ आ. । पृ. १०४ ।
2. कन्दली, पृ. १९९ ।
3. "अप्रतीयमानमर्थं कस्माज्जिज्ञासते ? तं तत्त्वतो ज्ञातं हास्यामि वोपादास्य उपेक्षिष्ये वेति । ता एता हानोपादानोपेक्षाबुद्धयस्तत्त्वज्ञानस्यार्थस्तदर्थमयं जिज्ञासते" । (न्या. भा. १।१।३२)
4. "पुरुषापेक्षया तु प्रामाण्ये चन्द्रतारकादिविज्ञानस्य पुरुषानपेक्षितस्याप्रामाण्यप्रसङ्गः । न चातिदवीयस्तया तदर्थस्य हेयतया तदपि पुरुषस्यापेक्षितम्, तस्योपेक्षणीयविषयत्वात् । न चोपेक्षणीयमपि अनुपादेयत्वाद् हेयमिति निवेदयिष्यते" । (तात्पर्य., पृ. २१)
5. न्यायबिन्दुटी. १।१ ।

अस्त्रीत्वात्, स्त्री वा नपुंसकमपुंस्त्वादिति । स्त्रीपुंसाभ्यामन्यदेव नपुंसकम्, तथोपलभ्यमानत्वात् ।

मञ्जरीकारस्यापि अत्रैव सम्मतिरिति स्फुटं प्रतीयते न्यायमञ्जरीदर्शनेन[1] ।

जैनदर्शनाचार्याणामपि अत्रैव पक्षे निर्भर इति तत्र तत्र दृश्यते[2] ।

**अर्थशब्दस्य व्युत्पत्तिप्रदर्शनम्**

अर्थ्यते याच्यते इति अर्थः । अर्थ-याञ्चायामित्यतः कर्मणि घञ् । अथवा अर्थ्यते ज्ञायते हेयत्वेनोपादेयत्वेनोपेक्षणीयत्वेन वा इति अर्थः, ऋ-गतौ इत्यस्माद् औणादिकः थन्प्रत्ययः कर्मणि बोध्यः ।

ननु द्रव्यगुणादिभेदैरर्थः सप्तविधः, किं वा भावाभावभेदाभ्यां द्विविध इति तेऽपि प्रकारा अत्र निर्देष्टव्या इति चेत्, सत्यम् । प्रवृत्तिनिवृत्ती अर्थविषयकहानोपादानोपेक्षाबुद्ध्यधीने । ताश्च बुद्धयोऽर्थज्ञानाधीना इति प्रमाणग्रन्थे प्रमाफलभूतहानादिबुद्धिविषयाणां हेयाद्यर्थानामेव निरूपणम्, न तु अन्यासामर्थविधानम् ।

**ज्ञापकत्वमित्यत्र ज्ञापकत्वपदार्थविमर्शः**

अथेदानीं लक्षणे ज्ञापकत्वपदार्थो विमृश्यते । ज्ञापयति यत्तज्ज्ञापकमिति ण्यन्ताद् ज्ञपेर्जानातेर्वा ण्वुल् कर्तरि[3] । तत्र णिच्प्रकृत्यर्थो ज्ञानम्, णिजर्थः प्रयोजकव्यापारः, स चानुकूलव्यापारः, ण्वुलर्थ आश्रयः । तत्र ज्ञानं प्रमारूपमित्यतिस्फुटम्, तादृशव्यापारः प्रेरणाख्य[4] इति प्रमानुकूलप्रेरणाश्रय इत्यर्थः सम्पन्नः । स च भाष्यविरुद्धः, भाष्ये हि "येनानिर्ज्ञातमर्थं ज्ञास्यामि" इत्यत्र येनेति करणतृतीयानिर्देशात्[5], ज्ञास्यामीत्यनेन कर्तुः पृथङ्निर्देशाच्च ।

अतो लक्षणया प्रमाकरणरूपोऽर्थो ग्राह्यः । करणं साधकतममुच्यते[6] । तमबर्थश्च

---

1. न्या. म., प्र. भा., पृ. २२-२३ ।
2. स्याद्वादर., १।२, प्र. मी., पृ. ३ ।
3. "कर्तरि कृत्" । (पा. सू. ३।४।६७)
4. "हेतुमति च" । (पा. सू. ३।१।२६)
5. म. भा., प्र. उ. २।१।५५ ।
6. "साधकतमं करणम्" । (पा. सू. १।४।४२)

प्रकर्षः[1], स चात्र अव्यवधानेन फलजनकव्यापारवत्ता, तादृशव्यापारवत्कारणं करणमिति[2] निष्पन्नम् ।

स चायं प्रकर्षः कारकान्रापेक्षया न तु करणान्तरापेक्षया कारकसामान्य-वाचकसाधकशब्दात् तमपो विधानात्[3] ।

एवं च कर्तृकर्मादिकारकापेक्षया प्रकर्षविवक्षणेन अव्यवधानेन फलजनकव्यापार-रूपप्रकर्षवत् कारकं करणमिति पर्यवसन्नम् ।

**सामग्री प्रमाणमिति पूर्वपक्षविमर्शः**

यद्यपि न्यायमञ्जर्यां श्रीजयन्तभट्टाः – 'अव्यभिचारिणीमसन्दिग्धामर्थोपलब्धिं विद- धती बोधाबोधस्वभावा सामग्री प्रमाणमित्यभिदधतः सामग्र्याः प्रमाकरणत्वं प्रोचुः । सामग्री नाम संहतिः, सा च संहन्यमानमन्तरेण न व्यवहारपदवीमवतरति । अतः सामग्र्या पश्यामीत्येव व्यवहारः, न तु सामग्रीं पश्यामीति । यस्तु दीपेन चक्षुषा वा पश्यामीति दीपादीनां करणतृतीयानिर्देशः, स तु फलोपजननाविनाभावित्वस्वभावत्वा-ख्यसामग्रीरूपसमारोपणनिबन्धः । अन्यथापि च तद्रूपसमारोपेण स्थाल्या पचतीति व्यपदेशो दृश्यत एव । तस्मादन्तर्गतकारकापेक्षया लब्धकरणभावा सामग्री प्रमाणम् । एवं च समुदितान्येव कारकाणि करणीभवन्ति, पृथगवस्थितानि तु तान्येव कर्तृकर्मादि-भावं भजन्तीति च प्रदिपादयामासुः[4] ।

**सामग्री न प्रमाणमित्युत्तरः पक्षः**

तथापि अपरे पुनराचक्षते सामग्री नाम समुदितानि कारकाणि, तेषां द्वैरूप्यम-हृदयङ्गमम्, अथ च तानि पृथगवस्थितानि कर्मादिरूपं लभन्ते अथ च तानि समुदितानि करणीभवन्तीति, कोऽयं नयः ? इत्युपक्रम्य तस्मात् कर्तृकर्मविलक्षणा संशयविप-र्ययरहितार्थबोधविधायिनी बोधाबोधस्वभावा सामग्री प्रमाणमित्युसंहारमुखेण कर्तृ-कर्मादिवैलक्षण्यमेव करणगतातिशयं प्रतिपाद्य तादृशे करण एवात्र सामग्रीपदं लाक्षणिक-मिति सुस्पष्टं बोधयामासुः[5] ।

---

1. "अतिशायने तमबिष्ठनौ" । (पा. सू. ५।३।५५)
2. क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम् ।
   विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम् ॥
   (वै. भू. सा., सुबर्थ., पृ. १९८)
3. वै. भू. सा., परीक्षाटीका, सुबर्थनिरू. पृ. १७२ ।
4. न्या. म., प्रमाणप्र., पृ. १३ ।
5. न्या. म. प्रमाणप्र., पृ. १४ ।

एवं च तदीयपूर्वपक्षमात्रं[1] दृष्ट्वा "नापि कारकसाकल्यम्, तस्य स्वरूपेणैवा-सिद्धत्वात्" इत्याद्युक्त्या भट्टजयन्तमतं दूषयन्तो बहवो जैनाचार्या अपि उपेक्षणीया एव[2]" ।

**परमेश्वरप्रमालक्षणे पूर्वपक्षः**

तदेतत् पदकृत्यप्रदर्शनेन प्रमाणस्य प्रमायाश्च लक्षणमव्याप्त्यतिव्याप्त्यसम्भ-वाख्यदोषत्रयरहितमुक्तम् । अथास्य शब्दानुशासनस्य श्रौतप्रामाण्याऽभ्युपगन्तृत्वात् परमेश्वरोऽत्र स्वीकृत एव । अत एव च 'इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्र-जुष्टमिन्द्रदत्तमिति वा" इति सूत्रेण[3] इन्द्रियपदनिर्वचने इन्द्रियाणामिन्द्रसृष्टत्वमप्युक्तं भगवता पाणिनिना । तत्रेन्द्रो जीवात्मा तस्य लिङ्गं करणेन कर्तुरनुमानादिति रीत्या[4] जीवात्मनः सिद्धिः । इन्दति परमैश्वर्यं विन्दतीति इन्द्रः परमात्माऽपि अत्रेन्द्रपदेन ग्राह्यः, तथा सत्येव इन्द्रेण सृष्टमिन्द्रियं सम्भवेत्, अन्यथाल्पसामर्थ्यस्य जीवस्य कुतस्तत्स्रष्टृत्वं सम्भवेत्? तस्य परमात्मनो यज्ज्ञानं तत्सर्वं प्रत्यक्षमेव नित्यमेव प्रमाणमेवेत्यत्र नास्ति वैदिकानां विप्रतिपत्तिरिति नित्ये तज्ज्ञाने उक्तं प्रमालक्षणं कथं

---

1. चक्षुराद्येव करणम्, न तु तेनान्यत्करणमुपजन्यते, किं हि तदन्यत् करणम् ? ·········---तेन चक्षुरादेर्ज्ञानक्रियामुपजनयतः करणत्वं ज्ञानस्य फलत्वमेव इति युक्तस्तथा व्यपदेशः । (न्या. म., पू. भा., पृ. ६७) अत्रापि लिङ्गविषयकं ज्ञानं ज्ञानविषयीकृतं वा लिङ्गप्रतिबन्धस्मरण-सहितं प्रमाणम्, लिङ्गज्ञानं फलम् ।(न्या. म., पू. भा., पृ. १०१) अव्यभिचारादिविशेषणार्थ-प्रतीतिजनक उपदेशः शब्द.इत्युक्तं भवति । (न्या. मे., पू. भा., पृ. १३७) इत्यादिग्रन्थैः पूर्वपक्षताऽस्य कुतो न ज्ञेया ?

   (भट्टजयन्ताऽभिमतस्य कारकसाकल्यस्य प्रामाण्यनिरासः) ७--नाऽपि कारकसाकल्यम्, तस्य स्वरूपेणैवासिद्धत्वात् । तत्स्वरूपं हि--किं, सकलान्येव कारकाणि, तद्धर्मो वा, तत्कार्यं वा, पदार्थान्तरं वा गत्यन्तराभावात् । न तावदाद्यः, सकलानां कारकाणामेकत्रैकदा सम्भवाभावात् कथं साकल्यं नाम ? तेषां परस्परं विरोधात् । साकल्यं हि नाम प्रमाणम्, तेन च करणेन भवितव्यम् । यदा तस्य कर्तृकर्मरूपताङ्गीक्रियते, तदा न करणत्वम्, करणत्वे वा न कर्तृ-कर्मरूपता, कर्तृकर्मकरणानां सहाऽवस्थानाभावात्, शीतोष्णवत् । ८ --किञ्च सकलान्येव कारकाणि, तेषां भावः साकल्यम्, तदित्थं न सम्बोभवीति । तत्र सकलान्येव कारकाणि कारकसाकल्यम् । (प्रमाणप्रमेयक. पृ. ११, १२)

   एवमेव कारकसाकल्यमधिकृत्य प्रमेयकमलमार्तण्ड--न्यायकुमुदचन्द्र--न्यायविनिश्चयविवरण--स्याद्वादरत्नाकरप्रभृतिषु ग्रन्थेषु विस्तरेण समालोचना समुपलभ्यते ।

3. पा. सू., ५।२।९३ ।
4. सि. कौ., पू., मत्वर्थीयतद्धितप्र., पृ. १५३ ।

संघटेत ? उक्तप्रमायाः प्रमाणजन्यत्वेनानित्यत्वात्, जीवात्मन्येव तस्य सम्भवाच्च इति चेत्, सत्यम्, आ प्रमाणोपन्यासात् ।

### उक्तलक्षणे उत्तरपक्षः

अबाधितार्थविषयकज्ञानत्वं तद्वति तत्प्रकारज्ञानत्वमेव वा तत्र प्रमात्वम्, तद्वन्निष्ठ-विशेष्यतानिरूपिततन्निष्ठप्रकारताशालिज्ञानत्वमिति यावत् । यद्यपि मुनित्रयानुक्त-मेतत्, तथापि अनुक्तमपि अप्रतिषिद्धमनुमतमेवेति न्यायेनात्र तत्सम्मतेरनुमानात् । ईश्वरतत्त्वाभ्युपगमे तद्गुणानामपि यथावदभ्युपगतत्वाच्च । अनुमोदितश्चायं पन्थाः तार्किकसार्वभौमश्रीमदुदयनाचार्येण[1] । उक्तं च जीवेश्वरसाधारणं तादृशं प्रमालक्षणं श्रीनागेशभट्टेन[2] ।

### नित्यानित्यप्रमासाधारणं लक्षणम्

श्रीमता नव्यन्यायावतारभूतेन श्रीगदाधरभट्टाचार्येणोभयविधप्रमासाधारणं लक्षणं निरूपितं सामान्यनिरुक्तौ । तत्र हि स्वव्यधिकरणप्रकाराऽवच्छिन्ना या या विषयता तदनिरूपकत्वं प्रमात्वमित्युक्तम् । यथा पर्वतो वह्निमानिति ज्ञानं प्रमा, तत्र स्वपदेनोक्त-ज्ञानीयपर्वतनिष्ठविशेष्यता ग्रहीतुं न शक्यते, प्रकारीभूतवह्नेः पर्वतनिष्ठविशेष्यता-व्यधिकरणत्वाभावात् । वह्न्यभावात्मकप्रकारस्य तद्विशेष्यताव्यधिकरणत्वेऽपि तादृश-प्रकारावच्छिन्नत्वस्य स्वीयविशेष्यतायामसत्त्वात् ।

एवं च स्वपदेन उदासीनह्रदो वह्निमानिति ज्ञानीयविशेष्यतैवोपादातुं युज्यते । तथा च स्वं ह्रदनिष्ठविशेष्यता तद्व्यधिकरणो यो वह्निरूपः प्रकारस्तदवच्छिन्ना या विषयता ह्रदनिष्ठविशेष्यतारूपा तदनिरूपकत्वस्य पर्वतो वह्निमानिति ज्ञाने सत्त्वा-ल्लक्षणं तत्र समन्वितम्[3] ।

### उक्तविषयेऽद्वैतसिद्धान्तः

वेदान्तदर्शनसम्मतं तु द्विविधं प्रमालक्षणं जीवेश्वरसाधारणमस्ति । तदभाववति तत्प्रकारकत्वाभावरूपमेकम् । विशेष्यावृत्त्यप्रकारकत्वादिरूपमपरम्[4] ।

---

1. यथार्थानुभवो मानमनपेक्षतयेष्यते ।
मितिः सम्यक् परिच्छित्तिस्तद्वत्ता च प्रमातृता ॥
तदयोगव्यवच्छेदः प्रामाण्यं गौतमे मते ॥
(न्यायकुसुमा., स्त. ४, कारि. १--५)
2. वै. सि. ल. मञ्जू., टीकाद्वय., बौद्धार्थनिरू., पृ. ३२९ ।
3. सामान्यनि.--गङ्गाटी., प्रथमलक्षण., पृ. ७८ ।
4. "तदभाववति तत्प्रकारकत्वाभावरूपमेकम्, विशेष्यावृत्त्यप्रकारकत्वाभावरूपमपरम्" ।
(वे. प., टीकाद्वय., पृ. २९१)

## अष्टाध्यायीस्थसूत्रेषु प्रामाण्यविमर्शः, तत्र पूर्वः पक्षः

ननु परमेश्वरज्ञाने उक्तरीत्या प्रमात्वस्य समर्थनेऽपि सर्वेषामष्टाध्यायीसूत्राणां प्रकृतोपयोगि प्रमाकरणत्वं समर्थयितुं न शक्यते । पूर्वत्रासिद्धम्, स्थानिवदादेश इत्यादीनामाहार्यारोपे करणत्वात् । इष्यते चाप्तवाक्यत्वेन सर्वेषु तत्त्वमिति चेत्, तदप्यापातरम्यम् ।

## अत्रोत्तरः पक्षः

### विधिसूत्रे प्रामाण्यम्

"इको यणचि" इत्यादिविधिसूत्रेषु अनिर्ज्ञातार्थस्य यणादिकार्यस्य तद्घटितशब्द-गतासाधुत्वस्य वा साकल्येन ज्ञापकतया सुतरामस्त्येवैतत् प्रमाकरणत्वम् । साकल्य-मर्थगताबाधितत्वम् । तच्च प्रकृते प्रकल्प्य चापवादविषयमिति न्यायेन बाधकविषय-परित्यागेन स्वविषयमात्रे प्रवृत्त्या सम्पाद्यमिति "अकः सवर्णे दीर्घः, इकोऽसवर्णे०" इत्यादिबाधकशास्त्राणां विषयान् परित्यज्यानेन बोध्यमानोऽर्थः प्रमाविषय इत्युच्यते । अतश्च असवर्णाजव्यवहितपूर्वत्वविशिष्टस्य पदान्तभिन्नस्येकः स्थाने यण् स्यादित्या-द्यर्थ एव प्रमितत्वं सम्पद्यते ।

### संज्ञापरिभाषाधिकारसूत्रेषु प्रामाण्यम्

"वृद्धिरादैच्" इत्यादिसंज्ञासूत्रेषु "इको गुण." इत्यादिपरिभाषासूत्रेषु अङ्गस्येत्याद्य-धिकारसूत्रेषु च स्वार्थविषयकबोधस्य अनिर्ज्ञातार्थविषयकत्वेन तत्र प्रमाकरणत्वम-स्त्येव । साधुत्वविषयकप्रमायामपि साधुत्वस्यानिर्ज्ञातत्वेन प्रामाण्यं निर्वहत्येव । किञ्च, तात्पर्यविषयीभूतमत्र साधुत्वमबाधितमिति तस्य परम्परयापि बोधने एतेषां प्रामाण्यम-स्त्येव। एतच्च स्पष्टमुक्तं शब्दकौस्तुभ मीमांसापद्धतिमनुसरता श्रीभट्टोजिदीक्षितेन[1] ।

### प्रपञ्चसूत्राणां प्रामाण्यम्

कर्मधारयसमासीय–'वर्णो वर्णेन[2]' इत्यादिप्रपञ्चसूत्राणाम् अलुक्समासीयप्रपञ्च-सूत्राणां सामान्यविधिसङ्कोचकत्वेन स्वार्थे प्रामाण्यम् । एषां प्रपञ्चसूत्रत्वं स्पष्टमुक्तं प्रदीपे[3] उद्द्योते[4] च । ब्राह्मणवसिष्ठन्यायेन तु इमानि पृथगुक्तानि ।

---

1. "तात्पर्यविषयाबाधाच्च प्रामाण्यम्, एषैव ह्यर्थवादेष्वपि गतिः, आत्मवपोत्खेदनप्रभृतीनां बाधेऽपि तात्पर्यविषयीभूतप्राशस्त्यस्याबाधितत्वात्" । (म. भा., श. कौ., १ अ. । १ पा. । १. आ. । पृ. १०-११)
2. पा. सू., २।१।६९ ।
3. "न चेदानीमिति लक्षणप्रपञ्चाभ्यां मूलसूत्रवद् वार्त्तिकानामुपपत्त्या दोषाभावः" । (म. भा., प्र., १ अ. । १. पा. १ । आ. । पृ. ७०)
4. "लक्षणप्रपञ्चाभ्यामिति–यथा कर्मधारयप्रकरणे अलुक्प्रकरणे च" । (म. भा., प्र. उ., १ अ., १ पा., १ आ., पृ. ७०)

## नियमसूत्राणां प्रामाण्यम्

धातोस्तन्निमित्तस्यैव, रात्सस्य-प्रभृतीनां नियमसूत्राणाम्, "वान्तो यि प्रत्यये, संयो-गान्तस्य लोपः" इत्यादिसामान्यसूत्रसिद्धस्यार्थस्य बोधकत्वेऽपि स्ववैयर्थ्यप्रयोजकस्य सामान्यशास्त्रस्योद्देश्ये स्वोद्देश्यातिरिक्तत्वेन सङ्कोचं कृत्वा अनिर्ज्ञातज्ञापनेन[1] प्रामा-ण्योपगमः ।

## अतिदेशसूत्राणां प्रामाण्यम्

स्थानिवदित्याद्यतिदेशसूत्राणामपि तदभाववति तदारोपात्मकबोधजनकत्वेना-प्रामाण्यं न शङ्क्यम्, तेषामपि तत्तद्विध्यङ्गतया तात्पर्यविषयीभूतसाधुत्वबोधन एव पर्यवसानात् । "अन्नं ब्रह्मेत्युपासीत"[2] इति श्रुतेरारोपितार्थविषयकबोधजनकत्वेऽपि सँव्वादिप्रवृत्तिजनकज्ञानजनकत्वेन यथा प्रामाण्यं तद्वत् । एवमेव 'पूर्वत्रासिद्धम्" इत्यादीनामपि गतिर्बोध्या । आहार्यारोपस्यापि हि शाब्दिकमते सँव्वादिप्रवृत्तिनिवृ-त्त्यन्यतरफलकत्वं स्वीकृतमस्ति[3] ।

## प्रमात्वस्य स्वतो ग्राह्यत्वं परतो वा

अथ प्रमात्वं स्वतो ग्राह्यं परतो वेति विमृश्यते । यतो हि ज्ञानगतं प्रमात्वं निश्चित्यैव कर्मणि निष्कम्पं प्रवर्तते लोकः । अत्र प्रमाणं तु निष्कम्पप्रवृत्तिः प्रमात्वनिश्चयसाध्या प्रमात्वव्यतिरेकज्ञानबाध्यत्वादित्यनुमानमेव । यत्र यदभावज्ञानेन बाध्यत्वम्, तत्र तन्निश्चयसाध्यत्वमित्याकारा सामान्यव्याप्तिरत्र ग्राह्या, व्यतिरेके सांशयिकप्रवृत्तिरत्र दृष्टान्तः । तच्च प्रमात्वं स्वत एवोत्पद्यते ज्ञायते चेति पूर्वोत्तर-मीमांसकाः । परत इति नैयायिका वैशेषिकाश्च । तत्र तृतीयस्य सन्देहो जायते प्रमात्वे स्वतस्त्वं परतस्त्वं वेति । तत्र स्वतस्त्वं स्वाश्रयज्ञानग्राहकसामग्रीमात्रग्राह्यत्वम्, परतस्त्वं स्वाश्रयज्ञानग्राहकसामग्र्यतिरिक्तग्राह्यत्वमिति ।

## शाब्दिकमते स्वतो ग्राह्यत्वमेव

अत्रोच्यते 'प्रमात्वं स्वत एव गृह्यते' इत्येव शब्दशास्त्रराद्धान्तः । यथा हि ज्ञान-स्य स्वप्रकाशत्वमुक्तं श्रीहरिणा "आत्मरूपं यथा ज्ञाने ज्ञेयरूपं च दृश्यते" इत्यनेन[4]।

---

1. नियमसूत्राणां विधिरूपेणैव प्रवृत्तिः सामान्यशास्त्रतात्पर्यसङ्कोचकता चेति पक्षस्य 'द्युद्भ्यो लुङि' इति सूत्रे भाष्यकृता ध्वनितत्वादिति भावः । (प्रौढमनोरमा, श. र., हलन्तपु., नलोपः सुप्स्वर-अ. ८,पा. २, सू. २)
2. तत्रैव ।
3. यद्यपि लोकेऽनाहार्यज्ञानस्यैव प्रवर्तकत्वं निवर्तकत्वं च दृष्टम्, तथापीह शास्त्रप्रमाणादाहार्या-रोपोऽपि शास्त्रप्रवृत्तावप्रवृत्तौ च नियामक इति बोध्यम् । (ल. श.,सं. प्र., पृ. ४१, "पूर्वत्रासिद्धम्" इति सूत्रम्–८।२।१।
4. वा. प., ब्र. का. ५० ।

एवं चैतन्मते ज्ञानं विषयं प्रकाशयत् स्वयमपि स्वविषयो भवति, न्यायनये सर्वं प्रमेयमिति ज्ञाने स्वस्यापि सर्वपदार्थतया स्वविषयत्ववत्, वैदिकसिद्धान्ते "स्वाध्यायोऽध्येतव्यः" इति श्रुतेः स्वस्यापि विषयीकरणवच्च[1] । अतश्चात्र सिद्धान्ते ज्ञानस्य प्रकाशेन सदैव तद्गतज्ञानत्वप्रमात्वादिधर्माणामपि प्रकाश इति तत्र न सामग्र्यन्तरापेक्षा, घटप्रत्यक्षे घटत्वप्रत्यक्षवत् । न हि घटत्वं विहाय (अविषयीकृत्य) घटप्रत्यक्षं जायते ।

**उक्तविषये श्रीनागेशभट्टस्य सम्मतिः**

लघुमञ्जूषायां श्रीनागेशभट्टोऽपि तन्निष्ठप्रकारत्वावच्छिन्नतद्वन्निष्ठविशेष्यतानिरूपकत्वरूपं ज्ञानगतं प्रमात्वमङ्गीकुर्वन् तस्य स्वत एव ग्राह्यत्वं प्रतिपादयति । इदं ज्ञानमप्रमेति रूपेण औत्तरकालिकबाधे तु पूर्वज्ञानस्य भ्रमत्वं कल्पयति । यथा च प्रदीपो रूपादि प्रकाशयन् आत्मानमपि प्रकाशयति । तथा ज्ञानमपि अर्थं प्रकाशयत् स्वमपि प्रकाशयति । एवं शब्दोऽपि । ज्ञानशब्दप्रदीपानां त्रयाणां स्वप्रकाशत्वनियमात् । प्रमात्वस्य स्वतो ग्राह्यत्वे अनभ्यासदशायामुत्पन्ने ज्ञाने 'इदं ज्ञानं प्रमा न वा' इति संशयो नोत्पद्यते, प्रतिबन्धकस्य प्रमात्वनिश्चयस्य सत्त्वात्, तथाऽपि संशयजनकदोषविशेषाभावे सतीत्यस्य विशेषणविधया स्वतो ग्राह्यत्वलक्षणे निवेशान्नोक्तदोषः । ज्ञानस्य स्वप्रकाशत्वे सत्येव घटादिज्ञाने सति घटज्ञानवानहं न वेति संशयस्य घटज्ञानाभाववानहमिति विपर्ययस्य च कदाऽपि नोदयः ।

न्यायमते त्वनुव्यवसायेन ज्ञानग्रहो भवतीति नियमे तु अनवस्थादोषः समायाति । येनानुव्यवसायेन ज्ञानस्य ग्रहणं कृतम्, तस्याऽपि ज्ञानरूपतयाऽन्येनानुव्यवसायेन ग्रहणं कार्यं तस्याऽपि पुनरन्येनेत्यनवस्था । यद्यपि जिज्ञासायां सत्यामेव ज्ञानं ज्ञानान्तरेण गृह्यते, न तु तस्यामसत्याम्, तदुक्तम्—एवं त्रिचतुरज्ञानजन्मनो नाधिका मतिरिति, एवञ्च यावत्पर्यन्तं जिज्ञासा तावदेवानुव्यवसायपरम्परायाः प्रामाणिकत्वमिति न दोषः, तथाऽपि घटं जानामीतिवद् ज्ञानं जानामीत्यनुव्यवसायोऽप्यापद्येत । किञ्च, ज्ञानस्य स्वप्रकाशत्वाभावे ज्ञानोत्पत्तिद्वितीयक्षणे ज्ञानं न जानामीति प्रत्ययोऽप्यापद्येत । न च तस्मिन् क्षणे परतो गृह्यमाणत्वं सम्भवति । स्पष्टं चेदं लघुमञ्जूषायां तट्टीकायां कलायां कुञ्जिकायां च[2] ।

---

1. म. भा., प्र. उ. १ अ., १ पा., ४ आ., १० सू. ।
2. कुञ्जिकाकलाटीकाद्वयोपेता ल. म. बौद्धार्थनिरू., पृ. ३२९-३३५ ।

## उक्तविषये मीमांसादर्शनकाराणां सम्मतिः

वेदापौरुषेयत्ववादिनः श्रीकुमारिलभट्ट-प्रभाकराचार्यप्रभृतयस्तु वेदानां स्वतः प्रमाकरणत्वं व्यवस्थापयन्तो ज्ञानगते प्रमात्वे स्वाश्रययावज्ज्ञानग्राहकसामग्रीजन्यग्रह-विषयत्वलक्षणं स्वतो ग्राह्यत्वमेव प्रमाणयन्ति[1] ।अप्रमात्वं तु परतो गृह्यते इत्यन्यत्[2] ।

## अत्र सांख्यमतम्

सांख्यमते तु ज्ञानगते प्रमात्वाप्रमात्वे उभे अपि स्वत एव गृह्येते इत्याहुः भट्टपादाः श्लोकवार्तिके[3] । प्रवदन्ति च श्रीमाधवाचार्याः सर्वदर्शनसङ्ग्रहेऽपि[4] ।

## अत्राऽद्वैतवेदान्तसरणिः

ज्ञानगतं प्रमात्वं तु स्वत एव गृह्यते, ज्ञानस्य स्वप्रकाशत्वात् । यथा तज्ज्ञाने ज्ञानान्तरं नापेक्ष्यते, तथैव तत्प्रमात्वज्ञानेऽपि तद् नापेक्ष्यते[5] । ईश्वरीयप्रमायास्तत्त्व-मपि स्वत एव, परकीयज्ञानस्य प्रामाण्यं तु परपुरुषेण परत एव गृह्यते । परज्ञानस्य परेणाऽप्रत्यक्षात् ।

## अत्र न्यायवैशेषिकपद्धतिः

प्रमात्वज्ञानमेतत् परतः (सँव्वादिप्रवृत्तिजनकत्वलिङ्गकानुमानेन) भवतीति तर्कशास्त्र-निष्णाताः श्रीवात्स्यायनजयन्तभट्टवाचस्पत्युदयनप्रभृतिविद्वद्वराः । कन्दलीकृत्प्रभृतयश्च सोपपत्ति प्रमाणयन्ति स्म[6] । तथैव अप्रमात्वमपि परत एव । एषां मते वेदस्येश्वर-

---

1. स्वतः सर्वप्रमाणानां प्रामाण्यमिति गम्यताम् ।
   न हि स्वतोऽसती शक्तिः कर्तुमन्येन शक्यते ॥ (श्लो. वा., २।४१)
2. श्लो. वा. सू. ३, श्लो. ८५ ।
3. केचिदाहुर्द्वयं स्वतः । (श्लो. वा. सू. २)
4. "प्रमाणत्वाप्रमाणत्वे स्वतः सांख्याः समाश्रिताः" । (सर्वद., जैमि., पृ. २७९)
5. "एवमुक्तानां प्रमाणानां प्रामाण्यं स्वत उत्पद्यते ज्ञायते च" । (वे..प. पृ. २९१)
6. "प्रमाणतोऽर्थप्रतिपत्तौ प्रवृत्तिसामर्थ्यादर्थवत् प्रमाणम्" । (न्या.भा.पृ. १, तात्पर्यटी.१/१/१) "तत्र परत एव वेदस्य प्रामाण्यमिति वक्ष्यामः स्थितमेतदर्थक्रियाज्ञानात् प्रामाण्यनिश्चय इति । तदिदमुक्तम्..........। तस्मादप्रामाण्यमपि परोक्षमित्यतो द्वयमपि परत इत्येष एव पक्षः श्रेयान्" । (न्यायम., प्र. भा., पृ. १५५-१६०) "प्रमायाः परतन्त्रत्वात्, सर्गप्रलयसम्भवात्, तदन्यस्मिन्ननाश्वासान्न विधानान्तरसम्भवः" । (न्यायकुसु. २।१; तत्त्वचिन्ताम., पृ. १८३-२३३ । कन्दली, पृ. २१७-२२०)

प्रणीततया तत्प्रामाण्यस्येश्वरप्रोक्तत्वमूलकत्वेन वेदार्थज्ञानगतप्रमात्वस्याऽपि परतस्त्वेऽभ्युपगते तत्सादृश्येन समस्तप्रमावृत्तिप्रमात्वस्य परतस्त्वसरणिराकलनीया स्यादिति तेषां तात्पर्यं कदाचित् स्यादिति मन्ये ।

**प्रामाण्यस्य स्वतस्त्वपरतस्त्वयोर्जैनदर्शनसिद्धान्तः**

श्रीहेमचन्द्राचार्येण 'प्रामाण्यनिश्चयः स्वतः परतो वा' इति सूत्रेण अभ्यासपथमायाते जलादिज्ञाने प्रमात्वस्य स्वतो निश्चय इति स्वीक्रियते । तथा हि—पूर्वं जलस्य चाक्षुषं प्रत्यक्षम्, तदनु पिपासार्तस्य तत्र प्रवृत्तिः, ततस्तत्प्राप्तिः, ततः स्नानपानादीनि, ततो दाहपिपासयोरुपशम इत्येतावतैव भवति कृतार्थः प्रमाता, न पुनर्दाहपिपासोपशमज्ञानमपि परीक्षत इति अस्य ज्ञानस्य स्वतः प्रामाण्यम् । अनुमाने तु सर्वस्मिन्नपि सर्वथा निरस्तसमस्तव्यभिचाराशङ्के स्वत एव प्रामाण्यम्, अव्यभिचारिलिङ्गसमुद्भवत्वात् ।

क्वचित्तु परत एव प्रामाण्यनिश्चयः, यथाऽनभ्यासदशापन्ने जलादिप्रत्यक्षे । तत्तु नार्थेन सह गृहीताव्यभिचारमिति तदेकविषयात् सँव्वादकाद् ज्ञानान्तराद् वा नान्तरीयादर्थदर्शनाद् वा (शीतस्पर्शज्ञानात्) तस्य (ज्ञानस्य) प्रामाण्यं निश्चीयते । तादृशज्ञानान्तरस्य (पौनःपुन्येन जलादिप्रत्यक्षस्य) नान्तरीयार्थदर्शनस्य वा स्वतः प्रामाण्यं निश्चीयत इति नानवस्थाशङ्कालेशः । इदन्त्ववधेयं यद्यस्य ज्ञानस्य स्वतः प्रामाण्यमास्थीयते, तदा पूर्वस्यैव ज्ञानस्य कुतस्तन्नाश्रीयत इति पर्यनुयोगे किमुत्तरम् ? अन्ते 'रण्डाविवाहश्चेदादावेव कुतो नहि' इति न्यायात् । शाब्दे तु दृष्टार्थे अर्थाऽव्यभिचारस्य दुर्ग्रहतया सँव्वादाद्यधीनः परत एव तन्निश्चयः । अदृष्टार्थे तु सँव्वादमन्तरेणाऽपि आप्तोक्तत्वेनैव तन्निर्णय इति प्रकारद्वयं दर्शयता पक्षद्वयमपि समर्थितम्[1] ।

एवमेव श्रीमदनन्तवीर्येणापि "तत्प्रमाणं स्वतः परतश्च"[2] इति सूत्रयित्वा, तत्र च बहु विमृश्य, प्रथमं तावदप्रमाणमेव ज्ञानमुत्पद्यते, पश्चादबाधबोधरूपगुणज्ञानोत्तरं तदपोद्यत इति प्रामाण्यमप्रामाण्यं वा क्वचिदभ्यासानभ्यासापेक्षया स्वतः परतश्चेति निर्णेतव्यमित्युपसंहरता पूर्वा शैली एवमनुमोदिता ।

**उक्तविषये बौद्धदर्शनप्रणाली**

श्रीशान्तरक्षितप्रभृतयो बौद्धाचार्यास्तु प्रामाण्याप्रामाण्ययोः स्वतस्त्वे, उभयोः परतस्त्वे प्रामाण्यस्य स्वतस्त्वे, अप्रामाण्यस्य परतस्त्वे, अप्रामाण्यस्य स्वतस्त्वे प्रामाण्यस्य

---

1. प्र. मी., पृ. ६ ।
2. प्रमेयरत्नमा., पृ. ९-१२ ।

परतस्त्वे वा कृतनियमा नावतिष्ठन्ते । प्रामाण्यं स्यादप्रामाण्यं वा, एकत्रैव एकं किञ्चित् (प्रमात्वं) स्वतः, अपरं च किञ्चित् (अप्रमात्वम्) परत इति सम्मन्वते[1] ।

**उक्तविषये निष्कर्षः**

प्रमात्वं जातिरूपं नित्यमिति न्यायदर्शने केचित्[2] । उपाधिरूपमनित्यं कस्यचिन्मते[3] । तत्रोत्पत्तिः स्वतो वा परतो वेत्याद्यपि बहु चर्चितं दर्शनान्तरे[4] । तत्तु प्रकृतानुपयोगितया उपेक्षितम् । प्रामाण्यनिश्चयेन लोकानां तत्र तत्र कर्मणि निर्विचिकित्सप्रवृत्तिदर्शनेन तन्निश्चय एव विमृष्टः । तत्र ज्ञानस्य स्वप्रकाशत्वसिद्धान्ते स्थिरं तावत्, प्रमात्वनिश्चयस्य स्वतस्त्वमिति शाब्दिकसिद्धान्तः ।

**॥ इति प्रत्यक्षसमीक्षायां प्रथमं पुष्पम् ॥**

●

---

1. 'न हि बौद्धैरेषां चतुर्णामेकतमोऽपि पक्षोऽभीष्टः, अनियमपक्षस्येष्टत्वात् । तथा हि–उभयमप्येतत् किञ्चित् स्वतः, किञ्चित् परत इति पूर्वमुपवर्णितम् । अत एव पक्षचतुष्टयोपन्यासोऽप्ययुक्तः । पञ्चमस्याप्यनियमपक्षस्य सम्भवात्' । (तत्त्वसं. पं., का. ३१२३)
2. प्रा. वा., क्रोडपत्रम् ।
3. वे. प., प्र. प., पृ. ६६ ।
4. वे. प., अनु. परि., पृ. ३२२-३३१ ।

# ॥ अथ प्रत्यक्षसमीक्षायां द्वितीयं पुष्पम् ॥
# प्रमाणभेदविमर्शः

उक्तं परीक्षितं च प्रमाणसामान्यलक्षणम् । अथ तद्विशेषलक्षणानि तद्विभाग-मन्तरेण निर्वक्तुमशक्यानीति तद्विभागः प्रदर्श्यते ।

**तत्रादौ शाब्दिकानां मतम्**

तत्र प्रत्यक्षपरोक्षभेदात् प्रमाणद्वैविध्यमादौ प्रोच्यते । इदमेव भगवता पाणिनिना परोक्षापरोक्षशब्दाभ्यामुद्गीतम्[1] । तत्र अपरोक्षं प्रत्यक्षम्, तच्च लोकप्रसिद्धमेव । परोक्षं त्वनुमानशब्दार्थापत्तिभेदात् त्रिविधम् । अभ्यासादृष्टप्रतिभासहितं षड्विधम्[2] । उपमानानुपलब्धिप्रत्यभिज्ञाकोशभेदाद् दशविधं वा[3] । एतच्चाग्रे यथावसरं सप्रमाणं विवेचयिष्यते ।

**उक्तविषये दर्शनान्तरीयमतानि**

(१) प्रत्यक्षात्मकमेकमेव प्रमाणमिति चार्वाकाः (लौकायतिकाः) अभिमन्यन्ते[4] ।

(२) प्रत्यक्षानुमानाभ्यां तस्य द्वैविध्यमिच्छन्ति वैशेषिका[5] बौद्धाश्च । आगम-स्यापि स्वतन्त्रं प्रामाण्यमित्यपि केचन वैशेषिकाः[6] ।

(३) प्रत्यक्षानुमानागमास्त्रीणि प्रमाणानि इति सांख्याचार्या ईश्वरकृष्णप्रभृतयो मन्यन्ते[7] ।

---

1. "अपरोक्षे च" (पा. सू. ३/२/११९); "परोक्षे च" (३/२/११५) ।
2. वा. प., १/३५-३६ । वा. प., २ । १४३-१४७ ।
3. श्रीनागेशभट्टेन लघुमञ्जूषायामुद्द्योते चेमानि सङ्केतितानि । (ल. म., र. प्र. युता, बौ. नि., पृ. ३२२-२३ । द्र.-म. भा., प्र.-१/१/११९ । म. भा. १/१/१, पृ. १६८ । ल. म. पृ. ३२२)
4. "प्रत्यक्षमेवैकं प्रमाणमिति चार्वाकाः" । (न्यायम., पू. भा., पृ. २६, स. द. स., चार्वाकदर्शनम्)
5. "एतेन शाब्दं व्याख्यातम्" । (वै. सू. ९/२/३ । द्र. प्र. पा. भा.) "शब्दोपमानयोर्नैव पृथक् प्रामाण्यमिष्यते, अनुमानगतार्थत्वादिति वैशेषिकं मतम्" । (न्या. सि. मु., का. १४०-१४१)
6. "प्रत्यक्षानुमानागमाः प्रमाणमिति वैशेषिकाः" । (प्र. मी., पृ. ७)
7. "दृष्टमनुमानमाप्तवचनं च सर्वप्रमाणसिद्धत्वात् ।
   त्रिविधं प्रमाणमिष्टम्, प्रमेयसिद्धिः प्रमाणाद्धि" । (सां. त. कौ., का. ४)

(४) उपमानेन सहैतानि त्रीणि चत्वारि, इति अभ्युपगच्छन्ति न्यायशास्त्रविशारदाः[1]।

(५) अर्थापत्त्या सहेमानि पञ्च प्रमाणानि इति प्राभाकराणां प्रमितिः[2] ।

(६) अनुपलब्धिमपि प्रमाणमभ्युपगम्य षट् प्रमाणानि, इति भाट्टमताऽनुयायिनः,[3] अद्वैतवेदान्तिनश्च[4] ।

(७) सम्भव ऐतिह्यं चाऽप्यतिरिक्तं प्रमाणमिति पौराणिकाः प्राहुः[5]।

(८) चेष्टाऽप्यतिरिक्तं प्रमाणमिति तान्त्रिकाः[6]।

(९) प्रत्यक्षं परोक्षमिति द्विविधं प्रमाणम्, तत्र परोक्षं स्मृतिप्रत्यभिज्ञानोहानुमानागमभेदात् पञ्चविधमिति जैनाचार्याः[7]।

**प्रत्यक्षप्रमाणविमर्शः**

साम्प्रतं प्रत्यक्षस्य प्रमाणेषु प्राथम्यात् सर्वैरपि दार्शनिकैस्तस्य प्रमाणतयाऽभ्युपगमाच्च तल्लक्षणं निरूपयितुमुपक्रम्यते ।

इन्द्रियार्थसन्निकर्षजन्या या बुद्धिवृत्तिः (चित्तवृत्तिः) सा, तत्प्रतिबिम्बितं चैतन्यं वा प्रत्यक्षप्रमा, तत्करणं प्रत्यक्षं प्रमाणमित्युच्यते शब्दशास्त्रज्ञैः[8]। तत्राद्यमते इन्द्रियम्, द्वितीयमते वृत्तिः प्रत्यक्षप्रमाणमिति भावः ।

तथा हि–चित्तस्य द्रव्यात्मको वृत्त्याख्यः परिणामो भवति । यथा तडागोदकं छिद्रान्निर्गत्य कुल्यात्मना केदारान् प्रविश्य तद्वदेव चतुष्कोणाद्याकारतां प्रतिपद्यते । तथा तैजसमन्तःकरणम् (चित्तम्) अपि चक्षुरादीन्द्रियप्रणालिकया घटादिविषयदेशं गत्वा घटादिना विषयेण संयुज्य सूक्ष्मावस्थारूपविषयवासनावशात् तत्तद्विषयाकारेण परिणतं भवति । स चायं परिणामो वृत्तिरित्युच्यते । अयं परिणाम आन्तर एव, बौद्धघटादिविषयानुरोधात् । बाह्येन विषयेण सह संयोगस्तु बाह्यविषयतादात्म्यापन्न-

---

1. "प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि" । (न्या. सू., १/१/३)
2. "तत्र पञ्चविधं मानम् इति गुरोर्मतम् । (प्रकरण-प., पृ. ४४)
3. अतः षडेव प्रमाणानि, तथा च भगवद्रामायणे– "राम षड्युक्तयो लोके याभिः सर्वोऽनुदृश्यते" इति । (शा. दी., प्र. पा. सू. अ. ५, पृ. ३४४)
4. न्यायकोशः , पृ. ५५६; वे. प., अनुप. परि. ।
5. न्या. को, पृ. ५५६ ।
6. ता. र., श्लो. ८-११ ।
7. "स्मृतिप्रत्यभिज्ञानेहानुमानागमास्तद्विधयः" । (प्र. मी. १/२/२)
8. ल. म., बौद्धार्थ., पृ. २९८, ३०४-३०५ ।

बौद्धविषयाकारेण परिणामे हेतुः । बाह्यविषयस्याभावे तु बौद्धविषयाकारेणैव परिणामः । स्वप्नाद्यवस्थायां बाह्यविषयाभावेऽपि [1]तत्तदाकारेण परिणामस्य दर्शनात्[2] ।

**भ्रमस्थलेऽपि बौद्धस्यैवारोपरूपः परिणामः**

इदं रजतमित्यादिभ्रमेऽपि ज्ञानाकारस्यैव रजतस्य शुक्त्यादिविषये समारोपः, अयमपि परिणाम एव पर्यवस्यति । सन्निकृष्टमान्तरं ज्ञानाकारं रजतं विहाया-सन्निकृष्टरजतभानेऽनिर्वचनीयरजतोत्पत्तौ वा अप्रामाणिकं गौरवं प्रसज्येत । असन्निकृष्टरजतस्य प्रत्यक्षासम्भवात्, अनिर्वचनीयरजतोत्पत्तौ सामग्र्यभावाच्च । अनिर्वचनीयमेव तदुत्पद्यते इत्यभ्युपगमे तु अक्लृप्तकल्पनम् । बाह्यविषयाभावेऽपि चाकचिक्यादिसाधारणधर्मबलेन चित्तस्य [3]तादृशः परिणामः सुघटः[4] ।

**बौद्धार्थस्वीकारे भाष्यादिसम्मतिः**

"उपदेशेऽजनुनासिक." इति सूत्रे महाभाष्ये 'को देवदत्तः' इति प्रश्ने 'अङ्गदी, कुण्डली व्यूढोरस्कः, वृत्तबाहुरीदृशो देवदत्तः' इति समाहितम् । तत्र 'ईदृशः'

---

1. बहिर्न किञ्चिदप्यस्ति खाद्र्यब्ध्युर्वीदिगादिकम् ।
   एतत्स्वचित्ते एवास्ति पत्रपुञ्जमिवाङ्कुरे ॥
   सत्यं पृथिव्यादि चित्तस्थं न बहिष्ठं कदाचन ।
   आबालमेतत् पुरुषैः सर्वैरेवानुभूयते ॥
   स्वप्नभ्रममदावेगरागरोगादिदृष्टिषु ॥ (यो. वा. ५/४८/५३)
2. ल. म., टीकाद्व., पृ. २४७ ।
3. एकमप्यन्तःकरणं वृत्तिभेदाच्चतुर्विधम् । संशयनिश्चयगर्वस्मरणरूपाश्चतस्रो वृत्तयः । तथा च संशयात्मकं मनः, निश्चयात्मकं बुद्धिः, गर्वात्मकमहङ्कारः, स्मरणात्मकं चित्तम् इत्युच्यते ।
   तदुक्तम्–
   मनो बुद्धिरहङ्कारश्चित्तं करणमान्तरम् ।
   संशयो निश्चयो गर्वः स्मरणं विषया इमे ॥ (वे. प. टी., पृ. ८५ .)
   सांख्यमते तु चित्तमित्यनेन मनो ग्राह्यम् । चित्तस्यानङ्गीकारात् । बुद्धिपरिणामोऽहङ्कार-स्तत्परिणामो मन इति त्रीण्येवान्तःकरणानि एतन्मते ।
4. वै. सि. ल. म., टीकाद्व., पृ. २४७ ।

इत्यनेन एतैः शब्दैर्यादृशोऽर्थो बुद्धौ प्रतिभासते, तादृशो यो बाह्यः स ग्राह्यः। अन्यथा एकस्यां व्यक्तौ भेदाभावादीदृश इत्यस्यासङ्गतिरेव स्यात् । स्पष्टीकृतं चैतत् प्रदीपोद्द्योतादिषु[1] ।

"हेतुमति च" इति सूत्रे भाष्ये ग्रन्थिकेषु कथम्? यत्र शब्दग्रन्थगड्डुमात्रं लक्ष्यते, तेऽपि हि तेषामुत्पत्तिप्रभृत्याविनाशात् तदृद्धीर्व्याचक्षाणाः सतो बुद्धिविषयान् प्रकाशयन्ति इत्युक्त्या स्फुटं बौद्धार्थसत्ता स्वीकृताऽस्ति[2] ।

"परः सन्निकर्षः." इति सूत्रेऽपि 'बुद्धौ कृत्वा सर्वाश्चेष्टाः कर्ता धीरस्तन्वन्नीतिः' इत्यादि वदता भाष्यकृता अयं सिद्धान्तः सम्मानितः[3] ।

एवमेव "स्थानिवदादेशः[4], पङ्क्तिविंशति.[5], तदस्यास्त्यस्मिन्"[6] इत्यादिसूत्रेष्वपि महाभाष्येऽस्य सिद्धान्तस्यानुसरणं कृतमस्ति ।

**शब्दोपहितरूपांस्तु बुद्धेर्विषयतां गतान् ।**
**प्रत्यक्षमिव कंसादीन् साधनत्वेन मन्यते ॥**

इति हर्युक्त्याऽपि एष पक्षः समर्थितोऽस्ति[7] ।

कृत्तद्धितेति सूत्रे समासग्रहणस्य नियामकतासिद्धान्तेन सूत्रकारस्यापि सम्मतोऽयं पक्षः । अन्यथा शशशृङ्गादिशब्दानामनर्थकानामपि प्रातिपदिकसंज्ञायै विध्यर्थमेव समासग्रहणं स्यात्[8] । शशशृङ्गाद्यर्थानामपि अन्तःकरणे वासनासत्त्वे तस्मिन् शब्दे उच्चरिते सति शब्दजनितो बोध एव मानम्, अन्यथा ततो बोधो न स्यात्[9] ।

**उक्तविषये दर्शनान्तरसम्मतिः**

"बुद्धिसिद्धं तु तदसत्" इति सूत्रयता श्रीगौतमेनाप्यनुमोद्यतेऽयं पन्थाः[10] ।

"जन्माद्यस्य यतः" इति सूत्रे श्रीवाचस्पतिमिश्रोऽपि चेतनो हि नामरूपे बुद्धावालिख्य घट इति नाम्ना कम्बुग्रीवादिना रूपेण च बाह्यं घटं निष्पादयति । निर्वर्त्यस्यापि घटस्यान्तःसङ्कल्पात्मना सिद्धस्य कर्मकारकत्वम्, घटं करोतीति प्राह[11]।

---

1. म. भा., प्र. उ. १ अ., ३ पा., २ सू. ।
2. म. भा., ३ अ., १ पा., २६ सू. ।
3. म. भा., १ अ., ४ पा., १०९ सू. ।
4. म. भा., १ अ. १ पा., ५६ सू. ।
5. म. भा., ५ पा., ५९ सू. ।
6. म. भा., ५ अ., २ पा., ९४ सू. ।
7. वा. प., ३/७/५ ।
8. म. भा., १/२/४६ ।
9. ल. म., र. प्र. सहिता, पृ.३१८ ।
10. न्या. द., सू. ४/१/५० ।
11. ब्र. सू., शां. भा. भामती, १ अ., १ पा., २ सू. ।

### बौद्धमतं तन्निरासश्च

न चास्मिन् सिद्धान्ते बौद्धमतप्रवेश इति शङ्क्यम्, तन्मते सर्वं विज्ञानमिति बाह्यविषयन्यासत्वस्वीकारात्[1] । अत्र तु तस्यापि सत्त्वमिति बाह्यसत्त्वबोधनायैव 'घटोऽस्ति' इत्यादिषु 'अस्ति' पदप्रयोगः, तदभावबोधनाय च 'नास्ति' पदप्रयोगः सङ्गच्छते । अन्यथा आन्तरसत्तासम्पन्नस्यैव घटादिपदार्थत्वे व्यर्थ एव अस्त्यादि-पदप्रयोगो भवेत् ।

### वृत्तिस्वरूपनिरूपणम्

सा चेयं चित्तस्य विषयाकारपरिणामरूपा वृत्तिरिन्द्रियेण सहैव । अत एव रसनेन्द्रियगतपित्ताख्यदोषसम्बन्धेन 'गुडः कटुः', नयनगतपित्तयोगेन च 'शङ्खः पीतः' इति प्रतीयते । पीतांशे सा भ्रमरूपा, शङ्खांशे तु प्रमारूपा । सर्वं हि ज्ञानं धर्मिण्य-भ्रान्तम्, प्रकारांशे तु विपर्यय इति सर्वैरभ्युपगमात् । सेयं वृत्तिर्विषयाऽवच्छिन्ने पुरुषे प्रतिबिम्बित[2] इति पुरुषस्य विषयाकारेण विद्यमानवृत्तिग्राहकत्वम् । प्रतिबिम्बोऽपि परिणामविशेष एव, न त्वादर्शादाविव प्रतिबिम्बः, उभयोरपि नीरूपत्वादान्तरत्वाच्च ।

'पीतः शङ्खः' इत्यादौ विशिष्टविषयकज्ञानस्य भ्रमत्वं तु वृत्तिद्वयप्रतिबिम्बित-चैतन्यस्यैकत्वेन सत्यमिथ्यावस्तुनोस्तादात्म्याऽवगाहित्वेनोपपद्यते ।

इयं च वृत्तिरचेतनाऽपि चिदाभाससम्बन्धेन विषयं प्रकाशयति । पुरुषोऽपि बुद्धि-तादात्म्याध्यासेन बुद्धेः कर्तृत्वादिधर्मान् गृह्णानः 'कर्ता' 'भोक्ता' इत्यादिरूपेण व्यवहारभाग् भवति । चिद्रूपपुरुषसम्बन्धेनेयं वृत्तिर्ज्ञानत्वेनोपचर्यते, अयो दहतीतिवत् । स्पष्टं चैतत्सर्वं लघुमञ्जूषायां तट्टीकाद्वये च । क्वचन ग्रन्थे वृत्तौ पुरुषस्य प्रतिबिम्बनं लिखितम्, अत्र तु पुरुषे वृत्तिप्रतिबिम्बनमिति कथमिदं सम्भवतीति न शङ्कनीयम्, अन्योऽन्यतादात्म्याध्यासेनोभयपक्षस्याऽपि समीचीनत्वात् । वस्तुतस्त्वधिष्ठानस्याति-स्वच्छत्वात्, विभुत्वाच्च । अधिष्ठान एवाध्यासो भवितुमर्हतीत्यत्रत्य एव पक्षः समीचीनतर इति निष्कर्षः ।

एवञ्च बाह्यविषयस्थले तत्तादात्म्यापन्नबौद्धविषयस्य, अन्यत्र तु बौद्धस्यैव बुद्धौ समारोपात्मकः परिणामो वृत्तिः सैव प्रत्यक्षप्रमा, तत्करणमिन्द्रियम्, इन्द्रियस्य विषयेण सह संयोगादिः सन्निकर्षो व्यापार इति प्रथमः पक्षः ।

---

1. 'सर्वं विज्ञानं विज्ञानमिति सर्वे पदार्था विज्ञानाकारा एव, न बाह्याः' इति विज्ञानवादिनो बौद्धस्य मतम् ।
2. ल.म. टीकाद्वय. पृ.,३१९-३२२ ।

## प्रत्यक्षप्रमायां मुख्यः पक्षः

वस्तुतस्तु एतां वृत्तिं द्वारीकृत्य घटादिविषयस्य साक्षिरूपे चेतने प्रतिबिम्बनमेव वृत्तिजन्यं फलम् । एतदेव शाब्दिकनये मुख्या प्रत्यक्षप्रमा उद्गीयते । एतदेव पूर्वमीमांसायां प्रकटता इत्युच्यते । एतत्कल्पे एषा वृत्तिरेव प्रमाणम्, अविद्या-निवृत्तिरूप आवरकाज्ञानध्वंस एव व्यापारः[1] । स्पष्टं चैतत् सांख्यदर्शनेऽपि[2] ।

## इदं ज्ञानं प्रत्यक्षमिति व्यवहारे किं प्रयोजकम्?

अन्तःकरणस्य तद्वृत्तेर्विषयाणां च प्रतिबिम्बनाश्रयतया पुरुषः अन्तःकर-णावच्छिन्नः, वृत्त्यवच्छिन्नः, विषयाऽवच्छिन्न इति व्यवह्रियते । अन्तःकरणावच्छिन्नं चैतन्यमेव प्रमातृचैतन्यम् वृत्त्यवच्छिन्नं चैतन्यं प्रमाणचैतन्यमित्युच्यते, विषयावच्छिन्नं चैतन्यञ्च विषयचैतन्यमिति चैतन्यत्रितयस्यावच्छेदकमन्तःकरणादित्रयमुपाधिपदेनापि व्यवह्रियते । तत्रोक्तचैतन्यत्रितयस्य यदुपाधित्रितयं तस्य एककालिकैकदेशस्थित्या त्रयाणामपि चैतन्यानामेकत्वं ज्ञानगतप्रत्यक्षत्वप्रयोजकम्, न तु वृत्तेरिन्द्रियजन्यत्वम्, अनुमितेरपि प्रत्यक्षत्वप्रसङ्गात्, न्यायमते तस्या अपि मनोरूपेन्द्रियजन्यत्वात् । एवं च यत्र विषयेण सह चक्षुरादीन्द्रियस्य संयोगः, तत्रेन्द्रियप्रणालिकयाऽन्तःकरणं विषयदेशे गच्छति, बाह्यविषयतादात्म्यापन्नबौद्धविषयाकारा वृत्तिरन्तःकरणदेश एव इति तत्रैव अन्तःकरणं वृत्तिः सूक्ष्मो विषयश्चेति त्रयाणामुपाधीनामेककाले एकदेशस्थत्वमिति तत्र चैतन्यत्रयस्यैकत्वेन ज्ञानं प्रत्यक्षमिति व्यवहारो भवति[3] । वेदान्तपरिभाषायामपि प्रमाणचैतन्यविषयचैतन्ययोरभेदो ज्ञानगतप्रत्यक्षत्वे प्रयोजक उक्तः[4] ।

## घटादेर्विषयस्य प्रत्यक्षताप्रयोजकम्

तत्र घटादेर्विषयस्य प्रत्यक्षत्वे विषयस्य प्रमात्रभेदः प्रयोजकः । प्रमात्रभेदो नाम प्रमातृसत्ताऽतिरिक्तसत्ताकत्वाभाव एव घटादेः, न तु तदैक्यम् । तथा च घटादेः स्वा-वच्छिन्ने चैतन्येऽध्यस्ततया विषयचैतन्यसत्तैव घटादिसत्ता, अधिष्ठानसत्तातिरिक्ताया

---

1. ल. म., टीकाद्वय., पृ. ३२६ ।
2. सा. त. कौ., कारि. ४, टीका बलरामोदासीनकृता, पृ. ५२-५३ ।
3. ल. म., टीकाद्वय., पृ. ३२७-२८ ।
4. वे. प., प्रत्यक्षपरि., पृ. ४७ ।

आरोपितसत्ताया अनङ्गीकारात् । विषयचैतन्यं चोक्तरीत्या प्रमातृचैतन्यमेवेति प्रमातृसत्तैव घटादिसत्ता, नान्येति घटादेरपरोक्षत्वमीदृशं सम्प्रतिपन्नमिति वेदान्त-सरणिरत्रापि[1] सम्माननीया वैयाकरणैः, अप्रतिषिद्धत्वात् सरण्यन्तरानुक्तेश्च ।

**वृत्तेः प्रत्यक्षत्वम्**

इयं च वृत्तिर्जायमाना सती स्वविषयघटादिविषयकमज्ञानं निवर्त्य स्वविषयं प्रकाश-यन्ती आत्मानमपि प्रकाशयति, न तु तत्प्रत्यक्षाय वृत्त्यन्तरं कल्प्यते, अनवस्थाप्रसङ्गादिति वृत्तेरपि प्रत्यक्षविषयता बोध्या[2] ।

**प्रत्यक्षप्रमालक्षणे महाभाष्यमतम्**

'परोक्षे लिट्' इति सूत्रे महाभाष्यकारोऽपि चित्ताकर्षकव्याख्यानेनोक्तं प्रत्यक्षप्रमाण-लक्षणं समर्थितवान् । तत्र हि–

"अथवा भवति वै कश्चिज्जाग्रदपि वर्तमानकालं नोपलभते, तद्यथा वैयाकरणानां शाकटायनो रथमार्गे आसीनः शकटसार्थं यान्तं नोपलेभे । किं पुनः कारणं जाग्रदपि वर्तमानकालं नोपलभते? मनसा संयुक्तानि इन्द्रियाणि उपलब्धौ कारणानि भवन्ति, मनसोऽसान्निध्यात्"[3] इत्युक्तम् ।

अत्र शकटसार्थस्योपलब्धिः प्रत्यक्षात्मिका बोध्या, तत्कारणभूतस्येन्द्रिय-स्योल्लेखात् । तत्रेन्द्रियस्य मनसा सह संयोगोऽप्यपेक्ष्यते 'मनसा संयुक्तानि' इति कीर्तनात्, अन्वयसहचारप्रदर्शनात् ।

"अन्यमना अभूवं नादर्शम्" इति श्रुतिरपि अत्र संवादिनी[4] । मनसोऽसा-न्निध्यादिति कथनेन तस्य व्यतिरेकसहचारोऽपि प्रदर्शितः । मनसा सह आत्मनः संयोगस्तु सर्वविधज्ञानानां साधारणकारणं स्वीकृत एव । एवमेव इन्द्रियाणां विषयेण

---

1. वे. प., टी. शि. म., पृ. ६५, ६८ ।
2. ल. म., टीकाद्वय., पृ. ३२७-२८ ।
3. म. भा., ३ अ., २ पा., १८ सू. ।
4. बृहदारण्यक. १।५।३ ।

सह संयोगोऽपि हेतुत्वेन स्वीकरणीय एव विषयेण सह सम्बन्धमन्तरा विषय-प्रकाशनासम्भवात् । अक्षं प्रतिगतं प्रत्यक्षमिति विषयबोधकप्रत्यक्षपदव्युत्पत्ति-रप्यत्रानुकूला, अक्षशब्दस्येन्द्रियपरत्वात्[1] ।

**एकस्यामुपलब्धौ एकस्यैवेन्द्रियस्य हेतुत्वम्, अथवा सर्वस्य?**

अथ 'मनसा संयुक्तानि इन्द्रियाण्युपलब्धौ' इत्यत्रेन्द्रियाणि इति बहुवच-नेन्द्रियबहुत्वमायाति, उपलब्धाविति एकवचनेनैकत्वम् । तत्किमेकस्यामुपलब्धौ एकस्यैव इन्द्रियस्य हेतुत्वम्, आहोस्वित् सर्वस्येति जिज्ञासाऽवश्यं जागर्ति इति चेत्, अत्रोच्यते–एकस्यामुपलब्धौ एकस्यैवेन्द्रियस्य प्रवृत्तावपि स्वविषये इतरेन्द्रिया-णामौदासीन्येन (स्वविषयेऽनौन्मुख्येन) सहकारित्वलक्षणं सँव्विधातृत्वरूपं कर्तृत्वं विवक्ष्यते, यदा विषयोपलब्धिरूपक्रियायामिन्द्रियाणां स्वातन्त्र्यविवक्षा, तदा सर्वस्य कर्तृत्वरूपे कारणत्वे 'वयं पश्यामः' इति प्रयोगः । शरीर इवेन्द्रियेष्वपि अहं-बुद्ध्युत्पादाद् वयमित्यनेनेन्द्रियाणामभिधानात् ।

यदा तु पारतन्त्र्यलक्षणं करणत्वं विवक्ष्यते, तदा 'अहं चक्षुषा पश्यामि, कर्णेन शृणोमि' इत्येकवचनान्तप्रयोगः । एवं च सुष्ठु निर्णीतम्, इन्द्रियाणां कर्तृत्वविवक्षायां सर्वेषां जनकत्वम्,करणत्वविवक्षायां तु एकस्यामुपलब्धौ एकस्यैवेति। स्पष्टं चैतत् 'अस्मदो द्वयोश्च' इति सूत्रे भाष्यप्रदीपोद्द्योतेषु [2] । एवं च कारणानि भवन्तीति भाष्ये कारणानि इति पदं यदा कर्तृपरम्, तदा बहुत्वं विवक्षितमेव । करणपरत्वे तु जातिपरत्वेन वैकल्पिकं बहुवचनमिति न तद्विवक्षेति विवेकः ।

**भाष्यमतेऽपि मनसो विषयाकारता**

यद्यपि महाभाष्ये क्वापि मनसो विषयाकारा वृत्तिः शब्दतो नोक्ता, नोच्यते च नैयायिकैरपि इयं प्रक्रिया, तथापि अनुपदमेव भाष्ये उक्तस्य उपलब्धिशब्दस्य उपलभ्यतेऽनयेति व्युत्पत्त्या वृत्तिरूपोऽप्यर्थो भवितुमर्हति, एवं च वृत्तेः प्रमाणत्वपक्षः समर्थितो भवति । तथा हि चित्प्रतिबिम्बनरूपा प्रमा लभ्यत एव । "अपक्रामति

---

1. "अश्नुते विषयमिति अक्षमिन्द्रियम् । अश्नुते अक्ष्णोति व्याप्नोति सकलद्रव्यक्षेत्र-कालभावानिति अक्षो जीवः । प्रतिः प्रतिगतार्थः, अक्षं प्रतिगतं तदाश्रितम्, अक्षाणि चेन्द्रियाणि, तानि प्रतिगतम्, इन्द्रियाण्याश्रित्योज्जिहीते यज्ज्ञानं तत्प्रत्यक्षम् । (प्र. मी., पृ. ७ ) "प्रतिगतमक्षमिन्द्रियं प्रत्यक्षम्" इति बौद्धमतम् । (षड्दर्शनसमुच्चयः– १।१० पृ. २८)
2. म. भा., प्र. उ., १ अ., २ पा., ५९ सू. ।

तत्तस्माद् दर्शनम्" इति, भाष्ये दर्शनशब्दस्य वृत्तिरूपोऽर्थः स्फुटं व्याख्यातोऽपि श्रीनागोजिभट्टैः[1] । ध्वनितं चैतत्– अवश्यमत्र कश्चित् स्वकृतान्त आस्थेय इत्यनया स्त्रियामिति सूत्रे भाष्योक्त्याऽपि[2] । तत्र हि उद्द्योते स्वशास्त्रस्य सांख्यशास्त्रानुसारित्वसूचनं भाष्यकारस्येत्युक्तम् । सांख्यशास्त्रे तु मनसो विषयाकारः परिणामो वृत्तिरूपोऽभ्युपगम्यत एव । योगदर्शनेऽपि वृत्तिर्मनः परिणामरूपाऽङ्गीकृतैव । अत एव "वृत्तिसारूप्यमितरत्र"[3] इति सूत्रं सङ्गच्छते ।

यद्यपि पातञ्जलमतेऽन्तःकरणं व्यापकमिति तस्य सर्वैर्ज्ञानेन्द्रियैः सह युगपदेव संयोगे सति तैः सह विषयसंयोगे सति युगपदेव चाक्षुषरासनस्पार्शनादिज्ञानं स्यादित्यापत्तिः सम्भवति, तथापि ज्ञानयौगपद्याभावरूपफलबलेन अन्तःकरणपरिणामविशेषो मनश्चिरस्थायि मध्यमपरिमाणं सङ्कोचविकासशालि ज्ञानकारणमिति कल्पनीयम्[4] । एवं च मनसो मध्यमपरिमाणरूपतादृशद्रव्यतया घटादिविषयाकारता सम्भवति । 'सतो बुद्धिविषयान् प्रकाशयन्ति' इत्युक्त्या[5] भाष्यकृतापि घटादौ बुद्धेर्विषयीभावस्तदाकारः परिणामविशेष एवेति सूचितम् ।

**सूत्रकृन्मतेऽपि अन्तःकरणपरिणामो वृत्तिः**

**आत्मा बुद्ध्या समेत्यार्थान् मनो युङ्क्ते विवक्षया ।**
**मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ॥** इति ।

पाणिनीयशिक्षोक्त्या[6] अन्तःकरणस्य परिणामविशेषो वृत्तिरिति सूचितम् । तत्र हि "आत्माऽन्तःकरणं बुद्ध्या स्ववृत्त्या समेत्य अर्थान् विषयान् (घटादीन्) विवक्षया तान् बोधयितुमिच्छया मनो युङ्क्ते, संयुनक्ति" इत्यर्थः श्रीनागेशादिसम्मतः[7] । अत्र बुद्धिरन्तःकरणस्य वृत्तिरिति स्पष्टमेव व्याख्यातम् । सा च वृत्तिर्विषयाकारः परिणाम एव भवितुमर्हति, अन्यादृश्या असम्भवात् । अत्रात्मा अन्तःकरणं तच्च

---

1. म. भा., उ., २ अ., ३ पा., २८ सू., पृ. २९१ ।
2. म. भा., ४ अ., १ पा., २ सू. ।
3. यो. द., १ अ., १ पा., ३ सू. ।
4. म. भा. उ., ३ अ., २ पा., ११५ सू., पृ. २५४ ।
5. म. भा., ३ अ., १ पा., २ आ., २६ सू. ।
6. पा. शि., श्लो. ६ ।
7. ल. श. शे., चिदं. टीका च, संज्ञाप्रक. ।

बुद्धितत्त्वमेव, तस्य विषयाकारा वृत्तिः, पश्चाच्चार्थान् विवक्षया मनो युङ्क्ते इत्यनेन मनसोऽपि तदाकारा वृत्तिरित्युक्तप्रायम् । अनेन शिक्षाग्रन्थेन सूत्रकारस्यापि सांख्यशास्त्रानुसारित्वं ध्वनितम् । तन्मते हि बुद्धिमनसोः पार्थक्यात् ।

### वेदान्तनये वृत्तिस्वरूपम्, शाब्दिकनये तन्निरासश्च

अद्वैतमते यद्यपि वृत्तिप्रक्रिया अस्ति, तथापि पूर्वक्षणे बुद्धिरूपम् अन्तःकरणं मनसा समेति तदुत्तरे क्षणे अहङ्कारेण इत्यादिः क्रमो नास्ति ।

### वेदान्तमते वृत्तिरूपज्ञानम्

वृत्तिरूपज्ञानं मनसो धर्म इत्युच्यते, तत्र च–"कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मनः" इति श्रुतिर्मानम् । धीशब्देन चात्र वृत्तिरूपज्ञानमभिधीयते[1] । एतन्मते हि अन्तःकरणं सावयवं सादिद्रव्यत्वात्, सादित्त्वं च तस्य "तन्मनोऽसृजत" इति श्रुत्या बोधितम्[2] । अन्तःकरणं चैतच्चतुर्विधम्–

**मनो बुद्धिरहङ्कारश्चित्तं करणमान्तरम् ।**
**संशयो निश्चयो गर्वः स्मरणं विषया इमे**[3] ॥ इति ।

तत्र च संशयात्मकं मनः, निश्चयात्मिका बुद्धिः, गर्वात्मकोऽहङ्कारः, स्मरणात्मकं चित्तमिति । एवं च यत्र पर्वतो वह्निमान् न वेति संशयो विद्यते, तत्र वह्न्यंशे संशयात्मिका मनसो वृत्तिः । एवं निश्चयात्मिका वृत्तिस्तु बुद्धेरनुमितिरूपा, स्मरणात्मिका चित्तस्य व्याप्तिस्मृतिरूपा, गर्वात्मिका अहमेव वह्निं जानामि, नान्य इत्येवंरूपा अहङ्कारस्येति । तन्मतेऽन्तःकरणस्येन्द्रियेण संयोगः, तस्य च विषयेण । तत्र विषयदेशे इन्द्रियप्रणालिकयाऽन्तःकरणस्यागमनम्, तस्य विषयाकारा वृत्तिरिति विवेकः । स चायं प्रकारः शब्दशास्त्रविद्भिर्न समाद्रियते । "मनसा संयुक्तानि इन्द्रियाणि" इति भाष्यस्वारस्येन इन्द्रियसहकृतस्यैव मनसो विषयाकारा परिणतिः[4] आत्माद्यान्तरविषयप्रत्यक्षे तु केवलस्याऽपि मनस इति सिद्धान्तात् ।

### शाब्दिकमते प्रत्यक्षज्ञानोत्पत्तिप्रकारः

आत्मना बुद्धिः संयुज्यते, बुद्ध्या सहाहङ्कारः ततस्तेन मनः, तेन च सहेन्द्रियाणि, तैश्च सह विषय इति पञ्चमक्षणे प्रत्यक्षात्मकज्ञानोत्पत्तिः ।

---

1. वे. प., टीकाद्वयोपेता, प्र. प., पृ. ३८ ।
2. वे. प., टी. द्व., पृ. ३७ ।
3. वे. प., प्र. प., पृ. ५३ ।
4. म. भा., ३/२/११५ । ल. म., र. प्र. टीका, बौद्धार्थ., पृ. २९८ ।

अयं भावः–बुद्धिमारभ्य विषयं यावद् संयोगे चत्वारः क्षणा उपयोक्ष्यन्ते । आत्मनस्तु विभुत्वेनाहङ्कारादिना सह बुद्धेः संयोगक्षण एव संयोग इति न स्वतन्त्रकालापेक्षा, अतः पञ्चमे क्षणे प्रत्यक्षोत्पत्तिः । इयमेव प्रक्रिया योगदर्शनेऽपि सम्मताऽस्ति[1] ।

यद्यपि वाक्यपदीयटीकाकृता श्रीहेलाराजेन 'आत्मेन्द्रियार्थमनोऽर्थसन्निकर्षात् प्रत्यक्षं भवतीत्युक्तम्[2] । तत्र स्फुटं क्रमो न निर्दिष्टः, तथापि उपरिनिर्दिष्टः क्रमस्तेनाऽप्यादृत एव । अक्रमेण ज्ञानोत्पादाननुभवात् । मनःपदस्य बुद्ध्यहङ्कार-योश्चाप्युपलक्षणत्वाच्च । बुद्धेरुपयोगं ज्ञानोत्पत्तौ प्रदीपकृत्कैयटोऽप्याह–"वक्ष्य-माणस्य बुद्ध्या प्रत्यक्षीकृत्य परामर्शः"[3] इति । क्रमवत्ता श्रीनागेशभट्टेनाऽपि समर्थिता[4] । उक्तहेलाराजवाक्ये प्रत्यक्षे अर्थपदस्य द्विरुक्त्या इन्द्रियविशिष्टस्यैव मनसो विषयाकारा वृत्तिरित्यपि सूच्यते ।

**सांख्यदर्शने प्रत्यक्षात्मकज्ञानोत्पत्तिक्रमः**

सांख्याशास्त्रेऽपि उक्त एव क्रम आद्रियते । तत्र हि – बाह्येन्द्रियाणि विषयमालोच्य मनसे समर्पयन्ति, मनश्च सङ्कल्प्य अहङ्काराय, अहङ्कारश्चाभिमत्य सर्वाध्यक्षभूतायां बुद्धौ समर्पयति, बुद्धिस्तु पुरुषसन्निधानात्तच्छायापत्त्या तद्रूपेव सर्वविषयोपभोगं पुरुषस्य साधयति । सुखदुःखाऽनुभवो हि भोगः, स च बुद्धौ, बुद्धिश्च पुरुषप्रतिबिम्बात् पुरुषरूपेति पुरुषमुपभोजयति ।

यथार्थालोचनाभिमानसङ्कल्पास्तत्तद्रूपपरिणामेन बुद्धावुपसङ्क्रान्ताः, तथेन्द्रिय-व्यापारा अपि बुद्धेरेवाध्यवसायात्मकव्यापारेण सहैकव्यापारीभवन्ति इति बुद्धेः स्वव्यापारेण पुरुषस्य भोगसाधनत्वमिति निर्णीतम्[1] ।

इयान् विशेषः – चतुर्विधस्य बुद्ध्यादिकरणस्य युगपदपि व्यापारः कदाचन भवति । यथा सन्तमसे विद्युत्प्रकाशे व्याघ्रमभिमुखं यदा पश्यति, तदा बुद्ध्यादीनां संयोगा एकस्मिन्नेव क्षणे, लोचनसङ्कल्पाभिमानाध्यवसाया अपि द्वितीय एव क्षणे

---

1. यो. द., १/३६ सू. । स्वा. नारा. भा., पृ. १४१ ।
2. वा. प., तृ. का., साधनसमु., हे. टी., श्लो. १२ ।
3. म. भा., प्र., ७ अ.,३ पा., ४४ सू., पृ. १९८ ।
4. म. भा., उ. "यद्वा प्रत्यक्षस्थले किञ्चिदंशे दृष्टक्रमस्यात्रारोपेण क्रमवत्त्वाभिमानः" इति भाव इति । (५ अ., ३ पा., १ आ., ७४ सू., पृ. ४७७)
5. सां. त. कौ., कारि. ३६-३७, पृ. १९७-९८ ।

भवन्ति । अवधानदशायां क्रमशोऽपि व्यापारा भवन्ति, तदानीं तु पञ्चमे क्षणे विषयालोचनम्, अष्टमक्षणे बुद्धेरध्यवसाय इति बोध्यम्[1] ।

**न्यायनये प्रत्यक्षज्ञानोत्पत्तिक्रमः**

न्यायनये तु प्रथमक्षणे आत्ममनःसंयोगः, मन इन्द्रियसंयोगश्च, तत इन्द्रिय-विषयसंयोग इति तृतीयक्षणे प्रत्यक्षमुत्पद्यत इति क्रमः प्रसिद्धः[2] । तन्मते मनसो विषयाकारः परिणामो नाङ्गीक्रियते, मनसः परमाणुरूपनित्यद्रव्यत्वेन[3] परिणामा-सम्भवात् । बुद्धेश्च ज्ञानरूपगुणत्वेन[4] तदसम्भवात् ।

**उक्तविषये निष्कर्षः**

शब्दशास्त्रविद्भिर्यद्यपि सांख्यसरणिरत्र समाश्रिता, तथापि न सर्वांशे; अपि तु क्वचिदंश एव । यथा अतिस्वच्छे बुद्धितत्त्वे बाह्यविषयाणां घटादीनां प्रतिबिम्ब आदर्शादाविव भवतीति सांख्यशास्त्रे उच्यते[5] । शब्दशास्त्रे तु बौद्धपदार्थस्वीकारेण बाह्यविषयतादात्म्यापन्नस्य तस्यैवाकारो बुद्धौ, न तु प्रतिबिम्बः, उभयोरपि नीरूपत्वात्, आन्तरत्वाच्च[6] । मनसो नित्यद्रव्यत्वं वदन् न्यायशास्त्रं तु 'तन्म-नोऽसृजत' इति श्रुतिविरुद्धत्वात् सूत्रभाष्यविरुद्धत्वाच्च नादृतमत्र विषये ।

अद्वैतवेदान्तनये इन्द्रियप्रणालिकयान्तःकरणस्य विषयदेशगमनम्, ततो विषया-कारा वृत्तिः, तत आवरणध्वंसः, ततो वृत्तौ चेतनप्रतिबिम्बनं चतुर्थे क्षण इति प्रकारः प्रसिद्धः[7] । सोऽप्यत्र शास्त्रेऽनादृत एव, बौद्धपदार्थ एव निर्भरात् ।

## इन्द्रियाणां प्राप्यकारित्वाप्राप्यकारित्वविमर्शः

**अत्र शाब्दिकसिद्धान्तः**

अथैतस्मिन् प्रत्यक्षे इन्द्रियस्य विषयेण सह संयोगो हेतुतयोक्तः । तत्रेन्द्रियं विषयदेशं गत्वा विषयेण संयुज्य तं प्रकाशयति, अथवा विषयस्यैवेन्द्रियदेशे आगमने सति तेन संयुज्य तं प्रकाशयतीति जिज्ञासायां प्रोच्यते– चक्षुरिन्द्रियं विषयदेशं गत्वैव

---

1. सां. त. कौ., कारि. ३०, पृ. १८६-८७ ।
2. न्या. द., वा. भा. १।१।४ ।
3. त. स., प्रत्य. ख. ।
4. न्या. द., अ. १, सू. १५ ।
5. सा. त. कौ., कारि. ४, टीका, पृ. ५२ ।
6. ल. म., बौद्धार्थ., पृ. २९८, र. प्र. टीकायुता ।
7. वे. प., प्र. परि., पृ. ४७ ।

विषयेण संयुज्य तं प्रकाशयति । उक्तं च भाष्यकृता—अपक्रामति तत्तस्माद्दर्शनमिति[1] । अत्र प्रदीपः – "दर्शनं चक्षुरिन्द्रियं तेजोरूपं प्राप्य विषयग्राहित्वात् प्रासाददेशादपक्रम्य विषयं गच्छतीत्यर्थः[2]" इति । अत्रोद्योतः – "दर्शनं चक्षुरिति करणे ल्युडिति भावः । तेजोरूपमिति अपक्रमणसामर्थ्यमनेन दर्शितम् । विषयग्राहिणो नयनरश्मयः सूर्यरश्मिवत् प्रासाददेशस्थपुरुषनयनादपक्रम्य यावद् विषयदेशं गच्छन्तीत्यर्थः"[3] इति ।

**चक्षुषः प्राप्यकारित्वे वाक्यपदीयमतम्**

आचार्यभर्तृहरिणा वाक्यपदीये ब्रह्मकाण्ड उक्तम्—

> **चक्षुषः प्राप्यकारित्वे तेजसा तु द्वयोरपि ।**
> **विषयेन्द्रिययोरिष्टः संस्कारः स क्रमो ध्वनेः**[4] ॥ इति ।

अत्र तेजसा दीपादिना चक्षुषः संस्कारे प्राप्यकारित्वं कारणमुक्तम् । यतो हि सन्तमसे स्थितोऽपि पुरुष आलोकानुगृहीतेन चक्षुषा आलोकानुगृहीतं घटादिविषयं पश्यति । यदि चक्षुरिन्द्रियं प्राप्यकारि न स्यात्, तर्हि तस्य दृष्टपुरुषनयनगोलकस्थतया इदानीमालोकानुग्रहाभावात् कथं बाह्यं विषयं पश्येत्? आलोके स्थितोऽपि पुरुषोऽन्धकारे स्थितं घटादिविषयं न पश्यतीति तेजसा विषयस्यापि संस्कारः ।

**सर्वेन्द्रियाणां प्राप्यकारित्वे श्रीनागेशसम्मतिः**

श्रीनागेशभट्टेन सांख्यमतमनुसृत्य आकाशाधिष्ठानक आहङ्कारिको धर्मविशेषः श्रोत्रेन्द्रियमित्युक्तम् । तदैकरूप्याय घ्राणादीनीन्द्रियाण्यपि पृथ्वीजलतेजोवाय्वधिष्ठानकानि आहङ्कारिकाण्येव स्वीकृतानि । अहङ्कारस्यान्तःकरणपरिणामत्वादन्तःकरणस्य चाधुनापि बहुदूरदेशगमनानुभवेन तद्विकाराहङ्कारविकाराणां सर्वेषामिन्द्रियाणां तत्सम्भवेन प्राप्यकारित्वाभ्युपगमात् । पृथिव्यादिविकाराणां तावद्दूरदेशगमनं नैव सम्भवति ।

एवं चेदं श्रोत्रमेव चित्तवृत्तिसहकृतं स्ववृत्तिपरम्परया (स्वस्य इन्द्रियस्य वृत्तिः सन्निकर्षस्तस्य परम्परया) शब्ददेशमागत्य शब्दं गृह्णाति । अत एव ग्रामान्तरीयः शब्दो मया श्रुत इत्याद्यनुभवोऽपि सार्वजनीनः सङ्गच्छते[5] ।

---

1. म. भा. २।३ ।२८ ।
2. म. भा., प्र. २।३।२८ ।
3. म. भा., उ. २।३।२८।
4. वा. प. १।८१ ।
5. वै. सि. ल. म., टीकाद्व., पृ. २०७ ।

## उक्तविषये मतान्तरम्

अणवः सर्वशक्तयः सर्वं देशं व्याप्नुवन्तीति पृथिव्यादिपरमाणूनां तत्तदिन्द्रियस्य तत्तद्विषयबोधनकाले विषयदेशपर्यन्तं तत्तदिन्द्रियरूपेण परिणाम इति तत्तद्देशे प्रत्यक्षानुभवः । अथैतस्मिन् मतेऽसन्निकृष्टस्यापि विषयस्य प्रत्यक्षं स्यादिति न शङ्कनीयम्, विषयदेशं यावदेव इन्द्रियरूपेण अणूनां परिणामात् । अस्मिन् मतेऽपि प्राप्यकारित्वमेव सर्वेन्द्रियाणामुपवर्णितं श्रीनागेशेन[1] । "अणवः सर्वशक्तित्वाद् भेदसंसर्गवृत्तयः" इत्युक्त्या श्रीहरिसम्मतोऽप्ययं पक्षः सम्भाव्यते[2] ।

## श्रोत्रेन्द्रियस्याप्राप्यकारित्वे भाष्यमतम्

श्रोत्रोपलब्धिर्बुद्धिनिर्ग्राह्यः प्रयोगेणाभिज्वलित आकाशदेशः शब्दः, एकं च पुनराकाशमिति महाभाष्ये[3] श्रोत्र एवोपलब्धिर्यस्येत्यर्थिकया श्रोत्रोपलब्धिरित्युक्त्या शब्दस्याकाशदेशत्वबोधने हेतुता सूचिता । एवं च दिगादीनां श्रोत्रत्वनिरासपूर्वकं कर्णशष्कुल्यवच्छिन्ननभःप्रदेशविशेषस्यैव श्रोत्रेन्द्रियत्वमभिमतं भाष्यकृतामित्यायाति[4] ।

तत्र श्रोत्रेन्द्रियं यद्यसम्बद्धमेव शब्दं गृह्णीयात्, तर्हि काशीस्थोऽपि जनो रामेश्वरादिप्रदेशाऽवच्छिन्नं शब्दं कुतो न गृह्णीयात् ? सम्बद्धशब्दग्रहणेऽपि श्रोत्रस्य शब्दे देशे शब्दस्य च श्रोत्रदेशे निष्क्रियत्वाद् गमनासम्भवेन सम्बन्धो न सम्भवत्येवेति चेत्, अत्रोच्यते–श्रोत्रेन्द्रियस्य भाष्यसम्मतमप्राप्यकारित्वमेव मन्तव्यं शाब्दिकैः । अनुसृतं च श्रीकैयटेन इदमेव मतम्[5] । श्रीनागेशेनापि लघुमञ्जूषायां बहुषु स्थलेषु अयमेव पक्षः सिद्धान्तरूपेणानुसृतः कर्णशष्कुल्यवच्छिन्ननभस एव श्रोत्रत्वेन तादृशश्रोत्रं स्वदेशे समुत्पन्नं शब्दं ध्वन्यात्मकं गृह्णातीत्यादिकथनेन[6] । यद्यप्यत्र पक्षे तादृशश्रोत्रस्य नित्यतया नाशासम्भवेन कस्यचिदपि बाधिर्यं न सम्भवतीत्यापद्यते, तथापि धर्मविशेषविशिष्टस्य तादृशाकाशस्य श्रोत्रत्वमिति रोगादिना तस्य धर्मस्या-

---

1. ल. म., टीकाद्वय., पृ. २०८ ।
2. वा. प. १।११० ।
3. म. भा. १ अ., १ पा., २ आ., "अइउण्" सूत्रे ।
4. म. भा., प्र. उ. तत्रैव ।
5. आकाशप्रदेशविशेषस्य श्रोत्रत्वात् । (म. भा., प्र. १ अ., १ पा., २ आ., पृ. ९५)
6. ल. म., टीकाद्वय., पृ. २०१ ।

भिभवः, औषधादिना च तस्योद्भव इति स्वीकारेणोक्तदोषो निरस्तो वेदितव्यः । सांख्यशास्त्रानुसारित्वं तु न समीचीनम्, अनन्तश्रोत्रसन्निकर्षकल्पनापत्त्या गौरवात् । आणविकत्वपक्षोऽपि न समीचीनः, अनन्तपरमाणुपरिणामकल्पनायामतिगौरवात्[1] ।

**अत्र शाब्दिकानां सिद्धान्तः**

एवं च चक्षुरिन्द्रियं विहायान्यानि ज्ञानेन्द्रियाणि श्रोत्रवदप्राप्यकारीण्येव । न हि आपणस्थमोदकस्य चाक्षुषवद् विशेषतो रासनघ्राणजस्पार्शनप्रत्यक्षाण्यपि दूरतः कर्तुं प्रभवति निपुणोऽपि कश्चिदिति शब्दशास्त्रनिष्कर्षः ।

ग्रामान्तरीयः शब्दो मया श्रुत इत्यनुभवोऽपि अभिव्यक्तिवादे न विरुध्यते । शब्दस्याभिव्यक्तिरेव दूरदेशं व्याप्नोति, नोत्पत्तिरिति स्वीकारेणादोषात् ।

यद्यपि शाब्दिकस्य सांख्यशास्त्रानुसारित्वं भाष्यकृता सूचितमस्ति, तथाऽपि सर्ववेदपारिषदं हीदं शास्त्रमिति भाष्योक्त्यैव यथाऽवसरं तत्तत्सिद्धान्तानुसरणास्यानुज्ञातत्वेनेदृशाचरणेऽपि न क्षतिरिति भावः । आहङ्कारिकाणि इन्द्रियाणि इति मतेऽपि – इत्युक्त्वा[2] तन्मते दोषं परिहरता श्रीनागेशेनेन्द्रियविषये सांख्यमतस्वीकारेऽपि शब्दशास्त्रसिद्धान्ते न क्षतिरित्यपि सूचितम् । अत एव मनसो विषये तेन न्यायमतमनादृत्य योगशास्त्रसम्मतिः स्वीकृता[3] ।

**उक्तविषये मतान्तराणि**

इन्द्रियाणां प्राप्यकारित्वमेव सिद्धान्तितं न्यायदर्शने । तत्र प्राप्य विषयेण संयुज्येन्द्रियेण क्रियते ज्ञानमित्येव तात्पर्यम्, न तु विषयदेशगमने । चक्षुष एव तैजसत्वेन तत्र सामर्थ्यात्[4] । वैशेषिकदर्शनेऽपीयमेव रीतिः समादृताऽस्ति[5] । सांख्यशास्त्रेऽपि प्राप्यकारित्वमेव सम्मानितम्, किन्तु समेषामिन्द्रियाणां विषयदेशं प्राप्य विषयबोधकता प्रतिपादिता[6] ।

---

1. ल. म., टीकाद्वय, पृ. २११ ।
2. म. भा., उ., १ अ., १ पा., २ आ. ।
3. म. भा., उ., ३ अ., २ पा., २ आ., सू. ११८ ।
4. (क) न्या. म., अष्टमाह्निके पृ. ४९ (भौतिकत्वेऽपीन्द्रियाणां प्राप्यकारित्वम्, संयुज्यकारित्वमिति भावः) ।
   (ख) न्या. सू. ३।१।३३-५३ ।
   (ग) न्या. वा., पृ. ३६ ।
5. कन्दली, पृ. २३ ।
6. (क) न्या. म., अष्टमाह्निकम्, पृ. ४९ ।
   (ख) सां. सू. १।८७।३, अत्रेयं प्रक्रिया–इन्द्रियप्रणालिकयाऽर्थसन्निकर्षेण लिङ्गज्ञानादिना वा आदौ बुद्धौ अर्थाकारा वृत्तिर्जायते । (सां. प्र. भा., पृ. ४७)

योगदर्शनेऽपि सांख्यदर्शनवद् विषयदेशं प्राप्यैव तज्ज्ञापकतेत्येव सिद्धान्तः[1] ।

पूर्वोत्तरमीमांसाभ्यामप्ययं पूर्वोक्त एव सिद्धान्तः स्वायत्तीकृतोऽस्ति[2] । एतेषु सांख्ययोगवेदान्तानां नये मनसोऽपि प्राप्यकारित्वमिति राद्धान्तः[3] ।

जैनदर्शने तु चक्षुरतिरिक्तानि चत्वारि घ्राणरसनत्वक्श्रोत्राणि बाह्येन्द्रियाणि प्राप्यकारीणि, मनस्त्वप्राप्यकारि. इति पक्षः समर्थितः[4] । आचार्यहेमचन्द्रेण काचादि-व्यवहितस्याऽपि पदार्थस्य चक्षुषोपलब्ध्या अस्य अप्राप्यकारित्वं साधितम् ।

बौद्धदर्शने तु घ्राणरसनस्पर्शनानि त्रीण्येवेन्द्रियाणि प्राप्यकारीणि, चक्षुःश्रोत्रे त्वप्राप्यकारिणी । मनोऽपि अप्राप्यकार्येवेति पन्थाः समाश्रितः[5] ।

आचार्यदिङ्नागेनैतन्मतमित्थं समर्थितम् – चक्षुःश्रोत्रे यदि विषयं प्राप्य गृह्णीतः, तदा यदिदं दूरे शब्दः, दूरेऽर्थ इति व्यवहितग्रहणं तन्न स्यात्, न स्याच्च अधिकपरिमाणानां पर्वतादीनां ग्रहणम्, प्राप्यकारिषु त्वग्रसनादिषु अस्य नियम-स्यादर्शनादिति[6]। व्यवहितस्य अधिकपरिमाणस्य च ग्रहणाननुभवात् ।

---

1. विषयैश्चित्तसंयोगाद् बुद्धीन्द्रियप्रणालिकात् ॥
   प्रत्यक्षं साम्प्रतं ज्ञानं   विशेषस्यावधारकम् ॥ (योगकारिका. २३।४ )
   "इन्द्रियप्रणालिकयां बाह्यवस्तूपरागात् सामान्यविशेषात्मनोऽर्थस्य विशेषावधारणप्रधाना वृत्तिः प्रत्यक्षम्" । (योगद., व्या. भा., पृ. २७; यो. भा., स्वामिनारा. १ अ., १ पा., ३६ सू.)
2. (क) शाबरभा., १ अ., १ पा., १३ सू. ।
   (ख) वे. प., टीकाद्वय., पृ. ४९ । (यदि इन्द्रियप्रणाली विषयदेशं यावन्न स्यात् तदाऽन्तः-करणस्य तत्पर्यन्तं गमनं न सम्भवेदिति भावः) ।
3. (क) सा. त. कौ., पृ. ५१-५२ ।
   (ख) योगभाष्यम्– १।७ ।
   (ग) वे. प., टीकाद्वय., पृ. ४९ ।
4. (क) आव. नि. ५ ।
   (ख) तत्त्वार्थ. सू. १।१९ ।
5. "अप्राप्तान्यक्षिमनःश्रोत्राणि त्रयमन्यथा" । (अभिधर्म. २।४३ )
6. प्रमाणसमु., पृ. १०१ ।

## चक्षुषोऽप्राप्यकारित्वनिरासे शाब्दिकानां मतम्

यथा दीपप्रभा दीपरूपस्वाधिष्ठानासम्बद्धस्याऽपि विषयस्य (दूरस्थघटादेः) प्रकाशं करोति । तत्र प्रभाप्रकाशयोः सामानाधिकरण्यमावश्यकम् । कार्यकारणयोः सामानाधिकरण्यमन्तरा करणस्य कार्योत्पादनासम्भवादिति दीपप्रभा प्राप्यैव विषयं प्रकाशयति । तथैव गोलकरूपाधिष्ठानेनासम्बद्धोऽपि पृथुतरोऽपि विषयो गोलक-निर्गतेन नयनेन पृथ्वग्रतया सङ्कोचविकासशालितया च प्रकाश्यते[1]।

## उक्तविषये न्यायदर्शनसम्मतिः

श्रीजयन्तभट्टा न्यायमञ्जर्यां चक्षुषः प्राप्यकारित्वमित्थं न्यरूपयन्–तेजसः प्रसर-णात् चक्षुषः प्राप्यकारिता । यद्यपि प्रत्यक्षेण नायनं तेजो नोपलभ्यते, तथापि पदार्था न खलु प्रत्यक्षैकशरणाः, अनुमानादिभिरपि एषामुपलब्धिः सम्भवत्येव । काचादीनां केषाञ्चिदतिस्वच्छतया केषाञ्चिच्च सच्छिद्रत्वात् चाक्षुषतेजःप्रसरस्य निरोधः कर्तुं न शक्यते । यथा भर्जनकपालादौ तेजःप्रसरस्यानिरोधोऽनुभूयते, तद्वत्[2] । अय-स्कान्तमणेरपि सामर्थ्यं यावति सन्निकर्षे कार्याय प्रभवति, तावान् सन्निकर्षोऽपेक्ष्यत एव। व्यवहितस्य ग्रहणे कुड्यादिव्यवहितमपि कथं न गृह्यते ?

## भौतिकत्ववादेऽपि प्राप्यकारित्वमित्यत्र न्यायशास्त्रम्

यच्चोच्यते–भौतिका (भूतविकाराः) दीपादयः परं प्रकाशयन्त आत्मानमपि प्रकाशयन्ति, न चैतदिन्द्रियेष्विति इन्द्रियाणां न भौतिकत्वं भूतत्वं वा; अपि तु आहङ्कारिकत्वमेवेति । तदपि न, भौतिकत्वपक्षेऽपि न हि गोलकमेव चक्षुः; अपि तु तदधिष्ठानकं तेजस्तत्त्वम् । तत्र चास्मदादिनयनरश्मिसमवेतं रूपमनुद्भूतमिति प्रत्यक्षीकर्तुं न शक्यते । विडालव्याघ्रसिंहादीनां चाक्षुषं तेजो भास्वररूपं दूरमपि प्रसरत् प्रत्यक्षीक्रियत एव । किञ्च, महदणुग्रहणान्न भौतिकत्वमित्यपि न विचार-सहम्, ईदृशकार्यदर्शनेन तत्र सङ्कोचविकासशालित्वस्यानुमानात्[3] ।

उक्तं च महर्षिगौतमेनाऽपि–दृष्टानुमितानां पदार्थानां विधिः प्रतिषेधो वा कर्तुं न शक्यते, तद्विषयकस्य प्रमाणस्य विद्यमानत्वादित्यर्थकेन "दृष्टानुमितानां हि नियोग-प्रतिषेधानुपपत्तिः, प्रमाणस्य तत्त्वविषयत्वात्" इति[4] सूत्रेणेति निःसन्देहं चक्षुषः प्राप्यकारित्वम् ।

---

1. वै. सि. ल. म., र. प्र. युता, टिप्पणम्, पृ. १७२ ।
2. न्या. म., ८ आ., पृ. ४९।
3. न्या. म., ८ आ., पृ. ४९, ५२ ।
4. गौ. सू., ३ अ., १ पा., ५३ सू. ।

### चक्षुषः प्राप्यकारित्वे आधुनिकानां शङ्का तत्परिहारश्च

चक्षुषः प्राप्यकारित्वमते अधुनातना बहवो विद्वांस आक्षिपन्ति–सूर्यमण्डलप्रत्यक्ष-काले मध्येमार्गं स्थितानां ग्रहादीनामपि चाक्षुषं कुतो न ? यदि चक्षुः प्राप्य विषयं गृह्णातीति । अत्रोच्यते–अल्पपरिमाणत्वेन दूरत्वदोषेण च तेषां चाक्षुषं न भवति, सूर्यमण्डलस्य तु दूरत्वदोषे सत्यपि परिमाणबाहुल्यात् चाक्षुषं जायत एव । अनुभूयते च सर्वैः पञ्चषपदपरिच्छिन्नेऽपि देशे दूरस्थितानां सूच्यादीनामप्रत्यक्षम्, दूरस्थितानामपि घटादीनां प्रत्यक्षम् । तत्र को हेतुः ? तद्गतपरिमाणाल्पत्वमहत्त्व एव ।

यदि तु तत्रैव स्थितानां सूच्यादीनां स्वल्पपरिमाणानामपि प्रत्यक्षमुपनेत्रोपकृतेन चक्षुषा भवतीति ब्रूषे, तदोपनेत्रविशेषोपकृतेन यन्त्रविशेषोपकृतेन वा चक्षुषाऽन्तरिक्ष-स्थितानामपि अल्पपरिमाणानां ग्रहादीनां प्रत्यक्षं भवत्येव । स्पष्टं चेदं परमाराध्य-श्रीगुरुचरणैः कृतायां वाक्यपदीयब्रह्मकाण्डटीकायामम्बाकर्त्र्याम्[1] ।

### प्राप्यकारित्वमतेऽन्धत्वप्रसक्तिनिरासः

नन्वस्मिन् प्राप्यकारित्वमते चक्षुषो विषयदेशे गमने सति प्राणिनामन्धत्वं प्रसज्यते, चक्षुषोऽभावादिति चेत्, न, चक्षुषो विषयेण सह यः सन्निकर्षस्तस्य सन्ततत्वमिति भाष्यसिद्धान्तस्य पूर्वमुल्लिखितत्वात्[2] । श्रीवाचस्पतिमिश्रैरपि अस्यैव सिद्धान्तस्यानुसृतत्वाच्च । तथा चोक्तं सांख्यतत्त्वकौमुद्यां टिप्पणे वृत्तिः सम्बन्ध-विशेषः, स चानुच्छिन्नमूलो न तूच्छिन्नमूलः, निर्गताऽप्यच्छिन्नमूला चक्षुःसन्ततिः कार्याय समर्था न छिन्नमूला इति । एतेन "यदि च चक्षुः प्राप्यार्थं गृह्णीयात्तदोन्मील्य निमीलितनयनोऽपि रूपं पश्येत्" इति निराकृतं भवति । अन्धत्वादिप्रसङ्गोऽपि निरस्तो वेदितव्यः[3] ।

## इन्द्रियसामान्यलक्षणम्

परीक्षितं तावद् इन्द्रियाणां विषयसन्निकर्षे विषयाकारवृत्तिरूपा प्रत्यक्षप्रमा । तत्र चक्षुषो विषयदेशे गमनेन प्राप्यकारिता, अन्येषां तत्र गमनाभावेनाप्राप्यकारिता, विषयस्यैव इन्द्रियदेशे प्राप्तौ सत्यां प्राप्यकारिता वेति ।

इदानीं यथावसरमिन्द्रियसामान्यलक्षणं निरूप्यते ।

---

1. वा. प., ब्र. का., कारि. ८०, अम्बा. टीका., पृ. १५३ ।
2. धारावाहिप्रत्यक्षेऽव्याप्तिनिरासावसरे, पृ. १० ।
3. सां. त. कौ., टिप्पणम्, बलरामोदासीन., पृ. ५८ ।

### तत्र शाब्दिकानां मतम्

महदहङ्कारचेष्टाभिन्नत्वे सति प्रत्येकं जीवच्छरीरमात्मतत्त्वाऽनुमापकत्वमिन्द्रिय-सामान्यलक्षणम् । इदमेवाभिप्रेत्य 'इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्त-मिति वा" इति सूत्रे[1] इन्द्रियपदस्य इन्द्रस्य लिङ्गमिति विग्रहः प्रदर्शितः सूत्रकृता[2] ।

तत्र इन्द्र आत्मा तस्य लिङ्गं (ज्ञापकम्) करणेन कर्तुरनुमानादिति व्याख्यातं कौमुदीकृता[3] । कुठारादीनां छिदादिकरणानां कर्तारं विना छिदादिकार्यानुत्पादकत्वं दृष्टम् । एवं चक्षुरादीनामपि ज्ञानकरणानां कर्तारं (आत्मानम्) विना ज्ञानरूपकार्या-नुत्पादकत्वमिति कारणातिरिक्तः कर्ता (आत्मा) कल्प्यत इति तात्पर्यम् ।

एवं च प्रत्येकं जीवच्छरीरम् आत्मवत्, इन्द्रियवत्त्वात्, व्यतिरेके घटादिवदित्यनु-मानस्वरूपमायाति इन्द्रियस्याऽपि (हेतुभूतस्य) ज्ञानं शरीरात्मके पक्षे ज्ञानवत्त्वेन चेष्टावत्त्वेन वा हेतुना (अनुमानेन) करणीयम्, कार्येण कारणानुमानात् । अनेन हेतुना आत्मापि साक्षादनुमातुं शक्यत इत्यन्यत् । उक्तं च 'प्रवृत्त्याद्यनुमेयोऽयं रथ-गत्येव सारथिः' इति[4] । अयं चानुमितिः पक्षतावच्छेदकावच्छेदेन सर्वत्र जीवच्छरीरात्मके पक्षे बोध्या । सेन्द्रियं चेतनं द्रव्यं निरिन्द्रियमचेतनमिति चरकाचार्योक्तिरपि इन्द्रियस्यात्मानुमापकत्वे सँव्वादिनी बोध्या ।

### लक्षणघटकपदानां व्यावर्त्यानि

महदहङ्कारयोश्चेष्टायां[5] चातिप्रसङ्गनिरासायात्र सत्यन्तदलम् । प्रत्येकं जीवच्छ-रीरमिति धर्मिनिर्देशः, सविकल्पकस्य ज्ञानस्य निर्धर्मिकस्यानङ्गीकारात् । आत्मतत्त्वेति साध्यनिर्देशः, अन्यथा विधेयाभावेऽनुमितिस्वरूपमेव भज्येत । अनुमापकत्वपदाभावे

---

1. पा. सू. ५ अ., २ पा., ९३ सू. ।
2. अन्यत्रापि इन्द्रियपदस्य व्युत्पत्तिरियं दर्शिता, यथा बौद्धदर्शने विसुद्धि., पृ. ४९१ । तत्र हि--कोपननेसं इन्दिट्ठो नामानि, इन्दलिङ्गट्ठो, इन्दिपट्ठो, इन्ददिट्ठो इन्दियट्ठो इत्याद्युक्तम् । प्रमाणमीमांसायां हेमचन्द्राचार्येण तु 'इनो द्रावयति' इति इन्द्रियमिति उक्तम् । माठरवृत्तौ तु--"इन इति विषयाणां नाम, तानिनो विषयान् प्रति द्रवन्ति इति इन्द्रियाणि" इति व्युत्पत्ति-र्दर्शिता । (मा. वृ. का. २६)
3. वै. सि. कौ. पू., तद्धितप्र. मत्वर्थीयम्, पृ. १५३ ।
4. न्या. सि. मु., कारि. ४९, पृ. २३२ ।
5. इन्द्रियान्तरैः सात्त्विकाहङ्कारोपादानकत्वं साधर्म्यम्, न तु इन्द्रलिङ्गत्वम्, महदहङ्कारयोरप्यात्म-लिङ्गत्वेनैन्द्रियत्वप्रसङ्गात्; तस्माद् व्युत्पत्तिमात्रमिन्द्रलिङ्गत्वम्, न तु प्रवृत्तिनिमित्तम्। (सां. त. कौ. कारि. २७, पृ. १८२ )

ज्ञापकत्वमात्रस्वीकारे ज्ञापकत्वशरीरे ज्ञानपदेन प्रत्यक्षज्ञानग्रहणे मनस्येव लक्षणं गच्छेत्, तेनैव आत्मतत्त्वस्य प्रत्यक्षकरणादित्यव्याप्तिदोषः स्यात् । शब्दस्य ग्रहणे तु आत्मादिपदघटिते वाक्ये लक्षणं गच्छेत्, न तु लक्ष्यमात्रे इत्यसम्भवदोषः । ज्ञानसामान्यग्रहणे तु अतिव्याप्तिदोष इत्यनुमापकत्वपदम् ।

यत्तु महाभाष्य उद्द्योत इन्द्रियाणां नियमेन स्वाधिष्ठानभूतवृत्ति गुणग्राहकत्वमुक्तम्, तत्तु ज्ञानेन्द्रियतात्पर्येणेति न तल्लक्षणस्य कर्मेन्द्रियेष्वव्याप्तिरुद्भावनीया । सूत्रकृत्सम्मतं लक्षणं तु उभयविधेन्द्रियाणाम् ।

## सांख्यसम्मतमिन्द्रियसामान्यलक्षणम्

सात्त्विकाहङ्कारोपादानकत्वमिन्द्रियसामान्यलक्षणं सांख्यनये । उक्तं तथैव श्रीवाचस्पतिमिश्रैः सांख्यतत्त्वकौमुद्याम्[1]–आत्मलिङ्गत्वस्य तत्त्वे तु महदहङ्कारयोरप्यतिप्रसङ्गः स्यात् तस्माद् व्युत्पत्तिमात्रं तत्, यथा गच्छतीति गौरिति । 'उभयमप्येतद् इन्द्रस्यात्मनश्चिह्नत्वादिन्द्रियमुच्यत इत्युक्त्या उभयविधेन्द्रियाणामयमसाधारणो धर्म इत्युक्तम्[2] ।

## न्यायदर्शनसम्मतिरुक्तविषये

"विषयोपलब्धिकारणत्वमिन्द्रियत्वम्" इति श्रीजयन्तभट्टाः प्राहुः[3] । "शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वमिन्द्रियत्वम्" इति श्रीविश्वनाथभट्टाचार्याः प्राहुः[4] । वाक्पाणिपादादीनां पञ्चानामिन्द्रियत्वमेषां मते नास्ति । उक्तं चैतत्तात्पर्यटीकायाम्[5], न्यायमञ्जर्यां च[6] ।

## अत्र जैनदर्शनमतम्

प्रमेयकमलमार्तण्डे इन्द्रियद्वैविध्येन लक्षणमपि द्विविधमेव कृतम् । तत्र द्रव्येन्द्रियम्–गोलकादिपरिणामविशेषपरिणतरूपरसगन्धस्पर्शवत्पुद्गलात्मकम् । भावेन्द्रियं तु लब्ध्युपयोगात्मकम् ।आवरणक्षयोपशमप्राप्तिरूपार्थग्रहणशक्तिर्लब्धिः ।तदभावे सतोऽप्यर्थस्याप्रकाशनात्[7] ।

---

1. सा. त. कौ., कारि. २७, पृ. १८२ ।
2. सा. त. कौ., का. २६, पृ. १७९ ।
3. न्या. म., द्वितीयभा., पृ. ४८ ।
4. न्या. सि. मु., प्र. ख., पृ. २५६ ।
5. ता. टी., पृ. ५३१ ।
6. न्या. म., द्वि. भा., पृ. ५४ ।
7. प्रमेयक., प्र. परि., सू. २-५, पृ. २२९ ।

"लब्धिस्वभावं तावदिन्द्रियम्" इति हेमचन्द्राचार्याः[1] । इनो (विषयान्) द्रावयति (गमयति) इतीन्द्रियमिति एतदुक्ता व्युत्पत्तिरपि अत्रानुकूला[2] ।

**अत्र निष्कर्षः**

उभयविधेन्द्रियाणां सामान्यलक्षणं व्याकरणदर्शनरीत्या निर्दुष्टं यदुक्तम्, तत् श्रीवाचस्पतिना "उभयमप्येतद् इन्द्रस्यात्मनः चिह्नत्वादिन्द्रियमुच्यते" इत्युक्त्यानुमोदितमपि । अतिप्रसङ्गश्चेत्, सत्यम्, तत्तन्निवेशेन परिहृत एव सः । सात्त्विकाहङ्कारेति लक्षणं तु इन्द्रियाणामाहङ्कारिकत्वपक्षे गौरवस्योक्ततया निरस्तप्रायमेव । न्यायादिदर्शनोक्तं ज्ञानेन्द्रियमात्रस्य लक्षणं सम्यगपि असम्यगेव, कर्मेन्द्रियाणामसङ्ग्रहात्, इन्द्रियलक्षणे मनसः प्रवेशे, मनोलक्षणे इन्द्रियस्य च प्रवेशेऽन्योऽन्याश्रयदोषाच्च ।

किञ्च, इन् इति विषयाणां नाम, 'तानिनो विषयान् प्रति द्रवन्ति (गच्छन्ति) इति इन्द्रियाणि' इति माठरवृत्त्युक्ता[3] व्युत्पत्तिरपि हस्तपादादीनामिन्द्रियत्वे मानम्, तेषामपि विषयान् प्रति गमनात् ।

**इन्द्रियविशेषसमीक्षा**

शाब्दिकमत उक्तेन्द्रियसामान्यलक्षणेन एकादशविधमिन्द्रियं स्वीकरणीयम् । तत्र घ्राणरसनचक्षुःस्पर्शनश्रवणभेदात् पञ्चविधं ज्ञानेन्द्रियम्, वाक्पाणिपादपायूपस्थभेदात् पञ्चविधं कर्मेन्द्रियम् । उभयात्मकमिन्द्रियं मन इति सङ्कलनया एकादशेति सांख्यशास्त्रोक्त एव पन्था अत्र स्वीक्रियते[4] । कर्मेन्द्रियाण्यपि शाब्दिकसम्मतानि महाभाष्येऽपि कीर्तितानि ।

**इन्द्रियविशेषलक्षणानि**

"स्वस्मिन्नात्मनि रसास्वादग्राहकत्वलक्षणे स्वस्वरूपे" इति भाष्यलापनपरोद्द्योतग्रन्थेन रसस्य तद्ग्रहजनितास्वादस्य (आनन्दस्य) च ग्राहकत्वं रसनेन्द्रियत्वमिति लक्षणमायाति रसनेन्द्रियस्य । तत्रात्मत्वारोपात् कर्तृत्वेन[5] ग्राहकत्वव्यपदेशः, करणत्वं तु वास्तवमेव । अधिकरणत्वविवक्षया क्वचिदधिकरणत्वव्यवहारोऽपि[6] ।

---

1. प्र. मी., १ अ., १ आ., २३ सू., पृ. १८ ।
2. तदेव ।
3. माठर., कारि. २६ ।
4. म. भा. उ.. ८ अ., २ पा., ४९ सू., पृ. १२३ ।
5. म. भा., प्र. उ., १।२।५९ ।
6. म. भा. श्रुतौ च रूपग्रहणमिति । अत्र प्रदीपः – शब्दानुशासनप्रस्तावाच्च शब्दसम्बन्धिरूपं गृह्यते, न तु चक्षुर्ग्राह्यमित्याह--श्रुतौ चेति श्रोत्रोपलब्धौ चेत्यर्थः । अथवा श्रोत्रेन्द्रियं श्रुतिरु-

अत्र लक्षणे ग्रहपदेन प्रत्यक्षात्मक एव ग्रहो ग्राह्यः, अन्यथा स्मृत्यादिकमादाय तत्करणे संस्कारादौ अतिप्रसङ्गः स्यात् । रसयत्यनेनेति व्युत्पत्तिरप्यत्रानुकूला । रसग्रहणलिङ्गं रसनमिति सांख्योक्तलक्षणमपि[1] किञ्चिदनुरूपमेव । अथवा स्वमतेऽपीदमेव लक्षणम् । अधिकप्रवेशो वस्तुस्थितिकथनपर एव ।

एवमेव जिघ्रत्यनेनेति व्युपत्त्या गन्धग्रहे करणं घ्राणेन्द्रियमुच्यते । एवमेव चष्टे पश्यत्यनेनेति चक्षुः । चक्षिङ्धातोरौणादिक उसुप्रत्ययः । नयनं दर्शनं नेत्रमित्यादि पर्यायतयोच्यते । रूपग्रहे करणमिदं चक्षुरिन्द्रियम् । एवमेव स्पृशत्यनेनेति स्पर्शनम्, स्पर्शप्रत्यक्षे करणं स्पर्शनेन्द्रियमुद्गीयते । एवमेव शृणोत्यनेन इति श्रवणम् । शब्दश्रवणे करणमिदम् । इमानि लक्षणानि सांख्यशास्त्रसम्मतानि[2] । किन्तु पञ्चमहाभूतस्वरूपता तु न्यायदर्शन इवात्राऽपि बोध्या । यथा घ्राणेन्द्रियस्य पार्थिवत्वम्, रसनाया जलीयत्वम्, चक्षुषस्तैजसत्वम्, स्पर्शनस्य वायवीयत्वम्, श्रवणस्य आकाशात्मकत्वम् । मानं त्वत्र पूर्वमुक्तमेव[3] ।

पञ्चानां वाक्पाणिपादपायूपस्थानां कर्मेन्द्रियाणां क्रमशो भाषणम्, ग्रहणम्, गमनम्, मलापहरणम्, मूत्रोत्सर्गरमणे च व्यापाराः[4] । स्वस्वव्यापारवत्त्वमेव एषां लक्षणं वेदितव्यम् । यद्यपि इमे व्यापारा अत्र शास्त्रे सांख्यशास्त्र इव नोक्ताः, तथापि प्रत्यक्षप्रमाणसिद्धत्वेन प्रतिषेद्धुमशक्यत्वात् स्वीकार्या एव । मनसो लक्षणं तु भाष्यमते मनसोऽपि विषयाकारतावर्णनप्रसङ्ग उक्तमेव[5] ।

**इन्द्रियस्य परिमाणपरिच्छेदः**

मध्यमपरिमाणमिन्द्रियमिति शब्दशास्त्रविमर्शः[6] । इन्द्रियस्य यद्यणुपरिमाणमभ्युपेयते, तदा त्वगिन्द्रियेण सकलशरीर एकदैव शैत्यस्य औष्ण्यस्य वा उपलब्धिर्न स्यात् । न्यूनपरिमाणेन्द्रियेण अधिकपरिमाणस्य शरीरस्य गुणादेर्युगपद् ग्रहणासम्भवात् । उद्भूतरूपाद्यभावान्न तेषां प्रत्यक्षविषयत्वम् । विभुत्वे तु रसगन्धादीनां युगपदेव सर्वदा उपलब्धिः स्यादिति तात्पर्यम्[7] ।

---

च्यते । अत्रोद्द्योतः – "श्रोत्रेन्द्रियस्य करणत्वेऽपि आधारत्वसम्भवादाह–श्रोत्रेणेति । भावसाधनः श्रुतिशब्द इति भावः । अथवेति श्रुत्यवच्छेदेनेत्यर्थः, करणसाधन इति भावः । आद्ये ग्रहणं विषयता, द्वितीये तु प्रतीतिरिति विवेकः । प्राधान्येन श्रोत्रेन्द्रियाग्राह्यं वस्तु रूपशब्देन उच्यत इति तात्पर्यम्" । (म. भा., प्र. उ. १।२।६४, पृ. ९६)

1. सां. त. कौ., कारि. २६, पृ. १७९ ।
2. सा. त. कौ., कारि. २६, पृ. १७९ ।
3. श्रोत्रस्याप्राप्यकारित्वे निष्कर्षकथने ।
4. सां. त. कौ., कारि. २८, पृ. १८४ ।
5. प्रत्यक्षप्रमाणलक्षणप्रस्तावे--"भाष्यमतेऽपि मनसो विषयाकारता" इत्यस्य विवेचने ।
6. ल. म., र. प्र. युता, शक्त्याश्रयनिरू. टिप्पणे, पृ. १७२ ।
7. वै. सि. ल. म., कुञ्जिकाटीका, पृ. २०४-२०५ ।

अणुपरिमाणत्वेऽपि गोलकनिर्गतस्य चक्षुरादेः पृथ्वग्रत्वान्न कश्चन दोष इत्यपि मतविशेषः[1] ।

गोलकाद्यधिष्ठानमेवेन्द्रियम्, तत्सत्त्वे घटाद्युपलब्धिः, तदभावे तदभाव इत्यन्वय-व्यतिरेकसहचारादिति बौद्धाभिमतम्[2] ।

किन्त्विदं न रोचते, घटादिदेशे गोलकरूपस्य तस्य गमनासम्भवात् । नापि भौतिकम्, न्यूनपरिमाणेनाधिकपरिमाणस्य ग्रहणासम्भवात्, न चाप्यग्रहणं प्रत्यक्ष-विरोधात्, तस्माद् आहङ्कारिकाणि इन्द्रियाणि इति सांख्याचार्याणां सम्मतिः[3] ।

एवमेव गोलकनिष्ठा शक्तिरिन्द्रियमिति मीमांसकानां मतम्[4] ।

तत्र बौद्धमतेऽपकृष्टमहत्परिमाणमिन्द्रियस्य प्रतिपादितम् । तच्च सांख्यरीत्या निरस्तप्रायमेव । न्यायदर्शनमपि परिमाणविषये व्याकरणदर्शनसँव्वादि एव ।

**इन्द्रियाणामधिष्ठानविशेषविमर्शः**

शरीराऽन्तर्गतः कोऽवयवः, कस्येन्द्रियस्याधिष्ठानमिति अधिष्ठानविशेषो विमृश्यते। तत्र त्रिपुटिकाधिष्ठानकं घ्राणम्, जिह्वाधिष्ठानकं रसनम्, चक्षुर्गोलकाधिष्ठानकं नेत्रम्, सकलत्वगधिष्ठानकं स्पर्शनम्, शिरःप्रभृति आपादाङ्गुष्ठं स्पर्शोपलम्भात् । त्वगित्यनेन बाह्यमेव चर्म न ग्राह्यम्; अपि तु सकलशरीरव्यापि आन्तरमपि, शीतल-सलिलपानसमयेऽन्तर्हृदयेऽपि शीतस्पर्शोपलम्भात् । कर्णविवराधिष्ठानकं श्रोत्रम् । जिह्वाधिष्ठानकमेव वागिन्द्रियमपि । एवमेव हस्तपादादीन्द्रियाणामधिष्ठानान्यपि लोक-प्रसिद्धानि बोध्यानि । न्यायमञ्जर्यां श्रीजयन्तभट्टेनोक्तान्यप्येतानि[5] ।

यद्यपि सांख्यमते इन्द्रियाणामहङ्कारपरिणामरूपत्वेनाहङ्कार एव अधिष्ठानम्, न्यायनये व्याकरणदर्शने च परिच्छिन्नपरिणामत्वेन सावयवतया घ्राणादीनां पार्थिवादयः सावयवा एव समवायेन तादात्म्येन वा आश्रयभूताः, तथाऽपि संयोगसम्बन्धेनाश्रया-पेक्षायामिदमुक्तम् ।

---

1. वै. सि. ल. म., र. प्र. युता, टिप्पणम्, पृ. १७२ ।
2. वै. सि. ल. म., र. प्र. युता, टिप्पणम्, पृ. १७२ ।
3. वै. सि. ल. म., टीकाद्वय., पृ. २०४ ।
4. वै. सि. ल. म., टीकाद्वय., पृ. २०५ ।
5. न्या. म., द्वि. भा., ८ आ., पृ. ४८ ।

मनसस्तु अहङ्कारः स्वाश्रयः, तथापि सङ्कोचविकासशालितया मध्यमपरिमाणतया च सकलमपि शरीरमाश्रयत्वेन स्वीकार्यम् । बौद्धदर्शने[1] च हृदयदेशो मनसोऽधिष्ठानतया स्वीकृतोऽस्ति । द्रव्यमनसः सकलं शरीरम्, भावमनसस्तु आत्मैव आश्रय इति जैनसिद्धान्तः[2] ।

## कर्मेन्द्रियाणामिन्द्रियत्वनिरासो न्यायदर्शने

सांख्यमते वचनादानविहरणादिकार्याणां यथायथं सम्पादकत्वेन वागादीनामिन्द्रियत्वमुक्तम् । अत्रोच्यते न्यायदर्शने–आदानकार्यं न हि केवलं पाणिभ्यामेव क्रियते, अपि तु आस्यादिना अपि । विहरणमपि न केवलं पादसम्पाद्यम्, अपि तु पाणिभ्यामपि । वागिन्द्रियं नाभेरूर्ध्वं सर्वमपि स्यात्, नाभेरुत्थितो वायुरुरसि विस्तीर्णः कण्ठे विवर्तितो मूर्धानमाहत्य परावृत्तो वक्त्रे चरन् वर्णान् अभिव्यनक्ति इति । अथ शरीरावयवेष्वेव भिन्नकार्यकारिषु कर्मेन्द्रियव्यवहारः, तर्हि कण्ठादिष्वपि अतिप्रसङ्गः स्यात् । तथा हि कण्ठोऽन्ननिगरणेन, भारवहनेन स्कन्धः कर्मेन्द्रियमुच्यतां नाम । तस्मादनेकविधमपि सुखदुःखोपभोगक्षमकर्मनिर्मितमेतच्छरीरं तैस्तैरवयवैस्तं तं कर्मफलोपभोगमात्मनः सम्पादयतीत्यलं वागादीनामिन्द्रियत्वचर्चया[3] ।

## शाब्दिकमते वागादीनामिन्द्रियत्वसमर्थनम्

वागादीनामिन्द्रियत्वं मन्वाना इत्थमत्र ब्रुवते–

यद्यपि आदानादिकार्यमास्यादिनापि क्रियते, तथापि न तत् स्वारसिकमास्यादिकार्यम्; अपि तु कादाचित्कमिति न तल्लक्षणकानि आस्यादीनीति न तेषामिन्द्रियत्वम् ।

यद्यपि नाभेरूर्ध्वं सर्वमपि वागिन्द्रियं स्याद् वर्णोत्पादकप्रयत्नस्य सर्वत्राभिव्याप्तत्वादिति, तदपि न मनग्राहि, तत्र सर्वत्र तादृशप्रयत्नस्य सत्त्वेऽपि तस्य आभ्यन्तरबाह्यभेदेन शब्दशास्त्रे[4] विभजने सति आद्यस्याभ्यन्तरस्यैव वर्णोत्पादकत्वम्, बाह्यस्य तु अन्यथासिद्धत्वमिति जिह्वाधिष्ठानकस्यैव वागिन्द्रियत्वस्वीकारात् । यद्यपि ष्ठीवनस्य नियतमादानं कण्ठेऽप्यस्ति, तथापि बाह्यपदार्थविषयको नियत आदानाख्यव्यापारो हस्तेन्द्रियस्य लक्षणमिति स्वीकारेणातिप्रसङ्गो निरसितुं सुकर एव । किञ्च श्रुतिसम्मतमपि एषामिन्द्रियत्वं पूर्वमुक्तमेव ।

---

1. ताम्रपर्णीया अपि हृदयवस्तु मनोविज्ञानधातोराश्रयं कल्पयन्ति । (स्फुटा, पृ. ४१)
2. सर्वार्थ. २।११, ५।१९ ।
3. न्या. म., ८ आ., पृ. ५४-५५ ।
4. म. भा., अ.१, पा. १ सू. ९।

**मनस इन्द्रियत्वं शाब्दिकसम्मतम्**

शाब्दिकाचार्याणां मते मनस इन्द्रियत्वं स्वीकरणीयमेव, इन्द्रलिङ्गत्वादिन्द्रसृष्टत्वादिन्द्रदत्तत्वाच्च[1] ।

लघुमञ्जूषायामुच्यते श्रीनागेशभट्टेन–"अन्तःकरणपरिणामविशेषो मध्यमपरिमाणं सङ्कोचविकासशालि मनः" ।अन्यत्र भूम्ना अभूवं नाश्रौषम्" इति श्रुतिरप्यत्र मानम् । अत एव न ज्ञानयौगपद्यम्, वस्तुतोऽणुपरिमाणमेव मनः, "अणुत्वमथ चैकत्वं द्वौ गुणौ मनसः स्मृतौ" इति चरके पतञ्जल्युक्तेः ।(च. शा., अ. १, श्लो. १९) विकासस्तु योगिमनस एव । अस्मदादीनां तु क्षणविलम्बेऽपि यौगपद्यभ्रम उत्पलशतपत्रभेद इव । अन्यथा दूरदेशस्थमपि ज्ञायेत । किञ्च, विकासे नियतनियामकाभावः । अदृष्टविशेषादपि तस्य विकास इत्यपि केचिदित्युक्तम्[2] ।

**उक्तविषये मतान्तराणि**

न्यायवैशेषिकदर्शनयोर्मनसः परमाणुरूपत्वमिन्द्रियत्वं चास्ति[3] , अत एव नित्यमिदम् ।एकशरीर एकमेवेत्यपि गौतमसम्मतम्[4] । पूर्वमीमांसकमतेऽपीयमेव सरणिः स्वीकृता[5]। सांख्ययोगयोर्मते मनसः परमाणुरूपता न स्वीक्रियते; अपि तु अणुरूपत्वं प्रकृतिपरिणामाहङ्कारजन्यत्वं तस्य स्वीकृतमस्ति[6] ।

द्रव्यभावभेदाद् द्विविधं मनः । तत्र पुद्गलद्रव्यस्य परिणामविशेषोऽचेतनं द्रव्यमनः । भावमनस्तु चेतनमर्थग्रहणोन्मुखो व्यापारविशेष इति द्विविधं मनो जैनदर्शनसम्मतम्[7] ।

---

1. पा. सू. ५।२।९३ ।
2. सि. ल. म., टीकाद्व., तिङर्थनिरू., पृ. ८७१ ।
3. न्या. सू. ३।२।६१; वै. सू. ७।१।२३ ।
4. न्या. द., अ. ३, आ. २।५६ ।
5. प्रकरण-प., पृ. १५१ ।
6. "यस्मात् कर्मेन्द्रियाणि बुद्धीन्द्रियाणि च सात्त्विकाहङ्कारादुत्पद्यन्ते, मनोऽपि तस्मादेवोत्पद्यते"। (माठर., कारि. २७ )
7. "मनोऽपि पञ्चेन्द्रियवद् द्रव्यभावभेदाद् द्विविधमेव । तत्र द्रव्यमनो मनस्त्वेन परिणतानि पुद्गलद्रव्याणि । भावमनस्तु तदावरणीयकर्मक्षयोपशमात्मा लब्धिरात्मनश्चार्थग्रहणोन्मुखो व्यापारविशेषः" इति ।(प्र. मी., १ अ., १ आ., २४ सू., पृ. २९)

बौद्धदर्शनसम्मतं मनस्तु मध्यमपरिमाणं विज्ञानात्मकम् । उत्तरोत्तरविज्ञानानां कारणभूतं पूर्वपूर्वविज्ञानस्वरूपम्[1] ।

सर्वार्थोपलब्धौ मनसः सामर्थ्यमिति तु सर्वेषां सम्मतम्[2] ।

अद्वैतवेदान्ते मनस इन्द्रियत्वविषये विसँव्वादोऽस्ति, वेदान्तपरिभाषाकारस्तु मनस इन्द्रियत्वं प्रत्याचष्टे[3] । "मनः षष्ठानि इन्द्रियाणि" इति गीतायां तु मनः षष्ठं येषामिन्द्रियाणामिति अतद्गुणसंविज्ञानो बहुव्रीहिर्बोध्यः । चित्सुखाचार्यप्रभृतिभिर्मनस[4] इन्द्रियत्वप्रतिपादनेन वेदान्तनयेऽपि तस्येन्द्रियत्वं स्वीकृतमेवेत्यपि बोध्यम् ।

## कति इन्द्रियाणि इति विमर्शः

यत्तु अवयवविशेषव्यवस्थितनानाशक्तिसमन्विता त्वगेव एकमिन्द्रियमिति केचित्,[5] तत्तु न समीचीनम्, शक्तिभेदादाश्रयभेदाच्च सुतरामिन्द्रियाणां नानात्वसिद्धेः[6] ।

यद्यपि बौद्धदर्शने द्वाविंशतिरिन्द्रियाणि अङ्गीकृतानि सन्ति, तथा हि–१. चक्षुरिन्द्रियम्, २. श्रोत्रेन्द्रियम्, ३. घ्राणेन्द्रियम्, ४. जिह्वेन्द्रियम्, ५. कायेन्द्रियम्, ६.मन इन्द्रियम्, ७. स्त्रीन्द्रियम्, ८. पुरुषेन्द्रियम्, ९. जीवितेन्द्रियम्, १०. सुखेन्द्रियम्, ११. दुःखेन्द्रियम्, १२. सौमनस्येन्द्रियम्, १३. दौर्मनस्येन्द्रियम्, १४. उपेक्षेन्द्रियम्, १५. श्रद्धेन्द्रियम्, १६. वीर्येन्द्रियम्, १७. स्मृतीन्द्रियम्, १८. समाधीन्द्रियम्, १९. प्रज्ञेन्द्रियम्, २०. अनाज्ञातमाज्ञास्यामीतीन्द्रियम्, २१. आज्ञेन्द्रियम्, २२.आज्ञातावीन्द्रियम् इति[7], तदपि न शोभनम्, यतो हि यद्यपि चक्षुःश्रोत्रघ्राणानि इन्द्रियाणि स्वीकृतान्येव । जिह्वेन्द्रियमित्यनेन रसनेन्द्रियं वागिन्द्रियं चेत्युभयमपि गृह्यते चेत्, तदपि युक्तमेव, कायेन्द्रियमिति सकलशरीरव्यापि त्वगिन्द्रियमुच्यते, तदपि सम्यगेव, मनसस्त्विन्द्रिय-

---

1. विज्ञानं प्रति विज्ञप्तिर्मन आयतनं च तत् ।
 षण्णामनन्तरातीतं विज्ञानं यद्धि तन्मनः ।। (अभिधर्म. १।१६।१७; तत्त्वसं., कारि. ६३१)
 "यद्यत् समनन्तरं विज्ञानं तन्मनो धातुरिति । तद्यथा स एव पुत्रोऽन्यस्य पित्राख्यां लभते··· तथेहापि स एव चक्षुरादिविज्ञानधातुरन्यस्याश्रय इति मनोधात्वाख्यां लभते" ।
 (स्फुटा., पृ. ४०-४१)
2. न्या. म. १।१।९; सां. का. ३५; प्र. मी. १ अ., २४ सू., पृ. १९ ।
3. वे. प., प्रं. परि., पृ. ४२ ।
4. तत्त्वप्रदीपिका (चित्सुखी) प्र. परि., आत्मनः स्वप्रकाशत्वप्रकरणे, पृ. ४६ ।
5. न्या. म., द्वितीयभागः, ८ आ., पृ ५३ ।
6. तदेव, पृ. ५४ ।
7. स्फुटा., पृ. ९५ । विसुद्धि., पृ. ४९१ ।

त्वमिष्टमेव, तथापि स्त्रीन्द्रियम्, पुरुषेन्द्रियमित्यनयोः पार्थक्यं न युज्यते, मूत्रेन्द्रियेण एकेनैव कर्मेन्द्रियेण गतार्थत्वात् । जीवितेन्द्रियं प्राणेन गतार्थम् । सुखेन्द्रियमारभ्य श्रद्धेन्द्रियं यावन्मनसा गतार्थम् । वीर्येन्द्रियं तत्तत्कर्मेन्द्रियैः स्मृतीन्द्रियमारभ्य अनाज्ञातमाज्ञास्यामीतीन्द्रियं यावन्मनसा, आज्ञेन्द्रियं वागिन्द्रिये । अतः परमपि वागिन्द्रियेण गतार्थम् ।

**कस्य प्राणिनः कति इन्द्रियाणि इति विमृश्यते**

तत्र शाब्दिकनिकाये एकादशेन्द्रियाण्युक्तानि । एतानि सर्वाणि मानवशरीर एव। अपरशरीरेषु न सर्वाणि, किन्तु न्यूनान्येव । प्रसङ्गतस्तान्यपि विमृश्यन्ते, तत्र तत्र शरीरेऽपि आत्मसत्तानुमानस्य शाब्दिकैरपि स्वीकृतत्वाच्च ।

तत्र वृक्षादीनां क्षतपूरणं छेदने कृते सति प्ररोहणमित्यादिकार्यं दृष्ट्वाऽऽध्यात्मिक-वायुसम्बन्धेन[1] शरीरत्वं प्रायः सर्वसम्मतमेवेति तेषां सेन्द्रियत्वे नास्ति कोऽपि सन्देहः । तेऽपि हि शीतोष्णस्पर्शं गृह्णन्ति, अत एव विद्युत्स्पर्शेन शुष्यन्ति इति तेषां स्पर्शनेन्द्रियमस्तीति अनुमीयते । एवमेव विद्युदादिशब्दस्यापि तेषु प्रभावं दृष्ट्वा श्रवणेन्द्रियमपि अनुमेयम् । वृक्षादीनां चेतनत्वं प्राणित्वं सेन्द्रियत्वं च प्रतिपादितं युधिरिष्ठराय सम्यगुपदिशता श्रीभीष्माचार्येण । यदा कुठारमादाय वृक्षं छेत्तुं कश्चन समायाति, तदा तं दृष्ट्वा वृक्षः कम्पते, निकृन्तनेन शब्दायते चेत्यादिकमपि बहु प्रतिपादितम्[2] । अतश्च मनोऽपि तेषामस्तीत्यपि कल्पनीयम् ।

जैनदर्शनाचार्यैस्तु एतद्विषये बहु विचारितम् । तथा हि तेषां मते पर्वतभूमि-जलानलानिलादयोऽपि जीवाः, एतेषामपि स्पर्शनमिन्द्रियमस्त्येव ।

कृमि-अपादिका-नूपुरक-गण्डूपद-शङ्ख-शुक्तिका-शम्बूका-जलूकाप्रभृतीनां जीवानां तु स्पर्शनं रसनमिति द्वे इन्द्रिये वर्तेते ।

पिपीलिका-रोहिणिका-उपत्तिका-कुन्थु-तुवरक-त्रपुस-बीज-कर्पासास्थिका-शतपदी-अयेनक-तृणपत्र-काष्ठहारकप्रभृतीनां तु घ्राणं रसनं स्पर्शनमिति त्रीणि इन्द्रियाणि वर्तन्ते ।

---

1. न्या. सि. मु., प्र. ख., का. ३८, पृ. १२२ ।
2. (क) महाभारतम्, मो. धर्मप., अ. १८४, श्लो. १०-१८ ।
   (ख) म. स्मृ., १।४९ ।

भ्रमर-वटर-सारङ्ग-मक्षिका-पुत्तिका-दंश-मशक-वृश्चिक-नन्द्यावर्त-कीट-पतङ्गा-दीनां तु उक्तानि त्रीणि, चक्षुरिन्द्रियं चेति चत्वारि ।

मत्स्य-उरग-भुजग-पक्षि-चतुष्पदादीनां तिर्यग्योनीनां तु श्रवणेन्द्रियमपि, इति पञ्चापि ज्ञानेन्द्रियाणि सन्ति । एवमेव देवमानुषनारकशरीराणामपि[1] ।

मनस्तु साधारणं समेषां जीवानामस्त्येव ।

भुजगो यद्यपि नयनगोलकशक्त्यैव पश्यति । तत्रत्यशक्तिविशेषेणैव शृणोत्यपि, तथापि अधिष्ठानमेवैकम् । इन्द्रियतत्त्वं तु भिन्नं भिन्नमेवेति श्रवणेन्द्रियस्य नयनेन्द्रियात् पार्थक्यमेवेति । अस्मदादिजिह्वायां यथा शक्तिद्वयेन वाग्रसनेन्द्रिययोः समावेशस्तद्वत् ।

## इन्द्रियार्थयोः सन्निकर्षस्य विमर्शः

अथ प्रत्यक्षप्रमायामिन्द्रियविषययोः सन्निकर्षस्य हेतुतोक्ता । तत्र सन्निकर्षः साक्षात्, परम्परारूपो वा, उभयरूपो वा ग्राह्यः, कतिधा चेत्यादि विमृश्यते ।

तत्रेन्द्रियविषययोः सन्निकर्षः संयोगरूपो गृह्यते शाब्दिकानां मते, सन्निकृष्टो विषयो द्रव्यरूपश्चेत् । द्रव्ययोरेव संयोग इति सिद्धान्तस्य शाब्दिकैरपि अङ्गीकारात्। संयोगस्तु गुणस्तस्य गुणक्रियादिसमुदायरूपे द्रव्य एव वृत्तित्वस्य सम्भवात् । मनसा संयुक्तानि इन्द्रियाणि उपलब्धौ कारणानि भवन्तीत्यत्र मन-इन्द्रिययोः संयोगस्य स्पष्टमुक्तत्वात् । इन्द्रियविषययोः सन्निकर्षोऽपि उपस्थितत्वात् स एव ग्रहीतव्यः । चक्षुरादीन्द्रियाणां घटपटाद्यर्थानां च भौतिकत्वेन द्रव्यत्वात् । तत्र द्रव्यग्राहकाणि इन्द्रियाणि त्रीण्येव, चक्षुस्त्वङ्मनांसि, इतराणि तु गुणादिग्राहकाणि इति सिद्धान्तोऽत्राऽपि न्यायदर्शनवदेव[2] । तत्र चक्षुषा त्वगिन्द्रियेण च घटपटादिरूपवद्द्रव्यस्य, मनसा तु आत्मनः प्रत्यक्षमिति विवेकोऽपि तद्वदेव । अप्रतिषिद्धमनुमतमिति न्यायात्, तादृशान्वयव्यतिरेकसहचारदर्शनाच्च । तत्र द्रव्यस्य ग्रहणे (प्रत्यक्षे) संयोगः सन्निकर्षः । द्रव्यगतरूपरसगन्धादिगुणानां प्रत्यक्षे तु स्वसंयुक्तसमवायः सन्निकर्षः, चक्षुषा संयुक्ते घटादौ रूपादेः समवायात् । द्रव्यगतानां चलनादिकर्मणां प्रत्यक्षेऽपि अयमेव सन्निकर्षो ग्राह्यः । यद्यपि "क्रिया नामेयमत्यन्तापरिदृष्टा न शक्या पिण्डीभूता निदर्शयितुम्" इति भाष्योक्त्या क्रियायाः प्रत्यक्षं न भवति शाब्दिकमते, तथापि पिण्डीभूताया अप्रत्यक्षत्वेऽपि अवयवशोऽस्मदादीनाम्, सामस्त्येनाऽपि योगिनां च साक्षात्कारे बाधकाभावस्य कैयटेनोक्तत्वान्न[3] दोष इति बोध्यम् ।

---

1. प्र. मी. १ अ., १ आ., २१ सू., १७ पृ. ।
2. न्या. सि. मु., दि. रा. युता, प्र. ख., कारि. ५७, पृ. १८३ ।
3. म. भा., प्र. १।३।१ ।

ननु वाक्यपदीये (३ का. सं. समु.) श्रीहेलाराजेन समवायसम्बन्धो नाभ्युपेत इति कथमुक्तः समवायघटितः सन्निकर्ष इति न भ्रमितव्यम्, "निमित्तात् कर्मयोगे च" इति वार्त्तिके योगः संयोगसमवायात्मक इति कौमुद्युक्तव्याख्यानेन[1],

**स्वार्थमभिधाय शब्दो निरपेक्षो द्रव्यमाह समवेतम् ।**
**समवेतस्य च वचने लिङ्गं वचनं विभक्तिं च ॥**

इति भाष्येण[2] च समवायस्याऽपि शाब्दिकैरङ्गीकारात् ।

अभावस्य प्रत्यक्षे तु स्वसंयुक्तविशेषणतादिः सन्निकर्ष उपयुज्यते । यथा भूतले घटाभावस्य चाक्षुषप्रत्यक्षे जननीये चक्षुरिन्द्रियस्य घटाभावेन सह स्वसंयुक्त-(भूतल) विशेषणतासन्निकर्षः, चक्षुःसंयुक्ते भूतले घटाभावस्य विशेषणत्वात्, इदं च घटाभाववद् भूतलमित्याकारकं प्रत्यक्षमभिप्रेत्य । एवमेव संख्यादौ रूपाभावप्रत्यक्षे स्वसंयुक्तसमवेतविशेषणता, संख्यात्वादिव्याप्य एकत्वत्वादौ रूपाद्यभावप्रत्यक्षे तु स्वसंयुक्तसमवेतसमवेतविशेषणता– इत्येवंरूपेण सन्निकर्षाणां बहुविधत्वमायाति, तथाऽपि विशेषणतात्वेन रूपेण सा विशेषणता एकैवेति नोक्ताननुगमदोषः[3] । भूतले घटाभाव इत्याकारे प्रत्यक्षे तु स्वसंयुक्तविशेष्यतासन्निकर्षो बोध्यः । उपर्युक्तरीत्या तत्रापि बाहुल्यप्रसङ्गे विशेष्यतात्वेनानुगमः करणीयः ।

"स्त्रियाम्" इति सूत्रे महाभाष्ये खट्वावृक्षादिषु लिङ्गाभावस्य प्रत्यक्षप्रमा स्वीकृताऽस्ति[4] । अनुपलब्धिस्तु न प्रमाणम्, अपि तु सहकारिकारणमात्रम् । निरूपयिष्यते चेदमग्रेऽनुपलब्धेः प्रामाण्यनिरासावसरे ।

एवमेव समवायादिपदार्थानामपि प्रत्यक्षे करणीये विशेषणताघटित एव सन्निकर्षो व्यापारतयाऽभ्युपगन्तव्यः, यदि कपालसमवायवान् घट इत्याकारकं प्रत्यक्षम् । अन्येषामनुक्तेरेषामप्रतिषेधाच्च । यदि तु इह कपाले घट इत्याकारकं समवायप्रत्यक्षम्, तदा संयुक्तसंसर्गताख्योऽपूर्व एव कश्चन सम्बन्धोऽभ्युपेतव्यः, उक्तसम्बन्धैरनिर्वाहात् ।

---

1. सि. कौ., कारकप्रक. ।
2. म. भा. ५।३।१ ।
3. न्या. सि. मु., प्र. ख., कारि. ५९-६२, पृ. २५९-७४ ।
4. म. भा. ४।१।१ ।

**मीमांसकमते सन्निकर्षविमर्शः**

समवायसम्बन्धानङ्गीकर्तृमीमांसकमते तु समवायस्थाने तादात्म्यसम्बन्धः स्वीकृतोऽस्तीति स्वसंयुक्तसमवायस्य स्थाने स्वसंयुक्ततादात्म्यमुच्यते, घटीयरूपे रूपत्वप्रत्यक्षे स्वसंयुक्तसमवेतसमवायस्य स्थाने तु स्वसंयुक्ततादात्म्यमुच्यते, घटीयरूपे रूपत्वप्रत्यक्षे स्वसंयुक्तसमवेतसमवायस्य स्थाने तु स्वसंयुक्ततादात्म्यवत्तादात्म्यमित्यादि चोच्यते । अभावप्रत्यक्षेऽपि एवमेव स्वसंयुक्तविशेषणता, स्वसंयुक्ततादात्म्यवद्विशेषणतादिरूहनीयः ।

**अत्र निष्कर्षः**

शाब्दिकमते यद्यपि समवायस्यानभ्युपगमेऽपि नास्ति कश्चन सिद्धान्तोपप्लवः, तथापि भाष्ये समवेतादिपदेन समवायस्य व्यवहृतत्वात् समवायघटित एव सन्निकर्षः स्वीकरणीय इति प्रतिभाति ।

**कियान् सन्निकर्षः कस्मिन् प्रत्यक्षेऽपेक्ष्यत इत्यत्र न्यायदर्शने कश्चन विशेषः**

श्रीजयन्तभट्टेनोच्यते न्यायमञ्जर्याम्–तच्चेदं प्रत्यक्षं चतुष्टयत्रयद्वयसन्निकर्षात् प्रवर्तते । तत्र बाह्ये रूपादौ विषये चतुष्टयस्य सन्निकर्षाज्ज्ञानमुत्पद्यते, आत्मा मनसा युज्यते, मन इन्द्रियेण, इन्द्रियं विषयेणेति । सुखादौ विषये तु त्रयाणां सन्निकर्षात् प्रत्यक्षं भवति, तत्र चक्षुरादिव्यापाराभावात् । आत्मनि विषये तु द्वयोरात्ममनसोरेव सन्निकर्षः प्रत्यक्षं जनयति । तत्र तृतीयस्य ग्राह्यस्य ग्राहकस्य चाऽभावात् । आत्ममनसोस्तु सदपि ज्ञानजनकत्वं प्रत्यक्षलक्षणसूत्रे न कीर्तितम्, तयोः सर्वप्रमासाधारणत्वात् । मनसोऽपीन्द्रियत्वस्वीकारेण तेनैव रूपेण मनसः सुखादिप्रत्यक्षे हेतुत्वान्नाव्याप्तिस्तत्रेति[1] ।

शब्दशास्त्रे तु आत्मबुद्ध्यहङ्कारमन-इन्द्रियविषयाणां सन्निकर्षो हेतुर्बाह्यविषये प्रत्यक्षे । सुखाद्यन्तरविषयके प्रत्यक्षे तु पञ्चानामेव सः, चक्षुरादिव्यापाराभावात् । आत्मविषयके प्रत्यक्षे तु चतुर्णामेव इति विशेषः ।

**शब्दप्रत्यक्षे शाब्दिकमतम्**

ध्वन्यात्मकस्य शब्दस्य प्रत्यक्षे तु श्रोत्रस्य तेन सह समवाय एव सन्निकर्षः शब्दशास्त्रेऽपि स्वीकरणीयः । श्रोत्रेन्द्रियस्याकाशरूपत्वात्,[2] ध्वनिरूपशब्दस्य च तद्गुणत्वात्[3] ।

---

1. न्या. म., प्रमाणप्र., प्र. भा., पृ. ६९-७० ।
2. म. भा., अ. १, पा. १, आ. २, पा. सू. अइउण् ।
3. म. भा., २।२।८ ।

स्फोटात्मकशब्दस्य श्रावणप्रत्यक्षपक्षे तु स्वसमवेतध्वनितादात्म्यम्, स्वसमवेत-ध्वनिव्यङ्ग्यत्वं वा सम्बन्धो बोध्यः[1] । तस्य न श्रावणप्रत्यक्षमपि तु मनसा ग्रहणमिति मते तु[2] स्वसंयुक्तात्मतादात्म्यं तादृशात्मसंयोगो वा सम्बन्धः ।

चाक्षुषादिप्रत्यक्षे तु स्वसंयुक्तविशेषणतासन्निकर्षो मन्तव्यः । श्रीमता भट्टोजि-दीक्षितेन शब्दकौस्तुभे[3] आरम्भ एव घटादिचाक्षुषेऽपि घटादिशब्दानां विषयता उक्ता ।

**न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।**
**अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥**

इति हरिकारिका प्रमाणत्वेन चोक्ता ।

**इन्द्रियार्थयोः सन्निकर्षस्य प्रत्यक्षप्रमां प्रति करणत्वविमर्शः**

इन्द्रियार्थयोः सन्निकर्षो मुनित्रयेण यद्यपि प्रत्यक्षे शब्दतः कारणत्वेन नोपन्यस्तः, तथापि अन्वयव्यतिरेकसहचारात् तस्य कारणता अवश्यमङ्गीकार्या । असन्निकृष्ट-ग्रहणे काष्ठकुड्यादिव्यवहितस्यापि वस्तुनो ग्रहणं प्रसज्येत । मनसा संयुक्तानीन्द्रियाणि इत्यत्र[4] मन-इन्द्रियसंयोगस्तु शब्दत उक्त एव ।

किञ्च, "वैयाकरणानां शाकटायनो रथमार्गे आसीनः शकटसार्थं यान्तं नोप-लेभे । ····मनसा संयुक्तानीन्द्रियाण्युपलब्धौ कारणानि भवन्ति, मनसोऽसान्निध्यात्" इति भाष्येण शकटसार्थस्य चक्षुषा संयोगः स्फुटं प्रतीयत एव । तच्चेन्द्रियं मनसा संयुक्तं नास्तीति शकटसार्थस्यानुपलब्धिरिति तात्पर्यम्[5] ।

किञ्च, "आत्मेन्द्रियार्थमनोऽर्थसन्निकर्षात् प्रत्यक्षं भवति" इति हेलाराजग्रन्थेन शब्दतोऽपि तस्य हेतुतोक्ता द्रष्टव्या[6] ।

## अत्र न्यायशास्त्रसंवादः

न्यायवार्त्तिककृताऽपि अस्य सन्निकर्षस्यैव प्रत्यक्षप्रमां प्रति करणत्वमुक्तम्[7] ।

---

1. वा. प. १।४४; १।९७ ।
2. म. भा., उ. १।१।१ ।
3. म. भा., श. कौ. १।१।१ ।
4. म. भा. ३।२।११५ ।
5. म. भा. ३।२।११५ ।
6. वा. प., हे. टीका, ३ काण्डे साधनसमु., कारि. १२ ।
7. "उपलब्धिहेतुः प्रमाणम्....यदुपलब्धिनिमित्तं तत्प्रमाणम् । ····अकरणा प्रमाणोत्पत्तिरिति चेन्न, इन्द्रियार्थसन्निकर्षस्य करणभावात् ····साधकतमत्वाद्वा न प्रसङ्गः" । (न्या.वा., पृ. ५-६)

न्यायमञ्जरीकृताऽपि कमनीययुक्तिभिरुक्तार्थस्य साधनं कृतम् । तथा हि–यदि असन्निकृष्टमपि चक्षुरादीन्द्रियं गृह्णीयात्, तर्हि व्यवहितोऽप्यर्थः स्वत उपलभ्यते, न चोपलभ्यते, तस्मादिन्द्रियस्यार्थेन सह सम्बन्धोऽवश्यमभ्युपगन्तव्यः ।

नन्वव्यवधानमेवास्तु, किं सम्बन्धकल्पनया ? मैवं वोचः, रसनस्पर्शनयोः स्पष्टं प्राप्यकारित्वम्, तद्वदिन्द्रियान्तरेष्वपि अवश्यं कल्पनीयमिति समेषां ज्ञानेन्द्रियाणां प्राप्यकारित्वेन कारकत्वं स्फुटमायाति । संसृष्टमेव च कारकं फलाय कल्पत इति अर्थेन सह संसर्गोऽवश्यं कल्पनीय इति[1] ।

न्यायकुसुमाञ्जलिकृताऽपि अयं विषयोऽनुमोद्यते स्म प्रकारान्तरेण । तथा हि–इन्द्रियेणासन्निकृष्टो घटादिर्न हि प्रत्यक्षो भवति । एवं सति सर्वस्य पुरुषस्य सर्वत्रार्थे प्रत्यक्षं स्यात् । अतः सन्निकर्ष एवार्थोपलब्धौ साधकतम इति प्रत्यक्षप्रमां प्रति स एव करणम् । यो हि साधकतमः स एव प्रमाणम्, न पुनर्ज्ञानमज्ञानं वा यद् यत् तत्सर्वं प्रमाणमिति नियमः, संशयादावपि प्रमाणत्वप्रसङ्गादिति तादृशसन्निकर्षस्य प्रमाणत्वं निराबाधमिति[2] ।

## उक्तविषये विसंवादि जैनादिदर्शनम्

इन्द्रियार्थयोः सन्निकर्षः प्रत्यक्षं प्रति न करणमित्यत्र न्यायकुमुदकृद् ब्रूते–सन्निकर्षस्य प्रत्यक्षेण सहाऽन्वयव्यतिरेकसहचारौ न स्तः । घटे यथा चक्षुषः संयोगः, तथैवाकाशेऽपि संयोगोऽस्त्येव, कुतो न तत्प्रत्यक्षमिति सन्निकर्षे सत्यपि प्रत्यक्षानुत्पत्तेर्न सन्निकर्षस्य तत्र साधकभाव इति[3] ।

---

1. "ननु सन्निकर्षावगमे किं प्रमाणम् ? व्यवहितानुपलब्धिरिति ब्रूमः । यदि ह्यसन्निकृष्टमपि चक्षुरादीन्द्रियमर्थं गृह्णीयात्, व्यवहितोऽपि ततोऽर्थ उपलभ्येत, न चोपलभ्यते, तस्मादस्ति सन्निकर्षः । तत्सामान्यादिन्द्रियान्तरेष्वपि कल्पनीयम्" । (न्या. म., प्र. भा., प्रमाणप्रक., पृ. ६९) "कारकं चाप्राप्यकारि चेति चित्रम्" । (न्या. म., द्वि. भा., पृ. ५० )
2. "सन्निकर्ष एवार्थोपलब्धौ साधकतमत्वात् प्रमाणम् । साधकतमत्वं हि प्रमाणत्वेन व्याप्तम्, न पुनर्ज्ञानत्वमज्ञानत्वं वा, संशयादिवत्, प्रमेयार्थवच्च । तच्चार्थोपलब्धौ सन्निकर्षस्यास्त्येव । न ह्यसन्निकृष्टेऽर्थे ज्ञानमुत्पत्तुमर्हति, सर्वस्य सर्वत्रार्थे तदुत्पत्तिप्रसङ्गात्" । (न्यायकुसु., टी., पृ. २८ )
3. "तस्यार्थप्रमितौ साधकतमत्वासम्भवात्, यद्भावे हि प्रमितेर्भाववत्ता, यदभावे चाभाववत्ता तत्तत्र साधकतमम् । भावाभावयोस्तद्वत्तासाधकतमत्वमित्यभिधानात् । न चैतत् सन्निकर्षे सम्भवति, तस्मिन् सत्यपि प्रमित्यनुपपत्तेः । आकाशादिना हि घटवत् चाक्षुषसंयोगो विद्यते, न चासौ तत्र प्रमितिमुत्पादयति" । (न्यायकुमुद., पृ. २८ )

प्रमेयकमलमार्तण्डकृता श्रीप्रभाचन्द्राचार्येणोच्यते–चक्षुषो घट इवाकाशेऽपि विद्यमानः संयोगो न तत्प्रत्यक्षोत्पादकः । रूपादिवच्छब्दरसादावपि विद्यमानः संयुक्त-समवायो न तत्प्रत्यक्षं जनयितुं प्रभवति । एवमेव रूपत्ववत् शब्दत्वादौ च प्रवर्तमानः संयुक्तसमवेतसमवायोऽपि न शब्दत्वादिप्रत्यक्षमुत्पादयितुं समर्थः । सन्निकर्षाभावेऽपि च दण्डादिविशेषणज्ञानेन दण्डी इति विशिष्टप्रमितेरुत्पत्तेर्व्यतिरेक- व्यभिचारोऽपि । यदि तु सन्निकर्षे ईदृशः शक्त्यतिशयो येनेत्थम्भवति, हन्त! तर्हि स एव हेतुरस्तु, किमनेनान्तर्गडुना सन्निकर्षेणेति[1] । इदन्तु शक्त्यतिशयानङ्गीकारपरास्तम् ।

न्यायदीपिकाकृता तु चेतनस्यैव प्रमाकरणत्वनियमेन अचेतनरूपस्य संयोगादि-सन्निकर्षस्य प्रमाकरणत्वं नैव सम्भवतीति निर्दिष्टम्[2] ।

प्रमाणप्रमेयकलिकाकृताचार्यनरेन्द्रसेनेन प्रोच्यते–अर्थप्रमितौ साक्षाज्ज्ञानमेव प्रमाणं भवति, न तु सन्निकर्षः । स हि नार्थप्रमितौ साधकतमः, स्वप्रमितौ असाधकत्वात् । न ह्यचेतनोऽर्थः स्वप्रमितौ कारणम्, तत्र प्रमाणत्वव्यवहारस्त्वौपचारिकः प्रदीपादिवत् । किञ्च, सन्निकर्षस्य तद्घटितस्य वा प्रत्यक्षप्रमाणलक्षणत्वेऽव्याप्त्यतिव्याप्तिदोषावपि सम्भवतः । तथा हि– यथा घटे चक्षुषा संयुक्ते सति संयोगाद् घटस्य चाक्षुषम्, संयुक्त-समवायात् तदीयरूपस्य, संयुक्तसमवेतसमवायाद् रूपत्वस्य, तथैव घटस्य तत्रत्यर-सगन्धादेः, तदीयरसत्वगन्धत्वादेश्च तैरेव सन्निकर्षैश्चाक्षुषं जायताम्, न च जायते इत्यव्याप्तिरिदानीं (त्वन्मते) तेषामपि लक्ष्यत्वेन, अस्य च लक्षणस्य तेषु असम्मतत्वात् । अज्ञानरूपस्याप्यस्य प्रमाणत्वे घटादिप्रमेयस्यापि प्रमाणत्वं प्रसज्येतेत्यतिव्याप्तिः[3] ।

---

1. "भावाभावयोस्तद्वत्तासाधकतमत्वमित्यभिधानात् । न चैतत् सन्निकर्षादौ सम्भवति, तद्भा-वेऽपि क्वचित् प्रमित्यनुत्पत्तेः । न हि चक्षुषो घटवदाकाशे संयोगो विद्यमानोऽपि प्रमित्युत्पादकः । संयुक्तसमवायो वा रूपादिवच्छब्दरसादौ, संयुक्तसमवेतसमवायो वा रूपवच्छब्दत्वादौ; तदभावेऽपि च विशेषणज्ञानाद् विशेष्यप्रमितेः सद्भावोपगमात् । योग्यताऽभ्युपगमे सैवास्तु, किमनेनान्तर्गडुना" । (प्रमेयक., प्र. परि. सू. १।१, पृ. १४ )
2. "सन्निकर्षस्य योगाभ्युपगतस्याचेतनत्वात् कुतः प्रमितिकरणत्वम् ? कुतस्तरां प्रमाणत्वम् ? कुतस्तमां प्रत्यक्षत्वम् ? किञ्च, रूपप्रमितेरसन्निकृष्टमेव चक्षुर्जनकम्, अप्राप्यकारित्वात् तस्य । ततः सन्निकर्षाभावेऽपि साक्षात्कारिप्रमोत्पत्तेर्न सन्निकर्षरूपतैव प्रत्यक्षस्य ।
(न्यायदीपिं. पृ. २९)
3. "नापि सन्निकर्षः प्रमाणम्, तस्याप्यव्यभिचारादिविशेषणविशिष्टार्थप्रमितावसाधकतमत्वात् । अर्थप्रमितावसाधकतमत्वं च स्वप्रमितावसाधकतमत्वेन सिद्धम् । तथा हि न सन्निकर्षोऽर्थ-

अथ साक्षादर्थप्रमितौ साधकतमस्य ज्ञानस्योत्पादकत्वेन सन्निकर्षस्य प्रामाण्यम्, तर्हि उपचारादेव तस्य प्रामाण्यं वचनीयम्, मुख्यतस्तु ज्ञानस्यैव । तच्च भवता नाऽभ्युपगन्तुं शक्यते, परमताभ्युपगमप्रसङ्गादिति ।

**शब्दब्रह्मवादिनामत्रोत्तरः पक्षः**

उक्तेषु विसंवादिमतेषु शब्दशास्त्राचार्या इत्थं निष्कर्षमुपस्थापयन्ति–(१) प्रथमं तावद् यदिदमुच्यते 'अन्वयव्यतिरेकसहचारौ न स्तः । घट इवाकाशेऽपि चक्षुषा संयोगसत्त्वेऽपि तत्प्रत्यक्षाभावेनान्वयव्यभिचारादिति, तन्न युक्तिसिद्धम्, विषयनिष्ठ-स्योद्भूतरूपस्य विषयप्रत्यक्षे सहकारित्वोपगमात्[1] । एवं चाकाशे चक्षुःसंयोगसत्त्वेऽपि उद्भूतरूपस्य विरहेण न तस्य प्रत्यक्षमिति नान्वयव्यभिचारशङ्कोन्मेषः । यत्तु प्रमेयकमलमार्तण्डकृता घटीयरसरसत्वगन्धगन्धत्वादीनामपि चाक्षुषमापादितम्, तदपि न रोचते । तत्तदिन्द्रियजन्यप्रत्यक्षे विषयस्य योग्यतापि सहकारित्वेनापेक्ष्यत इति चाक्षुषप्रत्यक्षे रसगन्धादीनां योग्यत्वाभावान्न तेषां चाक्षुषमापादयितुं शक्यते । स्पष्टं चैतद् वाक्यपदीये "घटस्य दृशिकर्मत्वे महत्त्वादीनि साधनम्" इत्यत्र[2] । अत्र हि 'महत्त्वादीनि' इत्यत्रादिपदेन योग्यत्वस्यापि ग्रहणमुचितम्, दर्शनान्तरसंवादात्[3] अनुमानाच्च[4] ।

---

प्रमितौ साधकतमः, स्वप्रमितावसाधकतमत्वात्, घटवत् । न ह्यचेतनोऽर्थः स्वप्रमितौ करणम्, तद्वत्, तस्मात्सन्निकर्षः प्रमाणमन्यत्रोपचारात्, प्रदीपादिवत्, यथा प्रदीपादीनां करणत्वमुपचारात्, तथा सन्निकर्षस्यापि ।

किञ्च अव्याप्त्यतिव्याप्तिदोषसम्भवेन सन्निकर्षः प्रमाणमिति लक्षणं प्रत्यक्षमुपलभ्यते परीक्षादक्षैः । तथा हि यथा चक्षुषा संयुक्ते घटे संयोगसंयुक्तसमवायसंयुक्तसमवेतसमवायसम्बन्ध-त्रयवशाद् घट-रूप-रूपत्वज्ञानमुररीक्रियते भवता, तथा घटरसरसत्वज्ञानमप्युररीक्रियताम्, सम्बन्धत्रयस्य तत्रापि सत्त्वादित्यव्याप्तिः । सन्निकर्षस्याज्ञानरूपस्य प्रामाण्ये घटादिप्रमेयार्थ-स्यापि प्रामाण्यप्रसङ्ग इत्यतिव्याप्तिः, परमतप्रसङ्गश्च' । (प्रमा. प्र. क., पृ. १५-१६ )

1. वा. प., तृ. का., कारि. २४ । स्फुटीभविष्यति चेदमनुपदमेव ।
2. वा. प., तृ. का., साधनसमुद्देशः, हेला. कारि. ९ ।
3. क्रियां जातिं योग्यवृत्तिं समवायं च तादृशम् ।
   गृह्णाति चक्षुःसंयोगादालोकोद्भूतरूपयोः ॥
   (न्या. सि. मु., प्र. ख., का. ५५)
4. शब्दशास्त्रे वाक्यपदीयादिमत उद्भूतरूपालोकमहत्त्वादीनां सहकारित्वस्य शब्दत उक्ततया तेषां सर्वेषां रसादिभिरपि सामानाधिकरण्येन रसादीनामपि प्रत्यक्षं स्यात्, न च भवतीति नूनं किञ्चित्कारणमेवात्र नास्तीति कल्प्यते, तदेव योग्यत्वं नामेति पारिशेष्याद् आदिपदस्य तत्र शक्तिरनुमीयते ।

सामान्यलक्षणाग्रन्थे श्रीजगदीशतर्कालङ्कारेण तादात्म्येन गन्धादेः प्रतिबन्धकत्वं स्वीकृत्य गन्धादेश्चाक्षुषं प्रत्यक्षं निराकृतम्,[1] 'यादृग् दृश्यते तादृक् कल्प्यते' इति सिद्धान्तात् ।

यदपि तेन पुनरुच्यते दण्ड इति विशेषणज्ञानमात्रेण दण्डी इति विशिष्टप्रमिते-रुदयान्न सन्निकर्षो हेतुरिति । तदपि न विद्वन्मनोग्राहि, यतो हि दण्डी इति विशिष्टप्रमितिर्यदि विशिष्टप्रत्यक्षात्मिका, तदा दण्ड इति विशेषणेनापि सह चक्षुःसंयोग आवश्यकः । न हि घटवद् भूतलमिति प्रत्यक्षं घटेन सह चक्षुःसंयोगाभा-वेऽप्युदेतुमर्हतीति न व्यतिरेकव्यभिचारशङ्कावतारः ।

यच्च न्यायदीपिकायामुक्तम्—सन्निकर्षस्याचेतनत्वान्न प्रमाकरणत्वमिति तदपि न मनोरमम्, अत्र हि अचेतनत्वं प्रमाकरणत्वाभावेन व्याप्तमिति अन्वयत आयाति । प्रमितौ करणत्वं चेतनत्वेन व्याप्तमिति च व्यतिरेकमुद्रयाऽऽयाति । एवं च चेतनस्य (चैतन्याश्रयस्य) कारणत्वे सम्पन्ने को नाम कर्ता तदन्यः स्यात् ? कर्तारमन्तरेण च करणं न प्रसिध्यति, करणं हि सकर्तृकमिति नियमात्[2] ।

अग्रे उक्तमप्राप्यकारित्वमपि न शोभनम्, असन्निकृष्टस्यापि पर्वतवृक्षादेः प्रत्यक्षत्वापत्तेः ।

आचार्यनरेन्द्रोक्तिरपि न विद्वन्मनोहारिणी, तथा हि स्वप्रमितौ असाधकतमत्वेन सन्निकर्षोऽर्थप्रमितावपि असाधकतम एवेति यदुच्यते, तत्र स्वप्रमितावित्यस्य कोऽर्थः ? स्वस्य प्रमितिरिति चेत्, तर्हि ज्ञानात्मकप्रमाणस्य ज्ञानान्तरं भवता नूनं स्वीकृतम्, न तु तस्य स्वप्रकाशत्वम् । एवं च स्वसिद्धान्तव्याकोपः[3] । यदि तु स्वं चासौ प्रमितिरिति, हन्त! तर्हि स्वं प्रति स्वस्य साधकत्वमेव न कुत्रचिद् दृष्टम्, कुतः साधकतमत्वम् ? तदभावे च कथं स्वप्रमितौ असाधकतमत्वादिति हेतुः सन्निति वक्तुं शक्यते ? साधकतमात्मकप्रतियोगिनोऽभावेनासाधकतमस्याप्यभावात्, अलीकप्रति-योगिनोऽभावस्यानङ्गीकारात् ।

---

1. गन्धादेरचाक्षुषत्वोपपत्तये चाक्षुषादिकं प्रति तादात्म्येन अवश्यं गन्धत्वादिना प्रतिबन्धकत्वं वाच्यम् । तथा च तत्रैव लौकिकविषयतामात्रं न प्रतिवध्यताघटकः सम्बन्धः, किन्तु मुख्यविशेष्यत्वनिर्विकल्पकविषयत्वयोरन्यतरदेव" । (सा. ल., जा. टी. काशि., पृ. ७६-७७)
2. न्या. सि. मु., प्र. ख., कारिका ४७ ।
3. "ज्ञानं प्रकाशमानमेवार्थं प्रकाशयति, प्रकाशकत्वात् प्रदीपववत्" । (प्र. मी., पृ. ३ । अ. १, आ. १, सू. २) "प्रमाणं स्वपराऽवभासि" । (न्या. बो. १ )

किञ्च सन्निकर्षस्याज्ञानरूपस्य प्रामाण्ये घटादिप्रमेयस्यापि प्रामाण्यापत्तिरित्यपि न युज्यते वक्तुम् । व्यापारवदसाधारणं कारणं हि करणम्, तच्चात्र सन्निकर्षात्मक-व्यापारवत्वादिन्द्रियमेव । घटादिरूपे प्रमेये तु तल्लक्षणमभावान्न प्रामाण्यं प्रसजति ।

यच्चोक्तम्– साक्षादर्थप्रमितौ साधकतमस्य ज्ञानस्योत्पादकत्वेन सन्निकर्षस्यौपचा-रिकं प्रामाण्यमित्यादि, तत्रोच्यते–किमिदं ज्ञानं घटादिज्ञानमेव ? अर्थप्रमितौ यस्य साधकतमत्वमुच्यते भवता । तत्रापि इदं ज्ञानं किं प्रमारूपम्, आहोस्वित् अप्रमारूपम्, आद्ये तस्य करणं किम् ? अन्त्ये व्यभिचारितया प्रामाण्यं कुतस्तस्येति विभाव्यतां मनीषिभिः । अन्यत्सर्वं समाहितमेव ।

**प्रमाणमन्यत्तज्जन्यं ज्ञानमन्यदित्यत्र मञ्जरीकारः**

चक्षुरादीन्द्रियजनितं कपित्थादिदर्शनं विषयप्रकाशनेन व्याप्रियमाणमिवाभातीति करणमुच्यताम्, विषयानुभवस्वभावात् तदेव फलमपि (प्रमाऽपि), इति प्रमाणाद-भिन्नमेव फलमस्तु इति यदि ब्रूषे, तदापि प्रमाणस्य स्वरूपहानिप्रसङ्गः स्यात्, करणं हि प्रमाणमुच्यते प्रमीयतेऽनेनेति । न हि क्रियैव क्वचित् करणं भवति, क्रियायां साध्यायां कारकं किमपि करणमुच्यते । तत्र यथा दात्रेण चैत्रः शालिस्तम्बं लुनातीत्यादौ कर्तृकर्मकरणानि क्रियातो भिन्नानि उपलभ्यन्ते, तथैव चक्षुषा घटं पश्यतीत्यादावपि दर्शनक्रियातः पृथग्भाव एव तेषां युक्त इति न ज्ञानं करणमिति आगतम्[1] ।

**ज्ञानस्यैव प्रत्यक्षात्मकस्य प्रमाणत्वम्, इन्द्रियस्य त्वौपचारिकम्**

यत्तु कैश्चिदाक्षिप्यते–चक्षुरादिषु इन्द्रियेषु सत्स्वपि घटादिप्रत्यक्षं यदा तैर्न जन्यते, तदा तेषु न करणत्वव्यवहारः, यदा च ज्ञानं समुत्पद्यते तदा भवति करणत्वव्यवहार इति मन्ये करणस्य ज्ञानस्योत्पादकत्वादेव तेषां तत्त्वेन व्यपदेशः, न साक्षात्करणत्वादिति ।

**उक्तमतनिरासः**

तदपि अतीवासमञ्जसम्, तथा हि इन्द्रियेणोपजनितं ज्ञानं कस्यां क्रियायां करणम् ? परीक्ष्यतामेतत्, न हि आत्मन्येव किञ्चित् करणं भवति । ज्ञानमजनयत्सु इन्द्रियेषु करणत्वं नास्ति इति तु इष्यत एव, न हि क्रियोत्पत्तावव्याप्रियमाणं कारकं

---

1. न्या. म., प्रमाणप्र., पृ. ६६ ।

करणं भवति, ततश्च ज्ञानक्रियामुपजनयतश्चक्षुरादेरेव करणत्वम्, ज्ञानस्य तु फलत्वमित्येव सिद्धान्तः[1] । किञ्च, यदि ज्ञानस्य प्रमाणत्वमभ्युपगन्तव्यमेव, तदा हानोपादानोपेक्षाबुद्धीनां फलत्वमङ्गीकरणीयमित्यपि उक्तं बहुत्र दर्शनेषु[2] ।

अत्र विषये द्वितीयपुष्पस्योपक्रम एवेन्द्रियविशिष्टान्तःकरणस्य विषयाकारपरिणामरूपावृत्तिर्भवति, तस्याः प्रमात्वं प्रमाकरणत्वं च "वृत्तिस्वरूपनिरूपणम्," "प्रत्यक्षप्रमायां मुख्यः पक्षः" इत्यनयोर्विषययोर्निरूपणे पर्याप्तं निरूपितमिति पुनर्नोच्यते ।

**प्रमाणरूपाया अस्या वृत्तेर्विषये दर्शनान्तरीयो विसंवादः**

बहुशोऽपि कृते विमर्शेऽस्या वृत्तेः स्वरूपमेव नाऽवतिष्ठत इति कुतोऽस्याः प्रामाण्यमित्यत्र न्यायकुमुदकृतो जैनाचार्याः प्राहुः । तथा हि–नन्वियं वृत्तिरिन्द्रियादिभ्यो भिद्यते, न वा ? यदि न भिद्यते तदा श्रोत्रादिरूपैव सा, सुषुप्त्यवस्थायामपि श्रोत्रादिरूपायास्तस्याः सत्त्वेन सुषुप्तप्रबुद्धयोरविशेषः प्रसज्येत । यदि भिन्नैव सा तर्हि किं सम्बद्धा सती सा प्रमाणमुताऽसम्बद्धा सती । यद्यसम्बद्धैव, तदा कथं श्रोत्रादिवृत्तिरियमिति व्याहर्तुं शक्येत ? यद् येनासम्बद्धं न तत् तस्येति व्यवहारो भवति, यथा सह्ये विन्ध्ये इति । अथ सम्बद्धा, किं समवायेन संयोगेन, विशेषणभावेन वा ?

अथ समवायस्तदास्य नित्यतया एकतया व्यापितया च श्रोत्रादीनामपि व्यापित्वसद्भावे च प्रतिनियतदेशा वृत्तिर्भवद्भिः कथमङ्गीक्रियते ? अथ संयोगस्तदा द्रव्यान्तरत्वप्रसक्तेर्नासौ तद्धर्मः स्यात् । न चेष्टापत्तिः, इन्द्रियाणां वृत्तिरिति कथङ्कारमिदानीं युज्यते वक्तुम् ? वृत्तेः पदार्थान्तरत्वात् । या यस्य वृत्तिर्न सा ततोऽन्यः पदार्थ इति नियमात् । अथ विशेषणभावः, तस्यापि स्वरूपसम्बन्धविशेषत्वे पुनरपि इन्द्रियानतिरिक्तत्वप्रसङ्गः पूर्वोक्त एव स्यात् । तस्मादिन्द्रियवृत्तेर्विचार्यमाणायाः सत्त्वासम्भवात् कथं विषयाकारपरिणतेन्द्रियवृत्त्यालम्बना मनोवृत्तिरिति सुघटं स्यात्, इन्द्रियवृत्तेर्विषयाकारपरिणतत्वानुपपत्तौ मनोवृत्तेस्तदाऽऽलम्बनत्वानुपपत्तेः[3] ।

स्याद्वादरत्नाकरकृता[4] प्रमेयकमलमार्तण्डकृताऽपि[5] चेयं सरणिरापनीयतां नीता ।

---

1. न्या. म., प्रमाणप्र., पृ. ६७ ।
2. जै. द., प्र. मी., अ. १, आ. १, सू. ४० ।
3. न्यायकुमुद., पृ. ४१ ।
4. स्याद्वादरत्ना., पृ. ७३ ।
5. प्रमेयकमलमा., पृ. १९-२० ।

प्रमाणप्रमेयकलिकायां तु कश्चिद् विशेषोऽप्युक्तः, तथा हि–नाऽपीन्द्रियवृत्तिः प्रमाणम्, अर्थप्रमितौ साधकतमत्वायोगात् । न ह्यचेतनोऽर्थः करणम्, पटवत् । अचेतनत्वमिन्द्रियवृत्तेरिन्द्रियाणामचेतनत्वात् । तेषामचेतनत्वं तु प्रकृतिपरिणामात् । तथा चोक्तं 'प्रकृतेर्महान्' (सां.का. २२) इति । किञ्च, स्वप्रमितावसाधकतमत्वेनापि चास्या वृत्तेर्नार्थप्रमितौ साधकतमत्वम्, किञ्च, ज्ञानेन व्यवहितत्वादपि नास्याः प्रामाण्यम्, यद् येन व्यवहितं न तत् तत्र प्रमाणम्, कुठारादिव्यवहितलौहकारादिवदित्यादि[1] ।

**अत्रोत्तरपक्षः शब्दशास्त्राचार्याणाम्**

पूर्वोक्तं तदेतत्सर्वं न रोचते, तथा हि–अचेतनस्यापि कुठारादेः करणत्वं दृष्टम् । स्वच्छिदायामसाधकतमस्यापि कुठारस्य वृक्षच्छिदायां करणत्वं दृष्टम् । वृत्तेर्ज्ञानेन व्यवहितत्वं नाभ्युपेयते । आवरणाभिभवः, चित्सम्बन्धः, आवरणभङ्गो वा वृत्तेर्व्यापार इति न व्यवधायकः । व्यापारस्य व्यवधायकत्वे सर्वत्राऽकरणत्वप्रसङ्गात् ।

किञ्च, जैनाचार्यैर्यदुक्तम्–इन्द्रियवृत्तिर्न प्रमाणम्, अचेतनत्वात् पटवदिति । अत्रोच्यते–चेतनश्चैतन्याश्रयो ज्ञाता इत्युच्यते, ततश्चाचेतनत्वादित्यस्य चेतनत्वाभावादित्यर्थः । ततश्च व्यतिरेकव्याप्तौ यत्र यत्र प्रमाकरणत्वं तत्र तत्र ज्ञातृत्वरूपं चेतनत्वमिति पर्यवस्यति, एवं च कर्त्तृत्वकरणत्वयोर्विरुद्धयोः सामानाधिकरण्यमापतति, वैयधिकरण्ये च न व्यतिरेकव्याप्तिसिद्धिरप्यपेक्षिता भवति ।

किञ्च, न हि अचेतनोऽर्थः करणम्, पटवदित्यपि न रोचते, अचेतनस्यैव दण्डादेर्घटादिकार्ये करणतया दृष्टत्वेन त्वदुक्तनियमे व्यभिचारात् । अर्थप्रमितौ न करणमिति चेत्, तदपि न शोभनम्, दीपादेरचेतनस्य घटाद्यर्थप्रकाशे करणत्वेन दृष्टत्वात् । न चौपचारिकं करणत्वम्, वास्तविकत्वे सम्भवति औपचारिकत्वे मानाभावात् । उक्तं च जयन्तभट्टैः[2]–बोधाबोधस्वभावा सामग्री प्रमाणमिति, समुदायस्य च प्रत्येकानतिरिक्तत्वात् ।

किञ्चेन्द्रियवृत्तिरिन्द्रियेभ्यो भिन्ना अभिन्ना वा इति विकल्पोऽपि न युज्यते । इन्द्रियस्यैव परिणामविशेषो वृत्तिरिन्द्रियेण सह तादात्म्येन सम्बन्धेन सम्बद्धा, न तु संयोगेन, नाऽपि समवायादिना । तादात्म्यं चैतद् भेदसमानाधिकरणाभेदघटितम्, वृत्तिरूपकार्यस्याविर्भावदशायां भेदः, तिरोभावदशायामभेद इति न तयोर्विरोध उद्भावनीयः । तदुक्तम्–

---

1. प्रमाणप्रमेयक., पृ. ७-९ ।
2. न्या. म., प्र. प्रक., पृ. १२-१४ ।

**कार्यात्मना तु नानात्वमभेदः कारणात्मना ।**
**हेमात्मना यथाऽभेदः कुण्डलाद्यात्मना भिदा ॥** इति ।

नीलो घट इत्यादौ सामानाधिकरण्यमपि भेदाभेदरूपमेव, नाप्यत्यन्तं भेदः, तथा सति गवाश्वयोरपि तत्त्वं प्रसज्येत, नाप्यत्यन्ताभेदः, तथात्वे घटकलशयोरपि तत्त्वमापद्येतेति स्पष्टमद्वैतसिद्धौ टीकायाम्[1] ।

अतश्चेयं वृत्तिः श्रोत्रादिभ्यो भिन्नापि, अभिन्नापि इति तदुक्तो विकल्पो विलयं गतः । अन्येऽपि तन्मूलाः सर्वे विकल्पा विलयं प्राप्ताः । ज्ञानेन व्यवहिता वृत्तिरित्यत्र तु समाधानं पूर्वमेव कृतम् ।

किञ्च, सन्निकर्षस्य वृत्तेर्वाऽर्थप्रमितौ प्रामाण्यमभिदधतां योगानां सांख्यानां च निकाय इदं न प्रमाणमज्ञानरूपत्वादिति व्याप्तिरुद्भावयितुं न शक्यते, इदं प्रमाणम्, प्रमां प्रति अन्वयव्यतिरेकवत्त्वाद् इत्येवं सत्प्रतिपक्षितत्वात् ।

प्रत्यक्षत इन्द्रियस्य तद्वृत्तेर्वाऽनुपलम्भेऽपि ज्ञानाख्यकार्यहेतुकानुमानेन तत्सत्त्वे सिद्धे 'बहुशो विचार्यमाणाया अपि इन्द्रियवृत्तेः सत्त्वं नोपलभ्यते' इति कथनमपि साहसमात्रमेव परेषाम् । किञ्चान्तःकरणवृत्त्यवच्छिन्नचैतन्यरूपे ज्ञाने घटादिविषयकत्वरूपा घटाकारता नानुभूयेत यदि घटाद्याकारा वृत्तिर्न स्यात्, अत एव बौद्धैर्विज्ञानस्यैव विषयाकारः परिणामः स्वीकृतः ।

## चाक्षुषादिप्रत्यक्षे सहकारिविमर्शः

अथ प्रत्यक्षलक्षणं तदन्तर्गतात्ममन-इन्द्रियसन्निकर्षवृत्तीनां स्वरूपलक्षणभेदादिकं च निरूप्य, कस्मिन् प्रत्यक्षे किं सहकारि इति निरूप्यते शाब्दिकमते तत्संवादिमते च ।

तत्र चाक्षुषे प्रत्यक्षे आलोकस्येव मनःसमाधेरपि सहकारिता प्रदर्शिता चतुर्थाध्याये महाभाष्योद्द्योते[2] नागोजिभट्टेन । वाक्यपदीये ब्रह्मकाण्डे टीकायां (श्रीभर्तृहरिणा) वृषभदेवेन चक्षुःप्रणिधानस्यापि तत्र सहकारिता प्रोक्ता[3] । किञ्च, तत्रैव द्वितीयकाण्डे टीकायां श्रीपुण्यराजेन 'द्रष्टुः प्रणिधानं चाक्षुषे सहकारि' इत्युक्तम्[4] ।

1. अद्वैतसि., गौड. टीका., पृ. ५९ ।
2. म. भा., उ. ४ अ., १ पा., १ आ., ३ सू., पृ. २३ ।
3. वा. प., ब्र. का., कारि. ९०, वृषभदेवीये ।
4. वा. प., द्वितीयका., कारि. ४०७, पुण्यराजीये ।

तृतीयकाण्डे तु दृष्टान्तप्रदर्शनपुरस्सरं सहकारिकारणं निरूपितम् । तथा हि– दात्रस्य तीक्ष्णताधानसंस्कारः, उद्यमननिपतने विनियोगः । चक्षुषोऽञ्जनादि-संस्कारः, प्रणिधानं विनियोग इति[1] ।

पुनरपि तृतीय एव काण्डे सम्बन्धसमुद्देशे "घटस्य दृशिकर्मत्वे महत्त्वादीनि साधनम्, रूपस्य दृशिकर्मत्वे रूपत्वादीनि साधनम्" इत्युक्त्या श्रीहेलाराजेन महत्त्वस्य महत्परिमाणस्य आदिपदेन आलोकादेश्च सहकारिता निरूपिता[2] ।

किञ्च, तृतीये काण्डे "चक्षुरूपालोकमिश्रितं मन इन्द्रियार्थान्यपरम्पराहित-विशेषाः संघटिता विज्ञानहेतवोऽन्वयव्यतिरेकाभ्यां दृष्टाः" इत्युक्त्या विषयगतोद्-भूतरूपस्य आलोकस्य द्रष्टुर्मनसश्चक्षुषः प्रणिधानस्य महत्परिमाणस्य च सर्वस्यापि सहकारित्वं प्रादर्शि श्रीहेलाराजेन । तत्र हि रूपपदेनोद्भूतरूपमेव[3] विषयगतम्, न तु चक्षुर्गतमनुद्भूतरूपम्, तस्य सर्वदा तत्र सत्त्वेन, किं वा तद्विशिष्टस्यैव चक्षुष्ट्वेन तद्ग्रहणे फलाभावात्, आलोकसाहचर्येणापि तादृशरूपग्रहणस्यौचित्याच्च । यद्यपि व्याघ्रविडालोलूकादीनां चक्षुष्येवास्ति आलोकः, येन ते रात्रावपि अन्धकारावृतमपि विषयं पश्यन्ति, तत्र सिंहव्याघ्रविडालानां नेत्रालोकः सौरालोकेनाभिभूतो न भवतीति दिवापि ते पश्यन्ति, उलूकस्य तु नयनालोको दिवा सौरप्रभयाभिभूयत इति दिवा स न पश्यति इति यथादृष्टं क्वचिन्नयनस्यालोकः क्वचिच्च बाह्यालोको रूपचाक्षुषे रूपवच्चाक्षुषे च सहकारीति ध्येयम् ।

इन्द्रियार्थयोरन्ये परम्पराहितविशेषा इत्यनेनेन्द्रियप्रणिधानं तत्संस्कारो महत्परि-माणं रूपादिकं च ग्राह्यमिति विवेकः । अत्र हेलाराजीये इन्द्रियार्थान्धपरम्पराहिते-त्यादिः पाठो न समीचीनः प्रतीयते, अर्थाऽसङ्गतेः ।

## उक्तविषये संवादिन्यायादिदर्शनम्

अत्र यद्यपि न्यायादिदर्शने षड्विधेऽपि प्रत्यक्षे महत्त्वस्य चाक्षुषे तु आलोकस्यो-द्भूतरूपस्य च सहकारित्वं मन्यते,[4] न तु मन-इन्द्रिययोः प्रणिधानस्य नापि

---

1. वा. प., तृ. का., साधनसमु., हेलाराजीये, कारि. ९१ ।
2. वा. प., तृ. का., सम्बन्धसमुद्देशे, हेलाराजीये, कारि. ९ ।
3. वा. प., तृ. का., सम्बन्धस., कारि. २४ ।
4. (क) "उद्भूतरूपं नयनस्य गोचरो द्रव्याणि तद्वन्ति पृथक्त्वसंख्ये" । (न्या. सि., मु. प्र. ख, कारि., ५४, पृ. २४४, दि. रामरुद्री. )

तत्संस्कारस्य च, तथापि व्याकरणदर्शनमर्मविद्भिरन्येषामपि यत्सहकारित्वं दर्शितम्, तस्यायमभिप्रायः – मनःप्रणिधाने सत्येव इन्द्रियसंयोगे सति विषयप्रत्यक्षं नान्यथेति अन्वयव्यतिरेकाभ्यां तस्यापि कारणत्वमायाति । यद्यपि प्रणिधानविशिष्टं मनः कारणमिति वक्तुं शक्यते, तावतापि विशेषणविशेष्यभावव्यत्यासे विनिगमनाविरहेण लाघवाद् द्वयोरपि हेतुत्वं सिद्ध्यत्येव । एवमेव विशिष्टाञ्जनसम्पर्केण नयनयोरतिसूक्ष्मेऽपि यत् सामर्थ्यमनुभूयते, तदपि संस्कारद्वारकमेवेति तादृशविशिष्टचाक्षुषेऽञ्जनलोपजनितसंस्कारस्यापि व्यापारविधया कारणता बोध्या ।

**अञ्जनव्यञ्जनाभ्यामिन्द्रियसंस्कारविषये महाभाष्यादिसम्मतिः**

अस्य संस्कारस्य बहुश उल्लेखः कृतो महाभाष्यादौ । तथा हि–"संस्कारकद्रव्येणेन्द्रियस्य संस्कारो भवति । तेनेन्द्रियगतदोषापनयनम्, तत्र शक्त्यतिशयाधानं वा । ततश्च विषयस्य प्रत्यक्षं तेन तेनेन्द्रियेण क्रियते विषयाकारवृत्तिद्वारा । एतद्विषये 'अञ्चोऽनपादाने' इति सूत्रे उच्यते श्रीपतञ्जलिना "अनेकार्था अपि धातवो भवन्तीति, अस्ति पुनः क्वचिदन्यत्राऽपि अञ्जिरञ्चत्यर्थे वर्तते ?" अस्तीत्याह अञ्जेरञ्जनम्, अञ्जनञ्च प्रकाशनम् । अङ्क्ते अक्षिणी इत्युच्यते यत्तत्सितं चासितं चैतत् प्रकाशयति । तथाञ्जेर्व्यञ्जनम्, व्यञ्जनञ्च प्रकाशनम् । यत्तत्स्नेहेन मधुरेण च जडीकृतानामिन्द्रियाणां स्वस्मिन्नात्मनि व्यवस्थापनम्, स रागस्तद् व्यञ्जनम् । अन्वर्थं खल्वपि निर्वचनं व्यज्यतेऽनेनेति व्यञ्जनमिति । अत्र प्रदीपः – अञ्जनमिति-अज्येते येनाक्षिणी तदञ्जनम् । तत्रैतत् स्याद्रूढिशब्दोऽयम्, रूढिषु च व्युत्पत्तिनिमित्तमेव क्रिया, न तु शब्दप्रवृत्तिनिमित्तमित्याशङ्क्य रूढिशब्दमुदाहरति–अङ्क्ते इति । व्यत्ययेन छन्दस्यात्मनेपदम् । यत्तत्सितं चेति–सितासिते सुतरां विभागेन प्रकाशयतीत्यर्थः । तथेति–व्यज्यतेऽनेन रस इति व्यञ्जनम् । राग इति रज्यतेऽनेनेति रागो व्यञ्जनमेव । अन्वर्थमिति–यौगिको व्यञ्जनशब्द इत्यर्थः । अत्रोद्द्योतः – अज्येते प्रकाश्येत इत्यर्थः – व्यज्यतेऽनेनेति जिह्वाया जडीभावनिराकरणेन रसो व्यज्यत इत्यर्थः । भाष्येऽपि इन्द्रियशब्देन जिह्वैव, व्यक्तिबहुत्वाद् बहुवचनमिति । एतद्ग्रन्थत्रितयालोचनेन अञ्जनव्यञ्जनाभ्यां नयनरसनयोः संस्कारः स्फुटमुपलभ्यते ।

---

(ख) "महत्त्वं षड्विधे हेतुरिन्द्रियं कारणं मतम्" ।(न्या. सि. मु., कारि. ५८ )
(ग) क्रियां जातिं योग्यवृत्तिं समवायं च तादृशम् ।
गृह्णाति चक्षुः संयोगादालोकोद्भूतरूपयोः ॥
(न्या. सि. मु., कारि. ५५, प्र. ख., पृ. २४४)

जिह्वाया जडीभावनिराकरणेन रसो व्यज्यत इत्युद्द्योतेन व्यञ्जनस्य करणत्वं प्रतीयत एव[1] । जडीभावनिराकरणमुपलक्षणमिन्द्रियदोषापनयनस्य शक्त्यतिशयाधानस्य च[2] ।

**वाक्यपदीयमतेऽपि संस्कारस्य व्यापारत्वम्**

**चक्षुषः प्राप्यकारित्वे तेजसा तु द्वयोरपि ।**
**विषयेन्द्रिययोरिष्टः संस्कारः स क्रमो ध्वनेः**[3] ॥

अनया कारिकया श्रीहरिणापि इन्द्रियस्य तेज आदिना संस्कारो भवतीति स्वीक्रियते । एतद्विषये मतत्रयं प्रदर्शितं तेन । इन्द्रियस्यैव संस्कार इत्येकं मतम्, विषयस्यैव संस्कार इति द्वितीयम्, उभयोरिति तृतीयम् । यथा तेजसा चक्षुष एव संस्कारः, घटादेर्विषयस्यैव वा, उभयोरपि वा । एवमेव ध्वनिना श्रोत्रेन्द्रियस्यैव घटादिशब्दस्यैव वा, उभयोरपि वा । उक्तं च–

**इन्द्रियस्यैव संस्कारः शब्दस्यैवोभयस्य वा ।**
**क्रियते ध्वनिभिर्वादास्त्रयोऽभिव्यक्तिवादिनाम्** ॥ इति[4] ।

तत्र इन्द्रियस्यैव संस्कार इति पक्षे दृष्टान्तः प्रदर्शितः, अञ्जनेन यथा चक्षुष एव संस्कार इति[5] ।

स चायं संस्कारो द्विविधः – इन्द्रियदोषापनयनरूपः, इन्द्रिये शक्त्यतिशयाधानात्मकश्च[6] । तत्र प्रथमस्तु प्रतिबन्धाभावसम्पादकतयाऽन्यथासिद्ध एव । द्वितीयस्तु व्यापारविधया हेतुरेव इन्द्रियजन्ये प्रत्यक्षे । इन्द्रियार्थान्यपरम्पराहितविशेषेषु[7] अस्यापि परिगणनमुचितम् । अन्यविधोऽपि संस्कारो वाक्यपदी-

---

1. म. भा., प्र., उ., ८अ., २ पा., २ आ., ४९ सू., पृ. १२३ ।
2. वा. प. १।७८ अम्बाकर्त्रीटीका च, पृ. १५१ ।
3. वा. प. १।८० ।
4. वा. प. १।७८ ।
5. "विषयस्य तु संस्कारस्तद्गन्धप्रतिपत्तये" । (वा. प., ब्र. का., कारि ७९)
"यथा तैलादींनामातपादिभिः पृथिव्याश्च निदाघघर्मसंतप्ताया उदकसेकेन गन्धप्रतिपत्तिकाले यः संस्कारो दृष्टः स विषयसंस्कारः" । (वा. प., अ. क. १।८०, पृ. १५२ )
6. वा. प., ब्र. का., कारि. ७८ । अम्बाकर्त्रीटीका., पृ. १५१ ।
7. वा. प., तृ. का., सम्बन्धसमु., कारि. २४ ।

येऽम्बाकर्त्र्यां समुल्लिखितः[1] । यथा रात्रौ क्रोशादिव्यवहितानामपि दीपप्रकाशानां सुदूरस्थितानामपि नक्षत्रादीनां चक्षुषा ग्रहणं भवति, मध्ये स्थितानां तत्तत्पदार्थानां तमसावृतानां ग्रहणं न भवति । तेन ज्ञायते चक्षूरश्मीनामालोकसंस्कारतद्भावावेव तत्तत्पदार्थानां तत्र ग्रहणाग्रहणहेतू इति[2] ।

**॥ इति प्रत्यक्षप्रमाणसमीक्षायां द्वितीयं पुष्पम् ॥**

●

1. वा. प., ब्र. का., कारि. ७८, अम्बाकर्त्री., पृ. १५१ (यथा तैलादीनामातपादिभिः पृथिव्याश्च निदाघघर्मसन्तप्ताया उदकसेकेन गन्धप्रतिपत्तिकाले यः संस्कारो दृष्टः, स विषयसंस्कारः) ।
2. वा. प., ब्र. का., कारि. ८०, अ. क., पृ. १५३ ।

## ॥ अथ प्रत्यक्षसमीक्षायां तृतीयं पुष्पम् ॥

**पुनरपि प्रत्यक्षविषये शब्दशास्त्रीयः कश्चन विशेषः**

इदानीं संस्कृतचक्षुरादिगुणानां विषयग्राहकत्वरूपः कश्चन विशेषः प्रदर्श्यते । तत्तदिन्द्रियगता गन्धरसरूपशब्दस्पर्शाख्या गुणा एव बाह्यार्थगतानां स्वसजातीयगन्धरसरूपादीनां प्रत्यक्षे निमित्तानि, न विजातीयानि गुणान्तराणि, नापि इतराणि इन्द्रियाणि, नेन्द्रियान्तरगुणाः । चाक्षुषे प्रत्यक्षे यथा चक्षुःसमवेतं रूपमेव भास्वरत्वात् स्वसमानजातीयस्य बाह्यरूपस्य ग्राहकम्, न चक्षुसमवेतानि गुणान्तराणि स्पर्शपरिमाणसंख्यादीनि, नापि अन्यानि इन्द्रियाणि रसनत्वगादीनि, नेन्द्रियान्तरस्य रसनादेर्गुणा रसादयः । एवमेवान्यस्मिन्नपि प्रत्यक्षे बोद्धव्यम् । तत्र चाक्षुषे स्पार्शने मानसे च प्रत्यक्षे तत्तद्गुणाश्रयीभूततत्तद्द्रव्याणामपि एभिरिन्द्रियगुणैरेव प्रत्यक्षं भवतीति शब्दशास्त्रे विशेष उक्तो हरिणा वाक्यपदीये तट्टीकायां वृषभदेवकृतायाम्, अम्बाकर्त्र्यां च श्रीगुरुचरणैः कृतायाम्[1] । सदृशग्रहणानाञ्च गन्धादीनां प्रकाशकमिति कारिकाव्याख्यावसरेऽपि वृषभदेवीयेऽम्बाकर्त्र्यां च कतिपये मनोरमा दृष्टान्ता एतद्विषय उक्ताः[2] । तथा हि–यथा नखस्य गन्धो नखम्पचाया यवाग्वा नखसंयोगिन्या गन्धेनैव तप्तयवागूकृतनखपाकद्वारा अभिव्यज्यते (प्रत्यक्षीक्रियते) । यथा वा शैलेयस्य गन्धः कुङ्कुमगन्धो वा स्वाश्रयसंयोगिगोघृतगन्धेनैव अभिव्यज्यते । यथा वा जलस्य मधुरो रसो हरीतक्या मधुरेणैव रसेनानुद्भूतेनाभिव्यज्यते । एवंरीत्या अगृहीतानामिन्द्रियाणां तद्गुणानां वा ग्राहकत्वं स्पष्टीकृतमस्ति वाक्यपदीये[3] ।

**अथात्र दर्शने प्रत्याख्येयानां न्यायवैशेषिकोभयसम्मतानामलौकिकसन्निकर्षाणां प्रत्यक्षप्रमाहेतुत्वविमर्शः**

न्यायवैशेषिकोभयसम्मता अलौकिकसन्निकर्षा अपि अलौकिकं प्रत्यक्षं जनयन्ति । ते च त्रिविधाः, सामान्यलक्षणज्ञानलक्षणयोगजभेदात्[4] ।

---

1. वा. प., ब्र. का., का. ९७ टी., पृ. १७५ ।
2. वा. प., ब्र. का., का. ९८ टी., पृ. १७६ ।
3. वा. प., ब्र. का., का. ५६-५७ ।
4. अलौकिकस्तु व्यापारस्त्रिविधः सम्प्रकीर्तितः ।
   सामान्यलक्षणो ज्ञानलक्षणो योगजस्तथा ॥
   (न्या. सि. मु., का. ६३)

**तत्र प्रथमस्तावत् सामान्यलक्षणः परीक्ष्यते**

सामान्यं लक्षणं स्वरूपं यस्यासौ सामान्यलक्षणः, सामान्यरूप इत्यर्थः । तच्च सामान्यमिन्द्रियसम्बद्धज्ञानप्रकारीभूतमेव ग्राह्यमिति । तादृशसामान्यस्य सन्निकर्षत्वे चक्षुरिन्द्रियसम्बद्धविशेष्यके धूम इति प्रत्यक्षे प्रकारीभूतेन धूमत्वसामान्यरूपेण (सन्निकर्षेण) समेषां त्रिकालवर्तिनां त्रिलोकीस्थितानां च धूमानां प्रत्यक्षं धूमा इत्येवं रूपमुत्पद्यते । एवमेव तादृशेन वह्नित्वेन सामान्यरूपसन्निकर्षेण सकलवह्नीनां प्रत्यक्षं भवति । ततश्च सकलधूमेषु सकलवह्निनिरूपिता व्याप्तिर्ग्रहीतुं शक्यत इति सामान्यतो व्याप्तिग्रहसिद्धिः[1] । अत एव पर्वते धूमेन हेतुना वह्नेरनुमितिः । अन्यथा तत्तद्धूमेन तत्तद्वह्नेः सिद्धावपि वह्नित्वेन वह्निर्न सिद्ध्येत्, सामान्यतो व्याप्तिग्रहा-भावात् । पर्वतीयवह्नित्वेन पर्वतीयवह्नेरपि नानुमितिर्भवितुमर्हति, पर्वतीयवह्निनिरू-पिताया व्याप्तेरपि पर्वतीयधूमेऽग्रहात् । किञ्च, पर्वतो वह्निमान्, न वेति पक्षे साध्यसन्देहः पक्षता, सा च स्वरूपसती अनुमितौ हेतुः, तत्सम्पादको धूमो वह्निव्याप्यो न वा इति सामान्यतो व्याप्तिसन्देह एव । स च संशयः सामान्यलक्षणसन्निकर्षाधीन एव[2], अन्यथा सकलधूमप्रत्यक्षमन्तरा तस्य कथं सम्भवः ?

एवमेव घटत्वेन सामान्येन सकलघटानां प्रत्यक्षे सत्येव सकलघटेषु घटपदीयः शक्तिग्रहः सम्भवति । अन्यथा सकलघटानां केनाप्युपायेन ग्रहाभावे तानुद्दिश्य घटपदीयवाच्यत्वग्रहाभावे सकलघटविषयिका शाब्दप्रमैव विलीयेत[3] ।

**वस्तुतः सामान्यविषयकं ज्ञानमेव सन्निकर्षः**

वस्तुतस्तु सामान्यं लक्ष्यते येनेति व्युत्पत्त्या सामान्यविषयकं ज्ञानमेव सन्निकर्षः स्वीकार्यः, अन्यथा[4] 'घटवद्भूतलम्' इत्यादौ यत्र घटादिरूपं सामान्यमनित्यम्, तत्र तस्मिन् विनष्टे सति तत्स्मरणेन 'भूतलानि घटवन्ति' इति मानसं प्रत्यक्षं न स्यात्[5] । इष्यते च तत् ।

---

1. व्याप्तिग्रहश्च सामान्यलक्षणप्रत्यासत्त्या सकलधूमादिविषयकः, कथमन्यथा पर्वतीयधूमे व्याप्त्यग्रहे तस्मादनुमितिः"? (सा. ल., चि. स., पृ. १-१२; द्र. दी. अ. जा., सा. ल. प्र., पृ. १-१२ )
2. न्या. सि. मु., कि. टी., प्र. ख., पृ. २१५ ।
3. श. वा., विशेष– का., पृ. ८६-८७ ।
4. "आसत्तिराश्रयाणां तु सामान्यज्ञानमिष्यते" । (न्या. सि. मु., कारि. ६४ )
5. न्या. सि. मु., कारि. ६४ ।

किञ्च, पूर्वदिने यस्य इन्द्रियसम्बद्धविशेष्यकं घट इति ज्ञानं जातम्, परदिने तस्य 'घटाः' इति ज्ञानं कुतो न जायते ? इन्द्रियसम्बन्धमन्तरापि तादृशज्ञान-प्रकारीभूतस्य घटत्वरूपसामान्यस्य विद्यमानत्वात् । अतः सामान्यज्ञानमेव सन्निकर्षः ।

**उक्तसन्निकर्षस्य प्रत्यक्षप्रमाहेतुत्वनिरासः**

पूर्वोक्तस्य सन्निकर्षस्य प्रत्यक्षकारणत्वं न रोचते शब्दशास्त्रविद्भ्यः, तत्तु अनुपदमेव वक्ष्यते । पूर्वं तावद् न्यायदर्शनमर्मज्ञैरेव कृतस्तन्निरास उच्यते–

धूमौ वह्निव्याप्य इत्येवंरूपेणैव व्याप्त्यनुभवः, तत्र धूमत्वेनैव धूमस्य वह्नित्वेनैव च वह्नेः प्रवेशः, न तु महानसीयत्वादिना । तथैव व्याप्तिस्मरणम्, धूमवानयमिति पक्षधर्मताज्ञानं चेति व्याप्त्यनुभवतत्स्मरणपक्षधर्मताज्ञानानां समानप्रकारकत्वेनानु-मितिहेतुत्वमुपपद्यते ।

एवमेव गवादिपदेष्वपि शक्त्यनुभवतत्स्मरणवाक्यार्थानुभवानामेकगोत्वादिप्रका-रकत्वेन हेतुहेतुमद्भावश्चोपपद्यत इति क्व सामान्यलक्षणस्योपयोगः ? स्पष्टं चैतत्सर्वं चिन्तामणिदीधितिव्याख्यानभूतायां सामान्यलक्षणजागदीश्याम्[1] ।

किञ्च, धूमो वह्निव्याप्यः, न वेति संशयोऽपि नानुपपन्नः । यस्य पुरुषस्य एतद्-धूमत्वेन (महानसीयत्वादिना) धूमे वह्निव्याप्तिग्रहस्तस्य तु सामान्यरूपेण धूमे व्याप्ति-निश्चयरूपप्रतिबन्धकाभावात् तादृशः संशयो भवितुं युज्यत एव । स्पष्टं चेदं दीधितौ सामान्यलक्षणचिन्तामणेः[2] ।

यत्तु पक्षे साध्यसंशयरूपपक्षतासम्पादनमेतत्फलमुक्तम्, तदपि न रोचते नव्य-न्यायशास्त्रविद्भ्यः । गगने मेघनिश्चयसत्त्वे विनापि साध्यसन्देहं घनगर्जनेन मेघानु-मितिर्गगने भवत्येवेति पक्षतायास्तादृशं स्वरूपमस्वीकृत्य सिषाधयिषाविरहविशिष्ट-सिद्ध्यभावरूपाया एव तस्याः सिद्धान्तितत्वात्[3] ।

---

1. अनु. जा., सा. ल., प्र., पृ. ११५-११७ ।
2. "अत्र वदन्ति–प्रसिद्धधूमे धूमत्वेन व्याप्तिज्ञानमेतद् धूमत्वेन वा । आद्ये संशयोऽसिद्धः, द्वितीये धूमत्वावच्छेदेन व्याप्तिग्रहस्यैव तद्विरोधितया स नानुपपन्नः" । (सा. ल., चि. दी., पृ. १४६-१४८ )
3. सिषाधयिषया शून्या सिद्धिर्यत्र न विद्यते ।
   सपक्षस्तत्र वृत्तित्वज्ञानादनुमितिर्भवेत् ॥
   (न्या. सि. मु., अ. का. ७०, पृ. १४६-४८)

शक्तिवादे सामान्यलक्षणमनङ्गीकुर्वतां पुनरनिष्कृतिरेवेत्यादिना अस्य सन्निकर्षस्य प्रयोजनमुक्त्वापि 'मैवम्, भगवत्सङ्केतरूपायां शक्तौ' इत्यादिना तस्या निष्फलत्वमेव सिद्धान्तितं श्रीगदाधरभट्टाचार्येण[1] ।

**उक्तविषये शब्दशास्त्रविदः**

सामान्यलक्षणोऽयं सन्निकर्षः प्रतिपदं मुनित्रयेण अनुक्त एव । श्रीभट्टोजिदीक्षितेन शब्दकौस्तुभे, श्रीनागोजिभट्टेनोद्द्योते चास्योपन्यासः पूर्वपक्षत्वेन कृतः । तथा हि– "आत्त्वसामान्यलक्षणप्रत्यासत्त्या 'मार्ष्टि' इत्यादिप्रयोगसमवायिनां सर्वेषामाकाराणां वृद्धिशब्दवाच्यताग्रहात्" इति[2], "सामान्यलक्षणया भूतभाविसकलव्यक्तिग्रहः सम्भवत्येव" इति च[3] ।

अयं भावः – शब्दानित्यत्वपक्षे वृद्धिविधायकैः "मृजेर्वृद्धिः" इत्यादिसूत्रैर्यदाऽऽकारादयो भाव्यन्ते, तदा तेषु वृद्धिपदवाच्यत्वग्रहोऽनेन "वृद्धिरादैच्" इति सूत्रेण करिष्यते । यदा चानेन आकारादिषु वृद्धिपदीयशक्तिग्रहः सम्पाद्येत, तदा "मृजेर्वृद्धिः" इत्यादिविधिसूत्रैराकारादयो भाव्येरन्निति ज्ञप्त्युत्पत्त्योः परस्परापेक्षत्वेनेतरेतराश्रयत्वप्रसङ्गे आचार्यद्वयस्येयमुक्तिः । आत्वादिरूपसामान्यलक्षणसन्निकर्षेण भूतभाविवर्तमानेषु सकलाकारादिषु वृद्धिपदीयशक्तिग्रहः सुकर एवेति नेतरेतराश्रयत्वप्रसक्तिरिति ।

**वस्तुतोऽस्य सन्निकर्षस्यानङ्गीकार एव**

शाब्दिकाचार्या वस्तुतो नैवाभ्युपगच्छन्ति प्रत्यक्षहेतुत्वेनेमं सन्निकर्षम् । पूर्वोक्तस्थलयोः श्रीभट्टोजिदीक्षित-श्रीनागोजिभट्टौ पूर्वपक्षतयोक्त्वाऽपि तत्रैवैतदभावेऽपि कार्यं निर्वाह्य नैवाङ्गीचक्रतुरिमं सन्निकर्षं[4] प्रत्यक्षहेतुतया । तथा हि–"सामान्यलक्षणानभ्युपगमपक्षे त्वात्वजातौ शक्तिग्रहात्, शक्त्यनुभवपदार्थस्मरणवाक्यार्थबोधानां समानप्रकारकत्वेनैव (कार्यकारणभावाभ्युपगमे) अतिप्रसङ्गभङ्गाभ्युपगमाद्वा । अन्यथा गेहे घटोऽस्तीति वाक्याद् अपूर्वव्यक्तिर्न गृह्येतेति दिक्" ।

---

1. श. वा., विशेषका., हरि. टीका, पृ. ९० ।
2. श. कौ., म. भा. १ १।१, पृ. १७६ ।
3. म. भा., प्र. उ. १।१।१, पृ. १७५ ।
4. श. कौ. १।१।१, पृ. १७६ ।

"सामान्यलक्षणानङ्गीकारेऽपि शक्तिग्रहबोधादीनां समानप्रकारकत्वेनैव कार्य-कारणभावाभ्युपगमान्न दोषः" इति च[1] ।

शक्तिग्रहपदार्थस्मृतिशाब्दबोधेषु प्रकारांश एव समानत्वादरेण कार्यकारणभावो मन्तव्यः, न तु विशेष्यीभूतव्यक्त्यंशेऽपि, इति आत्वादिजात्यवच्छिन्ने शक्तिग्रहस्य पर्यवसानेन नास्ति सामान्यलक्षणसन्निकर्षादर इति भावः । अन्यत्रापि उद्द्योतकृता स्पष्टीकृतोऽयमभिप्रायः । तथा हि–"प्रथमतो बालस्य यद्यपि विशेषव्यक्तावेव शक्तिग्रहः, तथापि आवापोद्वापन्यायेन व्यवस्थितिरिति तत्त्वम्" इति[2] ।

अनयाऽप्युक्त्या तस्याः प्रत्यासत्तित्वं नाभ्युपेयते, किन्तु तत्तदर्थाश्रितजात्यादि-रूपधर्मं द्वारीकृत्य तदाश्रयीभूतसकलव्यक्तिलाभः सम्पादितः ।

प्रदीपकृता श्रीकैयटेनापि न स्वीकृतोऽयं सन्निकर्षः । तथा हि–"कथं पुनरितिप्रत्यक्षेणैकस्यैव शब्दस्य श्रवणाद् भेदावगमे प्रमाणाभावः"[3] इति भावः । यदीयं प्रत्यासत्तिरादृता स्यात्, तर्हि प्रमाणाभाव इति न वदेत् । सामान्य-लक्षणसन्निकर्षेण सकलव्यक्तीनां भिन्नानां प्रत्यक्षे सति भेदग्रहे प्रत्यक्षप्रमाणस्यैव तादृशसन्निकर्षरूपस्य सम्भवात् ।

वस्तुतस्तु सामान्यलक्षणानङ्गीकारे भाष्यकारस्यैव तादृशं तात्पर्यमुपवर्णितं प्रदीपकृता, न तु स्वीयं किञ्चिदपि । यतो हि–"कथं पुनर्ज्ञायते त्रयाणामयं प्रश्लिष्टनिर्देश इति"? इत्यनेनाशङ्क्य "तिसृणां संज्ञानां करणसामर्थ्यात्" इति समाहितं भाष्यकृता । तत्र समाधानभाष्यं प्रत्यक्षातिरिक्तं नैव अनुमानेन अर्थापत्त्या वा योजयितुं शक्यम्, न तु प्रत्यक्षेणापि, इति तादृशमेव योजितं श्रीकैयटेन । उद्द्योतकृता अनुमानाकारोऽपि प्रदर्शितः[4] ।

## एतत्सन्निकर्षाभावो वेदान्तसम्मतोऽपि

अद्वैतवेदान्तिनः अशेषसाधनाश्रयाश्रितसाध्यसामानाधिकरण्यरूपां व्याप्तिमङ्गी-कृत्य 'पर्वतो वह्निमान्' इत्यादौ सर्वत्र निर्वहन्ति । तथा च यावन्तः (अशेषाः) साधनाश्रयाः प्रकृते धूमरूपसाधनाश्रयाः पर्वतचत्वरगोष्ठमहानसादयः, तदाश्रितो यः साध्यो वह्निः, तत्सामानाधिकरण्यं धूम इति समन्वयः ।

---

1. म. भा., प्र. उ. १।१।१, पृ. १७५ ।
2. म. भा., प्र. उ. १।२।६४ ।
3. म. भा., प्र. १।२।२७ ।
4. म. भा., प्र. उ. १।२।२७, पृ. २६ ।

यद्यपि हेतोः साध्यस्य च प्रतिव्यक्तिभिन्नत्वेन पर्वतीयवह्निधूमव्यक्त्योः समानाधिकरणस्य सत्त्वेऽपि महानसीयवह्निव्यक्त्या सह उक्तधूमव्यक्तेः सामानाधिकरण्याभावेनोक्तस्थलादौ कथं निर्वाहः ? सामान्यतो व्याप्तिग्रहाभावादिति वक्तुं शक्यते, तथापि साधनाधिकरणत्वव्यापकं स्वाश्रयाश्रयत्वसम्बन्धेन साधनाश्रयाश्रितं च यत् साध्यताऽवच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्ये तात्पर्यम्, स्वं वह्नित्वादिकं तदाश्रयो वह्निः, तदाश्रयत्वं महानसादाविति महानसीयवह्न्यादेरपि पर्वतीयधूमादौ व्याप्तिग्रहेणेष्टसिद्धौ नास्ति उक्तसन्देहावसरः[1] ।

एवं च तत्तद्धूमत्वेन तत्तद्वह्निसामानाधिकरण्यनिश्चयेऽपि प्रसिद्धधूम एव तत्सम्भवेनाप्रसिद्धदेशान्तरीयकालान्तरीयधूमाविषयकत्वेन धूमो वह्निव्याप्यः, न वेति संशयस्यापि सूपपत्तिः समानप्रकारकत्वेनैव निश्चयस्य संशयविरोधित्वाऽभ्युपगमात् । प्रकृते तु न तथा, तत्तद्धूमत्वेन धूमे व्याप्तेर्निश्चयः, संशयस्तु धूमत्वेनेति भेद इत्येवंप्रकारैः समानलक्षणायाः प्रसरो न भवितुमर्हति तन्नये[2] ।

**ज्ञानलक्षणो द्वितीयोऽलौकिकः सन्निकर्षः**

न्यायदर्शने ज्ञानलक्षणोऽपि अलौकिकः सन्निकर्षः प्रत्यक्षप्रमाहेतुत्वेन स्वीकृतोऽस्ति । तस्य स्वरूपं चेत्थम् – ज्ञानं लक्षणं स्वरूपं यस्य स ज्ञानस्वरूप इति यावत् । यद्यपि सामान्यलक्षणोऽपि सन्निकर्षो ज्ञानरूप एव तथापि सामान्याश्रयस्य सकलस्य प्रत्यक्षं सामान्यलक्षणेन ज्ञानलक्षणेन तु यद्विषयकं ज्ञानं तद्व्यक्तिरूपविषयस्यैव प्रत्यक्षं भवति, "विषयी यस्य तस्यैव व्यापारो ज्ञानलक्षणः" इति वचनात्[3] । यथा सुरभि-चन्दनमिति प्रत्यक्षे सौरभांशेऽयं सन्निकर्षः, चन्दनांशे संयोगः सन्निकर्षश्चक्षुषः, इति उभाभ्यां सन्निकर्षाभ्यामेकं चाक्षुषप्रत्यक्षमुत्पद्यते । तत्र सौरभांशेऽपि योऽयमलौकिकः सन्निकर्षः, सोऽपि चक्षुष एव, इन्द्रियसंयुक्तमनःसंयुक्तात्मसमवेतज्ञानस्यैव तादृशज्ञानविषयत्वस्यैव वा सन्निकर्षत्वस्वीकारात् । एवं चोक्तस्थले चक्षुःसंयुक्तं मनोऽस्त्येव, तत्संयुक्तश्चात्माऽप्यस्त्येव । तत्रात्मनि सौरभादेः स्मृत्यादिरूपं ज्ञानमपि पूर्वतनघ्राणजप्रत्यक्षाद्यनुभवजनितोद्बुद्धसंस्कारबलेनोत्पन्नमेवेति तदेव ज्ञानं तद्विषयत्वं वा इदानीं चाक्षुषे जननीये सौरभादिविशेषणेन सह चक्षुषः सन्निकर्षो ज्ञानलक्षण इति गीयते ।

---

1. वे. प., म. प्र., शि. म., अनु. परि., पृ. १७२ ।
2. वे. प., प्र. ख., शि. म., पृ. ११६ ।
3. न्या. सि. मु., टी. द्व., कारि. ६५, पृ. २८२-८३ ।

किञ्च, इदं रजतमित्यादिभ्रमेऽपि इदमंशे (विशेष्यांशे) चक्षुःसंयोगः, रजतांशे हट्टस्थरजतस्मृतिरूपो ज्ञानलक्षणः सम्बन्धः – इत्युभाभ्यां लौकिकालौकिकसन्निकर्षाभ्यामेकं भ्रमात्मकं चाक्षुषं जायते । एवं सर्वत्र भ्रमे (प्रत्यक्षाभासे) विशेषणांशे ज्ञानरूपोऽयमेव सम्बन्ध उपयुज्यते ।

## अस्य सम्बन्धस्यानङ्गीकारे शाब्दिकमतम्

यद्यपि प्रत्यक्षहेतुत्वेनायमपि सम्बन्धो न क्वापि मुनित्रयेण शब्दतः सङ्गृहीतः, नाऽपि च प्रत्याख्यातः । तथाऽपि "श्रोत्रोपलब्धिर्बुद्धिनिर्ग्राह्यः प्रयोगेणाभिज्वलित आकाशदेशः शब्दः" इति भाष्यग्रन्थव्याख्यानावसरे[1] भाष्यकृदभिप्रायं प्रकाशयता श्रीनागोजिभट्टेनोद्द्योते यदुक्तम्, तेनास्य सम्बन्धस्य प्रत्यक्षहेतुता स्फुटं निरस्ता भवति । तथा हि–"संस्कारविशिष्टान्तःकरणसंयुक्तेन संयुक्तपूर्वपूर्वध्वन्यनुभवोत्पादितसंस्कारविशिष्टश्रोत्रसम्बद्धेनान्त्यवर्णेन प्रत्यक्षायमाणेन स्फोटरूपपदप्रत्यक्षता, इत्युक्तं तत्र । तस्यायमाशयः – संस्काराद्द्वारा श्रोत्रसम्बद्धेऽन्तःकरणेऽन्त्यवर्णाकारा या वृत्तिर्जायते, सैव प्रत्यक्षं प्रमाणं कीर्त्यतेऽत्र दर्शने । प्रत्यक्षीक्रियमाणेनान्त्यवर्णेनैव अखण्डः स्फोटोऽभिव्यज्यते (प्रत्यक्षीक्रियते) पूर्वपूर्ववर्णानुभवजनितसंस्काराणां सहकारित्वेनेत्थं सामर्थ्यं तादृशेऽन्त्यवर्णे सूपपद्यते, येनाखण्डस्फोटस्याभिव्यक्तिः सम्पाद्यते । संस्कारद्वारैव प्रत्येकं पूर्ववर्णेष्वपि व्यञ्जकता हर्यादिसम्मता[2] न विस्मर्तव्या । अत्र च न ज्ञानलक्षणप्रत्यासत्त्यवसरः, यतो हि पूर्वपूर्ववर्णानुभवजनितसंस्कारैस्तत्स्मरणैर्वा सहकृतेनाऽन्त्यवर्णीयश्रोत्रसमवायसन्निकर्षेण सर्वेषां वर्णानामेकं श्रावणप्रत्यक्षं यदि सम्भवेत्, तदा स्यात्तदवसरः, तच्च नैव सम्भवति, घटादिपदस्यास्मन्मतेऽखण्डत्वात् । न च समुदायभावापन्नस्य ध्वन्यात्मकशब्दस्यानया रीत्या प्रत्यक्षं क्रियताम्, पश्चात् स्फोटोऽभिव्यज्यताम् । अनेन प्रत्यक्षेण ध्वनिनेति साम्प्रतम्, समुदायस्यासम्भवेन प्रत्येकं वर्णेष्वेव व्यञ्जकत्वस्य सिद्धान्तयिष्यमाणत्वात्[3] ।

## लघुमञ्जूषायां तु कण्ठत एवेयं प्रत्यासत्तिः प्रत्याख्याता

श्रीनागेशभट्टेन लघुमञ्जूषाया तु अस्य सन्निकर्षत्वमेव न स्वीकृतम्, प्रत्यक्षहेतुत्वस्य का चर्चा ? तथा हि ज्ञानलक्षणे प्रतियोगित्वानुयोगित्वनिरूपकत्वाभावेन उभयवृत्तित्वा-

---

1. म. भा., १अ., १ पा., १आ., "अइउण्" सूत्रे, पृ. ९६ ।
2. वा. प. १।८८ । ल. म., र. प्र. टीका च, शक्त्याश्रयनिरू., पृ. १५१ ।
3. वा. प. १।८८ ।

भावेन च सम्बन्धत्वमेव नास्ति, इच्छादिवत् । ज्ञाननाशेऽस्य स्वरूपमेव नावतिष्ठेत, नापि ज्ञानलक्षणेत्यनेन ज्ञानविषयत्वं सम्बन्धतया स्वीकर्तुमर्हम्, ज्ञानविषयोभय-स्वरूपाया ज्ञानविषयताया ज्ञाननाशे सति वक्तुमशक्यत्वात् ।

अतश्च संस्कारचक्षुःसन्निकर्षाद्युभयजन्यं ज्ञानान्तरमेवैतत् सुरभिचन्दनमित्यादि । एवं च स्मृतित्वानुभवत्वयोः शङ्कितं साङ्कर्य्यमपि दूरं गतम्[1] ।

## उक्तविषये श्रीमन्तो दुर्बलाचार्याः

सुरभिचन्दनमित्यत्र चन्दनत्वेन हेतुना सुरभित्वमनुमीयत इति अनुमितिरियम् । अन्यथा 'पर्वतो वह्निमान्' इत्यादावपि ज्ञानलक्षणसन्निकर्षेण साध्यस्य, इन्द्रियसन्नि-कर्षेण पक्षस्य च प्रत्यक्षमेव स्यात्, 'अनुमानप्रमाणं मा प्रसरत्'' इति निरवोचन् शाब्दिकप्रवराः श्रीदुर्बलाचार्याः कुञ्जिकायां[2] लघुमञ्जूषाटीकायाम् ।

## अद्वैतवेदान्तनयेऽपि ज्ञानलक्षणसन्निकर्षस्य नास्ति प्रत्यक्षहेतुता

अद्वैतवेदान्तिनामपि मते ज्ञानस्य प्रत्यासत्तित्वं नास्त्येव, तथा सति पर्वतादौ पक्षे तत एव वह्न्यादेर्ज्ञानेऽनुमानोच्छेदः स्यात् । यद्यपि 'घटमहं जानामि' इत्यनुव्यवसायो मानसप्रत्यक्षरूपो मनसो घटेन सह सम्बन्धमन्तराऽनुपपद्यमानो मनसो घटे स्वसंयुक्तात्मसमवेतज्ञानविषयत्वरूपं सम्बन्धं कल्पयतीति पूर्वस्य व्यवसायरूपज्ञानस्य सम्बन्धत्वमायाति । तथापि अयं प्रकारो न समीचीनः, ज्ञानस्य स्वप्रकाशतया अनुव्यवसायस्य (मनोजन्यज्ञानान्तरस्य) स्वीकारे मानाभावात् ।

सुरभिचन्दनमित्यादिचाक्षुषेऽपि असन्निकृष्टसौरभविषयकत्वाङ्गीकारेणोपपत्तिः, संस्कारस्य सहकारित्वात्, प्रत्यभिज्ञावत् । तादृशसन्निकर्षकल्पने तु गौरवमिति भ्रमस्थले प्रमात्वाप्रमात्वयोरिवात्र परोक्षत्वापरोक्षत्वयोरपि एकत्र ज्ञाने सत्तायां बाधकाभावेन सर्वेष्टं सिद्ध्यति[3] ।

---

1. ल. म., र. प्र., पृ. २१८ ।
2. ल. म., कु. टी., पृ. २५७ ।
3. वे. प., शि. म., म. प्र., प्र. परि., पृ. ११७ ।

**तृतीयोऽलौकिकः सन्निकर्षो योगजो नाम**

योगाभ्यासजनितो धर्मविशेष आत्मस्थोऽलौकिकः सन्निकर्षः, अयमपि अलौकिकप्रत्यक्षे हेतुरिति न्यायवैशेषिकयोर्मतम् । अयमपि सम्बन्ध इन्द्रियविषययोरेव, अनेन सम्बन्धेन अतीतानागतानामपि विषयाणां तत्तदिन्द्रियेण प्रत्यक्षजननात् । सम्बन्धस्वरूपं तु स्वसंयुक्तमनःसंयुक्तात्मवृत्तियोगजन्यधर्मविशेषवत्त्वम् । विषयेषु तादृशधर्मवत्त्वं च स्वाश्रयसंयोगसम्बन्धेन, विषयतासम्बन्धेन वा । अत्र धर्मेत्यस्य स्थानेऽदृष्टविशेषोऽपि वक्तुं शक्यते ।

अत्र युक्तयुञ्जानभेदात् तज्जनितधर्मस्यापि द्वैविध्यं वेदितव्यम् । तत्र युक्तस्य योगिन ईश्वरानुग्रहविशिष्टमनःप्रसादवतो मनसा आकाशपरमाण्वादिनिखिलपदार्थगोचरं ज्ञानं सर्वदैव उत्पद्यते । युञ्जानस्य तु चिन्ताविशेषोऽपि सहकारी, इति कादाचित्कं ज्ञानं तस्येति विशेषः[1] ।

**श्रुतयोऽप्यत्र प्रमाणभूता उपन्यस्यन्ते**

**तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम् ।**
**अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति[2] ॥**
**न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा ।**
**ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यति निष्कलं ध्यायमानः[3] ॥**
**ते सर्वगं सर्वतः प्राप्य धीरा युक्तात्मानः सर्वमेवाविशन्ति[4]** ॥ इति ।

एवं च यमनियमाद्यभ्यासजनितपुण्यात्मकसन्निकर्षेण धारणाध्यानसमाध्यात्मकसंयमापराभिधानचिन्तासहकृतेन युञ्जानयोगिनः कालान्तरीयदेशान्तरीयसूक्ष्मविप्रकृष्टपदार्थविषयकोऽलौकिकः साक्षात्कारो भवति[5] ।

युक्तस्य तु–ईश्वरप्रणिधानलभ्येश्वरानुग्रहान्वितमनोवैशारद्येन प्रागुक्तसन्निकर्षेण सार्वदिकस्फुरणात्मको वस्तुसाक्षात्कारो भवतीति न्यायविदः प्राहुः[6] ।

---

1. न्या. सि. मु., कि. टी., प्र. ख., पृ. २१७ ।
2. कठवल्ली, १ अ. । २ म. १२ (३ मु., ३ ख., १ म. ८) ।
3. तदेव, मु. ३, ख. १, म. ८ ।
4. तदेव, मु. ३, ख. २, म. ५ ।
5. न्या. सि. मु., कि. टी., प्र. ख., पृ. २१७ ।
6. तदेव ।

**योगजसन्निकर्षे शब्दशास्त्राचार्याणां सम्मतयः**

इदानीं वास्तववर्तमानक्रियां तत्तत्क्षणवर्तिनीं योगिप्रत्यक्षप्रामाणिकामाश्रित्य समाधत्ते, अपर आह–"अस्ति वर्तमानः कालः" इत्युद्द्योतग्रन्थदर्शनेन योगिनां प्रत्यक्षमस्मदादिप्रत्यक्षापेक्षयाऽतिशयितशक्ति इति लभ्यते[1] ।

महाभाष्येऽपि योगिनां त्रिकालदर्शित्वं सूक्ष्मदर्शित्वं चोक्तम् । तथा हि–

**विसस्य बाला इव दह्यमाना न लक्ष्यते विकृतिः सन्निपाते ।**
**अस्तीति तां वेदयन्ते त्रिभावाः सूक्ष्मो हि भावोऽनुमितेन गम्यः**[2] ॥ इति ।

अत्रैव प्रदीपकृत्कैयटो भाष्यकारीयप्रत्यक्षपदस्य योगिप्रत्यक्षरूपमर्थं वदन् विलक्षणमिदं प्रत्यक्षं स्वीकरोत्येव[3] ।

नवाह्निकमहाभाष्ये शब्दकौस्तुभे श्रीभट्टोजिदीक्षितोऽपि प्रत्यक्षधर्माण इति भाष्यप्रतीके 'योगजधर्मबलेन साक्षात्कृतधर्माणः' इति कथनेन योगजधर्मेणेन्द्रियमनोनैर्मल्ये सति धर्मादिसूक्ष्मपदार्थस्यापि साक्षात्कारो भवतीति सम्मन्यते[4] ।

लघुमञ्जूषाटीकायामपि "चित्तं हि स्वयमेव सर्वार्थग्रहणक्षमं विभु च, तमोरूपावरणात् सदा सर्वं न गृह्णाति । अतस्तमोवर्धकानां विषयान्तरसञ्चारवासनापापादीनां योगतः क्षये सति स्वयमेव ध्येयं वस्तु साक्षात्क्रियते" इत्युक्तम् । ततोऽप्यस्य प्रत्यक्षस्य वैलक्षण्यं यद्यपि स्फुटमायाति[5], तथाऽपि न्यायादिदर्शनवदस्य योगजधर्मस्य न स्वतन्त्रालौकिकसन्निकर्षत्वमपि तु एतद्बलेन इन्द्रियाणामन्तःकरणस्य च शक्तिरेवोपचिता भवतीति क्लृप्तसन्निकर्षैरेव निर्वाहे गौरवादस्य प्रत्यासत्तित्वं नाभ्युपेयमित्येवावसेयं भाष्यप्रदीपोद्द्योतपर्यालोचनया[6] । प्रकाशयिष्यतेऽत्रत्यं भाष्यादिकम्–

"षड्भिः प्रकारैः सतां भावानामनुपलब्धिर्भवति" इति निरूपणावसरेऽत्रैव प्रत्यक्षप्रकरणे ।

---

1. म. भा., प्र. उ. ३।२।१२३ ।
2. तदेव ।
3. तदेव ।
4. म. भा, श. कौ. १।१।१, पृ. ६८ ।
5. ल. म., र. प्र. टी., पृ. ३०२ ।
6. म. भा. ३।१।३।

**श्रीनागेशभट्टसम्मतोऽस्य प्रत्यासत्तित्वनिरासप्रकारः**

लघुमञ्जूषायां श्रीमता नागेशभट्टेन योगजसन्निकर्षस्याङ्गीकारे गौरवमुद्भावितम्, तमोरूपप्रत्यक्षप्रतिबन्धकदोषस्य निरास एवास्योपयोगो दर्शितः, संयोगादिरूपक्लृप्त-सन्निकर्षैरेव विप्रकृष्टादिवस्तुविषयकप्रत्यक्षव्यवस्था उपपादिता, भूतभाविनोरपि तदीयं-सूक्ष्मावस्थासन्निकर्षेणैव 'इदमेवं भावि भूतं च' इति प्रत्यक्षं भवत्येव, भग्नघटीय-कपालेनाऽपि चक्षुषः संयोगे सति घट आसीदिति, अस्मदादिज्ञानमिवेति च प्रति-पादितम्[1] ।

**प्रत्यक्षज्ञानस्य भेदाः**

अथेदं प्रत्यक्षज्ञानं कतिविधमिति जिज्ञासायामुच्यते—घ्राणज-रासन-चाक्षुष-त्वाच-श्रावण-मानसभेदैः षड्विधमपि निर्विकल्पकसविकल्पकभेदाभ्यां पुनर्द्विविधम् ।

तत्र निर्विकल्पकं प्रकारतादिविषयताविशेषस्य निरूपकं न भवति[2], शब्देन व्यपदेश्यं च न भवति[3], विशिष्टज्ञाने कारणं च भवति । इदमेव ज्ञानमनुपाख्येय-प्रत्ययपदेन उच्यते वाक्यपदीये श्रीहरिणा—

**प्रत्ययैरनुपाख्येयैर्ग्रहणानुगुणैस्तथा ।**
**ध्वनिप्रकाशिते शब्दे स्वरूपमवधार्यते**[4] ॥ इति ।

अत्र स्वोपज्ञटीकायाम्—"व्यक्तरूपग्रहणानुगुणा अनुपाख्येयाकारा बहव उपाय-भूताः प्रत्यया ध्वनिभिः प्रकाश्यमाने शब्दे समुत्पद्यमानाः शब्दस्वरूपावग्रहहेतवो भवन्ति" इत्युक्तम्[5] ।

---

1. ल. म., टी. द्व., पृ. ८७१-७२ ।
2. "शुद्धव्यक्तेरेव शब्दाद् भानम्, शब्दस्यैव बोधे प्रकारतया न निर्विकल्पकत्वं तस्य" इति । (म. भा., प्र., उ. १/२/६४) । "प्रकारतादिशून्यं हि सम्बन्धानवगाहि तत्" । (न्या. सि. मु., का. १३६, पृ. ४३१)
3. "इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यम्, अव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्" । (न्या. द., १ । १ । ४)
4. वा. प. , टी. १/८३ ।
5. वा. प., स्वोपज्ञटीका. १/८३ ।

अम्बाकर्त्र्यां च "इदं तदिति शब्दाभिलापायोग्या ग्रहणानुगुणाः प्रत्ययाः" इत्याद्युक्तम्[1] । ततश्च निर्विकल्पकस्य विशिष्टग्रहणहेतुत्वं शब्दाभिलापायोग्यत्वं च स्फुटमायाति ।

**निर्विकल्पके प्रत्यक्षे भाष्यप्रदीपोद्द्योतानां सम्मतिः**

स्वार्थमभिधाय शब्दो निरपेक्षो द्रव्यमाह 'समवेतम्' इति[2] 'कुत्सिते' इति सूत्रस्थभाष्यानुगृहीतेन, तत्र सूत्र एव प्रदीपे कैयटेन [3]स्पष्टमुक्तेन च "नागृहीत-विशेषणा विशेष्ये बुद्धिः" इति न्यायेन सविकल्पके घट इत्यादिविशिष्टे प्रत्यक्षे कारणविधया निर्विकल्पकमवश्यमङ्गीकर्तव्यम् । अन्यथा घटत्वविषयकनिर्विकल्पक-मन्तरा विशेषणज्ञानरूपं कारणमनपेक्ष्यैव घट इति विशिष्टप्रत्यक्षमुत्पादयेत्, तच्चोक्त-भाष्यादिविरुद्धं स्यात्, स्याच्च विरुद्धं विशिष्टबुद्धिमात्रे विशेषणज्ञानस्य कारणत्वं प्रवदता शब्दरत्नग्रन्थेन सह[4] ।

"यद्वा प्रत्यक्षस्थले किञ्चिदंशे दृष्टक्रमस्यात्रारोपेण क्रमवत्त्वाऽभिमानः" इति वदता[5] श्रीनागोजिभट्टेन प्रत्यक्षस्थले क्रम स्वीक्रियते, स च क्रम आदौ निर्विकल्प-कोत्पत्तिः, तदनु सविकल्पकोत्पत्तिरिति रीत्यैव भवितुमर्हति ।अनुव्यवसायस्य शाब्दिकैर-नङ्गीकारेण[6] तमादाय क्रमवत्त्वासम्भवात् ।

**उक्तविषये लघुमञ्जूषायां युक्त्यन्तरप्रदर्शनम्**

लघुमञ्जूषायां तु ज्ञानमात्रे विषयताभानमावश्यकमिति प्रतिपादयता श्रीनागेशेन निर्विकल्पकं साधु स्वीकृतम् । तथा हि–

युगपदेव विशेष्यविशेषणयोरिन्द्रियसन्निकर्षेणैव विशिष्टबुद्धेरुपपत्तौ विशेषण-ज्ञानस्य तत्र हेतुत्वं न स्वीकार्यम् । एवं च विशेषणज्ञानरूपं निर्विकल्पकं प्रत्यक्षमपि न स्वीकार्यमिति मतं खण्डयता ग्रन्थकृता उच्यते–"यदि निर्विकल्पकमस्वीकृत्य क्लृप्तकारणताकैः सन्निकर्षादिभिरेव निर्वाहश्चिकीर्ष्यते, तदा घटो रूपवानित्यादि-प्रत्यक्षज्ञाने विशेषणविशेष्ययोरव्यवस्थैव स्यात्, घटस्य रूपमित्यपि स्यात् । तेनैव सन्निकर्षेण अस्यापि प्रत्यक्षस्य जनने बाधकाभावात्[7]" इति ।

---

1. वा. प., अम्बा. टीका, १/८३ ।
2. म. भा. ५/३/७४ ।
3. म. भा., प्र. ५/३/७४ ।
4. श. र. (प्रौ. म. टी.) अजन्तपु., पृ. ५९१ । "ङ्याप्प्रातिपदिकात्" इति सूत्रीयव्याख्या ।
5. म. भा., प्र. उ. ५/३/७४ ।
6. ल. म., टी. द्व., पृ. ३२९-३३५ ।
7. ल. म., र. प्र., बौद्धा. प्र., पृ. ३३७ ।

विशेषणज्ञानस्य हेतुत्वपक्षे तु 'रूपवान् घटः' इति प्रत्यक्षस्य विशिष्टवैशिष्ट्यावगाहितयाऽत्र रूपत्वविशिष्टरूपस्य समवायेन वैशिष्ट्यं घटेऽवगाह्यते । एवं च घटे रूपम्, रूपे च रूपत्वं विशेषणमिति सर्वापेक्षया रूपत्वं विशेषणम्, अतस्तज्ज्ञानस्य पूर्वकालत्वम्, ततश्च रूपज्ञानस्य घटत्वनिर्विकल्पकस्य चोदयः, ततो 'रूपवान् घटः' इति प्रत्यक्षमुदेति, न तु घटस्य रूपमिति ।

लघुमञ्जूषायाम्–"किञ्च यथा विशिष्टस्य वैशिष्ट्यमिति रीत्या जायमानबुद्धौ विशेषणतावच्छेदकप्रकारकनिश्चयस्य कारणत्वेऽपि लाघवाद् विशिष्टज्ञानं प्रति विशेषणज्ञानं कारणमिति कल्प्यते, अत एव निर्विकल्पकसिद्धिः" इत्युक्त्या[1] , "ये तु निर्विकल्पकं नेच्छन्ति, सन्निकर्षेणैव विशिष्टज्ञानमिच्छन्ति, तेषां त्वनुपपत्तिरेव" इत्युक्त्या[2] च स्फुटमेव निर्विकल्पकप्रत्यक्षमादृतमस्ति ।

किञ्च, विशिष्टबुद्धौ विशेषणज्ञानवद् निर्विकल्पकविशेष्यज्ञानमपि करणत्वेन स्वीकृतं तत्र, अत एव च घटघटत्वे इत्यादिर्निर्विकल्पकस्याकारोऽपि दर्शितः[3] । सिद्धान्ते तु निर्विकल्पकस्याकारप्रदर्शनं न युक्तम् । किञ्चाभिलापाभिलप्यमानयोः समानविषयकत्वस्यैवौचित्येनापि निर्विकल्पकस्याभिलापासम्भवः । निर्विकल्पकस्य हि निष्प्रकारकत्वम्, तदभिलापस्य तु सप्रकारकत्वमिति समानविषयकत्वानुपपत्तेरिति । वस्तुतस्तु निर्विकल्पके विशेषणविशेष्यसंसर्गाणां त्रयाणापि स्वरूपत एव भानम्, न तु विशेषणत्वादिरूपया विषयतया इति निर्विकल्पकस्याभिलापासम्भवः । अत एव निर्विकल्पके चतुर्थी विषयता स्वीक्रियते ।

वस्तुतस्तु अवच्छेदकता-प्रकारता-विशेषणता-संसर्गता-विशेष्यतेति विषयतापञ्चकातिरिक्तैव विषयता स्वीक्रियते[4] ।

### शाब्दिकमते निर्विकल्पकं स्मरणमस्ति, न वा?

यत्तु लघुमञ्जूषायाम्–"एतेन प्रमेयत्वादिरूपेण सर्वानुभवसत्त्वात् तत्र प्रमेयत्वांशस्य अनुद्बुद्धसंस्कारत्वेन मोषे प्रथमस्तत्तज्जात्यादिविषयं निर्विकल्पकं स्मरणम्, ततो ज्ञानलक्षणया विशिष्टतत्तत्पदार्थोपस्थितौ तत्र शक्तिग्रहो बोधश्च" इत्युक्तम्,

---

1. ल. म, र. प्र. टी., बौ. प्र., पृ. ३३७ ।
2. ल. म., र. प्र. टी., बौ. प्र., पृ. ३४० ।
3. ल. म., र. प्र., टी. बौ. प्र., ३३७ ।
4. न्या. सि. मु., किर. टी., कारि. ५७, पृ. १९४-१९५ ।

तत्तु न शाब्दिकमतम्, अपि तु मतान्तरम् । अत एव तस्य स्वयमपि अपास्तत्वमुक्तम्, अनुभवविरुद्धतादृशस्मरणकल्पने मानाभावात्, सर्वत्र स्मरणे अनुभवसमानाकारत्वस्यैव दर्शनाच्चेति हेतुद्वयेन[1] । अतश्च शाब्दिकानां नये नास्त्येव निर्विकल्पकं स्मरणम् ।

**शाब्दिकैर्निर्विकल्पकं नाभ्युपेयत इति कथनं महान् प्रमादः**

यत्तु न्यायमञ्जर्यां श्रीजयन्तभट्टेनोच्यते–"शाब्दिकैर्निर्विकल्पकं प्रत्यक्षं न स्वीक्रियते" । उक्तं च श्रीहरिणा–

**न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।**
**अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥** इति ।

सर्वत्र ज्ञाने शब्दविषयकत्वमनेन लभ्यते, ततश्च वक्तुमनर्हस्य निर्विकल्पकप्रत्यक्षस्य कथं चर्चा ? तस्य शब्दाविषयकत्वादिति[2] । एवमेव शास्त्रदीपिका[3] -न्यायरत्नाकरादिग्रन्थेष्वपि[4] एतत् सुष्ठु चर्चितमस्ति । तत्तु–

शब्दतत्त्वविदां भावमनालोच्योक्तं पूर्वप्रकारेण निर्विकल्पकप्रत्यक्षस्य शाब्दिकनये सुष्ठूपपादनात् । निर्विकल्पकेऽपि ज्ञाने सूक्ष्मशब्दानुवेधस्य सिद्धान्तितत्वाच्च[5] ।

**न्यायसरण्या निर्विकल्पकसिद्धौ प्रमाणप्रदर्शनम्, तस्य विशिष्टज्ञानत्वाशङ्कानिरासश्च**

ननु निर्विकल्पके प्रमाणं नास्तीति चेत्, न, गौरिति गोत्वविशिष्टविषयकं ज्ञानं विशेषणज्ञानजन्यं विशिष्टज्ञानत्वात् 'दण्डी' इति विशिष्टज्ञानवदित्यनुमानस्यैव प्रमाणत्वात् ।

ननु गोत्वरूपविशेषणज्ञानं सविकल्पकमेव (विशिष्टज्ञानमेव) भवतु, कृतं निर्विकल्पककल्पनयेति चेत्, विशेषणज्ञानस्यापि सविकल्पकत्वे तस्य पुनर्विशिष्ट-

---

1. ल. म., बौ. प्र., पृ. ३२३ ।
2. न्या. म., प्र. भा., पृ. ७५-७६ ।
3. "केचित्तु सविकल्पकमेव सर्वं ज्ञानं निर्विकल्पकं नाम न किञ्चिदस्तीति मन्यन्ते" । (शा. दी., प्र. पा. सू. अ. ४, पृ. १२४-१२५)
4. न्यायरत्नाकरावलोकनेन त्विदं मतं वैयाकरणानामिति प्रतीयते । उक्तं च तत्रैव ग्रन्थकृता– "यत्त्वपिशब्दमसहमानः सर्वमेव ज्ञानं शब्दानुविद्धत्वात् सविकल्पकमेव, न किञ्चिन्निर्विकल्पकमस्तीति मन्यते, तं प्रत्याह–अस्तीति" इति । वैयाकरणादिपुरुषेण भगवता भर्तृहरिणाऽप्युक्तम्–

   न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
   अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥ इति ।

   (उ. प्रकाशटी., शा. दी., १पा., सू. अ. ४, पृ. १२४)
5. वा. प. १/१२३ ।

बुद्धितया तत्प्रत्यपि विशेषणज्ञानं हेतुभूतं सविकल्पकं स्वीकार्यम्, पुनस्तस्यापि सविकल्पकत्वेन विशिष्टज्ञानत्वात् तद्धेतुतयापि किञ्चिद् विशेषणज्ञानं सविकल्पकं हेतुत्वेन कल्पनीयमिति महती अनवस्था अप्रामाणिकी प्रसज्येतेति निर्विकल्पकसिद्धिः[1] ।

मुक्तावलीटीकायां दिनकराचार्येणापि अयमाशयः सुव्यञ्जितः[2] । एवं चास्य विशिष्टज्ञानत्वनिरासे शाब्दिकैरपि अयं न्यायमार्गोऽनुसरणीयः ।

## न्यायदर्शने शाब्दानुभवस्मरणयोरपि निर्विकल्पकत्वं तन्निरासश्च

यद्यपि न्यायदर्शने शक्तिवादे "अस्तु वा पदादपि निर्विकल्पकम्" इत्युक्त्या प्राचीननैयायिकानां मते पदजन्यपदार्थस्मृतिरूपायाः पदार्थोपस्थितेरपि निर्विकल्पकत्वमुक्तम्[3] , तत्रैव टीकायामपि स्मरणस्य तत्त्वं निर्दिष्टम्, तथापि तद्युक्त्या तत्रैव निरस्तमिति[4] प्रयोजनाभावान्नेह प्रतन्यते ।

## शाब्दिकमतेऽपि प्रत्यक्षस्यैव निर्विकल्पकत्वम्

शब्दशास्त्रेऽपि प्रत्यक्षस्यैव निर्विकल्पकत्वम्, न तु स्मृत्यादेः । अत एव "स्वार्थमभिधाय शब्द" इत्यादिभाष्यव्याख्याने प्रदीपे जातिवादे शब्दस्वरूपस्य प्रकारत्वमभिहितम् । तत्रैव सूत्रे उद्द्योतेऽपि निष्प्रकारकस्य शाब्दबोधस्य असत्त्वमुक्तम्[5] ।

## निर्विकल्पकस्य प्रमात्वमस्ति, न वेत्यत्र शाब्दिकसिद्धान्तः, मतान्तराणि च

शाब्दिकनये नास्ति प्रमात्वं निर्विकल्पकस्य, अनिर्ज्ञातार्थविशेष्यकसकलधर्मप्रकारकज्ञानत्वाभावात् ।

न्यायवैशेषिकदर्शनयोः प्राचीनग्रन्थेषु अस्य प्रमात्वमप्युक्तम्, यथा कन्दल्यामाचार्यश्रीधरेणास्य प्रमात्वमुक्तम्[6] ।

तर्कभाषायां श्रीकेशवमिश्रेणापि प्रमात्वमभ्यधायि[7] ।

---

1. तर्कसं. दी., नी. भा., प्र. ख., पृ. ७७ ।
2. न्या. सि. मु., दि., प्र. ख., पृ. २२५ ।
3. श. वा., विशेषका., पृ. ५७ ।
4. श. वा., विशेषका., पृ. ५९ ।
5. म. भा., प्र.उ. ५/३/७४ ।
6. प्रशस्तपा. भा., कन्दली, पृ. १९८ ।
7. तर्कभा., पृ. ७ ।

"भ्रमभिन्नं ज्ञानमत्रोच्यते प्रमा" इत्युक्त्या श्रीविश्वनाथभट्टाचार्येणापि प्रमात्वं कथितमेवास्य[1] ।

श्रीगङ्गेशोपाध्यायप्रभृतिभिर्नव्यनैयायिकैस्तु अप्रमात्वमेवाभ्युपगतमस्य ।
'अथवा' इत्यादिना मुक्तावल्यामपि इदमेवानूदितम्[2] ।
तर्कसंग्रहे श्रीमताऽन्नम्भट्टेनापि उक्तमप्रमात्वमेव व्यवस्थापितम्[3] ।

श्रीहेमचन्द्रप्रभृतिभिर्जैनाचार्यैरपि अस्योल्लेखः कृतोऽस्ति – "विशेषानुल्लेख्यनध्यवसायः" इति सूत्रेऽनध्यवसायपदेन । स च प्रथमक्षणभावित्वेन अप्रमाणत्वेन च निर्दिष्टः[4] । तत्र विशेषानुल्लेखीत्यस्य विशेषणत्वेन विशेषणानुल्लेखीत्यर्थः । स्वरूपेण तु विशेषणमुल्लिखत्येवेति बोध्यम् ।

## बौद्धदर्शने निर्विकल्पकमेव सर्वं ज्ञानम्, तदेव च प्रमाणम्

यद्यपि बौद्धदर्शने निर्विकल्पकमेव सर्वं ज्ञानं प्रमाणं स्वलक्षणविषयकम्, सविकल्पकन्तु कल्पनापोढमप्रमाणम्, तथापि विकल्पोत्पत्तिद्वारेण तद् व्यवहाराङ्गं भवति । यतो हि इदं सुखसाधनम्, इदं च दुःखसाधनमिति यदा निश्चिनोति, तदा तस्य प्राप्तये परिहाराय वा प्रवर्तते । उक्तं च बौद्धाचार्यैः –

**अविकल्पमपि ज्ञानं विकल्पोत्पत्तिशक्तिमत् ।**
**निःशेषव्यवहाराङ्गं तद्द्वारेण भवत्यतः** ॥ इति ।

प्रत्यक्षं कल्पनापोढमपि सजातीयविजातीयव्यावृत्तमनलादिकं वस्तु तदाकारनिर्भासोत्पत्तितः परिच्छिन्ददुत्पद्यते । तच्च तत्रैव वस्तुनि विधिप्रतिषेधावाविर्भावयति – अनलोऽयं नायं कुसुमस्तबकादिरिति । तयोश्च विकल्पयोः पारम्पर्येण वस्तुनि प्रतिबन्धात् (सम्बन्धात्), अविसंवादित्वेऽपि न प्रामाण्यमिष्टमित्यादि च तैर्व्याख्यातम्[5] ।

## तदिदं सौगतानां मतं सर्वथा अयुक्तमेव

उक्तं सौगतमतं न युक्तम्, यतो हि सविकल्पस्य प्रमाणत्वप्रत्यक्षत्वयोरभावे प्रत्यक्षतया सिद्धस्य निषेधे लोकविरोध एव पूर्वमापतति ।

---

1. न्या. सि. मु., कारि. १३४ ।
2. न्या. सि. मु., कारि. १३५ ।
3. त. स., प्र. परि., पृ. ६२ ।
4. प्र. मी., अ. १।१।६ ।
5. तत्त्वस. कारि. १३०६ ।

न हि चन्द्रे चन्द्र इति प्रत्यक्षविषयस्य चन्द्रशब्दवाच्यत्वं निषेधन् लोके समाद्रियते, अपि तून्मत्तवदुपेक्ष्यते ।

किञ्च सविकल्पकानन्तरमेव अर्थक्रियादर्शनात् तस्यार्थक्रियाकारित्वलक्षणं प्रामाण्यं दुर्वारमेव । यदि तु अवस्तुभूतसामान्यविषयकत्वेनास्य मिथ्यात्वं ब्रूषे, तदपि न शोभनम्, अनुमानविकल्पस्यापि अप्रामाण्यप्रसङ्गात्, सामान्यादेर्वस्तुत्वस्य प्रमाणसिद्धत्वाच्च । स्पष्टं चेदं मानमेयोदयेऽपि[1] ।

## पूर्वमीमांसादिसम्मतं निर्विकल्पकस्वरूपम्

पूर्वमीमांसानये निर्विकल्पकं सविकल्पकं चेति द्विविधमिन्द्रियसन्निकर्षजन्यं ज्ञानं मन्यते । तत्रेन्द्रियसन्निकर्षानन्तरमेव द्रव्यादिस्वरूपमात्रावगाहि शब्दानुगमशून्यं यत्सम्मुग्धज्ञानं जायते, तद् विशिष्टकल्पनाऽभावाद् निर्विकल्पकमित्युच्यते[2] । सांख्यदर्शनेऽपि इदमेव निर्विकल्पकं प्रत्यक्षद्वैविध्यं चोक्तं श्रीवाचस्पतिमिश्रैः[3] ।

एतत्सर्वं शाब्दिकसिद्धान्तानुगुणमेव ।

## अद्वैतवेदान्तनये शब्दजन्यं निर्विकल्पकम्

अद्वैतिनां मतेऽपि संसर्गानवगाहि ज्ञानं निर्विकल्पकमित्युच्यते, यथा सोऽयं देवदत्तः, तत्त्वमसीत्यादिवाक्यजन्यं ज्ञानम् । यद्यपि सोऽयं देवदत्त इत्यादिवाक्यजन्यज्ञानं[4] देवदत्ताद्यभेदे प्रमाणरूपम्, एवं च संसर्गावगाहित्वे नेदं निर्विकल्पकोदाहरणं सम्भवति, तथापि अस्य वाक्यस्य लक्षणया प्रातिपदिकार्थमात्रावगाहित्वात् संसर्गानवगाहित्वेन निर्विकल्पकज्ञानजनकत्वमुपपद्यते । इदमेव चास्याखण्डार्थत्वम् ।

## उक्तविषये शाब्दिकानां सम्मतिः

उक्ते वैदान्तिके निर्विकल्पकस्वरूपे वैयाकरणानामपि सम्मतिरस्त्येव, अत एव-"अत्रा सखायः सन्तः सख्यानि जानते क्व? य एष दुर्गो मार्ग एकगम्यो वाग्विषयः" इति

---

1. मा. मे., प्र. परि., पृ. ८ ।
2. मा. मे., प्र. परि., पृ. ८ ।
3. अस्ति ह्यालोचनं ज्ञानं प्रथमं निर्विकल्पकम् ।
   बालमूकादिविज्ञानं सदृशं शुद्धवस्तुजम् ॥
   ततः परं पुनर्वस्तु धर्मैर्जात्यादिभिर्यथा ।
   बुद्ध्याऽवसीयते साऽपि प्रत्यक्षत्वेन सम्मता ॥ इति ।
   (सां. त. कौ., का. ५, पृ. १८० )
4. वे. प., शि. म., म. प्र, पृ. ७७-७९ ।

भाष्यं तत्प्रदीपं च विवृण्वता उद्द्योतकृतोक्तम्–दुर्गत्वमेवाह– एकेति । ज्ञानेनैवेति–निर्विकल्पकज्ञानेनैवेत्यर्थः । अत एव दुर्गत्वम्, नाऽन्यः पन्था इति श्रुतेरिति भावः । भाष्ये 'वाग्विषयः' इतिच्छेदः । अत एव श्रवणोपपत्तिः इति[1] ।

अत्र एकेत्यनेन निर्विकल्पकं ज्ञानं यद् गृहीतम्, तद् वेदान्तसम्मतं संसर्गानवगाहिरूपम् अखण्डार्थविषयकम् । वस्तुतस्तु न निर्विकल्पकलक्षणे वेदान्तिनां नैयायिकानां च काचिद् विमतिः । एतावाँस्तु विशेषः–नैयायिकानां निर्विकल्पकमनुमेयम्, वेदान्तिनां तु साक्षिभास्यमिति ।

यद्यपि ब्रह्मभिन्नः स्फोटरूपः शब्दोऽत्र 'एकगम्यः' इत्यनेन गृह्यते, तथापि अत्यन्तविचारे तस्य ब्रह्मानतिरे एव पर्यवसानं भवति, शब्दार्थयोरभेदात्, तत्तदुपाधिभिन्नचित एव बोधकतया ग्रहणाच्च । वागृविषय इति च्छेदेन श्रवणसार्थक्यमुपपादयता परम्परया शब्दजन्यत्वमपि तादृशे निर्विकल्पके सूचितम् ।

यत्तु लघुमञ्जूषायां[2] प्रत्यक्षस्य शब्दजन्यत्वं निराकृतम्, तत्तु साक्षाच्छब्दजन्यत्वाभिप्रायेण । इन्द्रियसाहाय्यमाचरन् शब्दः परम्परया प्रत्यक्षं जनयतु, को विरोधः?

## सविकल्पकप्रत्यक्षनिरूपणम्

निर्विकल्पकोत्तरं जायमानं शब्दस्मरणसहकृतं जातिगुणक्रियादिविशिष्टवस्तुविषयकं 'घटोऽयम्,रक्तोऽयम्, पाचकोऽयम्' इत्यादिरूपं व्यक्तविज्ञानं सविकल्पकं प्रत्यक्षमुच्यते ।

घटपटादिद्रव्यप्रत्यक्षे घटत्वपटत्वादिजातेः शुक्लादिगुणानां च प्रत्यक्षं भवति । एवमेव देवदत्तश्चलतीत्यत्र देवदत्तस्य प्रत्यक्षे तदीयचलनक्रियाया अपि प्रत्यक्षं भवत्येव । एवमेव शुक्लादिगुणप्रत्यक्षे तत्समवेतानां शुक्लत्वादिजातीनां क्रियाप्रत्यक्षे तत्समवेतजातीनामपि प्रत्यक्षं भवत्येव । तथा हि "सरूपाणाम्0" इति सूत्रे भाष्ये उक्तम्– "प्रख्याऽविशेषाद् ज्ञायते चैकोपदिष्टमिति" इति । अत्र प्रदीपः– "प्रख्याऽविशेषादित्यनेन प्रत्यक्षं जात्यालम्बनं प्रमाणमुपन्यस्तम्" इति[3] । अनेन जातिविषयकं प्रत्यक्षं भवतीति स्पष्टमायाति । एवं च तदर्थं स्वसंयुक्तसमवायः, स्वसंयुक्ततादात्म्यं वा सन्निकर्ष इन्द्रियस्य जात्यादिना सह स्वीकृतोऽस्ति ।

---

1. म. भा., प्र. उ. १/१/१, पृ. ३४ ।
2. ल. म., टी. द्व. युता, तिङर्थनिरू. पृ. ८५३ ।
3. म. भा., प्र. १/२/३/६४ ।

एवमेव 'अथ गौरित्यत्र कः शब्दः'? इति भाष्यव्याख्याने 'गौरिति विज्ञाने प्रतिभासमानेषु वस्तुषु कः शब्दः? इत्यर्थः' इत्युक्तं प्रदीपे । तत्रैवोद्द्योते-"अत्र गौरिति विज्ञाने इति सामान्योक्त्या तदाकारप्रत्यक्षादिज्ञानेऽपि गुणादीनां सामान्यरूपेण भानम्" इत्युक्तम्[1] । अत्र गुणादीनामित्यत्रादिपदेन जातेः क्रियायाश्चापि ग्रहणम्, तदुत्तरभाष्येण[2] तथा प्रतीतेः । एवं च जातिंगुणक्रियाणां प्रत्यक्षविषयता स्फुटं प्रमिता । "ननु प्रत्यक्षतोऽकारे श्रुते तद्गतगुणस्यापि ज्ञातत्वात् प्रश्नोऽयमसङ्गतः" इत्युद्द्योतेनापि गुणस्य प्रत्यक्षविषयता लभ्यते[3]।

क्रियायाः प्रत्यक्षतायामस्ति वैमत्यम् । क्रियायाः पिण्डीभूताया अप्रत्यक्षत्वेऽपि 'पश्य मृगो धावति' इत्यादिव्यवहारेण एकैकक्षणवर्तिन्या अवयवभूतायास्तस्याः प्रत्यक्षं सम्मन्यते प्रदीपकृता[4]।

उद्द्योतकृता तु "क्रिया नामेयमत्यन्तापरिदृष्टा न शक्या पिण्डीभूता निदर्शयितुम्" इति भाष्यं विवृण्वता अवयवरूपायाः क्रियायाः प्रत्यक्षत्वसम्भवेऽपि व्यवहाराविषयत्वेन व्यवहारविषयीभूता सर्वापि क्रियानुमेयैवेति भाष्यतात्पर्यमुच्यते[5]। 'पश्य मृगो धावति' इति तु क्रियानुमापकसंयोगरूपफलदर्शनपरमेवोक्तम्[6]।

ननु अथ गौरित्यादिभाष्यव्याख्याने अनुपदमेवोद्द्योतमतेऽपि क्रियाया अपि प्रत्यक्षत्वमुक्तम्, तत्कथं सङ्गच्छेत इति चेत्, उच्यते-"योगिप्रत्यक्षमादाय तत्सङ्गतेः[7], पूर्वतने उद्द्योते प्रत्यक्षादिज्ञाने" इति पदे आदिपदेन अनुमित्यादेर्ग्रहणेन क्रियायाः प्रत्यक्षाभावेऽपि अनुमित्यादिविषयतया वा तदुपपत्तेः[8] ।

---

1. म. भा., प्र. उ. १/१/१, पृ.८ ।
2. "यत्तर्हि तदिङ्गितं चेष्टितं निमिषितमिति स शब्दः, यत्तर्हि तद्भिन्नेष्वभिन्नं छिन्नेष्वच्छिन्नं सामान्यभूतं स शब्दः" । ( म. भा., प्र. उ. १।१।१, पृ. ९-१० )
3. म. भा., प्र. १/१/२, पृ. ८२ ।
4. म. भा., प्र. १/३/१ ।
5. म. भा., प्र. उ. १/३/१ ।
6. म. भा., प्र. उ. १/३/१ ।
7. म. भा., प्र. उ., १/३/१ ।
8. वै. भू. सा., ल. प्र., पृ. १४७ ।

## आचार्यश्रीभर्तृहरिसम्मतिर्गुणजात्यादिप्रत्यक्षे

आचार्यः श्रीहरिरपि गुणादीनां प्रत्यक्षं समर्थयते । तथा हि–

**घटस्य दृशिकर्मत्वे महत्त्वादीनि साधनम् ।**
**रूपस्य दृशिकर्मत्वे रूपत्वादीनि साधनम् ॥**

इत्युक्तं वाक्यपदीये तृतीये काण्डे[1] । तत्र रूपत्वादीनि साधनमित्यनेन रूपस्य दृशिकर्मत्वे सविकल्पकप्रत्यक्षविषयत्वे कार्ये रूपत्वविषयकं निर्विकल्पकं प्रत्यक्षं कारणमित्यर्थो ध्वन्यत इति निर्विकल्पकेऽपि इदं प्रमाणम् ।

अग्रे चैकादशे श्लोके टीकायां श्रीहेलाराजेनोच्यते – "यथा रसोपलम्भे रसत्वमुपलभ्यते, तद्विशिष्टस्य तस्योपलम्भादित्याश्रिताक्षेपः । तथा रसत्वोपलम्भेऽपि स्वाश्रयाक्षेपः स्वाश्रयोपलब्धिरूपः । तथा रसस्योपलम्भेऽपि तदाश्रयद्रव्यस्यापि ज्ञप्तिरित्यपि ज्ञेयम्"[2] इति ।

अनेन 'रसत्वजातिरहितस्य रसस्य प्रत्यक्षं नैव भवति' इत्यादिकथनेन सविकल्पके प्रत्यक्षे गुणस्य तद्गताया जातेश्च विषयत्वं भवतीति स्फुटमुपगम्यते । एवं चेदं नियमेन प्रकारत्वादिविषयतानिरूपकं भवति । एवं प्रत्यक्षस्य द्वैविध्येऽपि अनुमितिशाब्दादिस्तु सविकल्पक एव[3]।

## उक्तविषये दर्शनान्तरसंवादः

मीमांसादिदर्शनेऽपि इदमेव सविकल्पकस्वरूपमुक्तम्, बहुधा विकल्पोऽपि दर्शितः । यथा वेणुमानयम्, श्यामोऽयम्, गोपोऽयम्, गायत्ययम्, गोविन्दोऽयमित्यादिर्द्रव्यगुणजातिकर्मनामभिः पञ्चधा विकल्पः कथितो मानमेयोदये[4]।

## सविकल्पकस्य प्रत्यक्षपदवाच्यता

ननु सविकल्पकस्य प्रत्यक्षशब्दवाच्यत्वं न सम्भवति, निर्विकल्पकव्यवधानेन जातस्य तस्य साक्षादिन्द्रियजन्यत्वाभावात् ।

---

1. वा. प. ३/७/१० ।
2. वा. प., टी. ३/७/११ ।
3. "उपलक्षणं त्विति-शुद्धव्यक्तेरेव शब्दाद् भानम्, शब्दस्यैव बोधे प्रकारतया न निर्विकल्पकत्वं तस्य" इत्युद्द्योतेन सविकल्पकस्य सप्रकारकत्वस्वरूपमायाति –१/२/६४ ।
4. मा. मे., प्र. प., पृ. ८-९ ।

परम्परया इन्द्रियजन्यस्य प्रत्यक्षत्वेऽनुमित्यादीनामपि प्रत्यक्षत्वप्रसङ्गादिति चेत्, मैवम्, प्रत्यक्षपदस्य योगरूढिशक्त्याऽनिष्टाऽतिप्रसक्तिवारणात्, पङ्कजादिपदवत् । पङ्कजादिपदेषु न रूढिः, अपि तु योगशक्त्यैव पद्मे वृत्त्युपपत्तिः, अप्रयोगादेव च कुमुदादावप्रवृत्तिरित्यादि गुरुमतं तु मानमेयोदयकृता निराकृतमिति न दृष्टान्तासिद्धिः[1] ।

सतामपि भावानामप्रत्यक्षत्वे कियन्ति कारणानि? इत्यत्र महाभाष्यकृत् पतञ्जलिः – "षड्भिः प्रकारैः सतां भावानामनुपलब्धिर्भवति, अतिसन्निकर्षात्, अतिविप्रकर्षात्, मूर्त्यन्तरव्यवधानात् तमसावृतत्वात्, इन्द्रियदौर्बल्यात्, अतिप्रमादात्" इति[2]।

अत्र प्रदीपकृत्कैयटः, "अतिसन्निकर्षादिति–यथा स्वचक्षुर्गतस्याञ्जनादेः । अतिविप्रकर्षादिति–यथोड्डीनस्य शकुनेः । मूर्त्यन्तरव्यवधानादिति–कुड्यादिव्यवहितस्य सुवर्णादेः । तमसावृतत्वादिति-अन्धकाराक्रान्तस्य श्वभ्रादेः । इन्द्रियदौर्बल्यादिति तिमिरावृतनयनादेः । अतिप्रमादादिति – विषयान्तराऽऽसक्तचित्तत्वादित्यर्थः। सौक्ष्म्यस्येन्द्रियदौर्बल्येऽन्तर्भावान्न पृथगुपन्यासः । दिव्यचक्षुःश्रोत्रा हि सूक्ष्ममप्यर्थमुपलभन्ते, न तु दुर्बलेन्द्रियाः"[3] इति ।

**अत्रोद्द्योतविधाता श्रीनागेशभट्टः**

अन्धकारेति–आलोकस्य सहकारित्वादिति भावः । श्वभ्रः - गर्तः । इन्द्रियाणां दौर्बल्यं ग्राहकशक्तिहीनता, सा च स्वगततिमिरादिदोषेण, वस्तुगतसौक्ष्म्यदोषेण, तदाधारकालगतसौक्ष्म्यदोषेण च । विषयान्तरेति मनःसमाधेरपि तत्सहकारित्वादिति भावः । ननु प्रकृतेऽनुपलब्धिकारणसौक्ष्म्यस्यानुल्लेखान्न्यूनतेत्यत आह–सौक्ष्म्यस्येति । तदुपपादयति–दिव्यचक्षुरिति । योगसामर्थ्येनेति भावः । एवं चास्मदादीनामिन्द्रियशक्त्यभावेन सूक्ष्मार्थसूक्ष्मकालावच्छिन्नार्थग्रहणायोग्यत्वमिति भावः ।

यद्यपि सर्वदर्शनशक्तिमत् सर्वमिन्द्रियम्, तथाप्यस्मदादीनामिन्द्रियस्य बह्व्यः शक्तयस्तमसावृता इति न देशकालस्वभावविप्रकृष्टानां प्रत्यक्षम् ।

---

1. "पङ्कजशब्दस्य पद्मे वृत्तौ का सामग्री? इति चिन्तायां योगमात्रस्य कुमुदादिष्वसद्भावेन व्यभिचाराद् रूढिरपि सामग्रीत्वेन कल्प्या, योगश्च प्रतीतो न हातुं शक्य इति उभयसिद्धेः" इति । (मा. मे., प्र. प., पृ. ८-९)
2. म. भा., ४/१/३ ।
3. म. भा., प्र. ४/१/३ ।

योगाभ्यासेन च तदपनये क्लृप्तैः सन्निकर्षैः संयोगादिभिरेव सर्वप्रत्यक्षम् । योगजधर्मस्य पृथक्प्रत्यासत्तित्वकल्पने तु गौरवमिति तात्पर्यम्[1] ।

एवं च भाष्योक्ते कारणषट्के साङ्ख्यसम्मतस्य सौक्ष्म्यस्यानुक्तत्वाद् भाष्यीय-न्यूनतां परिहरति प्रदीपकृत्–इन्द्रियदौर्बल्ये सौक्ष्म्यमन्तर्भावयन् । तदीयं हार्दं स्पष्टमुपपादयन् योगजरूपालौकिकसन्निकर्षस्य स्वातन्त्र्यमपि गुरुत्वदोषेण निराकुर्वन् श्रीनागोजिभट्टो भाष्यप्रदीपयोस्तात्पर्यं सुष्ठु द्योतितवान् ।

**सांख्यमते भावानामनुपलब्धौ अष्टौ कारणानि**

**अतिदूरात् सामीप्यादिन्द्रियघातान् मनोऽनवस्थानात् ।**
**सौक्ष्म्याद् व्यवधानादभिभवात् समानाभिहाराच्च[2] ॥**

इत्यष्टौ कारणानि भावानुपलब्धौ सांख्यसम्मतानि ।

अत्र अभिभवाद् यथाऽहनि सौरीभिर्भाभिरभिभूतं ग्रहनक्षत्रमण्डलं न पश्यतीत्युक्तम्[3] । तत्तु भाष्योक्तेन तमसावृतत्वादित्यनेन गतार्थम्, तम इत्यस्य सौरप्रभाद्युपलक्षणत्वात् । एवमेव समानाभिहारात् सजातीयपदार्थमिश्रणाद् यथा तोयदविमुक्तानुदबिन्दून् जलाशये न पश्यतीत्युक्तम्, तदपि सौक्ष्म्यवदिन्द्रियदौर्बल्य एवान्तर्भवति । कारिकास्थेन चशब्देन अनुद्भवो गृहीतः ।

क्षीराद्यवस्थायां दध्यादि अनुद्भवान्न पश्यतीत्युदाहरणं च दत्तम्[4], सोऽपि इन्द्रियदौर्बल्य एवान्तर्भावनीयः, वस्तुनिष्ठसौक्ष्म्यात् । अन्यत्सर्वं सुगममेव । अत एव सौक्ष्म्यस्यैवानुक्तौ न्यूनता शङ्किता, न तु अभिभवादीनामिति हृदयम् ।

**अनुपलब्धिमात्रेण वस्तुनोऽभावो न निश्चेयः**

यद्यपि शशशृङ्गकूर्मक्षीरगगनकुसुमादीनामनुपलब्ध्या तदीयबाह्यसत्त्वाभावो निश्चीयते, तथापि एष साधारणो नियमो नास्ति । न हि गृहाद् विनिर्गतो गृहजनमपश्यन् तदभावं निश्चिनोति, अन्यथा रोदनशिरस्ताडनादिप्रसङ्गः स्यात्; अपि तु प्रत्यक्षयोग्ये अप्रवर्तमानं प्रत्यक्षं तदभावं निश्चाययति । अस्ति च सावयवत्वेन महत्त्वेन च शृङ्गादीनां शशादौ प्रत्यक्षयोग्यता । नास्ति च निरवयवत्वेन सूक्ष्मत्वेन च प्रधान-पुरुषादीनां तद्योग्यतेति तेषु प्रत्यक्षाप्रवृत्त्या नासत्त्वनिश्चयः । एवं चानुमानादि-प्रमाणप्रमितानां प्रधानादीनामनुपलब्धौ निरवयवत्वलक्षणं सौक्ष्म्यमेव हेतुरिति न किञ्चिदनुपपन्नम्[5] ।

---

1. म. भा., प्र. उ. ४/१/३ ।
2. सां. त. कौ., कारि. ७, पृ. ९७ ।
3. सां. त. कौ., कारि. ७, पृ. ९८ ।
4. सां. त. कौ., कारि. ७, पृ. ९८ ।
5. सां. त. कौ., कारि. ७-८, पृ. ९७-९९ ।

## शाब्दिकमते प्रत्यक्षविषये केचन विशेषाः

विषयप्रत्यक्षकरणे एकस्येन्द्रियस्य प्रवृत्तौ अन्येषामपीन्द्रियाणां सहयोग आवश्यकः । यदि तानि एतत्काले औदासीन्यं न भजेयुः, तदा स्वस्वविषयप्रत्यक्षे आत्मनः (अन्तःकरणस्य) आकर्षणात् कथङ्कारमेकमपि प्रत्यक्षं सम्भवेत् ? मन्ये तस्मिन् समये जीवस्य स्थितिः सङ्कटापन्नैव स्यात् । उक्तं च श्रीमद्भागवते महापुराणे–

**"बह्व्यः सपत्न्य इव गेहपतिं लुनन्ति"**[1] । इति ।

यथा सपत्न्यो गेहपतिं स्वं स्वं प्रति आकर्षन्त्यो लुनन्तीव, स च विकलो भूत्वोद्विजते, न कामपि प्रेयसीं सन्तोषयितुं प्रभवति, तद्वदत्रापि । अत एकस्य स्वकार्ये प्राधान्यम्, अन्येषाम् (इन्द्रियाणाम्) औदासीन्येन संविधातृत्वरूपं (सहकारित्वरूपम्) कर्तृत्वं वक्तव्यमिति 'वयं पश्यामः' इति प्रयुज्यते शिष्टैः । इदं चेन्द्रियाणां प्रत्यक्षकार्ये स्वातन्त्र्यविवक्षापक्षे । यदा तु पारतन्त्र्येण (करणत्वेन) विवक्षा, तदा एकवचनद्विवचन इति 'अनेनाक्ष्णाऽहं सुष्ठु पश्यामि, आभ्यां कर्णाभ्यामहं सुष्ठु शृणोमि' इत्यादिः प्रयोगः । अत्र पक्षेऽहंपदेन अन्तःकरणावच्छिन्नचितः (जीवस्य) ग्रहणम् । पूर्वत्र इन्द्रियस्वातन्त्र्यविवक्षापक्षे तु शरीर इवेन्द्रियेष्वपि 'अहं काणः, अहं वधिरः' इत्यादिव्यवहारादहन्त्वप्रतीत्या वयमित्यनेनेन्द्रियाणामभिधानं बोध्यम् । स्वातन्त्र्यविवक्षायां प्रयोजकन्तु 'अयं मे कर्णः सुष्ठु शृणोति' इत्यादिशिष्टव्यवहाररूपं विवक्षाफलमेव । स्फुटमुक्तं सर्वमेतत् "अस्मदो द्वयोश्च" इति सूत्रे महाभाष्ये[2] प्रदीपे[3] उद्द्योते[4] च ।

---

1. श्रीमद्भा. ११।९।२७ ।
2. "अयमपि योगः शक्योऽवक्तुम्" कथम्–'अहं ब्रवीमि, आवां ब्रूवः, वयं ब्रूमः' इमानि इन्द्रियाणि कदाचित् स्वातन्त्र्येण विवक्षितानि भवन्ति । तद्यथा 'इदं मे अक्षि सुष्ठु पश्यति, अयं मे कर्णः सुष्ठु शृणोति' इति । कदाचित् पारतन्त्र्येण विवक्षितानि भवन्ति–'अनेनाक्ष्णा सुष्ठु पश्यामि, अनेन कर्णेन सुष्ठु शृणोमि' इति । तद् यदा स्वातन्त्र्येण विवक्षा तदा बहुवचनं भविष्यति, यदा पारतन्त्र्येण तदा एकवचनद्विवचने भविष्यतः"।
(म. भा. १।२।५९)
3. "अस्मदो द्वयोश्चेति । तद्यदेति–एकेन्द्रियप्रवृत्तौ चेन्द्रियान्तराणामौदासीन्येन संविधातृत्वात् कर्तृत्वविवक्षेति 'वयं पश्यामः' इत्यादि सिद्धम् । शरीरे इवेन्द्रियेष्वपि अहङ्कारोत्पादाद् वयमित्यनेनेन्द्रियाणामभिधानात् पारतन्त्र्यविवक्षायां त्विन्द्रियाणामहं ब्रवीमीत्येकवचनं सिद्धम्"।
(म. भा., प्र. १/२/५९)
4. "अस्मदो द्व. । ननु ···· आह–एकेन्द्रियेति स्वविषयौदासीन्यं संविधातृत्वे हेतुः । संविधातृत्वं

अस्मदादीनामिन्द्रियान्तरेण इन्द्रियान्तरविषयाणामपि सामान्यज्ञानं भवति । आम्रफले दृष्टे रसगन्धादिगुणानामपि सामान्यतः प्रत्यक्षं तत्रानुभवसिद्धम् ।

अत एव रसगन्धादीनां विशेषविषयिणी जिज्ञासा समुदेति, कीदृशोऽत्र रसोऽस्ति, कीदृक् च गन्धः ? इत्यादिः । विशेषजिज्ञासा च सामान्यज्ञानमन्तरा कथमुदियात् ? तद्विशेषजिज्ञासायां तत्सामान्यज्ञानस्य हेतुत्वात् । स्फुटं चेदं भाष्योद्द्योते[1], लघुमञ्जूषाटीकायां कुञ्जिकायां च[2] ।

योगिनां तु इन्द्रियान्तरेणेन्द्रियान्तरविषयाणां विशेषतोऽपि ज्ञानं भवति । तथोक्तं वाक्यपदीपे टीकायां च–

**ज्ञानमस्मद्विशिष्टानां सर्वं सर्वेन्द्रियं विदुः ।**
**अभ्यासाद् मणिरूपादि विशेषेष्विव तद्विदाम् ॥**

सर्वज्ञा हीन्द्रियान्तरेण इन्द्रियान्तरविषयं पश्यन्तीति च[3] । तथा चोक्तं लघुमञ्जूषायाम्–"योगिनां ज्ञानं सर्वं सर्वेन्द्रियसाध्यम्, 'घ्राणतः शब्दं शृण्वन्ति, पृष्ठतो रूपाणि पश्यन्ति' इति श्रुतेः । यथा–रूपपरीक्षकाणामभ्यासातिशयाद् मणिरूपातिशयप्रकाशस्तद्वद् योगाभ्यासबलाद् योगिनाम् । ईश्वरस्य स्वत एवेति नान्धपरम्परेति तदर्थः" इति[4] ।

## चाक्षुषादिप्रत्यक्षे सामान्यत इन्द्रियसंयोगस्यापि हेतुत्वे लाघवम्

यद्यप्यन्यदर्शने चाक्षुषादिप्रत्यक्षे चक्षुःसंयोगादेरेव हेतुतोक्ता, न तु सामान्यत इन्द्रियसंयोगादेरपि । तथापि लाघवाद् वैयाकरणैस्तस्यापि तत्र हेतुताऽभ्युपेयत एव । अन्यथा प्रत्यक्षसामान्याभावे तद्विशेषाभावकूटस्य हेतुत्वे गौरवं ध्रुवं प्रसज्येत । इन्द्रियाणां मध्यमपरिमाणतया विषयेण सह संयोगः सम्भवत्येव । किञ्च, चक्षुःसंयुक्त-

---

सहकारित्वम् । नन्वेवमस्मदः प्रयोगोऽनुपपन्नः, अत आह–शरीर इवेति । अहङ्कारः, अहन्त्वप्रतीतिः । अहं काण इत्यादिः"। (म. भा. प्र. उ. १/२/५९)

1. म. भा. १/१/१, पृ. ८ ।
2. (क) चक्षुरादिभिरपि रसादिग्रहणं भवत्येवेति । (ल. म., कु. टी., पृ. ४५९)
   (ख) चक्षुस्संयुक्तसमवायरूपकारणबलाद् रूपादीनामपि ग्रहणे बाधकाभाव इति च । (ल. म., कु. टी., पृ. ३६२) अत्रादिना रसगन्धादीनां ग्रहणं साजात्याद् बोध्यम् ।
3. वा. प., का. ३, कारि. १-४६ ।
4. ल. म., टी. द्व., पृ. ९६३ ।

समवायरूपकारणसत्त्वे रसगन्धादीनामपि प्रत्यक्षे न किमपि बाधकमिति निःसन्दिग्धं सामान्यतोऽयोगिनां प्रत्यक्षं भवत्येव । अदृष्टस्य तदनुकूलकारणस्य अभावेन तदभावकल्पने कस्यचित् प्रतिबन्धकस्य वा कल्पने गौरवमप्रामाणिकं पुनरपि प्रसक्तं स्यात्[1] ।

**घटादिप्रत्यक्षे कश्चन विशेषः**

ननु घटादीनामेकदेशेनैव सह चक्षुःसंयोगे कथं 'घटः प्रत्यक्षः' इति व्यपदेशः ? सर्वावयवावच्छेदेन संयोगाभावादिति चेत्, उच्यते "तस्य भावस्त्वतलौ" इति सूत्रे "गुणसन्द्रावो द्रव्यम्" इति भाष्यम्, अत्र प्रदीपः–"गुणानामाश्रयो द्रव्यम्" इति । उद्द्योतश्च–"समूहस्य भेदकल्पनयैव चाश्रयत्वव्यवहारः"[2] इति । एवं च गुणसमूहो द्रव्यमिति पतञ्जलिरिति योगभाष्येण न विरोध इति लघुमञ्जूषायां निरूपितमिति[3] । एभिः प्रमाणैर्द्रव्यात्माऽवयवी अवयवेभ्योऽतिरिक्त इति सिद्धान्तितम् । तत्रावयव-सन्निकर्षे नूनमवयविना वस्त्वन्तरेणापि सन्निकर्ष इति घटादेरेव प्रत्यक्षताप्रयोजकः स सन्निकर्षः । न हि भवति तदानीं घटप्रत्यक्षकाले कपालेन सह, किं वा तस्याप्यवयवेन सह संयुक्तं मे चक्षुरिति व्यवहारः; अपि तु घटेन संयुक्तमित्येव व्यवहारः, इति 'घटं पश्यामि' इत्येव कार्यम् । किञ्च, कस्मैचित् कश्चिद् गां सक्थनि कर्णे वा गृहीत्वोपदिशति अयं गौरिति भाष्यमपि अत्रानुकूलं बोध्यम्[4] ।

**अत्र श्रीनागेशभट्टाः**

भूवादय इति सूत्रे भाष्ये उद्द्योतं विस्तारयता श्रीनागोजिभट्टेनोच्यते–"क्रियाया अवयवसमूहरूपत्वं मन्तव्यम्, तथा सति यत्किञ्चिदवयवेषु स्वानुभूतां वर्तमानता-मवयवान्तरेषु परं प्रत्याययितुम् 'अयं पचति' इति प्रयोग उपपद्यते । यथा कश्चन सर्पो बिलाद् बिलं प्रविशति । तं पश्यन् कश्चित् कञ्चिद् वदति सर्पं पश्य इति । तत्र किञ्चिदवयवाऽवच्छेदेन तं दर्शयितुं परं प्रति इत्थं प्रयुङ्क्ते" इति[5] । अनेनावयवशः प्रत्यक्ष एव समुदायप्रत्यक्षताभ्युपेयेति सूच्यते ।

"किञ्च, भूयोऽवयवसन्निकर्षस्यैव फलबलात् कारणत्वेनाक्षतेः । संयोगप्रत्यक्षे तु यावदाश्रयप्रत्यक्षमेव हेतुः फलबलादिति दिक्" इति उद्द्योतोक्त्यापि[6] उक्तं समाहितमेव । अत्र 'घटः प्रत्यक्षः' इति व्यवहारः फलम्, प्रत्यक्षोत्तरं जायमाना आनयनादौ प्रवृत्तिश्च तत्फलम् । तद्बलेन भूयोऽवयवसन्निकर्षस्य हेतुतां स्वीकृत्यावयविप्रत्यक्षनिर्वाह इति तत्त्वम् ।

---

1. ल. म., कु. टी., पृ. ४६२ ।
2. म. भा., प्र. उ. १/२/११९, पृ. ३४५-४६ ।
3. ल. म. बौद्धार्थ-नि. ।
4. म. भा., १/३/२ ।
5. म. भा., उ., १/३/१, पृ. १५९ ।
6. तदेव ।

वाक्यपदीये द्वितीये काण्डे त्वेकदेशदर्शने सति अवयविनो ज्ञानमानुमानिकमिति वर्णितमस्ति[1] ।

**एतेन परमाणुपुञ्जात्मक एव घटादिरिति बौद्धमतमपास्तम्**

परमाणुसमूह एव घटादिः, तस्य प्रत्यक्षत्वं तु एकस्य केशस्य दूरे प्रत्यक्षत्वेऽपि तत्समूहस्य प्रत्यक्षवदुपपादयन्ति बौद्धाचार्याः[2], एको घटः स्थूल इति व्यवहारं च एको महान् धान्यराशिरितिवद् योजयन्ति । तत्तु न समीचीनम्, परमाणोरतीन्द्रियत्वेन तत्समूहस्याऽपि प्रत्यक्षत्वाऽयोगात् । दूरस्थकेशस्तु नातीन्द्रियः, सन्निधाने तस्यैव प्रत्यक्षत्वात् ।

यदि तु तदानीं दृश्यपरमाणुसमूहस्योत्पन्नत्वान्न तत्प्रत्यक्षत्वे कोऽपि विरोध इति उच्यते, तदपि न युक्तम्, अदृश्यस्य दृश्यानुत्पादकत्वात् । अन्यथा चक्षुरूष्मादिसन्ततेरपि कदाचिद् दृश्यत्वप्रसङ्गात् । न चातितप्ततैलादौ कथमदृश्यदहनसन्ततेर्दृश्यदहनोत्पत्तिरिति वाच्यम्, तत्र तदन्तःपातिभिर्दृश्यदहनाऽवयवैः स्थूलदहनोत्पत्तेरुपगमात् । अदृश्येनापि द्व्यणुकेनोत्पन्नस्य त्रसरेणोः प्रत्यक्षत्वं तु महत्परिमाणादेव सहकारिणस्तत्र विद्यमानत्वाद् बोध्यम् । अवयविनः परमाणुपुञ्जानतिरिक्तत्वे तु इयं व्यवस्था न सम्भविनी, परमाणोर्महत्त्वाभावात्[3] ।

आचार्यभर्तृहरिणा यदुक्तम्–

> **अणवः सर्वशक्तित्वाद् भेदसंसर्गवृत्तयः ।**
> **छायातपतमःशब्दभावेन परिणामिनः**[4] ॥ इति ।

तत्तु परिणामिन इति कथनेन अणुभ्योऽतिरिक्ता एव छायादयः, न तु अवयवसमूहरूपा इति न बौद्धमतप्रवेशशङ्कालेशः ।

**शब्दिकनये सामान्यविशेषभेदेन पुनरपि प्रत्यक्षं द्विविधम्**

वैयाकरणाः प्रत्यक्षं सामान्यविशेषरूपाभ्यामपि द्विविधमभिप्रयन्ति । चक्षुषा रूपप्रत्यक्षे जायमाने घ्राणरसनत्वगादीनामपि सहकारित्वं भवत्येवेति पूर्वमेवोक्तम् । तत्र रूपस्य विशेषतः प्रत्यक्षम्, गन्धरसस्पर्शादीनां तु तत्रैव स्थले सामान्यतः प्रत्यक्षम् ।

---

1. वा. प., द्वि. का., कारि. १५८ ।
2. "परमाणवस्ते संयोगविशेषेण स्वजात्यनतिक्रान्तकार्यस्वरूपा इन्द्रियविषयाः स्युः । शब्दपरमाणव एव संहताः श्रोत्रेन्द्रियग्राह्याः शब्दाकाराः । एवं सुखपरमाणव एव संहताः स्वसंवेद्यसुखाकारा भवन्ति" । (प्रमाणसमु., पृ. ७७)
3. न्या. सि. मु., कारि. ३७, पृ. ११५-१७ ।
4. वा. प. १/११०।

एवमेव घ्राणेन्द्रियेण गन्धस्य प्रत्यक्षे क्रियमाणे रूपरसादीनामपि सामान्यं प्रत्यक्षं भवत्येव । विशेषतस्तु रसनादि-तत्तदिन्द्रियेणैव । एवं च यस्मिन् प्रत्यक्षे यस्येन्द्रियस्य प्रामुख्यम्, तज्जन्यं प्रत्यक्षं तु विशेषत एव; यस्य यस्य सहकारित्वम्, तज्जन्यं तु सामान्यत एव । अत एवाम्रफलादौ दृष्टे श्रुते वा रसादिविशेषविषयिणी जिज्ञासा उदेति, विशेषविषयकजिज्ञासायाः सामान्यज्ञानपूर्वकत्वात् ।

ननु इदं फलं रसवत्, फलत्वात्, अनुभूताम्रफलवदित्यनुमानेनानुमितिरूपं रसादिसामान्यज्ञानम्, उद्बुद्धसंस्कारेण स्मृतिरूपं वा तत्राङ्गीक्रियताम्, किमिति रसादिसामान्यप्रत्यक्षकल्पनयेति चेत्, तन्न युक्तिपूतम्, गौरवदोषपराहतत्वात् ।

किञ्च, प्रत्यक्षसामान्याभावे तत्तद्विशेषाभावस्य हेतुत्वे न्यायदर्शनसम्मते यत् प्रत्यक्षं गौरवमनुभूयते, तदपि न शाब्दिकनये प्रसजति, सामान्यप्रत्यक्षस्य यानि कारणानि तेषामेकतमस्याप्यभावे तत्सामान्याभावस्य संघटनात् । मतान्तरे तु सामान्यप्रत्यक्षं नाम न किमपि कार्यमिति शाब्दिकनीत्या तत्र व्यवहर्तुं न शक्यते ।

अतश्चैकत्र स्थल एवेदं द्विविधं प्रत्यक्षं स्वीकुर्वन्ति महाभाष्यानुयायिनः शब्दतत्त्वविदः । स्पष्टं चैतत्सर्वं भाष्योद्द्योते[1] लघुमञ्जूषायां[2] तट्टीकायां कुञ्जिकायां च[3] ।

## प्रत्यक्षप्रमाया गुणजन्यत्वमस्ति न वा ?

अथ प्रत्यक्षप्रमाया गुणजन्यत्वमस्ति, न वेति संशयोऽपाक्रियतेऽन्यतरपक्षस्य स्थिरीकरणेन । तत्र न्यायदर्शने गुणजन्यत्वमेव प्रमाया उररीक्रियते । यथा लौकिकालौकिकान्यतरः सन्निकर्षो गुणः (हेतुः) प्रत्यक्षप्रमायाम् । एवमेवानुमितौ साध्यवति-

---

1. "अथ गौरिति विज्ञाने इति सामान्योक्त्या तदाकारप्रत्यक्षादिज्ञानेऽपि गुणादीनां सामान्यरूपेण भानम् । अत एव प्रत्यक्षदृष्टेऽपि आम्रफलादौ रसविशेषादिजिज्ञासा । विशेषजिज्ञासायाः सामान्यज्ञानपूर्वकत्वादित्यन्ये" इति । (म. भा., प्र. उ. १/१/१, पृ. ८)
2. "येनेत्यादिसिद्धान्तभाष्ये विषाणस्योपलक्षणत्वाद् गुणक्रियाजातिग्रहणम् । अत एवाम्रफलादौ श्रुते रसविशेषादिजिज्ञासा, विशेषजिज्ञासायाः सामान्यज्ञानपूर्वकत्वात् । चक्षुरादिभिरपि सामान्यतो रसादिग्रहणं भवत्येव । विशेषस्तु रसनादितत्तदिन्द्रियग्राह्य एव । अयं गौरित्यत्र भाष्यकृता ध्वननात्" इति । (ल. म.; कु. टी., स्फोटभेदनिरू., पृ. ४५९)
3. "चक्षुरादिभिरपीति । यद्यपि चाक्षुषप्रत्यक्ष एव चक्षुस्संयोगादेर्हेतुता, तथापि सामान्यत इन्द्रियसंयोगादेरपि हेतुत्वमावश्यकम्, अन्यथा प्रत्यक्षसामान्याभावे तत्तद्विशेषाभावस्य हेतुत्वे गौरवादिति भावः । किञ्च चक्षुस्संयुक्तसमवायरूपकारणबलाद्रूपादीनामपि ग्रहणे बाधकाभावः । प्रतिबन्धकताकल्पने गौरवात्" । (ल. म., कुञ्जिका., पृ. ४६२)

पक्षे साध्यव्याप्यवैशिष्ट्यज्ञानं गुणः । उपमितौ वाच्ये गवयादौ गवादिसादृश्यज्ञानं गुणः । शाब्दप्रमायां तु योग्यतायास्तात्पर्यस्य वा प्रमारूपं ज्ञानं गुणः । पित्त-दूरत्वादिदोषास्त्वननुगता अप्रमाया हेतुत्वेन स्वीक्रियन्ते । अननुगतदोषाभावस्य प्रमायां कारणत्वापेक्षयाऽनुगतगुणानामेव तत्त्वमुचितं लाघवादिति हृदयं न्याय-दर्शनविदाम्[1] ।

**उक्तविषये वैयाकरणसिद्धान्तः**

शब्दतत्त्वविदस्तु प्रमाया गुणजन्यत्वमसहमानास्तत्तद्दोषस्य तत्तत्प्रमायां प्रतिबन्ध-कत्वमेव सम्मन्वते । यथा–चक्षुषि पित्तदोषसत्त्वे शङ्खे श्वैत्यप्रमा नोदेति । तदभावे सा भवति । चक्षुषि मण्डूकवसाञ्जनलेपनेन वंशे उरगभ्रमः, तल्लेपनाभावे तु न । अपि तु वंशप्रमा इति अन्वयव्यतिरेकमहिम्ना विशिष्य प्रतिबन्धकत्वमेव युक्तम् । किञ्चा-न्वयव्यतिरेकाभ्यां प्रत्यक्षप्रमायां निर्दुष्टेन्द्रियसन्निकर्षादेः शाब्दप्रमायामाप्तोक्तशब्द-ज्ञानस्य च गुणत्वमभ्युपेत्य गुणस्य जनकत्वपक्षोऽपि समर्थयितुं शक्यते, न तु न्याय-सम्मतानां तादृशसन्निकर्षयोग्यताज्ञानादीनां गुणत्वेनेति दिक् ।

**॥ इति प्रत्यक्षसमीक्षायां तृतीयं पुष्पम् ॥**

**॥ इति प्रत्यक्षप्रमाणसमीक्षा ॥**

●

1. न्या. सि. मु., का. १३१-१३४, पृ. ४२७-४३० ।

# ॥ अथानुमानसमीक्षायां प्रथमं पुष्पम् ॥

अथ प्रत्यक्षकार्यत्वात्[1] शब्दप्रमाणोपजीव्यत्वाच्च तत्समीक्षोत्तरमनुमानं समीक्षितुमुपक्रम्यते ।

## अनुमानविषये चार्वाकमतम्

तत्रानुमानस्य शाब्दिकमते प्रमाणतया स्वीकारात् तत्समर्थने तद्विरोधिनां चार्वाकाणां मतं खण्डनीयतयाऽवश्यं निरूपणीयमिति प्रथमतस्तन्निरूप्यते ।

तथा हि–व्याप्तिपक्षधर्मताशालि हि लिङ्गं गमकमुच्यते अनुमानप्रामाण्यवादिभिः । तत्तु न सम्भवति, यतो हि व्याप्तिरुभयविधोपाधिशून्यः सम्बन्धः, तस्य ज्ञानमेव अनुमितौ अङ्गभावं भजति । तत्तु न तावत्प्रत्यक्षप्रमाणेन भवितुमर्हति, तस्य सन्निकृष्टपदार्थगोचरत्वनियमेन विनष्टयोर्भविष्यतोर्वा वह्निधूमयोरसम्भवेन व्याप्तेरप्यसम्भवात् । बाह्येऽर्थे मनसोऽपि बहिरिन्द्रियाधीनतया स्वातन्त्र्येण प्रवृत्तौ न मानसं प्रत्यक्षमपि ।

नाऽप्यनुमानेन तत्सम्भवः, तस्यासत्त्वात्, सत्त्वे वाऽनवस्थाप्रसक्तेः । धूमादिनिष्ठा व्याप्तिर्येनानुमानेन गृह्यते, तद्विषयीभूताया व्याप्तेरनुमानान्तरेण गृह्यमाणत्वात् । एवमेव शब्दादिभिरपि न सम्भवः, तेषामपि प्रमाणत्वाभावात् । किञ्चोपाध्यभावोऽप्येवमेव दुरधिगमः ।

नन्वेवं धूमादिदर्शनेन अग्न्यानयने प्रवृत्तिः कथं भवतीति चेत्, उच्यते–पूर्वं प्रत्यक्षतो ज्ञातोऽग्निर्धूमश्च, पश्चात् पर्वतादौ धूमे दृष्टेऽग्नेः स्मृतिर्भ्रमो वा भवतीति प्रवृत्तिः सुतरामुपपद्यते । क्वचित् फलावाप्तिस्तु काकतालीयन्यायेनेति अनुमानं न प्रमाणमिति व्याचक्षते चार्वाकाः[2] ।

## उक्तं चार्वाकमतं न युक्तम्

उक्तमेतच्चार्वाकमतं न युक्तम्, मा भूत् प्रत्यक्षं व्याप्तेः, स्मृतिस्तु भविष्यत्येव । किञ्चानुमानस्यासत्त्वं यदुक्तम्, तत्तु अत्यन्तं हेयम्, परकीयसंशयादीनां प्रत्यक्षेण प्रतिपत्तुमशक्यत्वात् । यदि च परस्याज्ञानादिकमपरिज्ञायैव तं प्रति वाक्यमुच्चारयेत्,

---

1. प्रत्यक्षोपजीवकत्वात् प्रत्यक्षानन्तरं बहुवादिसम्मतत्वादुपमानात् प्रागनुमानं निरूप्यते । (अनु. गा. चि., पृ. ५)

2. स. द. स., चा. म., पृ. १८-१९ ।

तदा वक्ता प्रेक्षावद्भिरुपेक्षणीयः स्यात् । अतः "अयं वादी एतस्मिन्नर्थे अज्ञानवान्, संशयवान्, विपर्यस्तो वा, विरुद्धार्थप्रतिपादकवचनप्रयोक्तृत्वात्"(नाहं जाने, सन्दिहानोऽहं विपर्यस्तोऽहम्–इत्यादिवाक्यप्रयोक्तृत्वात्) इति लिङ्गज्ञानेन परकीय-मज्ञानादिकमनुमेयमिति अनुमानप्रमाणमन्तरा परकीयाज्ञानादीनां प्रतिपत्तिर्भवितुं न शक्नोति । एवमनुपलब्ध्या कञ्चिदर्थं प्रतिषेधता तेनानुपलब्धिलिङ्गकमनुमान-मङ्गीकृतमेव । किञ्च, प्रमाणोपन्यासमन्तरा अनुमानं प्रमाणं न भवतीति ब्रुवाणेन 'मम माता वन्ध्या' इतिवद् अशिरस्कं वचः प्रयुक्तम् । यद्यनुमानमस्ति तदा प्रमाणमेव, यदि तु नास्ति तदाऽऽश्रयासिद्धिः । किमुद्दिश्याप्रामाण्यं विधीयेत ? पराभिमतमनुमानमुद्दिश्य तत् साध्यत इति चेत्, तर्हि येन केनचिल्लिङ्गेनैव तत्साधने स्वीकृतमेवानुमानं प्रमाणमिति न भ्रमात् प्रवृत्तिरनुसन्धेया[1] ।

**अनुमानप्रामाण्यसमर्थने मतान्तराणि**

**मतयो यत्र गच्छन्ति तत्र गच्छन्ति वानराः ।**
**शास्त्राणि यत्र गच्छन्ति तत्र गच्छन्ति ते नराः ॥**

इति शिष्टोक्त्या पश्वादीनामपि अनुमानं प्रमाणत्वेन स्वीकृतमस्तीति ज्ञायते, किमुत मनुष्याणाम् ? किञ्च लोकानां प्रत्यक्षानुभूतिरपि उक्तविषये प्रमाणम् । यदि कश्चन कञ्चन गां महिषं वा दण्डमुत्थाप्य प्रहर्तुं वाञ्छति, तदा तदीयं दण्डोत्थापनं दृष्ट्वा स बिभेति पलायते चेति तत्रानुमानेनैव व्यवहृतं तेन गवा महिषेण वा, अयं मां प्रहरिष्यति दण्डोत्थापनकर्तृत्वादिति । किं बहुना, शारीरकभाष्ये भामत्यां श्रीवाचस्पतिमिश्रैस्तु अनुमानस्याप्रामाण्यवादिनं चार्वाकं प्रति पशोरपि पशुत्वमुक्तम् ।

"अपि च पशवोऽपि हिताहितप्राप्तिपरिहारार्थिनः, कोमलसस्यश्यामलायां भुवि प्रवर्तन्ते, परिहरन्ति चाश्यानतृणकण्टकाकीर्णाम् । नास्तिकस्तु पशोरपि पशुरिष्टा-निष्टसाधनमविद्वान्, न खल्वस्मिन्ननुमानगोचरप्रवृत्तिनिवृत्तिगोचरे प्रत्यक्षं प्रभवति, न च परप्रत्यायनाय शब्दं प्रयुञ्जीत, शब्दस्यार्थस्याप्रत्यक्षत्वात् । तदेवं मा भून्नास्तिकस्य जन्मान्तरमस्मिन्नेव जन्मनि उपस्थितो मूकत्वप्रवृत्तिनिवृत्तिविरहरूपो महानरकः" इति[2] ।

न्यायमञ्जरीकृद्भिरपि एतत्समर्थने सफलं प्रयतितम्[3] ।

---

1. (क) स. द. स., बौ. द., पृ. १८-१९ ।
   (ख) सा. त. कौ., का. ५. पृ. ६४-६५ ।
2. शा. भा., भाम. ३/३/५४ ।
3. न्या. म., प्र. भा., पृ. १०८-११३ ।

## अनुमानं प्रमाणमित्यत्र शाब्दिकाचार्याः

तत्रभवान् सूत्रकारो ब्रवीति– 'इन्द्रियमिन्द्रलिङ्गम्." इत्यादि[1] । अत्रेन्द्रस्यात्मनो लिङ्गमिन्द्रियमुक्तम् । अत्र लिङ्गशब्दस्यानुमानपरत्वमेव स्वीकृतं व्याख्यातृभिरिति[2] अनुमानं प्रमाणतया स्वीकृतमेव । एवमेव "द्वितीये चानुपाख्ये" इति सूत्रयताऽपि[3] तत् स्वीकृतमेव, 'अनुपाख्ये' इत्यस्य 'अनुमेये' इत्यर्थकरणात्[4] ।

एवमेव "लटः शतृशानचावप्रथमासमानाधिकरणे" इति सूत्रमपि अनुमान-प्रामाण्यमन्तरा न सङ्गच्छते । तत्र हि उक्तं भाष्यकृता–"अथवा आदेशेन सामाना-धिकरण्यं दृष्ट्वाऽनुमानाद् गन्तव्यं प्रकृतेरपि सामानाधिकरण्यं भवतीति, तद्यथा धूमं दृष्ट्वाऽग्निरत्रेति गम्यते, त्रिविष्टब्धकं दृष्ट्वा परिव्राजकः" इति[5] । अनेन व्याख्यानभाष्येण स्फुटमेव अनुमानस्य प्रामाण्यमायाति ।

"भूवादय " इति सूत्रेऽपि भाष्यकृतोक्तम्–"क्रिया नामेयमत्यन्तापरिदृष्टाऽ-शक्या पिण्डीभूता निदर्शयितुम्, यथा गर्भो निर्लुठितः । साऽसावनुमानगम्या, कोऽसावनुमानः[6]" इति ।

'न सम्प्रसारणे' इति सूत्रेऽपि भाष्ये उक्तम्– "इहेङ्गितेन चेष्टितेन निमिषितेन महता वा सूत्रप्रबन्धेन आचार्याणामभिप्रायो गम्यते"[7] इति । अत्र 'गम्यते' इति पदम् 'अनुमीयते' इत्यर्थकम् ।

एवमेवानुबन्धानामजादिप्रत्याहारे ग्रहणं साधयतोक्तम्–"आचारादप्रधानत्वाल्लो-पश्च बलवत्तरः"[8] इति एवमादिकया भाष्योक्त्या, "तर्कश्चक्षुरपश्यताम्"[9] इत्यादि-हर्युक्त्या च अनुमानस्य प्रामाण्यं सुदृढमवतिष्ठत एव व्याकरणदर्शने ।

---

1. पा. सू. ५/२/९३ ।
2. सि. कौ., पूर्वार्धे पाञ्चमिकप्र., सू. ५/२/९३ ।
3. पा. सू. ६/३/८० ।
4. "उपाख्यं प्रत्यक्षं तद्भिन्नमनुमेयम्, तदाह अनुमेये" इति । (त. बो., सि. कौ., समासाश्रयप्र. सू. ६/३/८०)
5. म. भा. ३/२/१२४ ।
6. म. भा. १/३/१ ।
7. म. भा. ६/१/३७ ।
8. म. भा. १/१/२, मा. सू. ५ ।
9. वा. प. १/१३७ ।

## अनुमानसामान्यलक्षणे शाब्दिकमतम्

एवमनुमानस्य प्रामाण्ये सिद्धान्तिते सत्सामान्यलक्षणं किम्? येन तत्सामान्यज्ञानं भवेदिति जिज्ञासायामुच्यते–"प्रत्यक्षपूर्वकत्वं तल्लक्षणम्" इति । उक्तं च सरूपाणामिति सूत्रे भाष्ये "तस्यैवोपोद्बलकम्" इति । तत्रैव प्रदीपे च– "उपोद्बलकमिति– "उद्गतं बलं प्रत्यक्षं तत्पूर्वकत्वादनुमानस्य । उद्बलस्य समीपमनुमानमित्यर्थः"[1] इति ।

एवं च प्रत्यक्षाद् अनु (पश्चात्) मीयतेऽनेनेति व्युत्पत्तिरत्रादृतेति ज्ञायते । नन्वेतावत्युच्यमाने शाब्दज्ञानेऽप्यतिप्रसक्तं स्यादेतल्लक्षणम्, तस्यापि पदप्रत्यक्षपूर्वकत्वादिति चेत्, न, प्रत्यक्षपदेनात्र लिङ्गप्रत्यक्षस्यैव ग्रहणात् । लिङ्गं च पञ्चरूपोपपन्नमग्रे वक्ष्यते । तानि पक्षसत्त्वादिकानि पञ्च रूपाणि तु शब्दमात्रे सन्तीति नातिप्रसङ्गः । यत्र तु तानि सन्ति तत्र क्वचन शब्देऽप्यनुमानत्वमिष्यत एव । यथा "चार्थे द्वन्द्वः" इति सूत्रे भाष्ये "युगपदधिकरणवचनताया उपोद्बलकम्" इति । प्रदीपे च– "उपोद्बलकमिति-उत्कृष्टं बलकमुद्बलकं प्रत्यक्षं तत्समीपमनुमानमुपोद्बलकम्, आगमस्यानुमानत्वेनोपन्यासात्"[2] इति ।

अत्र हि "द्यावा ह क्षामा द्यावा चिदस्मै पृथिवी सन्नमेते" इति आगमस्य पृथिवीरूपपक्षे द्व्यर्थत्वसाधनेऽनुमानत्वमुपन्यस्तम् । यद्यपि इन्द्रियमिन्द्रलिङ्गमित्यत्र सूत्रकृता लिङ्गमित्येव उक्तम्, तथाऽपि तत्स्वरूपसन्नानुमानम् । नाऽपि ज्ञायमानम्, अपि तु तज्ज्ञानम् । अत एवोक्तं भाष्ये "धूमं दृष्ट्वा अग्निरत्रेति गम्यते"[3] इति ।

न हि लिङ्गप्रत्यक्षपूर्वकमेव अनुमानम्, अपि तु व्याप्तिरूपसम्बन्धप्रत्यक्षमपि । ततो नियमतः पूर्वं भवतीति एतत् प्रत्यक्षद्वयपूर्वकत्वं तस्य लक्षणं पर्यवस्यति । तदपि उक्तं भाष्ये–"प्रत्यक्षस्तेनाग्निधूमयोरभिसम्बन्धः कृतो भवति, त्रिविष्टब्धकपरिव्राजकयोश्च । स तद्विदेशस्थमपि दृष्ट्वा जानाति अग्निरत्रेति परिव्राजकोऽत्रेति"[4] इति । किञ्चात्रैव भूवादय इति सूत्रे भाष्यं व्याचक्षाणः प्रदीपकृदपि स्फुटं ब्रवीति– "ननु प्रत्यक्षाप्रवृत्तौ सम्बन्धग्रहणाभावात् कथं क्रियाविषयमनुमानं प्रवर्तते?[5]" इति ।

---

1. म. भा., प्र. ३/२/१२४ ।
2. म. भा. प्र. २/२/२९ ।
3. म. भा. ३/२/१२४ ।
4. म. भा. ३/२/१२४ ।
5. म. भा., प्र. १/३/१ ।

एवं च लिङ्गं (धूमादि) सम्बन्धश्च (व्याप्तिः) इत्युभयमपि पूर्वं सपक्षे (महानसादौ) प्रत्यक्षीकृतम्, पश्चात् पक्षे (पर्वतादौ) लिङ्गस्य दर्शनेन सम्बन्धस्मरणात् साध्यस्य (वह्न्यादेः) अनुमितिरिति ध्वन्यते ।

**न्यायदर्शनस्याऽपि अत्रैव सम्मतिः**

न्यायमञ्जर्यां "तत्पूर्वकं च त्रिविधमनुमानं पूर्ववच्छेषवत्सामान्यतो दृष्टं च" इति गौतमसूत्रं[1] व्याचक्षाणेन जयन्तभट्टेनाऽपि एतत्प्रत्यक्षविशेषद्वयपूर्वकत्वमेव लक्षणं सिद्धान्तितम् । तत्र हि सौत्रतत्पदेन सर्वनाम्ना इदं प्रत्यक्षद्वयं परामृष्टम् । व्याप्तिग्राहि प्रत्यक्षं व्याप्तिस्मरणद्वारेण, लिङ्गदर्शनं (पक्षधर्मताज्ञानम्) तु स्वत एव अनुमितिकारणमित्युक्तम् । सव्यभिचारविरुद्धादीनामनुमानाभासानामपि प्रत्यक्षद्वयपूर्वकत्वमाशङ्क्य अनुमानविशेषलक्षणेनेदं निराकर्तव्यम्, तल्लक्षणस्य तेष्वगमनादित्याद्युक्तम्[2] ।

**इदं च प्रत्यक्षं शब्दादेरप्युपलक्षणम्**

अनुमितिहेतुभूतमिदं लिङ्गप्रत्यक्षं शाब्दादेरप्युपलक्षणम्, शब्दादिनापि लिङ्गस्य (धूमादेः) सम्बन्धस्य च ज्ञानेऽपि अनुमानं प्रवर्तत एव । उक्तं च भाष्यकृता– "आदेशेन सामानाधिकरण्यं दृष्ट्वा अनुमानाद् गन्तव्यम्, प्रकृतेरपि सामानाधिकरण्यं भवति" इति । अत्र 'दृष्ट्वा' इत्यत्र ज्ञानसामान्यार्थक एव दृश्धातुः प्रयुक्तः । उक्तं च श्रीनागेशभट्टेनोद्द्योते–"प्रत्यक्षशब्देन शाब्दमप्यत्रोच्यते"[3] इति । नन्वेवं तर्हि प्रत्यक्षपूर्वकत्वमिति लक्षणं कथं सङ्गच्छेत? इति चेत्, उच्यते– अनुमितेर्मूले यत्र कुत्रचित् प्रत्यक्षस्य सत्ता पूर्वमवश्यं भवतीत्यत्रैव तात्पर्यम् । यत्रापि लिङ्गस्य शाब्दज्ञानादिकम्, तत्रापि लिङ्गबोधकशब्दस्य श्रावणप्रत्यक्षम्, लिङ्गरूपार्थस्य चाक्षुषप्रत्यक्षादिकं वा पूर्वं भवत्येव । उक्तं च–"यत्राप्यनुमिताल्लिङ्गिनि ग्रहणं भवेत्, तत्रापि मौलिकं लिङ्गं प्रत्यक्षादेव गम्यते"[4] इति । अथवा लक्षणे प्रत्यक्षपदं ज्ञानसामान्यपरम्[5] ।

---

1. न्या. द. १/१/५ ।
2. न्या. म., प्र. भा., पृ, ११३-११४ ।
3. म. भा., प्र. उ. १/२/६४ ।
4. न्या. म., प्र. भा., पृ. ११४ ।
5. "यद्वा प्राधान्याभिप्रायेण प्रत्यक्षपूर्वकत्वमुच्यते, न नियमार्थमिति नाव्याप्तिः । ...... तानि प्रत्यक्षादीनि पूर्वं यस्य इति । (न्या. म., प्र. भा., पृ. ११४)

**अत्र प्रत्यक्षपदस्य प्रमामात्रपरत्वनिरासः**

न च "क्रियापृथक्त्वे च द्रव्यपृथक्त्वदर्शनमनुमानमुत्तरत्रानेकशेषभावस्य" इति भाष्ये 'लिङ्गदर्शनस्यानुमानत्वेनोक्त्या उपोद्बलकम्'[1] इति कैयटव्याख्याने प्रत्यक्षपदेन प्रत्यक्षं प्रमाणमिन्द्रियादिकमेव कथं न गृहीतमिति वाच्यम्, 'धूमं दृष्ट्वा' इत्यादि-भाष्ये[2] 'दृष्ट्वा' इत्यनेन प्रत्यक्षात्मकज्ञानस्यैव ग्रहणात्, "प्रत्यक्षस्तेनाग्नि- धूमयोर-भिसम्बन्धः"[3] इत्यादिभाष्ये च प्रत्यक्षप्रमाया एव ग्रहणाच्च । एवं चात्र लक्षणे प्रत्यक्षपदं प्रमाप्रमाणोभयपरम् । अतश्च तत्पूर्वकमिति लक्षणे तत्पदं करणपरमपि भवितुमर्हति । ततश्च "इन्द्रियरूपकरणपूर्वकं तत्फलं लिङ्गदर्शनरूपं परोक्षार्थानुमितौ करणमनुमानम्" इति मञ्जरीकृद्व्याख्यातं[4] शब्दशास्त्रानुगुणत्वादादरणीयमेव ।

अत्राऽयं निष्कर्षः – महानसादिषु धूमं तत्राग्निसम्बन्धं च पूर्वं पश्यति कश्चन । ततः स एव पुरुषः कदाचित् पर्वतं गतो धूमं पश्यति, शब्दादिना वा जानाति ततोऽग्निसम्बन्धं स्मृत्वा तत्राग्निमनुमिमीते इति पक्षे (वक्ष्यमाणलक्षणे) लिङ्गस्य (हेतोः) यत् प्रत्यक्षं शाब्दादिकं वा भवति, तदेव पक्षधर्मताज्ञानमित्युच्यते । अस्यापि अन्वयव्यतिरेकसहचारबलादनुमितिहेतुता युक्ता । उक्ता च सा लघुमञ्जूषायां श्रीनागेशभट्टेन[5] ।

लिङ्गदर्शनादनु जायमानं व्याप्तिरूपसम्बन्धस्मरणमेव उपोद्बलकपदेन गृह्यमाण-मनुमानमित्युच्यते शब्दतत्त्वविद्भिः । ध्वन्यते च भाष्यकृता–"प्रत्यक्षस्तेनाग्नि-धूमयोरभिसम्बन्धः कृतो भवति.....। स तद्विदेशस्थमपि दृष्ट्वा जानाति अग्निरत्रेति"[6] इत्युक्त्या । अत्र सम्बन्धः प्रत्यक्षः कृत इत्यनेन समक्षे महानसादौ पूर्वकालिकं प्रत्यक्षमुच्यते । विदेशस्थं पक्षस्थं (पर्वतादिस्थम्) तद् धूमादिलिङ्गं दृष्ट्वा जानाति अग्निरत्रेत्यनेन पक्षे लिङ्गदर्शनमुच्यते हेतुतया, किन्तु कस्य लिङ्गस्य? यस्य साध्येन सह सम्बन्धः पूर्वं प्रत्यक्षीकृतः, इदानीं तु स्मृतिपथमानीतः, तस्य लिङ्गस्य । एवं च व्याप्तिरूपसम्बन्धस्य स्मरणमनुमानमिति ध्वनितम् । अन्यथा "लटः शतृ-

---

1. म. भा., प्र. १/२/६४ ।
2. म. भा., ३/२/१२४ ।
3. म. भा.,३/२/१२४ ।
4. न्या. म., प्र. भा., पृ. ११५ ।
5. "पक्षधर्मताज्ञानाद्यनपेक्षतया तस्य प्रमाणान्तरत्वात्" । (ल. म., शक्तिनिरू., र. प्र., पृ. ४८ )
6. म. भा. ३/२/१२४ ।

शानचा." इति सूत्रे भाष्येऽनुमाननिरूपणे धूमादिकं दृष्टान्ततया उक्त्वापि "विषम उपन्यासः" इत्युक्त्या खण्डयित्वा, प्रत्यक्षस्तेनाग्निधूमयोरित्यनेन सम्बन्धप्रत्यक्षस्यापि लिङ्गदर्शनात् पूर्वसत्ताऽऽवश्यिकी इत्यादिकथनं कथं सङ्गच्छेत ? इदानीं पक्षे साध्यसाधनकाले सम्बन्धप्रत्यक्षस्यासम्भवात्। किञ्च "सामानाधिकरण्यं दृष्ट्वाऽनुमानाद् गन्तव्यम्" इति वाक्येन लिङ्गदर्शनोत्तरत्वमेवानुमाने प्रतीयते, न तु तदव्यवहितोत्तरत्वम् । अतश्च सम्बन्धज्ञानमनुमानमित्यागतम् ।

उक्तं चास्यानुमानत्वं श्रीजयन्तभट्टेनाऽपि– 'यदविनाभावस्मरणं तदनुमानं करणम्, ततः परोक्षार्थप्रतिपत्तेः, यदुक्तं प्रत्युत्पन्नकारणजन्या स्मृतिरनुमानमिति[1] ....' इति ।

लिङ्गदर्शनस्यानुमानत्वपक्षे तु व्याप्तिस्मरणस्य व्यापारत्वं बोध्यम्, व्याप्तिसंस्कारोद्बोधनद्वारा लिङ्गज्ञानस्य व्याप्तिस्मरणे हेतुत्वात् । व्याप्तेः शाब्दबोधस्यानुमितेर्वा व्यापारत्वे तु पदार्थज्ञानविधया पक्षज्ञानविधया (पक्षतावच्छेदकप्रकारकनिश्चयविधया) वा लिङ्गज्ञानस्य तत्रापि हेतुत्वं बोध्यमिति तस्यापि करणत्वं निराबाधमेव ।

अयं भावः – "लिङ्गं (धूमादि) साध्य- (अग्न्यादि) निरूपितव्याप्तिमत्" इत्याकारकवाक्यजन्ये ज्ञाने पदपदार्थज्ञानविधया लिङ्गज्ञानस्यास्ति हेतुता । एवमेवेदं लिङ्गमेतत्साध्यनिरूपितव्याप्तिमदित्याकारेऽनुमाने पक्षताऽवच्छेदकरूपेण पक्षज्ञानस्यास्ति हेतुता । तच्च पक्षज्ञानमत्र लिङ्गज्ञानमेव । अत एव मञ्जरीकृता "प्रथमं लिङ्गदर्शनम्, ततः प्रतिबन्धस्मरणम्, ततः केषाञ्चिन्मते परामर्शज्ञानम्, ततः साध्यार्थप्रतीतिः" इत्याद्युक्त्वा परामर्शस्य न सर्वसम्मत्या व्यापारत्वमित्युक्तम्[2] । तर्कसङ्ग्रहे लिङ्गपरामर्शस्यानुमानत्वं तु न लिङ्गदर्शनरूपस्य प्रथमस्य ज्ञानस्य, अपि तु तृतीयस्य । तत्रापि कारणस्य व्यापारवत्त्वनियमनपेक्ष्य । तदपेक्षत्वे तु व्याप्तिज्ञानमेव करणमिति सिद्धान्तितम्[3] ।

## अनुमानस्य लक्षणान्तरविमर्शः

अनुमीयतेऽनेनेति करणव्युत्पत्त्या अनुमितिकरणत्वमपि अनुमानस्य सामान्यं लक्षणमभ्युपगम्यते शाब्दिकैः । तदुक्तं भाष्ये–"सा असावनुमानगम्या" इति । अत्रानुमानपदे अनुपूर्वकान्मिमीते मिनोतेर्वा करण एव ल्युट्, कोऽसावनुमान इत्याद्युत्तरभाष्यात्, श्रीनागोजिभट्टेनोद्द्योते स्पष्टमुल्लेखाच्च[4] ।

---

1. न्या. म., प्र. भा., पृ. ११५ ।
2. न्या. म., प्र. भा., पृ. ११५ ।
3. तर्कस., अनु. परि. ।
4. म. भा., प्र. उ. १/३/१ ।

अथ अनुमितिकरणरूपेऽनुमानलक्षणे पदकृत्यं विमृश्यते । घटादिकरणत्वं दण्डादावप्यस्तीति तत्रानुमानलक्षणातिव्याप्तिवारणाय अत्रानुमितिपदमुपात्तम् । यद्यपि मतिकरणमित्यनेनैव तद्व्युदासस्तथापि चक्षुरादावतिव्याप्तिः स्यादिति 'अनु' इति पदम् । अनुकरणमित्येवं मितिपदरहितं चेल्लक्षणम्, तदा गवित्ययमाहेत्यनुकरण एव लक्षणं गच्छेत्, न तु लक्ष्यमात्रे, अनुकरणपदस्य अनुमानमात्रेऽप्रसिद्धेः, उपरिनिर्दिष्टे गवादिपद एव प्रसिद्धेः[1]। अतो मित्युत्तरकमन्विति । करणपदाभावेऽनुमितिर-नुमानमित्युक्तौ अनुमितिरूपे कार्य एव लक्षणमियात्, न तु अनुमानरूपलक्ष्ये, इत्यसम्भवः स्यादिति करणपदम् ।

ननु अनुमितिपदे करणे [2]क्तिन् विधीयतामिति पुनरपि किमर्थं करणपदमिति चेत्, न, भावसाधन एवानुमितिपदस्य प्रसिद्ध्या तत्सार्थक्यात्, अनुमानपदस्य करणव्युत्पत्तिबोधनायाऽपि तस्य साफल्याच्च । अनुमितेः कार्यत्वेन स्वं प्रति स्वस्य करणत्वायोगाद् अनुमितिः करणमिति व्यस्तमुपेक्ष्य समस्तमुपात्तम् ।

ननु लक्ष्यतावच्छेदकलक्षणयोरैक्ये कथमस्माद् वाक्याच्छाब्दबोध इति चेत्, उच्यते– अनुमानपदस्यानुमानपदव्यवहार्ये लक्षणया अनुमानपदव्यवहार्य्यत्वस्य लक्ष्यताऽ-वच्छेदकत्वेन नास्ति द्वयोरैक्यम् । वैयाकरणानां नये शब्दालिङ्गितभानस्य सिद्धान्त-यिष्यमाणत्वेन[3] शङ्काया अनवतार एव ।

**शाब्दिकमते करणलक्षणविमर्शः**

क्रियायाः प्रकृष्टं साधकं करणमुच्यते व्याकरणदर्शने "साधकतमं करणम्"[4] इति सूत्रयता भगवता पाणिनिना । यद्वृत्तिव्यापाराव्यवहितोत्तरं फलनिष्पत्तिस्त-त्करणमित्युच्यते श्रीहरिणा वाक्यपदीये–

> **क्रियायाः परिनिष्पत्तिर्यद् व्यापारादनन्तरम् ।**
> **विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम्**[5] ॥ इति ।

"करणं च क्रियामात्रविषयं व्यापारनियतं च इति श्रीभट्टोजिदीक्षितः[6] । यत्तु बहुत्र करणकारणयोरैक्यमभिमत्य निर्व्यापारस्यापि कारणस्य करणत्वमभिमतम्, तत्तु

---

1. "अर्थवत्सूत्रे गवित्ययमाहेत्यादावनुकरणे" इत्यादि । (ल. श. शे., अजन्तपु. प्र.)
2. "करणाधिकरणयोश्च" । (पा. सू. ३/३/११७ )
3. वा. प. १/१२३ ।
4. पा. सू. १/४/४२ ।
5. वा. प., ३ काण्ड., सा. स. ३ ।
6. सि. कौ., कार. प्र. ।

व्याकरणशास्त्रे नाङ्गीकरणीयम्, अपि तु व्यापारनियतमेव । उक्तं च परैरपि "व्यापारवदसाधारणं कारणं करणम्"[1] इति । एवं च अनुमितिकरणेऽनुमानेऽवश्यं केनचिद् व्यापारेण भवितव्यम् ।

**व्यापारलक्षणविमर्शः**

यद्वृत्तिव्यापारादनन्तरं फलनिष्पत्तिरिति कथनेन करणवृत्तित्वे सति तज्जन्यफलनिष्पादकत्वं व्यापारलक्षणमायाति, न तु धात्वर्थत्वरूपं तल्लक्षणमत्र ग्राह्यमसम्भवात्[2] । उक्तं च न्यायदर्शनेऽपि–"तज्जन्यत्वे सति तज्जन्यजनकत्वं व्यापारत्वम्" इति । "तत्र समवायस्य नित्यतया तज्जन्यत्वाभावेन व्यापारत्वं न स्यादिति तत्सत्ताधीनसत्ताकत्वे सति...... "[3] इत्याद्युक्तं तत्रैव ।

**अनुमाने व्यापारविमर्शः**

लिङ्गदर्शनरूपे प्रथमानुमाने तु व्याप्तेः स्मरणं शाब्दबोधोऽनुमितिर्वा व्यापारः । एवं च व्याप्तिज्ञानत्वेन व्यापारता, न तु स्मरणत्वादिना इति भावः । वक्ष्यमाणपरामर्शस्य तु नात्र पक्षे व्यापारत्वम् । अत एव मञ्जरीकृताऽपि 'केषाञ्चिन्मते परामर्शज्ञानम्" इत्युक्त्वा तस्य सर्वसम्मतं व्यापारत्वं निराकृतमेव[4] ।

व्याप्तिज्ञानात्मके द्वितीयानुमाने को व्यापारः? यदुत्तरमनुमितिरूपं फलमुत्पद्यत इति जिज्ञासायामुच्यते । यद्यपि व्याकरणशास्त्रे शब्दतः क्वाऽपि व्यापारस्योल्लेखो न कृतस्तथापि नियतसम्बन्धविशिष्टलिङ्गस्य पक्षवृत्तित्वज्ञानमेव व्यापारत्वेन स्वीकृतं शब्दशास्त्राचार्यैरेतत्पक्षे, "स तद् विदेशस्थमपि दृष्ट्वा जानाति"[5] इत्युक्तभाष्यात्तथा प्रतीतेः । तत्र हि तत्पदेन नियतसम्बन्धविशिष्टलिङ्गस्य विदेशस्थमित्यनेन पक्षवृत्तित्वस्य च ग्रहणौचित्यात् । यदि तु तत्पदेन लिङ्गस्यैव ग्रहणम्, सम्बन्धविशिष्टस्य लिङ्गस्य पक्षे लौकिकप्रत्यक्षासम्भवात्, 'दृष्ट्वा' इत्यनेन प्रत्यक्षज्ञानस्यैव ग्रहणादित्युच्यते, तदा तु सम्बन्धस्य स्मरणरूपमनुमानमर्थाल्लभ्यते, तदेव पूर्वमुक्तम् । किन्तु 'दृष्ट्वा' इत्यनेन ज्ञानसामान्यस्यैव सर्वसङ्ग्रहाय ग्रहणौचित्येन प्रथमव्याख्यानमेव युक्तं प्रतीयते ।

किञ्च वृद्धिरादैजिति सूत्रे [6]दृष्टान्तवाक्यमुक्त्वा 'एवमिहापि' इति वदता भाष्यकृता उपनयवाक्यघटितं पञ्चावयववाक्यं न्यायाङ्गतया स्वीकृतमस्ति । उपनयवाक्यं च "उदाहृतव्याप्तिविशिष्टत्वेन हेतोः पक्षधर्मताप्रतिपादकं वाक्यम्, तथा

---

1. न्या. सि. मु., कारि. ५८ ।
2. तादृशव्यापारवतो नियमेन कर्तृत्वं स्वीक्रियते "स्वतन्त्रः कर्ता" (१/४/५४) इति सूत्रेण ।
3. न्या. सि. मु., किर. टी. ।
4. न्या. म., प्र. भा., पृ. ११५ ।
5. म. भा. ३/२/१२४ ।
6. म. भा., नवा. १/१/१ ।

चायम्"[1] (वह्निव्याप्यधूमवांश्चायम्) इत्यादिरूपं न्यायशास्त्रे प्रसिद्धमेवात्रापि ग्राह्यम्, न तु पक्षधर्मतामात्रप्रतिपादकं मीमांसादिशास्त्रे प्रसिद्धम् । दृष्टान्तवाक्योत्तरम्, तथा चायमित्युपनये तच्छब्देन सम्बन्धविशिष्टहेतोरेव परामर्शस्यौचित्यात्, सङ्कोचे बीजाभावात्, अप्रतिषिद्धस्याप्यनुमतत्वाच्च ।

एवं च व्याप्तिविशिष्टपक्षधर्मताज्ञानं न्यायदर्शनेऽपि [2]व्यापारतयोक्तं व्याकरणदर्शनसम्मतमेव ।

### न्यायशास्त्रे परिष्कृतमेतद् व्यापारस्वरूपम्

तत्र व्याप्तेर्वैशिष्ट्यं पक्षधर्मताज्ञाने विषयितासम्बन्धेन बोध्यम् । एवमपि "वह्निव्याप्यो धूमः, घटवांश्च पर्वतः" इति समूहालम्बनज्ञाने इदं लक्षणमतिप्रसक्तं स्यात्, अतस्तद्वारणाय "पक्षनिष्ठविशेष्यतानिरूपिता या हेतुनिष्ठा प्रकारता, तन्निरूपिता या व्याप्तिनिष्ठा प्रकारता, तच्छालिज्ञानं व्याप्तिविशिष्टपक्षधर्मताज्ञानम्"[3] इत्यनेन ग्राह्यम् । एवं च "पर्वतो धूमवान्, वह्नेः" इत्यत्र भ्रमात्मकव्याप्तिग्रहपरामर्शाभ्यामपि अनुमितिरुत्पद्यत एव, निरूप्यनिरूपकभावापन्नविषयतानां तत्रापि सत्त्वात् ।

सामानाधिकरण्यसम्बन्धेन पक्षधर्मतायां व्याप्तेर्वैशिष्ट्यस्य ग्रहणे तु सा नोत्पद्येत, धूमनिरूपिताया वह्निनिष्ठाया व्याप्तेरेवाभावेन तस्याः पक्षधर्मतायां वैशिष्ट्यस्य सुतरामसम्भवादित्यादि विस्तरतो द्रष्टव्यं न्यायग्रन्थेषु[4]।

एवं च व्याकरणेऽनुक्तमपि निर्दुष्टमेतत्स्वरूपमङ्गीकरणीयमेव, गत्यन्तराभावात् ।

### वेदान्तदर्शने संस्कारस्य व्यापारत्वम्

व्याप्तेरनुभवेन स्मृत्या वा जायमानायां द्विविधायामप्यनुमितौ व्याप्तिविषयकः संस्कार एव व्यापारः, स्मृतेः संस्कारनाशकत्वं नास्ति, स्मृतिधारानुभवात् । उद्बुद्धस्यैव च संस्कारस्य तथात्वेन नानुद्बुद्धसंस्कारादनुमितिरापादयितुं शक्येति सिद्धान्तयन्ति अद्वैतवेदान्तिनः[5] ।

---

1. त. सं., पद., पृ. ५७-५८ ।
2. न्या. सि. मु., का. ६६ ।
3. त. स., पद., पृ. ५२ ।
4. त. स., अनु. परि., दीपिका-टीका ।
5. वे. प., टीकाद्व., पृ. १६५-१७० ।

### शाब्दिकदृष्ट्यात्र निष्कर्षः

तदिदं वेदान्तसम्मतं संस्कारस्य व्यापारत्वं शाब्दिकेभ्यो न रोचते ।

तथा हि– अस्य संस्कारस्योद्बोधनाय कश्चन हेतुर्वक्तव्यः । किञ्चास्य जनकं यद् व्याप्तिज्ञानं तस्य पक्षधर्मताज्ञानस्य च पृथक्कारणत्वपक्षे कार्यकारणभावद्वयं कल्पनीयं स्यात्, अग्निव्याप्यो धूमः, आलोकवांश्च पर्वत इति ज्ञानादपि 'पर्वतोऽग्निमान्' इत्यनुमितिश्च प्रसज्येत । इत्थं च यत्र ज्ञानद्वयादेवानुमितिः, तत्रापि विशिष्टज्ञानात्मकः परामर्शो व्यापारविधया कल्पनीय एव । फलमुखं गौरवं न दोषाधायकमित्यादि सर्वं युक्तिजातमत्रालोचनीयम्[1] ।

### पूर्वमीमांसासम्मतमनुमानलक्षणम्

पूर्वमीमांसानये– असन्निकृष्टार्थज्ञानजनकं व्याप्यदर्शनमनुमानमुच्यते । व्याप्यदर्शनं व्याप्तिविशिष्टस्य लिङ्गस्य दर्शनमिति यावत् । तत्र पक्षे धूमादिलिङ्गस्य प्रत्यक्षादिज्ञानम्, ततो व्याप्तिस्मरणादिना अग्न्याद्यनुमितिः । मध्ये व्यापारविधया विशिष्टज्ञानात्मकः परामर्शो नाङ्गीक्रियते । उक्तं च मानमेयोदये– "व्याप्यदर्शनादसन्निकृष्टार्थज्ञानमनुमानम्"[2] इति । शास्त्रदीपिकायां च–"अनुमानं ज्ञातसम्बन्धस्यैकदेशदर्शनादेकदेशान्तरेऽसन्निकृष्टेऽर्थे बुद्धिः"[3] इति । शालिकनाथमिश्रेणाऽपि–

**ज्ञातसम्बन्धनियमस्यैकदेशस्य दर्शनात् ।**
**एकदेशान्तरे बुद्धिरनुमानमबाधिते ॥**
**यः कश्चिद् येन यस्येह सम्बन्धो निरुपाधिकः ।**
**प्रत्यक्षादिप्रमासिद्धः स तस्य गमको मतः**[4] ॥ इति ।

एषु सर्वत्रानुमानपदं भावल्युडन्ततयाऽनुमितिपरं बोध्यम् । ज्ञातसम्बन्धस्य पदार्थद्वयस्य, यथा वह्निधूमयोः कार्यकारणभावः सम्बन्धो ज्ञातस्तत्रैकदेशस्य दर्शनाद् असन्निकृष्टे प्रमाणान्तरेणाज्ञातेऽबाधिते चैकदेशान्तरेऽग्नौ या बुद्धिः साऽनुमितिरित्यर्थो बोध्यः ।

### उत्तरमीमांसासम्मतं तल्लक्षणम्

अनुमितिकरणमनुमानसामान्यलक्षणम् । अनुमितिश्च व्याप्तिज्ञानत्वेन व्याप्तिज्ञानजन्या । व्याप्तिविषयकः संस्कारो व्यापार इति सिद्धान्तो वेदान्तदर्शनस्य[5] ।

---

1. न्या. सि. मु., अनु. ख., का. ६८ ।
2. मा. मे., प्र. प., पृ. ११ ।
3. शा. दी., पृ. २२० ।
4. शा. दी., प्र. टीकोद्धृतम्, पृ. २२० ।
5. वे. प., टीकाद्व., पृ. १६५ ।

**उक्तविषये सांख्यदर्शनम्**

सांख्याचार्यास्तु लिङ्गलिङ्गिपूर्वकमनुमानम्, लिङ्गं व्याप्यम्, लिङ्गि व्यापकम् । शङ्कितसमारोपितोपाधिनिराकरणेन वस्तुस्वभावप्रतिबद्धं व्याप्यम् (धूमादि), येन च प्रतिबद्धं तद् व्यापकम् । अत्र लक्षणे लिङ्गलिङ्गिपदे लक्षणया ज्ञानपरे । लिङ्गिग्रहणं चावर्त्य लिङ्गमस्यास्तीति लिङ्गी पक्षः पर्वतादिस्तज्ज्ञानं पक्षधर्मताज्ञानमिति यावत्तदपि गृहीत्वा व्याप्यव्यापकभावपक्षधर्मताज्ञानपूर्वकमनुमानमिति लक्षणं पर्यवसितं प्रज्ञापयन्ति[1] ।

**उक्तविषये बौद्धदर्शनम्**

प्रमाणसमुच्चये[2] उक्तं श्रीमदाचार्यदिङ्नागेन– "लिङ्गात् साध्यरूपस्यार्थस्य दर्शनमनुमानम्" । न्यायप्रवेशे[3] न्यायबिन्दौ[4] चापि इदमेव लक्षणमङ्गीकृतम् ।

**उक्तविषये जैनदर्शनम्**

जैनाचार्येण श्रीसिद्धसेनेनोक्तमनुमानलक्षणम्–"साध्याविनामुनो लिङ्गात् साध्यनिश्चायकं स्मृतम् अनुमानम्"[5] इति ।

हेमचन्द्राचार्येण–"साधनात् साध्यविज्ञानमनुमानम्"[6] इत्युक्तम् ।

**एतेषां लक्षणानां न्यायशास्त्रदृष्ट्या निरासः**

परामर्शस्य व्यापारत्वमनङ्गीकर्तॄणामेतेषां पूर्वमीमांसासांख्ययोगबौद्धजैनदर्शनानां मतानि शाब्दिकाचार्या नानुमोदन्ते । तथा हि पूर्वमीमांसादिनये पक्षधर्मताज्ञानव्याप्तिस्मरणाभ्यामेव अनुमितिर्जायते । परामर्शस्यातिरिक्तस्य कारणतया कल्पने प्रामाणिकं गौरवं प्रसज्येतेति[7] ।

सैषा पद्धतिर्न समाद्रियते न्यायशास्त्रविशारदैः । तथा हि–उक्तस्य ज्ञानद्वयस्य एकरूपेण हेतुता विभिन्नरूपेण वा? नाद्यः – एकरूपेण (व्याप्यताऽवच्छेदकप्रकारकपक्षधर्मताज्ञानत्वेन) हेतुत्वे 'धूमवान् पर्वतः' इति ज्ञानादप्यनुमितिरापद्येत, तज्ज्ञानस्यापि तद्रूपवत्त्वात् । नापि द्वितीयः, वह्निव्याप्यो धूमः, आलोकवांश्च पर्वतः इति ज्ञानादप्यनुमित्यापत्तेः, पक्षधर्मताज्ञानत्वव्याप्तिस्मरणत्वेति विभिन्नरूपयोरत्रापि सत्त्वात् ।

---

1. सा. त. कौ., कारि. ५,पृ. ६६-६८ ।
2. प्र. स. अनु. ख. ।
3. न्या. प्र. पृ. ७ ।
4. न्या. वि., पृ. २-३ ।
5. न्याय. ५ ।
6. प्र. मी. १/२/७ ।
7. न्या. सि. मु., कारि. ६८,पृ.२२३ ।

अतो व्याप्तिविशिष्टपक्षधर्मताज्ञानस्यापि व्यापारविधया अनुमितिहेतुत्वं सर्वैः स्वीकरणीयम् । तदभावान्नोक्तस्थलयोरापत्तिः । यत्र च ज्ञानद्वयेनैवानुमितिरनुभूयते, तत्रापि मध्ये परामर्शः कल्पनीयः, फलमुखं गौरवं तु नैव दोषावहमिति [1]।

अत उक्तं च–"व्यापारस्तु परामर्शः करणं व्याप्तिधीर्भवेत्"[2] इत्यादि । अनुमितिकरणत्वं व्याप्तिज्ञानत्वं वा अनुमानसामान्यलक्षणम्[3] । पक्षे लिङ्गज्ञानमपि सहकारितया पूर्वमपेक्षणीयमेवेत्यादिन्यायसिद्धान्तः शब्दशास्त्रानुगुण एव ।

## शब्दशास्त्राभिमतमनुमानस्य लक्षणान्तरम्

व्याप्याकारा (धूमाद्याकारा) या अन्तःकरणवृत्तिस्तत्र चैतन्यप्रतिबिम्बनमेव धूमादिव्याप्यज्ञानम्, तत्प्रयोज्यं यद् बौद्धव्यापकवह्न्याकारवृत्तौ चित्प्रतिबिम्बनम्, चैतन्यप्रकटनम्, तत्प्रतिफलनमिति यावत् । तदेव "वह्न्यनुमितिः" इत्युक्तं लघुमञ्जूषायां श्रीनागेशभट्टेन । तत्रापि पक्षे हेतोः प्रत्यक्षत्वस्थले तस्यापरोक्षा वृत्तिः, ततो व्याप्तिरूपसम्बन्धस्य परोक्षा वृत्तिः, हेतोः परोक्षत्वस्थले तु द्वयोरपि परोक्षैव वृत्तिः, नियतसम्बन्धविषयिणी परोक्षा वृत्तिरेवानुमानम्, तत्प्रयोज्यमिति कथनेन चैतत्सूचितम्, अन्यथा तज्जन्यमिति वक्तव्यं स्यात् । एवं च धूमादिलिङ्गविषयकवृत्तिर्व्याप्तिरूपसम्बन्धविषयकवृत्तिद्वारा हेतुतां याति । मध्ये व्याप्तिविशिष्टस्य पक्षवृत्तित्वविषयापि वृत्तिर्व्यापारतया स्वीकार्या । बौद्धपदार्थवादिनां शाब्दिकानामेष एव सिद्धान्तः[4]।

## अनुमितेर्लक्षणानि

अनुमितिकरणंरूपानुमानलक्षणेऽनुमितिः का? इति चेत्, उच्यते–उक्तपरामर्शरूपव्यापारजन्यत्वे सति ज्ञानत्वमनुमितिलक्षणमिति । तत्र परामर्शजन्यत्वरूपविशेषणानुपादाने प्रत्यक्षप्रमायामतिव्याप्तिः स्यात् । तावन्मात्रोपादाने परामर्शध्वंसेऽतिव्याप्तिः स्यात्, ध्वंसस्य स्वप्रतियोगिजन्यत्वादिति उभयमुपात्तम् । इदं न्यायदर्शनोक्तं [5]लक्षणं शाब्दिकैरप्युपादेयमेव, पूर्वं परामर्शस्य व्यापारत्वप्रदर्शनात् ।

---

1. न्या. सि. मु., का. ६८, पृ. २२४-२२६ ।
2. न्या. सि. मु., का. ६६ ।
3. त. स., अनु. परि. ।
4. ल. म., र. प्र. युता, बौ. नि., पृ. ३१६-१७ ।
5. न्या. सिं. मु., टीकाद्वय., प्र. ख., का. ५२ ।

अत्र लक्षणे पक्षधर्मताप्रवेशे गौरवम्, अतो व्याप्तिज्ञानकरणकज्ञानत्वं द्वितीयं लघु लक्षणं प्रस्तावितं न्यायदर्शने[1]। शाब्दिकैरपि तत्स्वीकरणीयम्, व्याप्तिज्ञानस्यानुमितिकरणत्वनिवेदनात् । अत्र लक्षणे ज्ञानकरणकज्ञानत्वमात्रोक्तौ शाब्दबोधेऽप्यतिप्रसङ्गः स्यात्, तस्यापि पदज्ञानकरणकज्ञानत्वात् । व्याप्तिकरणकज्ञानत्वमात्रोपादाने अनुमित्यात्मके लक्ष्ये कुत्रापि अस्य लक्षणस्यागमनादसम्भवः स्यात्, अनुमितौ स्वरूपसत्या व्याप्तेः करणत्वाभावात् । करणपदं विहाय हेतुपदोपादाने तु परामर्शेऽतिव्याप्तिः स्यात्, तस्यापि व्याप्तिज्ञानहेतुकत्वात् । द्वितीयज्ञानपदाभावे तु व्याप्तिज्ञानकरणकप्रवृत्त्यादौ अतिप्रसङ्गः स्यात् । व्याप्तिज्ञानेच्छाद्वारा तत्रापि व्याप्तिज्ञानस्य करणत्वादिति सर्वपदानां सार्थक्यम् ।

किन्तु अत्रापि लक्षणे साध्यतावच्छेदकधर्मसम्बन्धादीनामननुगमादेकव्याप्त्युपादानेऽन्यानुमितावव्याप्तिरेव, अतो यां काञ्चिदेकां व्याप्तिमादाय तज्ज्ञानकरणकज्ञानवृत्त्यनुभवत्वव्याप्यजातिमत्त्वं विवक्षणीयम्[2]।

वस्तुतो व्याप्तिज्ञानादिप्रवेशेनात्रापि लक्षणे गौरवमस्त्येवेति यां काञ्चिदनुमितिव्यक्तिमादाय तदनुमितिव्यक्तिवृत्तिप्रत्यक्षावृत्तिजातिमत्त्वमेवानुमितेर्लक्षणं लाघवेन समादरणीयम् । घटेऽतिव्याप्तिनिरासाय वृत्त्यन्तं विशेषणम्, वृत्तित्वं च समवायसम्बन्धेन बोध्यम् । अतोऽनुमितौ कालिकसम्बन्धेन घटत्वादेर्वृत्तित्वेऽपि पुनरपि नातिप्रसङ्गो घटादौ । ज्ञानत्वानुभवत्वादिकमादाय प्रत्यक्षादावतिव्याप्तिनिरासाय प्रत्यक्षावृत्ति इति विशेष्यदलम्[3]।

यद्यपीदमपि लक्षणं शाब्दिकैरभ्युपगन्तुमर्हमेव, लाघवात्, तथापि बौद्धपदार्थवादिनामेतेषां नये बौद्धव्याप्यधूमाद्याकारवृत्तिप्रतिबिम्बनप्रयोज्यं यद् व्यापकबौद्धवह्न्याद्याकारवृत्तौ चैतन्यप्रतिबिम्बनम्, तदेव वह्न्याद्यनुमितिरिति अनुपदमेवानुमानलक्षणप्रस्तावे निवेदितं न विस्मर्तव्यम्[4]। लघुमञ्जूषाटीकाकृता श्रीबालम्भट्टेन तु ज्ञानजन्यत्वे सति शब्दज्ञानाजन्यत्वमनुमितेर्लक्षणमुक्तम्[5] ।

---

1. न्या. सि. मु., प्र. ख., का. ५२ ।
2. न्या. सि. मु., प्र. ख., का. ५२ ।
3. न्या. सि. मु., दि. रा. च, प्र. ख., कारि. ५२, पृ. २४२ ।
4. ल. म., र. प्र. युता, पृ. ३१६-१७ ।
5. ल. म., टीकाद्वययुता, पृ. ३५१ ।

### अनुमितेरभिलापप्रकारः

व्याप्तिज्ञानत्वरूपानुमानलक्षणे व्याप्तिघटितेऽनुमितिलक्षणद्वये चानुपदमुक्ते व्याप्तेः प्रवेशाद् बहुकृत्वस्तत्स्वरूपस्याकाङ्क्षिततत्वादिदानीं तदेव निर्वक्तुमुपक्रम्यते । शाब्दिक-मतेन परामर्शस्य द्वैविध्यादनुमितिरपि द्विधा अभिलप्यते । तथा हि–पक्षे (पर्वतादौ) साध्यव्याप्यः (धूमादिः) इत्याकारः, पक्षः साध्यव्याप्यवान् वा इत्याकारश्च द्विविधः परामर्शो विनिगमनाविरहात् सम्मन्यते शिष्टैः ।

तत्राद्यपरामर्शात् पक्षे साध्यम् (वह्न्यादि) इत्याकारा अनुमितिः, द्वितीयात्तु पक्षः साध्यवानित्याकारा इत्येकं मतम्[1] । अत्र मते कार्यकारणभावद्वयप्रयुक्तं गौरव-मापतति, अतो द्विविधादपि परामर्शादेकविधैव पक्षः साध्यवानित्येवानुमितिरित्यपर-मतं न्यायदर्शनानुग्रहीतम्[2], अत्र व्याकरणदर्शनेऽपि संमादरणीयम्, लाघवात् । यद्यप्यत्रापि एकस्मिन् कार्ये स्वतन्त्रकारणद्वयस्वीकारे व्यतिरेकव्यभिचारो दुर्निवारः, एकदा एकेनैव कारणेंन कार्यनिष्पत्तौ अपरस्याभावात् । तथापि पक्षनिष्ठविषयता-निरूपितव्याप्यनिष्ठविषयताशालिज्ञानत्वेन ज्ञानद्वयानुगमादेकरूपेणैव कारणतेति न तादृशव्यभिचारप्रसर इति रहस्यम्[3] ।

एवं च प्रत्याहारेष्वनुबन्धानां कथमज्ग्रहणेषु न[4], य एते वर्णैकदेशाः, एतेषा-मवयवग्रहणेन ग्रहणं स्याद्वा न वा[5], इत्यादिषु अनुबन्धादिरूपपक्षस्य यद्यपि षष्ठ्यन्त-तया निर्देशः कृतोऽस्ति भाष्ये, तथापि अनुमितेरभिलापे लाघवात् प्रथमान्ततैवोह-नीया । कृतश्च शतशस्तादृशो निर्देशः -- "अर्थवन्तो वर्णाः" इत्यादिषु[6] ।

### पक्षस्वरूपविमर्शः

पक्षः साध्यवानित्यनुमितिस्वरूपे साध्यं विधेयम् (वह्न्यादिरूपम्) उच्यते, पक्षमुद्दिश्य तस्यैव साधनीयत्वादिति तत्स्वरूपे नास्ति विप्रतिपत्तिः शास्त्रविदामिति तत्परिहाय पक्षस्वरूपमेव पर्यालोच्यते । तत्र विशिष्टबुद्धौ विशेषणज्ञानस्य हेतुत्वेन पक्षतायाः स्वरूपे ज्ञात एव तद्विशिष्टस्य पक्षस्य स्वरूपं ज्ञातुं शक्यमिति प्रथमतः पक्षतास्वरूपमुच्यते ।

---

1. न्या. सि. मु., अनु. ख., कारि. ६८ ।
2. न्या. सि. मु., अनु. ख., कारि. ६८ ।
3. न्या. सि. मु., टी. द्व. युता, का. ६७ ।
4. म. भा. १।१।५।
5. म. भा. १।१।४।
6. म. भा. १।१।५।

यत्र साध्यस्य (विधेयस्य) सन्देहः क्रियते, तत्र स सन्देहः पक्षता इत्युच्यते, तद्वांश्च पक्षो बोध्यः । एवं च 'साध्यसन्देहविषयत्वं पक्षता' इति लक्षणमङ्कुरायते (उन्मिषति) । यथा 'पर्वतो वह्निमान्न वा', 'पर्वते वह्निर्न वा' इत्यादि साध्यसन्देहविषयत्वं पर्वत इति तत्र पक्षता सम्प्रतिपद्यते ।

महाभाष्ये पदे पदे इयं पक्षता स्वशब्देनानुक्तापि अर्थतो व्यवहृता अस्ति, यथा– "इदं विचार्यते किं पुनरिमे वर्णा अर्थवन्तः, आहोस्विदनर्थका वा" इत्युक्त्या एषैव पक्षता समर्थिता । अत्र वर्णात्मके पक्षे अर्थवत्त्वानर्थक्ययोः पर्यायेण साधनेऽयं संशयः प्रदर्शितः, अन्यथा "इमे वर्णा अर्थवन्तो न वा" इत्यन्यतरोपादानेनैव सिद्धे उभयोपादानं व्यर्थं स्यात्[1] । एवं चानुमितिद्वयीयपक्षताद्वयतात्पर्येणात्र तथोल्लेखः ।

अग्रे "अर्थवन्तो वर्णा धातुप्रातिपदिकप्रत्ययनिपातानामेकवर्णानामर्थदर्शनात्" इति भाष्यं व्याचक्षाणेन श्रीनागोजिभट्टेन उद्द्योते "अर्थवन्त इति साध्यम्, वर्णा इति पक्षः, पक्षतावच्छेदकमेव हेतुः, धातुप्रातिपदिकेत्यादिस्तु दृष्टान्तः" इति वदता वर्णरूपे पक्षे विद्यमानायाः पक्षताया अवच्छेदकं वर्णत्वमित्युक्तम्[2] । ततश्चावश्यं किञ्चित् पक्षतास्वरूपं भवति भाष्यकृदभिप्रेतमिति परिज्ञायते । तच्चोपर्युक्तं साध्यसन्देहविषयत्वरूपं विषयतासम्बन्धेन साध्यसन्देहरूपमेव वा भवितुमर्हति । भाष्यादौ सर्वत्र सन्देहमुपस्थाप्यैव पक्षेऽनुमानप्रवृत्तेर्दर्शनात् । अत एव "इदमनुमानप्रमाणेन निश्चेतुं प्रयत्यते, इत्यर्थकम्, इदं विचार्यते" इत्युक्तमत्र भाष्ये । सन्देहनिवृत्तय एव विचारे प्रवृत्तिरनुभूयते लोके । एवं चान्वयव्यतिरेकसहचारबलेन तत्प्रयुक्तभाष्यव्यवहारेण चानुमितौ स्वरूपसत्या अस्या हेतुत्वमपि बोध्यम् ।

**उक्तविषये न्यायदर्शनसंवादः**

परामर्शादिसकलकारणसत्त्वेऽपि साध्यनिश्चयसत्त्वे, बाधनिश्चयसत्त्वे वा अनुमितेरनुत्पत्तेः साध्यसंशयरूपपक्षताया अपि अनुमितौ हेतुताभ्युपेयते प्राचीनतार्किकैः। अस्ति च साध्यसंशयसत्त्वेऽनुमित्युत्पत्तिः, तदभावेऽनुमित्यभाव इति अन्वयव्यतिरेकसहचारोऽपि[3] ।

**अन्यत्रापि महाभाष्ये पक्षताप्रदर्शनम्**

एवमेवान्यत्रापि पक्षतास्वरूपं निर्दिशति भगवान् भाष्यकारः, यथा वर्णैकदेशान् पक्षीकृत्य तेषां वर्णग्रहणेन ग्रहणाग्रहणविचारे । उक्तं च तत्र[4]–

---

1. म. भा., नवा. १।१।५।
2. म. भा., प्र. उ. १।१।५।
3. न्या. सि. मु., अनु. ख., पृ. २४७-४८।
4. म. भा. १।१।४।

"इदं विचार्यते– य एते वर्णेषु वर्णैकदेशा वर्णान्तरसमानाकृतय एतेषामवयवग्रहणेन ग्रहणं स्याद्वा न वा" इति । अत्रायं ग्रहणसन्देहस्तद्विषयत्वं वा पक्षतैव निर्दिष्टा । किञ्चोक्तसन्देहरूपपक्षताबीजमपि स्वयं भगवान् भाष्यकार एवं दर्शयति– "कुतः पुनरियं विचारणा? इह हि समुदाया अप्युपदिश्यन्ते, अवयवा अपि । आभ्यन्तरश्च समुदायेऽवयवः । तद्यथा 'वृक्षः प्रचलन् सहावयवैः प्रचलति' । तत्र समुदायस्थस्यावयवस्यावयवग्रहणेन ग्रहणं स्याद्वा न वेति जायते विचारणा"[1] इति ।

क्वचित्तु प्रकारान्तरेणापि पक्षता प्रदर्शिता भाष्ये, यथा–"प्रत्याहारेष्वनुबन्धानां कथमज्ग्रहणेषु न"[2] ? इति । अत्र प्रत्याहारेष्वनुबन्धानामित्यसन्देहबीजकथनम्, 'कथमज्ग्रहणेषु न' इत्यंशेन सन्देहकथनम् । तत्र ग्रहणं भवति न वेत्यनुक्त्वा 'ग्रहणं कथं न' इति कथनेन प्रकारान्तरं प्रदर्शितम् । कथमित्यनेन हेतुजिज्ञासायां हेतोरनिश्चये ग्रहणनिश्चयाभावेऽर्थात्तत्सन्देहः फलतीति भावः । एवमेव 'कथं पुनर्ज्ञायते त्रयाणामयं प्रश्लिष्टनिर्देश" इति ऊकालोऽजिति सूत्रीयं[3] भाष्यमपि आर्थिकसन्देहरूपपक्षतापरतयैव नेयम्, अन्यथा क्लृप्तकार्यकारणभावो व्याहन्येत । किं बहुना, क्वचित्तु भाष्ये साक्षादेव सन्देहशब्देनास्याः सङ्केतो दृश्यते, यथा–"अयं णकारो द्विरनुबध्यते,पूर्वश्चैव परश्च । तत्राऽण्ग्रहणेषु इण्ग्रहणेषु च सन्देहो भवति । पूर्वेण वा स्युः परेण वा"[4] इति ।

**क्वचिदन्यत्र पक्षताबीजस्यापि प्रदर्शनम्**

क्वचन सन्देहरूपपक्षतास्वरूपप्रदर्शने सन्देहबीजमपि दृश्यते, यथा–"तस्य लोपः" इति सूत्रे भाष्ये–"अथ यस्यानुबन्ध आसज्यते, किं स तस्यैकान्तो भवति, आहोस्विदनेकान्तः"[5] ? इत्युक्तम् । अनेन अनुबन्धरूपपक्षे बोधकावयवत्वमनवयवत्वं वेति सन्दिह्य तत्र बोधकावयवत्वानुमितौ अस्य सन्देहस्य स्फुटं पक्षतात्वमायाति ।

अत्रैव कैयटः – "तत्रोपलभ्यमानस्य रूपद्वयदर्शनाद् वृक्षे शाखाबलाकयोरिवेति प्रश्नः"[6] इति प्राह । अनेन संशयबीजं स्फुटमुक्तम् ।

---

1. म. भा. १।१।४।
2. म. भा. १।१।५।
3. म. भा. १।२।२७।
4. म. भा. १।१।२६, पृ. १४८ ।
5. म. भा. १।३।९।
6. म. भा., प्र. १।३।९।

बहुतरमिदं स्पष्टीकृतं श्रीभैरवमिश्रेण परिभाषेन्दुशेखरे स्वरचितभैरवीटीकायाम्[1], श्रीलक्ष्मणशर्मणा तत्त्वप्रकाशिकायां[2] च । तथा हि–"संशयं प्रति साधारणधर्मज्ञानस्य कारणत्वेन प्रकृते स धर्मः कः ? इति जिज्ञासायामुच्यते– अनु (पश्चाद्) बध्यन्ते सम्बध्यन्ते ये तेऽनुबन्धाः । सम्बन्धश्च शास्त्रे नानाविधो दृष्टः, यथा लोके 'काकवृक्षयोः संयोगः, वृक्षशाखयोः समवायो वा । तत्राद्यसम्बन्धाश्रयणेऽनवयवत्वम्, द्वितीयसम्बन्धाश्रयणे त्ववयवत्वमिति संयोगसमवायोभयसाधारणस्य सम्बन्धत्वस्य दर्शनमेव संशयबीजमवगन्तव्यमिति ।

**कुत्र तादृशसम्बन्धयोरनुबन्धे दर्शनम् ?**

ननु उपरितनौ दृष्टान्तौ तदैव सङ्गच्छेताम्, यदानुबन्धे (वर्णे) संयोगः समवायश्च शास्त्रे व्यवहृतः, स्यात्, अन्यथा अत्र तयोरसम्भवे दार्ष्टान्तिकता न युज्येत इति चेत्, उच्यते– "उदीचां माङो व्यतीहारे" इत्यत्र 'माङः' इति निर्देशे ङकारानुबन्धेऽनवयवत्वम् । अन्यथा ङकाररूपावयवसत्त्वे मेङ्धातोरेकारस्य "आदेच उपदेशे" इत्यनेन आत्वं कथं स्यात्? अतश्चानवयवत्वसाधकः संयोग एवात्र स्वीकर्तुमुचितः । आटश्चेत्यादिनिर्देशेन त्ववयवत्वसाधकः समवायः । अत एव तत्रानुबन्धसहिताद् विभक्तिदर्शनम् । स्पष्टं चैतत् तत्त्वप्रकाशिकायाम्[3] ।

**पक्षतावच्छेदकज्ञानमन्तरा न पक्षतोदयः**

विशिष्टवैशिष्ट्यावगाहिबुद्धिं प्रति विशेष्यताद्यवच्छेदकज्ञानस्य हेतुत्वेन 'पर्वतो वह्निमान्न वा' इति तादृशबुद्धौ पक्षतावच्छेदकस्य (पर्वतत्वादेः) ज्ञानस्य यथा पूर्वमपेक्षा, तथैव अनुबन्धविशेष्यकावयवत्वादिप्रकारकसन्देहे अनुबन्धत्वरूपपक्षतावच्छेदकस्य ज्ञानमपि पूर्वमावश्यकम् । एतदर्थमेव परिभाषेन्दुशेखरे 'इत्संज्ञका अनुबन्धाः' इत्युक्त्वा "तेष्ववयवानवयवत्वसन्देहे आह" इति वाक्येन सन्देहरूपा पक्षता प्रादर्शि श्रीनागेशभट्टेन[4] । इत्संज्ञकत्वमेवात्रानुबन्धत्वरूपं पक्षतावच्छेदकम् । इदमेव उद्देश्यतावच्छेदकमपि उच्यत । एतेन रूपेण ज्ञातमेवोद्दिश्य अपूर्वज्ञानविषयतया यत् किञ्चिद् विधातुं शक्यत इत्यनुमितावपि इदं ज्ञानं पूर्वमावश्यकमेव[5]।

---

1. भैर. (परि. शे. टी.), पृ. २० ।
2. तत्त्वप्र. (परि. शे. टी.), पृ. २० ।
3. तत्त्वप्र. (परि. शे. टी.), पृ. २१ ।
4. परि. शे., पृ. २० ।
5. विजया (परि. शे. टी.), पृ. २७ ।

अत्रापि सन्देहे अवयवानवयवत्वोभयोपादानं भाष्यवदुभयानुमितिसाधारण-पक्षताद्वयलाभायेत्यन्यत् । स्पष्टं चेदं तत्र भूतितिलकेऽपि ।

**प्रत्यक्षेणास्य सन्देहस्य निवृत्तिरशक्या**

ननु 'अनुबन्धानां बोधकावयवत्वमनवयवत्वं वा' इति सन्देहस्य प्रत्यक्षेण श्रोत्रेन्द्रियेणैव निर्वर्त्यतया नास्य सन्देहस्यानुमाननिर्वर्त्यत्वेन पक्षतात्वमभ्युपगन्तु-मर्हमिति चेत्, न, बोधकावयवानवयवत्वान्यतरस्यात्र साध्यत्वेन बोधकतायाश्च साध्य-तावच्छेदककुक्षिप्रविष्टायाः श्रोत्रेण ग्रहीतुमशक्यत्वात्[1] । अद्यावधि तस्या अनिर्णयेन परसम्मतेनालौकिकसन्निकर्षेणापि ग्रहीतुमशक्यत्वाच्च ।

एतेन अनुमानमिदमप्रयोजकमिति कथनमपास्तम्, अनुमानेनैव तादृशसन्देह-निवृत्त्या तस्य सुष्ठु प्रयोजकत्वात्, पक्षतात्वस्य चैवं सति अत्र सन्देहे सुसङ्गमनाच्च ।

**शब्दशास्त्रे पक्षताया निष्कृष्टं स्वरूपम्**

परिभाषेन्दुशेखरे तत्त्वप्रकाशिकायां टीकायाम्–अस्याः पक्षतायाः प्रवृद्धं स्वरूपं न्यायदर्शनानुमोदितं[2] यदुक्तम्, तदित्थम्–यद्धर्मिकयत्सम्बन्धावच्छिन्नयत्प्रकारकनिश्च-यत्वेन साध्याभावत्वावच्छिन्नप्रकारित्वसाध्यविशेष्यकत्वान्यतरावच्छिन्नं यत्संशयं प्रति निर्वर्तकत्वम्, तस्य सन्देहस्य तत्पक्षकतद्विधेयकानुमितौ पक्षतात्वम् । अत एव ह्रदादौ वह्न्यभावस्यानुमितौ 'ह्रदो वह्निमान्न वा' इति संशयस्य न पक्षतात्वम्, तन्निष्ठायाः साध्यवत्तानिश्चयप्रतिबध्यताया वह्निमत्ताविषयकत्वेनैवावच्छेद्यतया साध्याभावत्वा-वच्छिन्नप्रकारित्वानवच्छेद्यत्वात् । 'ह्रदो वह्न्यभाववान्न वा' इत्याकारकसंशयस्यैव तत्र पक्षतात्वात् । तथा च वह्निव्याप्यसाध्यकानुमितौ 'वह्निमान्न वा' इति संशयस्य न पक्षतात्वम् । अन्यथा पक्षधर्मिकवह्निव्याप्यत्वरूपसाध्यनिर्णयनिर्वर्त्यत्वात्, तादृश-निश्चयाप्रतिबन्धकत्वाच्च पक्षतात्वं स्यादेव[3] ।

प्रकृतपक्षविषयिताबहिर्भूतसाध्यविषयिताघटितधर्मावच्छिन्नं यत्प्रकृतपक्षधर्मिकप्रकृत-साध्यवत्तानिश्चयनिर्वर्त्यत्वमिति निवेशेन तु न निर्वाहः, वह्नौ पक्षे वह्नेः साध्यतायां 'वह्निर्वह्निमान्न वा' इति संशयस्य पक्षविषयताबहिर्भावेण साध्यविषयत्वाप्रसिद्ध्या अव्याप्तिप्रसङ्गात्[4] । एतावत्पर्यन्तं वैयाकरणसम्मतं लक्षणं विकसितलोचनमालोच्यताम् ।

---

1. परिभाषे. भूति., प्र. १, पृ. २६ ।
2. जाग., प., पृ. ३६-४१ ।
3. परि. शे., तत्त्वप्र., पृ. २१ ।
4. परि. शे., तत्त्वप्र., पृ. ३१ ।

## भूतिकृदादिसम्मतं पक्षतास्वरूपम्

"अत्र 'पक्षे साध्यसंशयः' इत्यनेन साध्यतदभावान्यतरस्मिन् पक्षसम्बन्धावगाहि-संशयस्य ग्रहणम् । अतः 'पर्वतो वह्निमान्' इत्यनुमितौ 'पर्वतो वह्न्यभाववान्, वह्निव्याप्यवान् वा' इति सन्देहस्यापि पक्षतात्वं स्वीक्रियते वृद्धैः" इत्याहुर्भूतिकाराः[1] ।

प्रकाशिकाकृतस्तु–साध्यसंशय इत्यस्य साध्यप्रकारकः साध्याभावप्रकारको वा संशय इत्यर्थः, न तु साध्यप्रकारताकत्वे सति साध्याभावप्रकारताकः संशय इति । 'पर्वतो वह्निमान्, वह्न्यभावव्याप्यवान् वा, पर्वतो वह्न्यभाववान् वह्निव्याप्यवान् वा' इत्यादिसंशयानामपि पक्षतात्वस्येष्टत्वात् । साध्यप्रकारताकत्वमित्यस्य साध्यतावच्छेदक-सम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारताकत्वमर्थः साध्याभावप्रकारताकत्वमि-त्यस्य च "साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभाव-त्वावच्छिन्नप्रकारताकत्वमिति । एवं च अनवयवत्वसन्देहे इत्येतावन्मात्रोक्तौ तस्यानवयवत्वतदभावान्यतरकोटिकसंशयार्थकतया तेन 'अनवयवत्वाभाववान् अनव-यवत्वव्याप्यवान् वा' इति संशयस्यापि धर्तुं शक्यतया एकान्ता अनुबन्धा इत्यनु-मितीयपक्षतात्वं न स्यात्, अवयवत्वतदभावान्यतरकोटिकसंशयस्यैव तत्र पक्षता-त्वात् । उक्तसंशये अवयवत्वस्वरूपानवयवत्वाभावरूपसाध्यप्रकारकत्वेऽपि साध्य-तावच्छेदकधर्माद्यवच्छिन्नप्रकारताकत्वाभावान्न परिष्कृतं साध्यप्रकारताकत्वमिति उभया-नुमितीयोभयपक्षतात्वसम्पत्तये अवयवानवयवत्वोभयकोट्युपादानमिति पक्षतास्वरूपं ससमन्वयं व्याचक्रुः[2] ।

## न्यायशास्त्रे सिद्धान्तभूतं पक्षतास्वरूपम्

न्यायशास्त्रे साध्यसंशयात्मकं पक्षतास्वरूपं न सिद्धान्तितम्, 'घनगर्जनेन गगनं मेघवत्' इत्यनुमितौ साध्यसन्देहाभावेऽपि तस्या उदयात् । अत एव सिसाधयिषा-मात्रमपि न पक्षता; किन्तु सिषाधयिषाविरहसहकृतसिद्ध्यभावः सा । अत्र सहकृतान्तं सिद्धेर्विशेषणम् । एवं च यत्र साध्यनिश्चयात्मिका सिद्धिरस्ति सिसाध-यिषा च नास्ति, तत्र नानुमितिः, प्रतिपबन्धकीभूतायाः सिषाधयिषाविरहसहकृत-सिद्धेरेव सत्त्वात् । किन्तु सिद्धिसत्त्वेऽपि यत्र सिषाधयिषा अस्ति, तत्रानु-मितिर्भवत्येव, उत्तेजिकायाः सिषाधयिषायाः सत्त्वात् ।

---

1. भूतिः (परि. शे. टी.), पृ. २०-२१ ।
2. परि. शे., तत्त्वप्र., पृ. २०-२१ ।

इयं च पक्षता न पक्षस्य विशेषणम्, केवलान्वयित्वात्, किन्तु पक्षपदप्रवृत्ति-निमित्तमस्त्येव । स्पष्टं चैतत्सर्वं सिषाधयिषाविरहसहकृतसाधकप्रमाणाभावो यत्रास्ति, स पक्षः – इत्यादिना चिन्तामण्यादिग्रन्थेषु[1] ।

**शाब्दिकदृष्ट्यात्र निष्कर्षः**

ननु घनगर्जितस्थले गगने मेघानुमितेरनुभवेनोक्तसाध्यसंशयस्य पक्षतात्वं वैयाकरणैरपि स्वीकर्तुं कथं शक्यमिति चेत्, उच्यते–तत्र गगने मेघस्य स्मरणमेव नानुमितिरित्यभ्युपगमेनादोषात् । न च 'इदानीं गगनं मेघवत्' इत्यनुमितौ एतत्-कालोऽपि भाषते, कालिकव्याप्तिबलेन, स्मृतौ तु वर्त्तमानकालस्य भानं भवितुं नार्हति, पूर्वं तस्य एतत्सम्बन्धेनाननुभवादिति वाच्यम् । गगनमेतत्काले मेघवत्, एतत्कालिकघनगर्जनादिति विशेषहेतुनैव तदनुमितेः कर्तुं शक्यत्वेऽपि सामान्यहेतुना तदशक्यत्वात् । साध्यसंशय इत्यनेन साध्यनिश्चयाभावस्य विवक्षणेनेष्टसाधनाद् वा ।

नन्वेवं तर्हि सिद्धिकालेऽपि सिषाधयिषाया उत्तेजकत्वेनानुमितिस्वीकारे न्याय-मतप्रवेश इति चेत्, न, तस्यामवस्थायां शाब्दिकैः कथमपि अनुमितेरनभ्युपगमात्, अनिर्ज्ञातार्थस्यैव प्रमितेस्तैः स्वीकारात्, न तु न्यायदर्शनवद् ज्ञातार्थस्यापि । यदि तु कार्यमात्रं प्रति प्रतिबन्धकाभावस्य कारणत्वनियमेन साध्यनिश्चयाभावरूपपक्षताया अपि हेतुत्वं न स्वतन्त्रम्, अपि तु तदन्तर्गतमेवेत्युच्यते, तदा अनुमित्युद्देश्यत्वं पक्षत्वमिति स्वीकुर्मः । तथा हि–'पक्ष'-परिग्रहे इति भौवादिकाद्[2] धातोः पक्ष्यते साध्यसिद्धौ उद्देश्यत्वेन परिगृह्यते योऽसौ पक्ष इति विग्रहे कर्मणि घञ्प्रत्ययेन पक्षशब्दो निष्पद्यते[3] । एवं च योगरूढिशक्त्या साध्यसिद्ध्युद्देश्यत्वमनुमित्युद्देश्यत्वं वा पक्षत्वमित्यायातम् । ध्वनितं चेदम् "प्रत्याहारेष्वनुबन्धानां कथमज्ग्रहणेषु न" इत्यत्र सन्देहमकृत्वैवानुमानं प्रवर्तयता भाष्यकृता[4] । "कथं पुनर्ज्ञायते–त्रयाणामयं प्रश्लिष्टनिर्देश इति ? तिसृणां संज्ञानां करणसामर्थ्यात्" इत्यूकालोऽजिति सूत्रे[5] अन्यत्रापि[6] च बहुत्र तादृशमाचरता च ।

---

1. जाग. प., चि. म., दी., पृ. ५०-६३ ।
2. धातुपाठः – भ्वादिगणः, पृ. १९२ ।
3. "अकर्तरि च कारके संज्ञायाम्" । (३।३।१९)
4. म. भा., नवा. १।१।१ ।
5. म. भा., १।२।२७ ।
6. यत्तावदुच्यते–"उच्यमानेऽप्येतस्मिन् कुत एतत् परस्य भविष्यति, न पूर्वस्येति । इहेङ्गितेन, चेष्टितेन, निमिषितेन महता वा सूत्रप्रबन्धेनाचार्याणामभिप्रायो गम्यते" । (म. भा. ६।१।३७)

एवं च यत्र भाष्यादौ अनुमितेः पूर्वं सन्देहो दृश्यते, तत्रापि अनुमित्युद्देश्यत्वमेव पक्षत्वम् । सन्देहस्तु विचारप्रयोजक एवेत्येव कल्पनीयम्, न तु यत्र यत्र सन्देहो नास्ति, तत्रापि स कल्पनीयः, अनुमित्यनुरोधात्, तथा सति अप्रामाणिकगौरवापत्तेः ।

उक्तं चेदमेव पक्षत्वं तर्कसङ्ग्रहे न्यायबोधिन्याम्[1] । इयान् विशेषः – यदि तु अस्याः पक्षताया ज्ञानमेवानुमितिहेतुः, न तु साध्यसन्देहादिवत् स्वरूपसत्या अस्या हेतुत्वमित्युच्यते, तदा अप्रामाणिकं बहु गौरवं स्यात् । अतश्च पक्षस्वरूपस्य व्यवहारौपयिकमिदं लक्षणम्, न तु अनुमितिकारणीभूतपक्षतायाः स्वरूपम्, अनुमित्युत्पत्तेः पूर्वमुद्देश्यताया विषयताविशेषात्मिकाया अभावेन तत्र कारणतायाः पूर्ववृत्तित्वघटिताया असम्भवात् ।

सन्देहस्यानुमितिहेतुता चित्सुखाचार्यैरपि निराकृता । तथा हि--"स्वार्थानुमाने नास्ति सन्देहस्योपयोगः, सद्यः समुन्मीलितविलोचनस्यापि पर्वते धूमदर्शनेनाग्न्य-नुमितेर्दर्शनात् । नापि परार्थानुमाने, विपरीतकोटिं निश्चितवन्तं प्रत्यपि अनुमान-प्रयोगदर्शनात् । 'सन्दिग्धे न्यायः प्रवर्तते' इति तु अनुमानस्थले सन्देहोऽपि भवतीत्येवं-परम्, न तु सन्देहाभावेऽनुमाननिवृत्तिपरम्" इति[2] ।

## पक्षस्य स्वरूपनिर्देशे दर्शनान्तराणि

प्रतिज्ञाया लक्षणप्रतिपादनावसरे श्रीप्रशस्तपादाचार्येण पक्षस्वरूपमपि सुष्ठु निर्दिष्टम्। तथा हि--"प्रतिपिपादयिषितधर्मविशिष्टस्य धर्मिणोऽपदेशविषयमापादयितुमुद्देशमात्रं प्रतिज्ञा" इत्युक्तवता तेन "प्रतिपिपादयिषितधर्मविशिष्टो धर्मी" इति पक्षस्वरूपमेव प्रदर्शितम्[3] ।

श्रीमता गङ्गेशोपाध्यायेन चिन्तामणौ "अथ सिषाधयिषितसाध्यधर्मा धर्मी पक्षः" इति पक्षनिर्देशः पूर्वपक्षतया कृतः[4] । अग्रे स्वयमेव "सन्देहवत् परामर्शपूर्वं सिषाधयिषाया अप्यभावात्" इत्यादिना निराकृतश्च[5] ।

---

अत्रोद्द्योतः – "एते पक्षे आचार्ये तदभिप्रायगमकाः" इति । यद्यप्युद्द्योते 'प्रत्यक्षे' इति पाठो दृश्यते, तथापि नोचितः, प्रकृतानुपयुक्तत्वात् ।

1. तर्कस., अनु. परि., न्या. बो., पृ. ६४ ।
2. त. प्र. परि., प्रा. वा., पृ. २१२-२१३ ।
3. प्र. पा. भा., पृ. २३४ ।
4. जाग. प., पृ. ५२ ।
5. जाग. प., पृ. ५६ ।

**अन्यत्रापि पक्षस्वरूपं सोदाहरणमुक्तम्**

"तत्र पक्षः प्रसिद्धो धर्मी, प्रसिद्धविशेषेण विशिष्टतया स्वयं साध्यत्वेनेप्सितः, प्रत्यक्षाद्यविरुद्धः" इति वाक्यशेषः । तद्यथा 'नित्यः शब्दोऽनित्यो वा' इति[1] । एवमेव--"स्वरूपेणैव स्वयमिष्टो निराकृतः पक्षः"[2] इति न्यायबिन्दुकर्त्राभिहितम् ।

श्रीहेमचन्द्राचार्येणापि-"सिषाधयिषितमसिद्धमबाध्यं साध्यं पक्षः" इति सूत्रयित्वा ईदृशसाध्यस्यैव पक्षत्वं सङ्केतितम् । तत्र सिषाधयिषितमित्यनेन साधयितुमनिष्टस्य असिद्धमित्यनेन संशयाद्यविषयस्य सिद्धस्य (निश्चितस्य) अबाध्यमित्यनेन प्रत्यक्षादि-बाधितस्य साध्यत्वरूपं पक्षत्वमपाकृतम्[3] ।

**जैनदर्शने पक्षस्य त्रैविध्यम्**

'पक्षस्त्रिविधो भवति' इति जैनदर्शने निरदिशद् हेमचन्द्राचार्यः । तथा हि-प्रथमः प्रमाणसिद्धः पक्षः, यथा-'अयं देशो वह्निमान्' इत्यत्र 'अयं देशः' प्रत्यक्षेण सिद्धः । द्वितीयस्तु विकल्पसिद्धौ, यथा-'सर्वज्ञः अस्ति' इत्यत्र विकल्पात्मकबुद्धिसिद्धे धर्मिणि सर्वज्ञे सत्त्वं साध्यते । तृतीयस्तु उभयसिद्धौ, यथा-'शब्दोऽनित्यः' इति । अत्र हि प्रमाणेन विकल्पात्मकबुद्ध्या च सिद्धः शब्दो धर्मी, तत्र अनित्यत्वादिर्धर्मः प्रसाध्यत इति[4] ।

**बाधितः पक्षः पक्षाभासः, तत्र मतान्तराणि**

यत्र पक्षे साध्यं प्रत्यक्षादिभिर्बाधितत्वाद् न साधयितुं शक्यते, स बाधितः पक्षः, किं वा (अथवा) पक्षाभास इत्युच्यते ।

अयं च पञ्चविध उक्तः प्रशस्तपादाचार्येण-

१. यथा अनुष्णोऽग्निरिति। प्रत्यक्षविरोधी पक्षः, यथा अग्नौ अनुष्णत्वस्य प्रत्यक्षप्रमाणेन बाधितत्वात् ।

२. घनमम्बरमिति । अनुमानविरोधी, यथा अम्बरस्य निरवयवत्वेन अवयवसंयोगविशेषात्मकस्य घनत्वस्य तत्रानुमानेन बाधितत्वात् ।

---

1. न्या. प्र., पृ. १ ।
2. न्या. वि., पृ. ३-४० ।
3. प्र. मी. १।२।१३।
4. प्र. मी. १।२।१६-१७ ।

३. आगमविरोधी, यथा "ब्राह्मणेन सुरा पेया" इति । अत्र हि ब्राह्मणे पक्षे सुरापानं "न ब्राह्मणेन सुरा पेया" इत्यागमेन बाधितम् ।
४. स्वशास्त्रविरोधी, यथा "कार्यं सत्" इति ब्रुवन्नारम्भवादी वैशेषिको नूनं स्वसिद्धान्तमपहाय सांख्यस्य (परस्य) सिद्धान्तमभ्युपगच्छति । तत्र च स्वशास्त्रेणेदं साध्यं वैशेषिकपक्षे बाधितम् ।
५. स्ववचनविरोधी, यथा "शब्दो नार्थप्रत्यायकः" इति । यदि हि शब्दोऽर्थप्रत्यायको न भवतीति केनचिदुच्येत, तदा मन्ये तेन स्वोक्तं वचनमपि अर्थप्रत्यायकत्वाभावेन बाधितं स्यादिति । स्ववचनविरोधात् पक्षाभासत्वमिति[1] ।

न्यायप्रवेशावलोकनेन प्रतीयते यद् बाधितपक्षानपेक्ष्य अन्येऽपि दुष्टपक्षाः सन्ति, ये पक्षाभासपदेनोच्यन्ते । यथा–"अप्रसिद्धविशेषणः पक्षः (पर्वतः काञ्चनमयवह्निमान्) । अप्रसिद्धविशेष्यः पक्षः (काञ्चनमयपर्वतो वह्निमान्)"[2] इत्यादिः ।

न्यायबिन्द्वादिदार्शनिकग्रन्थेष्वपि अस्मिन् विषये भूयान् प्रपञ्चो दर्शितोऽस्ति[3] ।

माठरसांख्यकारिकायां तु नवसंख्याकाः पक्षाभासा निर्दिष्टाः सन्ति[4] ।

### अत्र स्वशास्त्रनिष्कर्षः

पक्षतायाः स्वरूपं स्वशास्त्रदृष्ट्या पूर्वं निर्णीतमेव । तद्वान् पक्षो बोध्यः । स च त्रिविधो भवेत् पञ्चविधो वा । एवमेव पक्षाभासोऽपि भवेन्नाम नानाविधः । नास्ति अस्माकं तत्र आग्रहः क्वचिदेकत्र पक्षे । सर्ववेदपारिषदं हीदं व्याकरणम्, परमतमप्रतिषिद्धमनुमतमेवेत्यादिरीत्या सिद्धान्ताविरोधिपदार्थस्वीकारे न कापि हानिः, अतः संख्याविशेषेण पक्षस्य प्रतिबन्धे नाग्रहः शाब्दिकानामिति निष्कर्षः ।

## हेतुस्वरूपविमर्शः

'पक्षः साध्यवान्' इत्याकारानुमितौ पक्षे 'लिङ्गदर्शनमनुमानम्' इति प्रथमकल्पीयानुमाने पक्षधर्मताज्ञाने परामर्शे वा सर्वत्र प्रविष्टं पक्षस्वरूपं शाब्दिकमते मतान्तरपर्यालोचनपुरस्सरं निर्णीतम् । साध्यस्वरूपं तु सूचीकटाहन्यायेनेतः पूर्वमेवोक्तम् । अथ जिज्ञासितं हेतुस्वरूपं निरूप्यते ।

---

1. प्र. पा. भा., पृ. २३४ ।
2. न्या. प्र., पृ. २ ।
3. न्या. बि., पृ. ३, ४१, ५० ।
4. माठर., सां. का. ५ ।

सूत्रकृता भगवता तु अयं हेतुः लिङ्गपदेन बोधितः[1], शास्त्रान्तरेऽपि तथा व्यवह्रियते[2] । श्रीनागोजिभट्टेनापि "भूवादय." इति सूत्रे भाष्योद्द्योते[3] "इतर-भेदसाधने लक्षणस्यैव लिङ्गत्वेऽपि लिङ्गान्तरसूचनमिदम्" इत्युक्त्या लिङ्गपदेन हेतोरेव सङ्केतः कृतः । "प्रत्यर्थमित्यादिस्तु न हेतुः[4]" इत्यादौ हेतुपदेनापि व्यवहारः, शास्त्रान्तरेऽपि[5] तथा ।

यदि तु अनुमितिकरणज्ञानविषयत्वमस्य लक्षणम्, लिङ्गज्ञानस्यानुमिति-करणत्वपक्षे लिङ्गे तादृशज्ञानविषयत्वमस्त्येवेत्युच्यते, तदा त्वत्र लक्षणे अनुमितेः प्रवेशः, अनुमितिलक्षणे परामर्शघटकतया हेतोः प्रवेश इत्यन्योऽन्याश्रयदोषः । व्याप्तिज्ञानस्यानुमितिकरणत्वपक्षे तु व्याप्तावतिव्याप्तिरपि । अतः 'साध्यनिरूपित-व्याप्तिमत्त्वम्' इति लक्षणमवगन्तव्यम् । व्याप्तिमत्त्वं चेदं वैज्ञानिकं न तु वास्तवम् । तेन वह्नौ धूमस्य व्याप्तिभ्रमेऽपि पर्वतादौ तेन धूमानुमितिर्भवत्येव । इदं च सदसदुभयविधहेतुलक्षणम् ।

**पञ्चरूपोपपन्नस्यैवास्य न्यायदर्शने साध्यसाधनक्षमता**

पक्षसत्त्वसपक्षसत्त्वविपक्षासत्त्वाबाधितत्वासत्प्रतिपक्षितत्वेति पञ्चरूपैरुपपन्नमेवेदं साध्यसाधने समर्थं भवति । प्रसिद्धतरं चैतद् न्यायदर्शने, तथा हि–"सद्धेतवो व्याप्त्यादिविशिष्टहेतवः, ते च केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिभेदेन त्रिविधा बोध्याः । तत्रान्वयव्यतिरेकी हेतुः पञ्चरूपोपपन्नः सन् साध्यं साधयितुं क्षमः । पञ्च रूपाणि तत्र तत्र उक्तानि एव । धूमे तानि सर्वाणि विद्यन्ते । केवलान्वयी हेतुस्तु चतूरूपोपपन्नः सन्नेव साध्यं साधयति, तत्र विपक्षाप्रसिद्ध्या विपक्षासत्त्वस्याप्य-प्रसिद्धत्वात् । यथा 'घटोऽभिधेयः प्रमेयत्वात्' इत्यत्र प्रमेयत्वहेतुः । एवमेव केवलव्यतिरेकी अपि चतूरूपोपपन्नः सन्नेव साध्यं साधयति, तत्र सपक्षाप्रसिद्ध्या सपक्षासत्त्वस्याप्रसिद्धत्वात्[6] । यथा 'पृथिवी स्वेतरभेदवती गन्धवत्त्वात्' इत्यत्र गन्धवत्त्वहेतुः ।

सपक्षो निश्चितसाध्यवान्[7] (यथा महानसादिः), विपक्षश्च निश्चितसाध्या-भाववान्[8], यथा जलह्रदादिः । धूमादिना वह्नेः साधने इमौ बोध्यौ ।

---

1. पा. सू. ५।२।९३ ।
2. न्या. सि. मु., कारि. ६७ ।
3. म. भा., प्र. उ. १।३।१।
4. म. भा., प्र. उ. १।२।६४ ।
5. न्या. सि. मु., कारि. ६९ ।
6. न्या. सि. मु., किर., अनु. ख., पृ. २५४ ।
7. न्या. सि. मु., कारि. ७३, पृ. २७८ ।
8. न्या. सि. मु., कारि. ७३, पृ. २७८ ।

श्रीवाचस्पतिमिश्रेण[1] तात्पर्यटीकायां श्रीजयन्तभट्टेन न्यायमञ्जर्यां[2] चोक्तानि पञ्चरूपाण्येव हेतौ स्वीकृत्य तत्रापतितं दोषजातं स्वीययुक्तिभिर्निराकृतम् । "सपरिकरं हेतुं निरूप्य, परिकरश्च व्याप्तिपक्षधर्मता"[3] इति वदता श्रीगदाधर-भट्टाचार्येण तु पक्षसत्त्वसपक्षसत्त्वविपक्षासत्त्वेति त्रैरूप्यमेव स्वीकृत्य पञ्चरूप्यग्रन्थिः शिथिलीकृत इति लक्ष्यते ।

**सांख्यवैशेषिकयोस्त्रैरूप्यम्**

आचार्यश्रीमाठरेण स्वीयमाठरवृत्तौ त्रयाणामेव रूपाणां हेतोर्लक्षणतया सङ्केतः कृतोऽस्ति[4] । तथैव श्रीप्रशस्तपादेनापि–

**यदनुमेयेन सम्बद्धं प्रसिद्धं च तदन्विते ।**
**तदभावे च नास्त्येव तल्लिङ्गमनुमापकम् ॥**
**विपरीतमतो यत्स्यादेकेन द्वितयेन वा ।**
**विरुद्धासिद्धसन्दिग्धमलिङ्गं काश्यपोऽब्रवीत् ॥**

इत्युक्तवता पक्षसत्त्वसपक्षसत्त्वविपक्षासत्त्वेति रूपाणां त्रयाणामेव हेतौ सत्त्वमावश्यक-मिति स्पष्टं सूच्यते[5] ।

**बौद्धजैनदर्शनयोर्हेतुरूपाणि**

असिद्धविरुद्धानैकान्तिकहेत्वाभासनिराकरणाय हेतोः पक्षधर्मत्वम्, सपक्षे सत्त्वम्, विपक्षाद् व्यावृत्तिरिति त्रैलक्षण्यमाचक्षते बौद्धभिक्षवः प्रमाणसमुच्चयन्याय-प्रवेशादिग्रन्थेषु[6], तत्तु न सहन्ते जैनाचार्याः । तथा हि–हेतोरविनाभावनिश्चया-देवोक्तदोषत्रयस्य परिहारोपपत्तेः । अविनाभावोऽन्यथानुपपन्नत्वम् । तदुक्तम्–

---

1. तात्प. टी. १।१।५; १।१।३९ च ।
2. न्या. म., प्र. भा., पृ. ११२ ।
3. सामा. नि., गादा., पृ. ४ ।
4. माठर. ५ ।
5. प्रश. भा., पृ. २०० ।
6. न्या. प्र., पृ. १; न्या. बि., पृ. २-५; हेतुबि., पृ. ९; त. सं., कारि. १३६२ ।

**अन्यथाऽनुपपन्नत्वं यत्र तत्र त्रयेण किम् ।**
**नान्यथानुपपन्नत्वं यत्र तत्र त्रयेण किम् ॥** इति ।

एतेन नैयायिकोक्तं पञ्चलक्षणकत्वमपि प्रत्युक्तम् । अन्यथानुपपन्नत्वं हि असिद्धस्य, विरुद्धस्य, व्यभिचारिणः, बाधितविषयस्य, सत्प्रतिपक्षस्य वा न सम्भवति । त्रैरूप्ये पाञ्चरूप्ये वा सत्यपि अविनाभावाभावे हेतोरगमकत्वदर्शनात् । यथा 'स श्यामः, मैत्रतनयत्वात्, इतरमैत्रपुत्रवत्' इत्यत्र । अथ विपक्षान्नियमवती व्यावृत्तिस्तत्र न दृश्यते, ततो न गमकत्वम्, तर्हि तस्या एवाविनाभावरूपत्वादितररूपसद्भावे तदभावे हेतोः स्वसाध्यसिद्धिं प्रति गमकत्वानिष्टौ सैव प्रधानं लक्षणमस्तु, इत्यादि प्रपञ्चितं जैनदर्शने[1] । ततस्तु ऐकरूप्यमेव आयाति हेतोः ।

हेतुबिन्दुटीकाकृता श्रीमता अर्चटेन तु 'ज्ञातत्वमपि हेतोः षष्ठं रूपमभ्युपेयते नैयायिकमीमांसकादिभिः" इत्युक्तम् । 'न ह्यज्ञातो हेतुः स्वसत्तामात्रेण गमको युक्तः" इति तत्कारणमपि तत्रोक्तम्[2] ।

**एतद्विषये शाब्दिकानां सिद्धान्तः**

शाब्दिकनयेऽपि हेतोः पक्षसपक्षसत्त्वमावश्यकमेव, उच्यते च भाष्यकृता–"तद् विदेशस्थमपि दृष्ट्वा जानाति अग्निरत्रेति[3]" इति । अत्र विदेशः पक्षः । अपिना स्वदेशः सपक्षो यत्राभिसम्बन्धः प्रत्यक्षीकृतः । सरूपसूत्रीयभाष्योद्द्योते श्रीनागोजिभट्टोऽपि "प्रत्यर्थमित्यादिस्तु न हेतुः, अपक्षवृत्तित्वात्" इति वदन्[4] हेतोः पक्षवृत्तित्वमभ्युपेत्येव । किञ्च, पक्षोऽपक्षः, विपक्ष इति यावत् (अधर्म इतिवन्नञो विरुद्धार्थकत्वात्) । तत्र वृत्तित्वादिति रीत्याऽन्वये तु विपक्षवृत्तित्वाद् न हेतुरित्यायाति । ततश्च विपक्षावृत्तित्वाद्धेतुत्वं लभ्यत एव । विपक्षश्च तत्र विरूपानेकशब्दः, यथा 'घटपटमठाः' इति । तत्र प्रत्यर्थशब्दनिवेशोऽस्त्येव । नञो वृत्तित्वेन सहान्वये तु पक्षावृत्तित्वादिति हेतुना हेतुत्वाभावसाधने पक्षवृत्तित्वेन हेतुत्वं सिध्यति । इदं व्याख्याद्वयमपि तत्रानुगुणमेव ।

एवमेव "देशान्तरप्राप्तिलक्षणेन कार्येणाबाधितेन क्रियाख्यं कारणमनुमीयते" इति भूवादिसूत्रभाष्ये प्रदीपकृदुक्त्या[5] हेतोरबाधितत्वमप्यावश्यकं प्रतीयते । तथा च–

---

1. प्र. मी., १।२।९; अविनाभावनिरू., पृ. ४०-४१ ।
2. हेतुवि. टी., पृ. १९ ।
3. म. भा. ३।२।१२४ ।
4. म. भा., प्र. उ. १।२।६४ ।
5. म. भा., प्र. १।३।१ ।

"अप्रतिपत्तिर्वा पुनरुभयोः शास्त्रयोः स्यात्, किं कारणम् ? तुल्यबलत्वात्[1]" इति भाष्योक्त्या, यथा सत्प्रतिपक्षस्थले न कस्यापि साध्यस्यानुमितिः, हेतोः परस्पर-प्रतिबन्धादित्यर्थकेन श्रीनागेशोक्तेन[2] हेतुविषये सत्प्रतिपक्षन्यायेन असत्प्रतिपक्षि-तत्वमपि पञ्चमं रूपमावश्यकमिति लक्ष्यते ।

वस्तुतस्तु एतत्सर्वं सद्धेतुत्वपरिचायकमात्रम्, न तु लक्षणम् । तथा हि एतेषां प्रत्येकं लक्षणत्वम्, मिलितानां वा ? न तावत्प्रथमः कल्पः, साध्यादावतिप्रसङ्गात् । नापि द्वितीयः, अन्वयव्यतिरेकिहेतौ एतस्य सत्त्वेऽपि इतरयोर्हेत्वोरसत्त्वात् । अतश्च पक्षप्रवृत्तित्वे सति साध्यनिरूपितव्याप्तिमत्त्वमित्येव लक्षणं सिद्धान्तनीयम् । व्याप्ति-मत्त्वं चात्र वास्तवम्, न तु प्रातीतिकम् ।

**व्याप्तिस्वरूपनिरूपणम्**

हेतुलक्षणे प्रविष्टाया व्याप्तेः स्वरूपं शाब्दिकसम्मतं प्रदर्श्यते ।

यद्यपि महाभाष्ये व्याप्तिशब्देनायं साध्यसाधनयोः सम्बन्धः क्वापि न निर्दिष्टः, तथापि "प्रत्यक्षस्तेनाग्निधूमयोरभिसम्बन्धः कृतो भवति" इत्यत्र[3] अभिसम्बन्धपदेनाय-मुक्त एव । तत्र अभितः सम्बन्ध इति व्युत्पत्त्या नियतसाहचर्यरूप एव सम्बन्धो ग्राह्यः । विशिष्टा आप्तिः (सम्बन्धः) व्याप्तिरिति व्याप्तिपदीयव्युत्पत्त्यापि उक्तः सम्बन्धो बुद्धिपथमारोहति । "युष्मद्युपपदे समानाधिकरणे" इति सूत्रेऽप्युच्यते भाष्यकृता–"क्रियापृथक्त्वे च द्रव्यपृथक्त्वदर्शनमनुमानमुत्तरत्रानेकशेषभावस्य, क्रिया-पृथक्त्वे च द्रव्यपृथक्त्वं दृश्यते, तद्यथा 'पचसि च पचामि च, त्वं चाहं च' इति । तदनुमानमुत्तरयोरपि क्रिययोरेकशेषो न भवतीति" इति । अत्र प्रदीपः "क्रिया-पृथक्त्वे इति–यथा क्रियापृथक्त्वे सति द्रव्यपृथक्त्वम्, न तु सहविवक्षा; एवं द्रव्यपृथक्त्वेऽपि क्रियापृथक्त्वेन भाव्यम्, परस्परसाहचर्याव्यभिचारात्" इति । उद्द्योतश्च–"एवं द्रव्येति–क्रियापृथक्त्वोपक्रमे वाक्ये यथा द्रव्यपृथक्त्वम्, एवं द्रव्यपृथक्त्वोपक्रमे क्रियापृथक्त्वमेवेत्यर्थः"[4] इति ।

अत्र भाष्ये शब्दतोऽनुक्तमपि नियतसाहचर्यात्मकं व्याप्तिस्वरूपमर्थतो ध्वनितम्, प्रदीपकृता तु परस्परसाहचर्याव्यभिचारादित्यनेन अव्यभिचरितं नियतं साहचर्यमेव स्फुटमुक्तम् । उद्द्योतकृताऽपि तदेवानुमोदितम् ।

---

1. म. भा., प्र. ४/१/२ ।
2. परि. शे., २ प्र. भूतियुते, पृ. १५५ ।
3. म. भा. ३/२/१२४ ।
4. म. भा., प्र. उ. १/४/१०५ ।

## साध्यसामानाधिकरण्यरूपा व्याप्तिः

न्यायदर्शने नियतसाहचर्यरूपा, किं वा साध्यव्यापकसामानाधिकरण्यरूपा सिद्धान्तभूता या व्याप्तिः, सैवात्रापि शास्त्रे समादृतास्ति, उक्तभाष्यादौ तत्सङ्केतात् । "ननु समासवचनपक्षकानर्थकत्वानुमाने बहुव्रीहिकृतत्वहेतुर्व्यधिकरणः" इति द्वितीयाश्रितेति सूत्रीयभाष्योद्द्योते[1] श्रीनागोजिभट्टेन हेतोर्व्यधिकरणत्वं दोषतया प्रवदता "साध्यसामानाधिकरण्यं हेतौ व्याप्तिः" इति सोसूच्यते ।

## श्रीभर्तृहरिसम्मतं व्याप्तिस्वरूपम्

वाक्यपदीये तृतीयकाण्डे भर्तृहरेर्भावं प्रकाशयन् श्रीहेलाराजो ब्रवीति–"दानादीनां त्वविनाभावात् क्रिया अनुमीयते[2]" इति । तथा च तत्काण्ड एव "भूयोदर्शनेन गृहीताविनाभावोऽन्यं गमयति[3]" इत्यप्युक्तम् । एतत्प्रसङ्गद्वयदर्शनेन अविनाभावात्मकं व्याप्तेः स्वरूपं हर्यादिसम्मतमस्तीति परिलक्ष्यते ।

अत्र नञो भावपदार्थेनान्वयः, विना न भाव इति । अर्थात् यद्विना (यद्व्यतिरेके) यस्य न भावः (सत्ता=वृत्तित्वमिति यावत्), सोऽविनाभाव इति । यदि तु नञो विनेत्यनेनान्वयः क्रियेत, तदा यद्व्यतिरेके यस्य भावः स तेन व्याप्त इत्यर्थः स्यात्, तदा तु यदन्वये यदन्वय इत्यत्रैव पर्यवसाने लोहलेख्यत्वस्य पार्थिवत्वेऽपि व्याप्तिः स्यात् । न चेष्यते, मणौ पार्थिवत्वसत्त्वेऽपि लोहलेख्यत्वासत्त्वेन[4] व्यभिचारात् । एवमेव धूमान्वये वह्नेरन्वय इति वह्नावपि धूमनिरूपिता व्याप्तिः प्रसज्येत । न च सेष्यते, अयोगोलके व्यभिचारात् । "धूमं दृष्ट्वाग्निरत्र गम्यते" इत्युक्तभाष्यविरोधाच्च[5] ।

न्यायदर्शने साध्याभाववदवृत्तित्वपदेनेयमेव व्याप्तिरुक्तास्ति[6] ।

## अन्ययोगव्यवच्छेदरूपा व्याप्तिः

व्याकरणशास्त्रे यावन्ति नियमशास्त्राणि तैः प्रत्येकं व्यर्थीभूय नियमः क्रियत इति न तिरोहितम् । तत्र स नियम उक्तव्याप्तिरेव । यथा "कृत्तद्धितसमासाश्च" इति सूत्रे समासरूपोंऽशो नियामकः, अर्थवत्-सूत्रेणैव प्रातिपदिकसंज्ञायाः सिद्धत्वात् ।

---

1. म. भा., प्र. उ. २/१/२४ ।
2. वा. प., ३ का. ।
3. वा. प., ३ का., साधनसमु., का. २४ ।
4. "मणौ वज्रसमुत्कीर्णे" रघु. १ ।
5. म. भा. ३/२/१२४ ।
6. व्या. प., १ लक्षणम् ।

तत्र नियमरूपाया व्याप्तेर्बोधोऽत्र व्यञ्जनावृत्त्या । तथा हि— समाससंज्ञकः शब्दः प्रातिपदिकसंज्ञावान् भवतु इत्येव अर्थोऽस्यांशस्य शब्दमर्यादया भवितुमर्हति । किन्तु अस्मिन्नर्थे कृतेऽयमंशो व्यर्थः स्यादिति व्यञ्जनया "पूर्वभागपदघटितसंघातस्य प्रातिपदिक-संज्ञा चेत्, तर्हि समासस्यैव" इत्यर्थः क्रियते । तेन समासेतरस्य पूर्वभागपद-घटितसमुदायस्य 'राज्ञः पुरुषः, हरिं वन्दे' इत्यादिवाक्यस्य न सा संज्ञा इति फलति । इदमेव 'इतरव्यावृत्तिः, अन्ययोगव्यवच्छेदः' इति वा कथ्यते, समासादन्यस्मिन् वाक्ये प्रातिपदिकत्वव्यावृत्तेः ।

यद्यपि शाब्दबोधविषयीभूतेयं व्याप्तिः, नास्या अनुमितावुपयोग इति अत्र प्रतीयते, तथापि पूर्वभागपदघटितसमुदाये पक्षे समासत्वमस्ति न वेति संशये यदि कश्चन तत्र समासत्वं निश्चेतुमिच्छेत्, तदा पूर्वभागपदघटितत्वे सति प्रातिपदिक-संज्ञारूपहेतुना तदनुमिमीते । समासादन्यस्मिन् पूर्वभागपदघटितत्वविशिष्टे तत्सं-ज्ञाया अयोगेनोक्तव्याप्तेरत्र सत्त्वात् । समासशास्त्रमेवात्र व्यभिचारसंशयनिवार-कोऽनुकूलस्तर्कः । यदीयं संज्ञा समासत्वव्यभिचारिणी स्यात्, तर्हि समासादन्यत्र वाक्येऽपि स्यात्, नास्ति चान्यत्र वाक्ये, समासशास्त्रवैयर्थ्यादिति न व्यभिचारिणीति ।

अत्र च पूर्वभागपदघटितसमुदायः समासत्ववान्, समाससूत्रीयप्रातिपदिकसंज्ञा-वत्त्वादित्यनुमानाकारो बोध्यः । पक्षतावच्छेदकसामानाधिकरण्येन चानुमितिर्बोध्या । पक्षे हेतुज्ञानं च पक्षबोधकपदोत्तरविभक्तिदर्शनादिना ।

यद्यपि नियतसाहचर्यादिरूपा अपि व्याप्तयोऽत्र सङ्घटन्ते, तथापि एवकारेणा-त्रास्या एव लाभेनेयमेवात्रानुमाने योजनीया, प्रत्यासत्तेः । न्यायशास्त्रे साध्यवदन्य-स्मिन्नसम्बन्ध इति रूपेणेयमेव कीर्तिता[1] ।

**अयोगव्यवच्छेदरूपापि व्याप्तिः**

"कर्मणि द्वितीया" इत्यादौ[2] कर्मणि विभक्तिश्चेत्, तर्हि द्वितीयैव, इत्यादिरीत्या अर्थनियमे क्रियमाणे अयोगव्यवच्छेदरूपा व्याप्तिः प्रतिफलति, कर्मणि द्वितीयाया अयोगस्य व्यवच्छेदबोधनात् । अत्र यस्य यत्रायोगव्यवच्छेदः, तस्य तद्वृत्तिधर्मं प्रति व्यापकता बोध्या । यथा 'शङ्खः पाण्डुर एव' इत्यत्र पाण्डुरत्वस्यायोगव्यवच्छेदः शङ्खे इति शङ्खत्वं प्रति तस्य व्यापकता, तथैव प्रकृते द्वितीयाया व्यापकत्वं कर्मगते कर्मत्वे ।

---

1. व्या. प., ल. ५ ।
2. म. भा. २/३/२ ।

इदमेव च कर्मत्वमुद्देश्यतावच्छेदकमपि प्रकृतसूत्रे । एवं च कर्मणि वर्तमानं प्रातिपदिकं द्वितीयावत्, प्रकृतसूत्रीयोद्देश्यताऽवच्छेदकधर्मवत्त्वादिति अनुमानाकारो बोध्यः । हेतुता च स्वावच्छिन्नवाचकत्वसम्बन्धेन, साध्यता च स्वाव्यवहितपूर्वत्वसम्बन्धेन बोध्या ।

**अत्यन्तायोगव्यवच्छेदरूपा व्याप्तिः**

"परश्च" इति सूत्रेण[1] "प्रत्ययः परो भवत्येव" इति नियम्यते, "तस्मादित्युत्तरस्य" इत्यनेन सिद्धत्वात् । तत्र 'शङ्खः पाण्डुरो भवत्येव' इत्यत्र यथा क्रियया सहैवकारः शङ्खे पाण्डुरत्वस्य अत्यन्तायोगव्यवच्छेदं गमयति[2] इति पाण्डुरत्वसत्तायाः शङ्खगते शङ्खत्वे व्याप्तिर्लभ्यते, तथैव प्रकृते परीभवनस्य व्याप्तिः प्रत्ययत्वे लभ्यत इति प्रत्ययः प्रकृतेः परीभवनवान्, प्रत्ययत्वाद् इति अनुमानाकारो भवति । पक्षतावच्छेदकसामानाधिकरण्येनेयमनुमितिः, अन्यथा श्रमिकजादौ व्यभिचारेण हेतुरगमकः स्यात् । तत्र हि "मिदचोऽन्त्यात्." इति[3] शास्त्रेण बाधितं तादृशं परीभवनम् ।

**व्याप्तिभेदनिरूपणम्**

सा चेयं व्याप्तिः सामान्यतोमुखी विशेषतोमुखी इति भेदाभ्यां द्विविधा ।

"लटः शतृशानचा." इत्यत्र भाष्ये उच्यते–"आदेशेन सामानाधिकरण्यं दृष्ट्वा अनुमानाद् गन्तव्यं प्रकृतेरपि तद् भवतीति"[4] इति ।

अत्र लट् अप्रथमासामानाधिकरण्यवान्, अप्रथमासमानाधिकरणशतृस्थानित्वादित्यनुमाने यो यद्गुणकादेशस्थानी स तद्गुणक इति सामान्यतोमुखी व्याप्तिर्ध्वन्यते । स्पष्टीकृतं चेदं तत्रैवोद्द्योतकृताऽपि[5] ।

स्त्रियामिति सूत्रीयभाष्यं व्याचक्षाणेन श्रीनागेशभट्टेनोच्यते–

"अथ स्त्रियां टाबिति शब्दतस्तयोः कार्यकारणभावग्रहात् कार्यं कारणपूर्वकमिति सामान्यव्याप्त्या च टाबादिना कार्येण तत्कारणीभूतलिङ्गानुमानं स्यात्"[6] इति । अत्र हि यद्यत् कार्यं तत् सर्वं कारणपूर्वकमिति कार्यं व्याप्यम्, कारणं व्यापकमिति

---

1. का. प्र., उ. प्र., टी. द्व. युते ।
2. म. भा. ३/२/१ ।
3. पा. सू. १/१/४७ ।
4. म. भा. ३/२/१२४ ।
5. म. भा., प्र. उ. ३/२/१२४ ।
6. म. भा., प्र. उ. ४/१/१ ।

द्वयोः सामान्यव्याप्तिः । एवमेव 'ङ्याप्प्रातिपदिकात्' इति सूत्रे "स्त्रियां टाबादयो विधीयन्ते, न च तिङन्तस्य स्त्रीत्वेन योगोऽस्ति" इति भाष्यं विवृण्वता श्रीकैयटेनोच्यते–"नानारूपा हि शब्दानां शक्तयो न सामान्यतोदृष्टेनानुमानेन व्यवस्थापयितुं शक्यन्ते" इति । अत्रोच्यते उद्द्योतकृता–"विमतं न लिङ्गयोगि क्रियात्वात्, यथा 'पचति' इत्येवंरूपेणानुमानेनेत्यर्थः"[1] इति । अत्र यत्र यत्र क्रियात्वं तत्र तत्र लिङ्गयोगाभाव इति सामान्यव्याप्तिर्निर्दिष्टा ।

एषु सर्वत्र विशेषव्याप्तिरस्ति, यदि प्रकृतसाध्यस्य प्रकृतहेतावेव सा गृह्येत । यथा पर्वतीयवह्नेः पर्वतीयधूमे, महानसीयवह्नेर्महानसीयधूमे । तस्यां तु व्याप्तौ अन्वयी दृष्टान्तो न भवति, किन्तु 'यत्र साध्यं नास्ति तत्र हेतुरपि नास्ति' इत्येवं व्यतिरेक्येव, यथोक्तस्थले जलह्रदादिः । एवमेवात्र शास्त्रेऽपि विशेषव्याप्ति-र्व्यतिरेकिदृष्टान्तस्थल एवं द्रष्टव्या । यथा द्वितीयाध्याये महाभाष्ये इयं ध्वनिता, उद्द्योते च स्फुटं प्रतिपादिता । तथा हि–"द्वितीयायाः समासवचनमनर्थकम्, किं कारणम् ? बहुव्रीहिकृतत्वात्" इति भाष्यम् । अत्र प्रदीपः –"बहुव्रीहिकृतत्वादिति, बहुव्रीहिणा स्वरूपस्य साधितत्वात्" इति । उद्द्योतश्चात्र– "ननु समासवचनपक्षका-नर्थकत्वानुमाने बहुव्रीहिकृतत्वहेतुःर्व्यधिकरणः, अत आह–बहुव्रीहिणेति । बहुव्रीहि-सिद्धस्वरूपसाधकत्वादिति हेतुरिति भावः । सामान्यतो व्याप्त्या इदं चरितार्थमिति न व्यतिरेकव्याप्तिः" इति[2] ।

अत्रान्यसिद्धस्वरूपसाधकत्वं यत्र यत्र शास्त्रे, तत्र तत्र अनर्थकत्वमिति सामान्यतो व्याप्तिरभ्यूहिता । अन्यथा "द्वितीयाश्रितातीत." इत्येतत्सूत्रात्मकपक्षमात्र-वर्तिनोः साध्यसाधनयोर्व्याप्तिर्यदि गृह्येत, तदान्वयिदृष्टान्ताभावे व्यतिरेकिदृष्टान्त एव स्यात्, ततश्चेयं व्याप्तिर्विशेषतोमुखी सती व्यतिरेकव्याप्तिरेव स्यात् ।

अत्रोद्द्योते–अनर्थकत्वानुमाने–हेतुर्व्यधिकरण इत्यत्रानुमानपदं भावल्युटाऽनु-मितिपरम्, अन्यथाऽनुमानं हेतुरिति समानाधिकरणं प्रयोक्तव्यं स्यादित्यन्यत् । एवं च ययोर्विशेषयोः साध्यसाधनयोर्या व्याप्तिः, सा विशेषतो व्याप्तिः, तत्सामान्ययोर्या व्याप्तिः सा सामान्यतो व्याप्तिरिति द्रष्टव्यम् । न्यायादिदर्शनेऽपि बहुशोऽनयो-रुल्लेखो वर्तत एव, प्रसिद्धत्वान्नेह विव्रियते ।

---

1. तदेव ।
2. म. भा., प्र. उ. २/१/२४ ।

## समविषमभेदप्रयोज्या पुनर्द्विधा व्याप्तिः

यत्र साध्यसाधनयोर्द्वयोः परस्परं व्याप्यव्यापकभावो भवति, तत्राद्या, यथा पूर्वदर्शिते कैयटीये परस्परसाहचर्याव्यभिचारादिति कथनेन[1] क्रियापार्थक्य-द्रव्यपार्थक्ययोः परस्परं समव्याप्तिरेव निरूपिताऽस्ति । अत्र साध्यं साधनं समनियतमुच्यते न्यायशास्त्रे[2] । लक्ष्यतावच्छेदकलक्षणयोः (गोत्वसास्नादिमत्त्वयोः) इयमेव व्याप्तिर्निर्दिष्टा । द्वितीया तु "लटः शतृ." इति सूत्रे भगवता पतञ्जलिना स्वयमेव कथिता दृष्टान्तव्याजेन, वह्निधूमयोः, त्रिविष्टब्धकपरिव्राजकयोः ।

अत्र साध्यं वह्न्यादिकमेव व्यापकम्, साधनं धूमादिकमेव व्याप्यम्, न तु धूमोऽपि व्यापकः, वह्निरपि तद्व्याप्यः, अयोगोलके व्यभिचारात् । एवमेव एकदण्ड-वत्यपि परिव्राजकत्वदर्शनेन व्यभिचारान्न त्रिविष्टब्धकत्वस्य व्यापकता, अपि तु व्याप्यतैवेति विषमव्याप्तिरेवानयोर्युज्यते ।

## साकल्येन द्रव्याणां क्रियागुणसम्बन्धरूपा व्याप्तिः

महाभाष्ये "नित्यवीप्सयोः" इति सूत्रे उच्यते–"कः पुनर्वीप्सार्थः ? अनवय-वाभिधानं वीप्सार्थः" इति । अत्र प्रदीपः – "अनवयवाभिधानमिति–अनवयवेन साकल्येन द्रव्याणां क्रियागुणसम्बन्धप्रतिपादनं वीप्साफलमित्यर्थः" इति । अत्रोद्द्यो-तश्च–"साकल्येन द्रव्याणां क्रियागुणेति– ग्रामे ग्रामे पानीयम्' इत्यादावपि अस्ति-क्रियायाः सत्त्वेन तया सम्बन्धस्य प्रतिपादनाददोषः । वस्तुत इदमुपलक्षणं द्रव्या-भावयोरपि । 'ग्रामे ग्रामे स्वामी, शशे शशे न शृङ्गम्' इत्युदाहरणे । आद्ये स्वामी-श्वरेति सप्तमी"[3] इति ।

अग्रे चात्रैव भाष्ये पुनरुक्तम्–"अनेकार्थाश्रया च पुनर्वीप्सा, अनेकमर्थं सम्प्रत्याययिष्यामि इति वीप्सा प्रयुज्यते" इति ।

किञ्चान्यत्रापि भाष्यकृतोक्तम्–"आनुपूर्व्ये द्वे भवत इति वक्तव्यम् । मूले मूले स्थूलाः, अग्रेऽग्रे सूक्ष्माः" इति । तत्र प्रदीपे "मूले मूले इति । अग्रमध्यमूलानि त्रयो

---

1. म. भा., प्र. १।४।१०५ ।
2. त. सं. दी., प्र. ख., ल. प्र. ।
3. म. भा., प्र. उ. ८।१।४ ।

भागाः..... यथाग्रं च सौक्ष्म्योपचय इति वीप्साया अभावः" इति । उद्द्योतश्चात्र– "वीत्साया इति । एकजातीयानां पदार्थानामेकरूपगुणाद्यन्वये हि वीप्सेति भावः । मूले मूले पथि विटपिनामित्यादौ तु वीप्सायामेव द्वित्वं बोध्यम्"[1] इति ।

एतेषां ग्रन्थानामवलोकनेन द्रव्यस्य द्रव्येण, गुणेन, क्रियया, अभावेन च सह व्याप्तिरूपः सम्बन्धो भवतीति प्रतीयते । स च नियमसाहचर्यरूपोऽविनाभावरूपो वा इत्यन्यत् । 'ग्रामे ग्रामे पानीयम्' इत्यत्र ग्रामगतं साकल्यं बुद्धिस्थग्रामगतं यावत्त्वम्, न तु ग्रामत्ववान् सर्वोऽपि त्रिलोकीस्थस्त्रैकालिकः । एवं च बुद्धिस्था एव सकला ग्रामा व्याप्यत्वेनाभिमताः, पानीयं व्यापकत्वेनाभिमतम् । तादात्म्यसम्बन्धेन व्याप्यता, संयोगसम्बन्धेन च व्यापकता । अतश्च तादात्म्येन बुद्धिविषयो यो यो ग्रामः, स स संयोगेन पानीयवानिति नियतसाहचर्यस्वरूपमत्र फलति । किं वा बुद्धिविषयी-भूतग्रामगतस्य एतत्त्वस्य एतद्व्यक्तित्वस्य वा व्याप्यत्वं स्वरूपसम्बन्धेन, व्यापकत्वं तु तादृशमेव । तदा तु स्वरूपसम्बन्धेन बुद्धिस्थग्रामगतं तद्व्यक्तित्वं यत्र यत्र, तत्र तत्र संयोगेन पानीयमिति साहचर्यस्वरूपं ज्ञेयम् । एते (बुद्धिविषयाः) ग्रामाः पानीयवन्तः, तद्व्यक्तित्वादिति चानुमानाकारः । ग्रामे ग्रामे पानीयमित्यत्र सप्तमी तु पर्वते वह्निरित्यत्रेव संयोगसम्बन्धेनाधिकरणतायाम् । अनेनापि साध्यतानियामकसम्बन्ध-प्रतीतिः । एवमेव 'वृक्षं वृक्षं प्रति सिञ्चति' इत्यत्र व्याप्यतायाः स्वरूपं पूर्ववदेव, सेकक्रियाया व्यापकता तु कर्मत्वसम्बन्धावच्छिन्नेति द्वितीयाया उपयोगः ।

**एकजातीयानामेकजातीयमात्रे व्याप्तिः**

वस्तुतस्तु एकजातीयानामेकजातीये गुणक्रियादौ सर्वत्रेयं व्याप्तिः सम्भवति । यथा 'मूले मूले पथि विटपिनाम्' इति ।

उक्तं च भाष्ये–"आनुपूर्व्ये द्वे भवत इति वक्तव्यम् । मूले मूले स्थूलाः, अग्रेऽग्रे सूक्ष्माः" इति एतद्व्याख्यानभूतप्रदीपे उद्द्योतश्च–एकजातीयानां पदार्थानामेक-रूपगुणाद्यन्वये हि वीप्सा"[2] इति ।

अतश्च 'रूपे रूपे आकर्षकता, रसे रसे मादकता, शब्दे शब्दे माधुर्य्यम्, हासे हासे वैलक्षण्यम्, गमने गमने अध्ययनम्, जातौ जातौ व्यक्त्याश्रयता, सम्बन्धे सम्बन्धे द्विष्ठत्वम्' इत्यादीन्यप्युदाहरणानि सम्माननीयानि ।

---

1. म. भा., प्र. उ. ८।१।१२ ।

2. म. भा., प्र. उ. ८।१।१२ ।

एवं च द्रव्यगुणकर्मसामान्याभावादीनां सर्वेषां पदार्थानां सति योग्यत्वे परस्परं व्याप्यव्यापकभावः सम्बन्धः सम्भवतीति एतद्भाष्यादितः प्रतीयते । 'ग्रामो ग्रामो रमणीयः' इत्यादौ रमणक्रियाया वीप्सा प्रतिग्रामम्, बुद्धिविषयेषु ग्रामेषु रमण-क्रियानिरूपितव्याप्तिरूपसम्बन्धप्रतिपत्तिः ग्रामपदस्य द्विर्वचने कृते शाब्दी एवेत्यपि बोध्यम् । अतश्चात्र वीप्सापदस्य व्याप्तिबोधेच्छायां लक्षणेति तादृशेच्छाया व्याप्ति-बोधः फलत्वेनाभ्युपेयते भाष्यकृता[1] । अत एवोक्तम्– "द्रव्याणां क्रियागुण-सम्बन्धप्रतिपादनं वीप्साफलम्" इति । एवं च विविधा विलक्षणा वा आप्तिः सम्बन्धो व्याप्तिरिति व्याप्तिपदीयव्युत्पत्तिरपि सुसङ्गच्छते । अतश्च बुद्धिस्थानां पदार्थानां साकल्येन व्यापकसम्बन्धप्रतिपादनं चात्र वीप्साफलम्, न तु इदमेव व्याप्तिस्वरूपमिति भ्रमितव्यम् ।

## व्याप्तिस्वरूपे मतान्तराणि

न्यायदर्शने तार्किकचक्रचूडामणिना श्रीगङ्गेशोपाध्यायेन पूर्वपक्षतया व्याप्तेः पञ्च लक्षणानि[2] निरूप्य केवलान्वयिनि हेतौ (प्रमेयत्वादौ) तेषामव्याप्तिं प्रदर्श्य, व्यापकसामानाधिकरण्यरूपं व्यापकसमानाधिकरणहेतुतावच्छेदक-(धूमत्वादि-)रूपं वा सिद्धान्तभूतं लक्षणं निरूपितम्[3] ।

जैनाचार्यश्रीमाणिक्यनन्दिमते अविनाभावरूपा व्याप्तिः स्वीकृताऽस्ति[4] । जैनदर्शन एव अर्चटनामकाचार्यमते व्यापकधर्मरूपैव व्याप्तिः, क्वचिद् व्याप्य-धर्मरूपाऽपि सा उक्ता[5] ।

## व्याप्तिज्ञानोपायनिरूपणम्

तत्र व्याप्तिः स्वरूपसती नानुमितिहेतुः, अपि तु तन्निश्चय इति व्याप्ति-स्वरूपनिरूपणानन्तरं व्याप्तिनिश्चयोपाया निरूप्यन्ते ।

---

1. म. भा. ८।१।१२ ।
2. "न तावदव्यभिचरितत्वम्, तद्धि न साध्याभाववदवृत्तित्वम्, साध्यवद्भिन्नसाध्याभाववद-वृत्तित्वम्, ......साध्यवदन्यावृत्तित्वं वा ।" (चि. म. गा., पृ. १४१, ३९०)
3. "प्रतियोग्यसमानाधिकरणयत्समानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नं यन्न भवति तेन समं तस्य सामानाधिकरण्यं व्याप्तिः ।" (चि. म., अनु. २ ख., सि. ल. , पृ. १००)
4. परी. ३।१७-१८ ।
5. हेतुवि. टी., लि., पृ. १८त आरभ्य ।

**अत्र बौद्धमतम्**

तत्तादात्म्यज्ञानात् तदुत्पत्तिज्ञानाद्वा व्याप्तिनिश्चयः, यथा-"एष वृक्षशिंशपायाः"। अत्र वृक्षस्य शिंशपायां व्याप्तिस्तादात्म्यज्ञानेन निश्चीयते । 'या या शिंशपा स स वृक्षः' इति वृक्षशिंशपयोस्तादात्म्यम् । तज्ज्ञानेन शिंशपायां वृक्षनिरूपिताया व्याप्तेर्ग्रहः ।

एवमेव कार्यकारणभावज्ञानेनापि व्याप्तिग्रहः । यथा वह्निः कारणम्, धूमस्तत्कार्यमिति धूमे वह्निनिरूपितकार्यताज्ञानेन वह्निनिरूपिताया व्याप्तेर्निश्चय इति व्याप्तिग्रहे हेतुद्वयं प्रवदन्ति बौद्धाचार्याः[1] । उक्तं च-

**कार्यकारणभावाद्वा स्वभावाद्वा नियामकात् ।**
**अविनाभावनियमोऽदर्शनान्न तु दर्शनात्[2] ॥**

**जैनदर्शनेऽयं विषयः**

जैनाचार्या ऊहाख्येन प्रमाणविशेषेण व्याप्तिज्ञानमाहुः । अयमूहस्तर्क इत्यप्युच्यते । निर्णयविशेषरूपोऽयमत्र मते, न तु आरोपादिरूपः । तदुक्तम्-"उपलम्भानुपलम्भनिमित्तं व्याप्तिज्ञानमूहः" इति[3] ।

**मनसैव व्याप्तेः प्रत्यक्षमिति केचित्**

मञ्जरीकृतोच्यते-"मनसैव व्याप्तिग्रह इति केचित्" इति । तथा हि-प्रत्यक्षेणाग्निसहचरितम्, अनुपलब्ध्या चानग्नेर्व्यावर्तमानं धूममुपलभ्याग्नौ सति नियमो धूम इति मनसा प्रतिपद्यते लोकः ।

**मनश्च सर्वविषयं केन वा नाभ्युपेयते ।**
**असन्निहितमप्यर्थमवधारयितुं क्षमम् ॥**

तत्रापि सकलवह्निधूमयोः (चाक्षुषं) प्रत्यक्षं नोपयुज्यते, वह्नित्वादिसामान्यपुरस्सरतया तद्ग्रहात्[4] (व्याप्तिग्रहात्) ।

---

1. स. द. स., बौ. द., पृ. १६ ।
2. न्या. वि., पृ. १६; स. द. स. उद्धृतम्; चित्सुखी-नयनप्र., पृ. ७१ ।
3. प्र. मी., १।२।५, पृ. ३६ । (व्याप्तिः वक्ष्यमाणा तस्या ज्ञानं तद्ग्राही निर्णयविशेष ऊहः) ।
4. न्या. म., प्र. भा., पृ. ११०-१११ ।

**यौक्तिकं योगिप्रत्यक्षकल्पं व्याप्तेः प्रत्यक्षमिति अपरे**

मञ्जरीकृतेदमुच्यते–"अपरे पुनः योगिप्रत्यक्षकल्पं यौक्तिकं सम्बन्धग्राहि प्रत्यक्षं प्रतिपेदिरे" । अयमाशयः – अग्नित्वधूमत्वलक्षणसामान्यपुरस्कारेण अग्निधूमयोरन्वयो नाम ग्रहीतुं शक्यते, व्यतिरेकोऽपि अनग्निभ्यो धूमस्य ग्राह्यः, न च तेषु अनग्नित्वं नाम सामान्यमस्ति, येन समस्तानग्निज्ञानं सुकरं भवेदिति सकलाग्न्यनग्नि गतान्वयव्यतिरेकग्राहिप्रत्यक्षव्यतिरेकेण न व्याप्तिरूपः सम्बन्धो गृहीतो भवतीति अज्ञाता सती व्याप्तिर्न प्रमाङ्गं भवितुमर्हति, अस्ति च प्रमा इति युक्तिबलेनैकस्मिन् क्षणे, शेषव्यक्तिविषयकं प्रत्यक्षं कल्पनीयम्, तदेव यौक्तिकं प्रत्यक्षमित्युच्यते"[1] इत्येवमन्येऽपि प्रकारा न्यायमञ्जर्यां प्रदर्शिताः सन्ति[2] ।

**उक्तविषये मीमांसादर्शनम्**

मीमांसकमते भूयोभिर्दर्शनैर्व्याप्तिनिश्चयोऽनुमित्यङ्गमुच्यते । तत्रासति व्यभिचारदर्शने यत्र यत्र धूमादिकं दृष्टं तत्र सर्वत्र नियमेन अग्न्यादिसाहित्यदर्शनमनग्नौ चादर्शनमित्येव भूयोदर्शनम्, न तु सकलसपक्षविपक्षान्वयव्यतिरेकसहचारदर्शनम्, येन तद् दुर्लभं स्यात्, सर्वसपक्षादिग्रहाभावात् । उक्तं च न्यायरत्नमालायां पार्थसारथिमिश्रैः –

**स्वयं वार्त्तिककारेण प्रमाणमुपदर्शितम् ।**
**भूयोदर्शनगम्या हि व्याप्तिरित्यभिधानतः**[3] ॥ इति ।

**उक्तविषये शाब्दिकमतम्**

वाक्यपदीये तृतीयकाण्डव्याख्याने "भूयोदर्शनेन गृहीताविनाभावोऽन्यं गमयति"[4] इति हेलाराजोक्त्या प्रतीयते यद् भूयोदर्शनमेव व्याप्तिनिश्चायकम् ।

"भूयोदर्शनाश्रयो हि लक्ष्यलक्षणभावः, यथा अग्निधूमयोः"[5] इति प्रदीपग्रन्थेनापि तत्र तस्योपयोगः सूच्यते ।

"ननु भूयोदर्शनाभावात् कथं ज्ञापकत्वम्"[6] इत्याद्युक्त्या श्रीनागोजिभट्टेनापि उपर्युक्तं मतमनुस्रियते ।

---

1. न्या. म., प्र. भा., पृ. १११ ।
2. न्या. म., प्र. भा., पृ. १११-११२।
3. न्या. र. मा., व्या. वा., पृ. ६७-६८ ।
4. वा. प., टी. हे. ३।७।२४ ।
5. म. भा., प्र. २।३।३७ ।
6. म. भा., प्र. उ. १।४।८४।

तत्र भूयोदर्शनमेवैतन्निश्चायकमिति तु नाग्रहो वैयाकरणानां दर्शने, अपि तु सकृद्दर्शनमपि व्याप्तिं निश्चाययितुं क्वचित् पर्याप्तम् । तथोच्यते भगवता श्रीभाष्यकृता–"कस्यचित् खल्वपि सकृत्कृतोऽभिसम्बन्धोऽत्यन्ताय कृतो भवति । तद्यथा "वृक्षपर्णयोरयं वृक्षः, इदं पर्णम् इति । तद् विदेशस्थमपि दृष्ट्वा जानाति वृक्षस्येदं पर्णमिति"[1] इति ।

अत्र 'सकृत्कृतः' इत्यत्र 'कृतः' इत्यनेन 'गृहीतः' इत्यर्थो बोध्यः, कृभ्वस्तयः क्रियासामान्यवचना इति प्रसिद्धेः । स च ग्रहो व्यभिचारदर्शनाभावसहकृत एवेत्यपि अभिसम्बन्ध इत्यत्राभ्युपसर्गेण ध्वन्यते । अन्यथा सम्बन्धे अव्यभिचरितत्व-रूपमभितस्त्वं न स्यात् ।

एवं च पार्थिवत्वलोहलेख्यत्वयोः शतशः साहचर्यग्रहेऽपि मणौ व्यभिचारग्रहेण न केवलस्य भूयोदर्शनस्य तन्निश्चायकता, किन्तु व्यभिचारदर्शनाभावसहकृतसहचार-ग्रहस्यैव । स च सकृद् वा भवतु बहुशो वा इत्यत्र नास्ति प्रतिबन्ध इत्येव राद्धान्तः शाब्दिकानामवगन्तव्यः ।

**अयमेव पक्षो न्यायदर्शनेऽपि**

न्यायदर्शनेऽप्युक्त एव पक्षः समादृतोऽस्ति । तथा हि–भूयोदर्शनमित्यस्य भूयसां दर्शनानां समाहार इति, भूयसां साध्यहेतूनां दर्शनमिति, भूयस्सु अधिकरणेषु दर्शनमिति वाऽर्थः । तत्र नाद्यः, एकत्रैव सहचारदर्शनधारया व्याप्तिनिश्चय-प्रसङ्गात् । एकत्रैव (महानसे) सहचारदर्शनधारया व्याप्तिनिश्चयेऽन्यत्र चत्वरादौ सकृत् सहचारदर्शनेनापि तन्निश्चये तद्दर्शनधाराया अनुपयोगप्रसङ्गात् । नापि द्वितीय-तृतीयौ, 'एतद्रूपवान् एतद्रसात्' इत्यादिसाध्यहेत्वोरधिकरणे भूयस्त्वाभावेन व्याप्ति-निर्णयस्यानुदयप्रसक्तेः[2] ।

किञ्च, यत्र यत्र पार्थिवत्वं तत्र तत्र लोहलेख्यत्वमित्युभयोः साहचर्यस्य बहुत्र दर्शनेऽपि मणौ व्यभिचारो दृश्यते, वज्रेणैव मणौ लेखनात् । उक्तं च रघुवंशे महाकविनाऽपि "मणौ वज्रसमुत्कीर्णे" इत्यादि । तत्र मणौ पार्थिवत्वम्, हीरकादिवज्रे तैजसत्वमिति लोहेन लेख्यत्वाभावाद् व्यभिचारः । अतो भूयोदर्शनं न तन्निश्चायकम्, अपि तु व्यभिचारज्ञानविरहसहकृतसहचारदर्शनमेव[3] । श्रीगङ्गेशोपाध्यायेनापि इदमेव सिद्धान्तितम्[4] ।

---

1. म. भा. ३।२।१२४ ।
2. तर्कस. दी. नील. भा. सहितः, पृ. ९५ ।
3. तर्कस. दी. नील. भा. सहितः, पृ. ९४-९५ ।
4. उ. तर्कस. नील., पृ. ९५ ।

**इदं च व्याप्तिज्ञानमानुमानिकमिति मीमांसकाः**

इदं व्याप्तिज्ञानमानुमानिकमिति मीमांसकाः । उक्तं हि पार्थसारथिमिश्रैः – "यस्त्वयं यत्र यत्र धूमस्तत्र तत्राग्निरिति भूयोदर्शनतोऽवगमः, स कथम् ? न ह्यसौ नास्ति, न चाप्रमाणम्, सर्वदा सर्वेषां दृढत्वेन जायमानत्वात् । तदयं कस्मिंश्चित् प्रमाणेऽन्तर्भवतीति वक्तव्यम्, उच्यते–आनुमानिकोऽयमवगमो ज्ञातसम्बन्धस्यो- पजायमानत्वात् । धूमस्य हि बहुषु देशकालेषु अग्निना साहित्यमुपलब्धवतो भवत्यनुमानम् । अन्येऽप्यतीतानागतविप्रकृष्टाः सर्व एव धूमवन्तोऽग्निमन्तः, धूमवत्त्वात्, परिदृष्टमहानसादिवत्"[1] इति ।

एवं च कतिपयस्थलेषु साहचर्यं प्रत्यक्षादिनोपलभ्य अतीतेऽनागते विदूरे वा स्थले साहित्यग्रहोऽनुमितिरूप इति भावः सामान्यलक्षणामनङ्गीकर्तृमीमांसकानाम् ।

**सर्वविधं तदिति नैयायिकाः**

"तदिदं नोचितम् । प्रत्यक्षात्मकम्, शाब्दात्मकम्, अनुमित्यात्मकम्, स्मृतिरूपं वा सर्वविधमपि व्याप्तिज्ञानमनुमितिं प्रति हेतुत्वेनोपयुज्यते, न तु अनुमित्यात्मकमेव, विनिगमकाभावात्" स्फुटमुक्तमेतत् श्रीवाचस्पतिमिश्रैस्तात्पर्यटीकायाम्[2] ।

श्रीमता जयन्तभट्टेनापि न्यायमञ्जर्यामुक्तम्–

**आगमेनानुमानेन तर्कव्युत्पादनेन वा ।**
**प्रत्यक्षेण गृहीतो वा सम्बन्धो न विशिष्यते**[3] ॥ इति ।

**उक्तविषये व्याकरणदर्शनम्**

भाष्यकृता पतञ्जलिनाऽप्ययमेव पक्षः संसूचितः, "यतो हि प्रत्यक्षस्तेनाग्निधूमयोरभिसम्बन्धः कृतो भवति"[4] इत्यत्र यद्यपि व्याप्तेः प्रत्यक्षमेवानुमित्यङ्गतया स्फुटमुक्तम्, तथापि "कस्यचित् खल्वपि सकृत्कृतोऽभिसम्बन्धोऽत्यन्ताय कृतो भवति"[5] इत्यत्र ज्ञानसामान्यार्थकेन कृञ्प्रयोगेण सर्वविधज्ञानग्रहण एव तात्पर्यमवधार्यते । एवं च "तद्विदेशस्थमपि दृष्ट्वा" इत्यत्रापि भाष्ये "दृश्धातुर्ज्ञानसामान्यार्थक एव, तदेकवाक्यत्वात्, बहुलक्ष्यसमन्वयस्य तथैव सम्भवात्, विशेषोपादानेन सङ्कोचे सार्वजनीनानुभवविरोधाच्च" इति व्याकरणदर्शनेऽपि सर्वविधमेव तज्ज्ञानमनुमित्यङ्गमिति सिद्धान्तः ।

**॥ इत्यनुमानसमीक्षायां प्रथमं पुष्पम् ॥**

●

---

1. न्या. र. मा., व्याप. वा., पृ. ६९-७० ।
2. ताप्पर्यटी., पृ. १५९-६० ।
3. न्या. म., प्र. मा., पृ. ११३ ।
4. म. भा. ३।२।१२४ ।
5. तदेव ।

## ॥ अथानुमानसमीक्षायां द्वितीयं पुष्पम् ॥

### अनुमानभेदनिरूपणम्

तच्चेदं लिङ्गज्ञानात्मकं व्याप्तिज्ञानात्मकं वाऽनुमानं द्विविधम्– (१) स्वार्थम् (स्वस्मै इदम्); (२) परार्थं (परस्मै इदम्) चेति । तत्र स्वानुमितिहेतुभूतमनुमानं 'स्वार्थम्' इति कथ्यते । तथा हि–महानसादौ येन धूमे अग्नेर्व्याप्तिर्गृहीता, पश्चात् स एव कदाचित् पर्वतं गतस्तत्राग्निं सन्दिहानो धूमरेखामविच्छिन्नमूलां पश्यन् व्याप्तिसंस्कारोद्बोधेन व्याप्तिं स्मरति– 'यत्र यत्र धूमस्तत्र तत्राग्निः' इति । तदनु व्याप्तिविशिष्टं लिङ्गं परामृशन् वानुमिमीते 'पर्वतो वह्निमान्' इति । इयमेव स्वार्थानुमितिरेतत्करणमिदं स्वार्थानुमानमुच्यते व्याकरणदर्शने । स्फुटमुक्तमिदं पुण्यराजेन वाक्यपदीये द्वितीये काण्डे "यथा धूमेन स्वार्थानुमाने शब्दमन्तरेण वह्नेराक्षेपः, नैवमत्रापि" इति[1] ।

अत्राक्षेपोऽनुमितिः, न तु अर्थापत्तिः, 'स्वार्थानुमाने' इति पूर्वमुक्तेः । न्यायादिदर्शनेऽपि बहुत्रास्योल्लेखो दृश्यते[2] ।

### परार्थानुमानम्

द्वितीयं तु परार्थानुमानम् । तच्च परस्य साध्यप्रतिपत्तये न्यायाङ्गभूतपञ्चावयववाक्यप्रयोगसाध्यम् । यद्यपि परार्थानुमानशब्दस्य कर्मधारयसमासपक्षे परानुमितिफलके परसमवेतानुमाने लिङ्गज्ञाने व्याप्तिज्ञाने वा शक्तिः, तथापि बहुव्रीहिसमासपक्षे 'परार्थमनुमानं यस्मात्तत्' इति व्युत्पत्त्या परार्थानुमानप्रयोजके वाक्यपञ्चकेऽपि योगशक्तिरस्तीति क्वचिद् न्यायशास्त्रे साऽपि गृहीताऽस्ति[3] । न्यायावयवात्मकानि पञ्च वाक्यानि च–'प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि' एवान्यदर्शनवदत्रापि[4] समाद्रियन्ते ।

---

1. वा. प. २।३२७ ।
2. तर्कस., दी. नील., पृ. ९२; प्र. मी. १।२।८-९, पृ. ३९ ।
3. (क) तर्कस., (दी. नील.), पृ. ९८ । नील. भा. ।
   (ख) 'वचनमुपचारात्' । (प्र. मी. सू. २।१।२, पृ. ४९)
4. तर्कसं., पृ. ९८ ।

"सरूपाणाम्." इति सूत्रे भाष्ये उक्तम्–"तस्यैवोपोद्बलकमेतत् प्रख्याविशेषाज्ज्ञायते चैकोपदिष्टमिति"[1] इति ।

अत्र प्रदीपः–"ततो विप्रतिपन्नप्रतिपादनायानुमानमिह जातिसद्भावे ज्ञायते चैकोपदिष्टमित्यनेनोक्तम्"[2] इति । अत्र विप्रतिपन्नः पर एव, तत्प्रतिपादनायेदमनुमानं परार्थमित्युच्यते । दर्शनान्तरेऽपि इदं प्रथमं च बहुत्र सङ्कीर्तितमस्ति[3] ।

## तत्र प्रतिज्ञालक्षणं तदुदाहरणं च शब्दशास्त्रे

अवयवपञ्चके प्रतिज्ञाया लक्षणमुदाहरणं चोच्यते । "पक्षे साध्यनिर्देशः प्रतिज्ञा" इति वाक्यपदीयतृतीयकाण्डव्याख्याने हेलाराजोक्त्या[4] पक्षधर्मिकसाध्यप्रकारकबोधजनकवाक्यत्वं पक्षनिष्ठोद्देश्यतानिरूपितसाध्यनिष्ठविधेयताशालिबोधजनकवाक्यत्वं वा प्रतिज्ञावाक्यस्य लक्षणमभ्युपेतव्यं शाब्दिकैः । ध्वनितं चेदं महाभाष्यकृता–"यदा हि कदाचिदाकृतिरेकत्वेन युज्यते, कदाचिद् द्वित्वेन, कदाचिद् बहुत्वेन, एकाकृतिरिति च प्रतिज्ञा हीयेत" इत्युक्तवता[5] । अत्रैव "लिङ्गपरिहारे न किञ्चिद् दुष्यति वचनपरिहारे तु अभिधीयमाने एकाकृतिरिति प्रतिज्ञाहानिः, द्वित्वबहुत्वसम्बन्धस्याभ्युपगमात्" इत्युक्तवता कैयटेन च । आकृतेरनेकत्वे प्रतिज्ञाहानिरिति वदतोद्द्योतकृता च[6] ।

अत्र आकृति(जाति)रूपे पक्ष एकत्वरूपसाध्यप्रकारकबोधजनकम् "आकृतिः एका" इति वाक्यं प्रतिज्ञारूपं बोध्यम् । प्रतिज्ञाया न्यायाङ्गत्व उक्तलक्षणकत्वे च सत्येवेदं भाष्यादिकं सङ्गच्छते, अन्यथा प्रतिज्ञाहानेर्दोषत्वमुक्तं कथं सङ्गच्छेत ?

भाष्यादौ बहुत्रास्याः सङ्केतः प्राप्यते । यथा–"अर्थवन्तो वर्णाः" इत्यत्र वर्णात्मके पक्षेऽर्थवत्त्वरूपसाध्यस्य निर्देशः[7] ।

---

1. म. भा. १।२।६४ ।
2. म. भा., प्र. १।२।६४ ।
3. त. स., अनु., पृ. ९८ ।
4. वा. प. ३।३।२७-२८ ।
5. म. भा. १।२।६४ ।
6. म. भा., प्र. उ. १।२।६४ ।
7. म. भा. १।१; मा. सू. ५ ।

"एकान्तास्तत्रोपलब्धेः" इत्यत्र अनुबन्धे पक्षे एकान्तत्वरूपसाध्यस्य सङ्केतः[1] ।

"अनेकान्ता अनुबन्धाः" इति परिभाषेन्दुशेखरः । अत्रानुबन्धे पक्षेऽनेकान्तत्वस्य साध्यस्य निर्देशः[2] । अग्रे "एकान्ताः" इति परिभाषायामेकान्तत्वरूपसाध्यस्य निर्देशस्तत्र पक्षे[3] ।

"न च प्रतिज्ञा साधनवाक्यस्यैवाङ्गम्, न तु स्वतन्त्रो न्यायावयव इति भ्रमितव्यम्, "प्रतिज्ञा साधनाङ्गं न भवति" इति हेलाराजोक्त्या तन्निरासात्[4] ।

## एतल्लक्षणे मतान्तराणि

"प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि अवयवाः" इति गौतमसूत्रेण[5] पञ्चावयवान् निर्दिश्य "साध्यनिर्देशः प्रतिज्ञा" इति सूत्रेण[6] प्रतिज्ञालक्षणं निर्दिष्टं मञ्जरीकारेण । व्याख्यातं च–"धर्मविशिष्टो धर्मी साध्यः, तस्य निर्देशः परिग्रहवचनं प्रतिज्ञा इति । यथा अनित्यः शब्दः" इति[7] ।

श्रीहेमचन्द्राचार्येणापि "साध्यनिर्देशः प्रतिज्ञा" इति सूत्रयित्वा व्याख्यातम्– "साध्यं सिषाधयिषितधर्मविशिष्टो धर्मी, निर्दिश्यतेऽनेनेति निर्देशो वचनम्, साध्यस्य निर्देशः साध्यनिर्देशः प्रतिज्ञा, प्रतिज्ञायतेऽनयेति कृत्वा । यथा अयं प्रदेशोऽग्नि-मान्" इति[8] । एतत्सर्वं व्याकरणशास्त्रानुगुणमेव ।

## हेतुवाक्यलक्षणोदाहरणे

साध्यनिरूपितव्याप्यत्वेन प्रतीयमानत्वमनुमितौ साध्यसाधनत्वेन प्रतीयमानत्वं वा हेतुलक्षणम् । तत्राद्यमुक्तमेव[9] । इदं तु हेतुसामान्यलक्षणम्, सद्धेतुलक्षणं तु पक्षवृत्तित्वे सतीत्यादि पूर्वमुक्तमेव[10] । ईदृशहेतुबोधकं वाक्यं हेतुवाक्यम् । यथा

---

1. म. भा. १/३/९ ।
2. परि. शे., १ प्र., परिभाषा ४, पृ. २१ ।
3. परि. शे., १ प्र, परिभाषा ५, पृ. २४ ।
4. वा. प. ३/३/२७-२८ ।
5. गौ. सू. १/१/३२ ।
6. गौ. सू. १/१/३३ ।
7. न्या. म., द्वि. भा., अवयवप्र., पृ. ३३२ ।
8. प्र. मी. २/१/११ ।
9. अत्रैव निबन्धेऽनुमानसमीक्षायां प्रथमे पुष्पे हेतुस्वरूपविमर्शावसरे ।
10. अत्रैव निबन्धेऽनुमानसमीक्षायां प्रथमे पुष्पे हेतुस्वरूपविषये शाब्दिकसिद्धान्तनिरूपणावसरे ।

'पर्वतोऽग्निमान्' इत्यत्र धूमादिति हेतुवाक्यम् । वाक्यत्वं चात्र न्यायरीत्योच्यते, "स्वमते तु पदमेव, आख्यातं सविशेषणं वाक्यम्" इति सिद्धान्तात्[1] । "प्रत्याहारेऽनुबन्धानां कथमज्ग्रहणेषु नेत्यत्र भाष्ये कथमिति शब्देन हेतुरेव जिज्ञासितः, अत एव स्वयमुत्तरितमपि आचारादप्रधानत्वाल्लोपश्च बलवत्तरः" इति[2] ।

## "हेतुपदं त्रिविधलक्षणपरम्" इति हेलाराजः

वाक्यपदीये तृतीयकाण्डव्याख्याने श्रीहेलाराजेन हेतोर्लक्षणत्वेन व्यवहारः कृतः, लक्षणस्य च त्रैविध्यं प्रदर्शितम् । तथा हि—"एकं लक्षणमवधिभावेन द्रष्टव्यम्, यथा 'वृक्षं प्रति विद्योतते विद्युत्' इत्यत्र वृक्षोऽवधित्वेन लक्षणम्, विद्योतमाना विद्युत् लक्ष्या । द्वितीयं तु करणविच्छेदेन, यथा—'बह्निरूपकारणस्य धूमो लक्षणं भवति परिच्छेदकत्वेन' । तृतीयं तु कार्यविच्छेदेन, यथा—"मेघादयः कारणानि वृष्टिरूपकार्यस्य परिच्छेदकतया लक्षणानि" इति[3] । ज्ञापककारकभेदेन द्विविधो हेतुरनुमितौ ज्ञापक एव गृह्यते, न तु कारकः । धूमादीनां वह्न्यनुमितौ ज्ञापकत्वात् । हेतुपदेन हेतुज्ञानस्य ग्रहणमिति सिद्धान्ते तु कारक एव, हेतुज्ञानस्य तत्र जनकत्वात् ।

हेतुबोधकपदात् "हेतौ"[4] इति सूत्रेण तृतीया, "विभाषा गुणोऽस्त्रियाम्"[5] इति सूत्रेण पञ्चमी वा, क्वचिद् यत इत्यादिपदसमभिव्याहारे प्रथमा[6] अपि । एवं च "धूमेन धूमात्, यतश्च धूम इति वा पर्वतोऽग्निमान्" इति । अत एव 'आचारादप्रधानत्वात्' इति हेतुद्वयं पञ्चम्यन्तम्, 'लोपश्च बलवत्तरः' इति तृतीयो हेतुः प्रथमान्तत्वेन प्रदर्शितो भाष्ये[7] ।

---

1. म. भा. २।१।१ ।
2. म. भा. १।१; मा. सू. ५ ।
3. "तथा हेतुरपि परानपेक्षो जननकार्यस्याव्यभिचारात् परिच्छेदकत्वेन भवति लक्षणम्" ।. (वा. प, प्र. प्र. ३।७।२४)
   "लक्षणं त्रिविधं भवति किञ्चिदवधिभावेन, यथा 'विद्योतमानायां विद्युति', किञ्चित् करणविच्छेदेन, यथा 'धूमो वह्नेः' ।" (तत्रैव)
4. पा. सू. २।३।२३ ।
5. पा. सू. २।३।२५ ।
6. पा. सू. २।३।४६ ।
7. म. भा. १।१; मा. सू. ५ ।

### उक्तविषये मतान्तरसंवादः

उक्तं चेदं जैनदर्शनेऽपि–'साधनत्वाभिव्यञ्जकं विभक्त्यन्तं साधनवचनं हेतुः" इति सूत्रम् । "साधनत्वाभिव्यञ्जिका पञ्चमी तृतीया वा तदन्तं साधनस्य उक्तलक्षणस्य वचनं हेतुः" इति तद्व्याख्यानञ्च[1] । "उदाहरणसाधर्म्यात् साध्य-साधनं हेतुः, तथा वैधर्म्यात्" इति गौतमसूत्रद्वयमधिकृत्य द्विविधं हेतुलक्षणमुक्तं श्रीजयन्तभट्टेन न्यायमञ्जर्य्याम्[2], तत्सर्वं शब्दशास्त्रानुगुणमेव ।

### उदाहरणवाक्यस्य लक्षणोदाहरणे

सव्याप्तिकदृष्टान्तप्रतिपादकवाक्यमुदाहरणवाक्यमुच्यते । वादिप्रतिवाद्युभाभ्या-मपि सम्मतो विषयो दृष्टान्तो भवति, 'दृष्टोऽन्तो निश्चयो यस्य' इति व्युत्पत्तेः । यथा 'यो यो धूमवान्, सोऽग्निमान्, यथा महानसम्' इति । अत्र महानसमुभयोरपि धूमवत्तया अग्निमत्त्वप्रकारकनिश्चयविषयो भवति । स्फुटीभवति चेयं निश्चयपरता दृष्टान्तशब्दस्य "आद्यन्तौ" इति सूत्रे भाष्यप्रदीपोद्द्योतेषु । तथा हि–"यद्यपि तावल्लोक एष दृष्टान्तः" इति भाष्यम् । अत्र प्रदीपः –"यद्यपीति – दर्शनं दृष्टं तस्यान्तो निश्चयः । यद्यपि लोक एतद्दर्शनमित्यर्थः" इति । अत्रोद्द्योतश्च–"अन्तो निश्चय इति । दर्शनस्यावसानं निश्चये सत्याकाङ्क्षाभावाद् भवतीतिदृष्टान्तशब्देन निश्चय उच्यत इत्यर्थः । एतद्दर्शनमिति निश्चय इत्यर्थः"[3] इति ।

एवं च सामान्यार्थकमपि दृष्टान्तपदं प्रकृते सव्याप्तिकहेतुमत्तया साध्यवत्त्व-प्रकारकनिश्चये योगरूढं बोध्यम्, पङ्कजपदवत् ।

### उदाहरणद्वैविध्यादस्य द्वैविध्यम्

तच्चेदं द्विविधम्–साधनधर्मप्रयुक्तसाध्यरूपधर्मयोगिसाधर्म्योदाहरणम् । यथा 'यो यो धूमवान्, सोऽग्निमान्, यथा महानसम्' । साध्यनिवृत्तिप्रयोज्यसाधन-निवृत्तियोगि वैधर्म्योदाहरणं यथा–'योऽग्न्यभाववान्, स धूमाभाववान्, यथा जलह्रदः' इति ।

तत्र "वृद्धिरादैच्" इति सूत्रे भाष्य आद्यं प्रदर्शितम् । तथा हि "आचार्याचारात् संज्ञासिद्धिः, यथा लौकिकवैदिकेषु, तद्यथा लौकिकेषु वैदिकेषु च कृतान्तेषु । लोके

---

1. प्र. मी. २।१।१२ ।
2. न्या. म., अवयव-प्र., पृ. १३४-३६ ।
3. म. भा., प्र. उ. १।१।४५ ।

तावन्मातापितरौ पुत्रस्य जातस्य संवृतेऽवकाशे नाम कुर्वाते देवदत्तो यज्ञदत्त इति, तयोरुपचारादन्येऽपि जानन्ति इयमस्य संज्ञेति । वेदे याज्ञिकाः संज्ञां कुर्वन्ति 'स्फ्यो यूपश्चषालः' इति । तत्रभवतामुपचारादन्येऽपि जानन्ति इयमस्य संज्ञेति, एवमिहापि"[1] इति ।

अत्र कृतान्तपदं दृष्टान्तपरमेव । 'अयं पिण्डः देवदत्त इति संज्ञावान्, पित्रादितादृशाचारात्, यो यस्तादृशाचारवान् स तत्संज्ञावान्, यथा अन्यः पिण्डो हरदत्तादिसंज्ञावान्' इत्यादिदृष्टान्तवाक्यमुन्नेयम् । भाष्ये संज्ञासिद्धिरित्यत्र सिद्धिरनुमितिर्बोध्या । साध्यता च संज्ञाया वाच्यतासम्बन्धेन, आचारस्य हेतुता चोद्देश्यतासम्बन्धेन बोध्या । अयमेवान्वयी दृष्टान्त इत्यपि कथ्यते ।

द्वितीयं तु साध्यवैधर्म्यप्रयुक्तमुदाहरणं व्यतिरेकि इत्युच्यते । तदपि प्रदर्शितं भाष्ये नवाह्निके । तथा हि–"वर्णा अनर्थकाः" इति प्रतिज्ञाय "वर्णव्यत्ययापायोपजनविकारेष्वर्थदर्शनात्" इति हेतुं प्रदर्श्य "यथैव वर्णव्यत्ययापायोपजनविकारा भवन्ति, तद्वदर्थव्यत्ययापायोपजनविकारैर्भवितव्यम्" इति दृष्टान्तीकृत्य "न चेह तद्वत्, इत्युपनीय अतो मन्यामहे अनर्थका वर्णाः" इति निगमितम्[2] ।

अत्र संघातान्तर्गता वर्णाः पक्षत्वेन बोध्याः, तत्र यदि अर्थवत्त्वरूपः साध्याभावः स्यात्, तदा वर्णव्यत्ययादिषु अर्थदर्शनाभावो हेत्वभावः स्यात्, तथा वासुदेवरूपार्थवत्त्वमकारे, तत्राकारानुच्चारणे तदर्थबोधाभाव इति तत्त्वम् ।

एवमेव परिभाषेन्दुशेखरे श्रीनागोजिभट्टेन व्यतिरेकिदृष्टान्तवाक्यमुक्तम्– "अनेकान्ता अनुबन्धाः, अनेकान्ता अनवयवा इत्यर्थः । यो ह्यवयवः स कदाचित् तत्रोपलभ्यत एव । अयं तु न तथा, तदर्थभूते विधेये कदाप्यदर्शनात्" इति । अत्र 'यो ह्यवयवः' इत्यादिना व्यतिरेकव्याप्तिगर्भस्य दृष्टान्तस्य प्रदर्शनम् । अयं तु न तथेति उपनयवाक्यस्य प्रदर्शनम् । 'तदर्थभूते' इति हेतुवाक्यम् । एतावता प्रबन्धेन प्रतिज्ञाहेतूदाहरणादीनां क्रमेणैवोपन्यासः कार्य इत्यत्र नास्ति आग्रहः शाब्दिकदर्शने, इति प्रतीयते । स्पष्टं चेदं तत्त्वप्रकाशिकायाम्[3] ।

महाभाष्ये भूवादिसूत्रे इदं द्वयमपि उदाहरणमेकेनैव वाक्येन प्रकटितम् । तथा हि–"क्रिया नामेयमत्यन्तापरदृष्टा, अशक्या पिण्डीभूता निदर्शयितुम् । यथा गर्भो निर्लुठितः"[4] इति ।

---

1. म. भा. १।१।१ ।
2. म. भा. १।१।५ ।
3. परि. शे., परिभाषा ४; तत्त्वप्र., पृ. २१ ।
4. म. भा., प्र. १।३।१ ।

अत्र प्रदीपकृता–"गर्भो निर्लुठित इति । कुक्षिस्थो गर्भोऽप्रत्यक्षस्तथा क्रियेत्यर्थः । अथवा यथा निर्लुठितो निर्गतः कुक्षेर्गर्भः प्रत्यक्षो नैवं क्रियेति वैधर्म्येण दृष्टान्तः" इति व्याख्यातम् । अत्र पूर्वमनिर्लुठित इति पदच्छेदे साधर्म्येण दृष्टान्तता । पश्चाच्च तात्पर्यान्तरमुद्रया अकारच्छेदमकृत्वा तेनैव वाक्येन वैधर्म्येणापि तत्प्रदर्शनं बोध्यम् ।

## हेतुरहितस्यापि दृष्टान्तता

"सरूपाणाम्." इति सूत्रे भाष्यप्रदीपोद्द्योतानां दर्शनेन हेतुरहितस्यापि दृष्टान्तता स्फुटं प्रतीयते । तत्र हि–"किमिदं प्रत्यर्थं शब्दा अभिनिविशन्ते' इत्येतं दृष्टान्तमास्थाय 'सरूपाणामेकशेषः' आरभ्यते, 'न पुनरप्रत्यर्थं शब्दा अभिनिविशन्ते' इत्येतं दृष्टान्तमास्थाय 'विरूपाणामनेकशेषः' आरभ्यते" इति भाष्यम् । अत्र प्रदीपः– "किमिदमिति । यदि हेतुरहितं दृष्टान्तमाश्रित्य विरूपाणामनेकशब्दप्रयोग- दर्शनात् सरूपैकशेष आरभ्यते, तदा सरूपैकशब्दप्रयोगदर्शनाद् विरूपानेकशेषः किमिति नारभ्यते ? इति प्रश्नः" इति । अत्रोद्द्योतश्च–"किमिदमिति । अक्षा इत्यादा-विवाप्रत्यर्थं शब्दनिवेशस्यापि दृष्टत्वेन विरूपविषयेऽपि लाघवाय । एकशब्दप्रयोग एव प्राप्तेऽनेकशब्दप्रयोगाय विरूपाणामनेकशेष एव कुतो नारभ्यत इत्यर्थ इत्याहुः । हेतुरहितमिति–प्रत्यर्थमित्यादिस्तु न हेतुः, अपक्षवृत्तित्वादिति भावः"[1] इति ।

अयमाशयः – यदि सरूपैकशेषरूपे पक्ष आरब्धव्यत्वं साध्यं स्यात्, तदा प्रत्यर्थं शब्दनिवेशित्वस्य हेतुत्वे तस्यापक्षवृत्तित्वं स्यादिति तस्य हेतोः साध्यसाधकता नैव स्यात् । ननु दृष्टान्ततापि अस्य कुत इति चेत्, उच्यते–धर्मधर्मिणोस्तादात्म्यात् । अन्यथा प्रत्यर्थं शब्दनिवेशित्वरूपधर्मविशिष्टस्य घटपटमठेति समुदायस्य दृष्टान्तता वक्तव्या स्यात् । एवं च यथा प्रत्यर्थं शब्दप्रयोगस्यावश्यकत्वेन घटपटमठा इति प्रयुज्यते, तथैव सरूपविषयेऽपि घटघटघटा इति प्रयोक्तव्यं स्यात्, तद्वारणायैकशेष आरब्धव्यः । तथैव 'अक्षाः' इत्यादौ अप्रत्यर्थं शब्दनिवेशस्यापि दृष्टत्वेन एकशब्द-प्रयोग इव विरूपविषयेऽपि एकशब्दप्रयोगवारणाय विरूपानेकशेषः कुतो नारभ्यत इति । उभयोर्दलयोरत्र वैधर्म्य एव दृष्टान्तता बोध्या ।

पुनश्चात्रैव सूत्रे महाभाष्य उक्तम्–"इतीन्द्रवद् विषयः, तद्यथैक इन्द्रोऽनेकस्मिन् क्रतुशते आहूतो युगपत्सर्वत्र भवत्येवमाकृतिर्युगपत् सर्वत्र भवेदिति" इति । अत्रो-द्द्योतः –"इतीन्द्रवदिति । स्वभावाद्धेतुरहितदृष्टान्तेनाप्यनेकवृत्तित्वं जातेरभ्युपगम्यते इत्यर्थः"[2] इति ।

1. म. भा., प्र. उ. १।२।६४ ।
2. म. भा., प्र. उ. १।२।६४।

अत्रापि हेतुरहितस्य दृष्टान्तस्य स्थितिः सम्यगुपदर्शितोद्द्योतकृता स्वभावस्य तत्र कारणत्वमुपन्यस्यता । जातेर्हि अनेकसमवेतत्वं स्वभावः (स्वरूपम्) अग्नेरुष्णत्ववत् ।

## पक्षैकदेशस्यापि दृष्टान्तता

"भूवादयः." इति सूत्रे भाष्योद्द्योत उच्यते–"विमतं न लिङ्गयोगि, क्रियात्वात्, यथा पचतीति । अत्र पचतीत्येतत्पदबोध्या पाकक्रिया पक्षैकदेश एव, तत्र लिङ्गयोगाभावः प्रत्यक्षेण गृह्यते" इति तस्य दृष्टान्ततोक्ता[1] । "एवमेव अर्थवन्तो वर्णा धातुप्रातिपदिकप्रत्ययनिपातानामेकवर्णानामर्थदर्शनात्" इति भाष्येऽपि पक्षैकदेशस्य दृष्टान्ततोक्ता,[2] वर्णत्वावच्छेदेन साध्यसिद्धेः पूर्वमभिप्रेतत्वात् । वर्णत्वसामानाधिकरण्येन पश्चात् पर्यवसानमित्यन्यत् ।

## अत्र न्यायदर्शनसंवादः

श्रीमतामुदयनाचार्याणां मतेऽपि पक्षैकदेशस्य दृष्टान्तता स्वीकृताऽस्ति । एतेषां नये व्यतिरेकसहचारेणान्वयव्याप्तिरेव गृह्यते । अनुमितिसामान्येऽन्वयव्याप्तिज्ञानमेव हेतुः, न तु व्यतिरेकव्याप्तिज्ञानमपि, अन्यथासिद्धत्वात् । केवलान्वयित्वग्रहकालिकानुमितौ व्यभिचाराच्चेति यत्र व्यतिरेकसहचाराद् व्याप्तिग्रहः, तत्र व्यतिरेकीत्युच्यते । साध्यप्रसिद्धिस्तु पक्षैकदेश एव कर्तव्या । पश्चात् पक्षतावच्छेदकावच्छेदेन समस्ते पक्षे कार्या[3] ।

## दृष्टान्तविषये मतान्तरसंवादः

"साध्यसाधर्म्यात्तद्धर्मभावी दृष्टान्त उदाहरणम्, तद्विपर्ययाद्वा विपरीतम्" इति सूत्रद्वयेन साध्यसाधर्म्यवैधर्म्याभ्यां दृष्टान्तद्वैविध्यमुक्तं मञ्जरीकृता[4] ।

व्याप्तेः परस्मै प्रतिपादनस्य भूमिः (आश्रयः) दृष्टान्तः, तद्वचनमुदाहरणवाक्यम् । साधर्म्यवैधर्म्यभेदेन तद् द्विविधम् । "यो यो धूमवान् सोऽग्निमान्, यथा महानसादिः । यो यो नाग्निमान्, न स धूमवान्, यथा जलाशयः" इत्याद्युपदर्शितं जैनदर्शने[5] । तत्सर्वं व्याकरणदर्शनानुरूपमेव ।

---

1. म. भा., प्र. उ. १।३।१ ।
2. म. भा. नवा. १।१, पृ. १३८ ।
3. न्या. सि. मु., किरणा., कारि. १४३, पृ. ४६८ ।
4. न्या. म., द्वि. भा., अवयवप्र., पृ. १३८-१४० ।
5. प्र. मी. १।२।२०, २।१।१३ ।

**उपनयवाक्यस्य लक्षणोदाहरणे**

उप (समीपे) नीयते (संह्रियते) येनासौ उपनयः । दृष्टान्ते स्थितस्य साधनस्य साध्यधर्मिणि पक्षे उपसंहार आनयनमिति यावत्, तत्प्रतिपादकं वाक्यमुपनयवाक्य-मुच्यते शब्दशास्त्रे । तथा चायम्, न तथा चायमिति रूपेणास्य द्वैविध्यं भवति । यथा 'महानसवद् वह्निव्याप्यधूमवांश्चायम्, यथा वा ह्रदवन्न धूमाभाववानयम्' ।

भाष्य उभयमिदं प्रदर्शितं बहुत्र, यथा अनुपदमेव दृष्टान्तवाक्यविवेचने उभयमप्युक्तम्–"वृद्धिरादैच्" इति सूत्रभाष्ये "एवमिहापि" इति । तथा चायमिति-वदिदमुपनयवाक्यमेव । द्वितीयं तु अनर्थका वर्णा इत्यत्र न चेह तद्वत्, इत्युपनय-वचनमेव । अनेकान्ता अनुबन्धा इति परिभाषायामुक्तं शेखरकृता–अयं तु न तथेति । इदमुपनयवाक्यमेव ।

**एतद्विषये मतान्तरसंवादः**

जैनदर्शने उक्तम्, "धर्मिणि साधनस्योपसंहार उपनयः" इति[1] । न्याय-दर्शनेऽप्युक्तम्–"उदाहरणापेक्षस्तथेत्युपसंहारो न तथेति वा साध्यस्योपनयः" इति गौतमसूत्रम्[2] । तद् व्याख्यातं न्यायमञ्जर्याम्–"उदाहरणमात्मलाभमपेक्षत इत्युदा-हरणापेक्षः पक्षधर्मोपसंहार उपनयः । द्विविधश्चासौ तथेति 'न तथेति वा' उदाहरणद्वैविध्यात् । तत्र साधर्म्योदाहरणापेक्षस्तथेत्युपनयो यत्कृतकं तदनित्यं दृष्टम्, यथा 'घटः', तथा कृतकः शब्दः" इत्यादि[3] ।

अग्रे उपनयस्वीकारे आक्षेपं निरुच्य तत्परिहारोऽपि मञ्जरीकृता कृतः[4] ।

**निगमनवाक्यस्य लक्षणोदाहरणे**

नितरां गम्यते पूर्वेषामवयवानामर्थोऽनेनेति निगमनम्, तत्प्रतिपादकं यद् वाक्यं तन्निगमनवाक्यमुच्यते । अनेन पक्षे साध्यस्योपसंहारः क्रियते । यथा तस्मात् पर्वतोऽग्निमानिति । वृद्धिरादैजिति सूत्रे भाष्य उपनयवाक्यमुक्त्वा 'इहैव' तावत्

---

1. प्र. मी. २।१।१४ ।
2. गौ. सू. १।१।३९ ।
3. न्या. म., द्वि. भा., पृ. १४० -१४१ ।
4. न्या. म., द्वि. भा., पृ. १४१-१४२। यद्यपि अद्यतने संस्करणे यथाकाश इत्यादिपाठ उपलभ्यते, तथापि स पाठो मया त्यक्तः, तत्स्थाने 'यथा घटः' इत्यादिपाठः संशोधितः । अतश्चोदाहरणवाक्येन सहैकवाक्यताऽपि भवति ।

केचिद् व्याचक्षाणा आहुः – वृद्धिशब्दः संज्ञा, आदैचः संज्ञिन इति । अपरे पुनः सिचि वृद्धिरित्युक्त्वाऽकारैकारौकारानुदाहरन्ति । ते मन्यामहे यया प्रत्याय्यन्ते सा संज्ञा, ये प्रतीयन्ते ते संज्ञिन इति[1] । एतन्निगमनमेव बोद्धव्यम् । आजैदूरूपे पक्षे वृद्धिसंज्ञाया उपसंहारावगमात् ।

अनर्थका वर्णा इत्युपक्रम्य, अनुबन्धा अनेकान्ता इति चोपक्रम्य, अनुपदमेव दृष्टान्तविवेचने निगमनमपि दर्शितमेव[2] ।

"आद्यन्तौ टकितौ" इति सूत्रे भाष्येऽपि स्फुटं निगमनवाक्यमुक्तम् । व्याख्यातं च तथैवोद्द्योतकृता । तथा हि–"अर्थनिमित्तक एव शब्दः । तत्कथम् ? आद्यन्तौ षष्ठ्यर्थौ । न चात्र षष्ठीं पश्यामः, ते मन्यामहे आद्यन्तावेवात्र न स्तः, तयोरभावे षष्ठ्यपि न भवति इति भाष्यम् । अत्रोद्द्योतः – 'भाष्ये–आद्यन्तौ तावर्थौ षष्ठीप्रयोगप्रयोजकौ इत्यर्थः । एवं कार्याभावात् कारणाभावानुमाने कारणाभावात् कार्यमपि नेति निगमयति, भाष्ये–तयोरभावे" इति[3] । अनेनोद्द्योतव्याख्यानेन लक्षणसङ्गमनेन च निगमनवाक्यस्य न्यायाङ्गत्वं स्वीकृतमेव भाष्यकृता । एवमेव पूर्वावयवेष्वपि बोध्यम् ।

**एतद्विषये मतान्तरसंवादः**

साध्यस्य निगमनमिति सूत्रयित्वा व्याख्यातमपि श्रीहेमचन्द्राचार्येण जैनदर्शने । साध्यधर्मस्य धर्मिण्युपसंहारो निगम्यते पूर्वेषामवयवानामर्थोऽनेनेति निगमनम्, तथा तस्मादग्निमानिति[4] ।

न्यायदर्शनेऽपि–"हेत्वपदेशात् प्रतिज्ञायाः पुनर्वचनं निगमनम्" इति गौतमसूत्र-मधिकृत्य व्याख्यातं न्यायमञ्जरीकृता–"हेत्वपदेशात् प्रवृत्तं प्रतिज्ञायाः पुनर्वचनं निगमनम् । निगम्यन्तेऽनेन पूर्वोक्ता अवयवा एकत्र साध्येऽर्थे समर्प्यन्ते नियोज्यन्ते इति निगमनम् । तस्मात् कृतकत्वादनित्यः शब्द इति । तदिदं निगमनं साधर्म्यवैधर्म्यभेदेन हेतोर्दृष्टान्तस्य उपनयस्यापि च द्वैविध्येऽपि प्रतिज्ञावचन-वत्तुल्यमेव भवति"[5] इति ।

व्याकरणदर्शनानुरूपमेवैतत्सर्वम् ।

---

1. म. भा. १।१।१ ।
2. अत्रैव निबन्धे अनु. स. दृष्टान्तवि. ।
3. म. भा., प्र. उ. १।१।४५ ।
4. प्र. मी. २।१।१५ ।
5. न्या. म., २ भा. अवयवप्रक., पृ.१४२-४३ ।

## शब्दशास्त्रेऽवयवसंख्यानिर्णयः

महाभाष्ये बहुत्र वाक्यद्वयस्यैव प्रयोगः कृतोऽस्ति,[1] क्वचित्तु वाक्यत्रयस्य,[2] क्वचित् तत्पञ्चकस्यापि[3] । वाक्यपदीयेऽपि क्वचित्तत्पञ्चकस्य[4], क्वचित्तु त्रितयस्यैव प्रतिज्ञाहेतूदाहरणानाम्[5]। परिभाषेन्दुशेखरे अनुबन्धानामनेकान्तत्वे, एकान्तत्वे च साध्ये वाक्यपञ्चकस्य प्रदर्शनं कृतं श्रीनागेशभट्टेन[6] ।

एतेन प्रतीयते यदवयवसंख्यायां नातीवाग्रहः कर्तव्यो वैयाकरणैः, "सर्ववेद-पारिषदं हीदं शास्त्रम्" इति सिद्धान्तात्[7] । यस्य बोद्धृयस्य यावद्भिरवयवैरनु-मितिः सम्भवति, तस्मै तावन्त एव प्रयोक्तव्याः । उक्तं च जैनाचार्येणापि "बोध्यानुरोधात् प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि पञ्चापि"[8] इति । वस्तुतस्तु परामर्शस्य व्यापारत्वपक्षे न्यायदर्शनवत् पञ्चापि वाक्यानि न्यायाङ्गतया मन्तव्यानि, लिङ्गदर्शनस्यानुमानत्वपक्षे तत्त्रितयान्येवोदाहरणान्तानि तदादीनि वा । एवं च यत्र वाक्यद्वयमेव प्रयुक्तम्, तत्रापि स्फुटतया दृष्टान्तवाक्यं नोपन्यस्तम्, तस्योहः करणीय इति निष्कर्षः ।

## उक्तविषये मतान्तराणि

हेतुदृष्टान्तौ द्वावेव अवयवौ स्वीकरणीयौ[9] । हेतुरेव वा केवल इति[10] बौद्धाचार्याः । भद्रबाहुकृते ग्रन्थे निर्युक्तिनामके तु दशावयवा अपि दर्शिताः सन्ति[11] । 'प्रतिज्ञाहेतूदाहरणानि उदाहरणोपनयनिगमनानि वा त्रयोऽवयवाः' इति भाट्टाः[12] । गुरुमतानुयायिनः श्रीशालिकनाथमिश्रा अपि प्रकरणपञ्चिकायाम्[13] ।

---

1. म. भा., नवा. १।२।५, १।२।२७ ।
2. म. भा. १।३।९ ।
3. म. भा. १।१।१; १।१।५ ।
4. वा. प., वृ. टी. १।९७ ।
5. वा. प., वृ. टी. २।१९०-९४ ।
6. परि. शे., परिभाषा ४-५ ।
7. म. भा. २।१।५८ ।
8. प्र. मी. २।१।१० ।
9. प्रमा. वा. १।२८; स्याद्वादर., पृ. ५५९ ।
10. प्रमा. वा. १।२८ ।
11. दश. नि., गा. १३७ ।
12. मानमे., अनु. परि., पृ. २८ ।
13. प्रक. प., पृ. ८३-८५ ।

भाट्टसम्मतमवयवत्रयमेव न्यायाङ्गम्, तेनैव व्याप्तिपक्षधर्मतयोरुपदर्शनसम्भवेनाधिकावयवद्वयस्य व्यर्थत्वादिति अद्वैतिदर्शनम्[1] ।

सांख्यमतेऽपीमेऽवयवास्त्रय एवेति माठरकारिकादर्शनेन प्रतीयते[2] । न्यायशास्त्रेऽपि "प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः"[3] इति सूत्रोक्ताः पञ्चैव सिद्धान्तिताः सन्ति । जिज्ञासादयोऽन्ये पञ्च तु निराकृताः श्रीजयन्तभट्टेन । तथा हि– "अप्रतीयमानेऽर्थे प्रतीतिप्रयोजनस्य प्रवर्तिका जिज्ञासा, सा चेच्छा आन्तरः प्रमातृधर्मः, न तु वाक्यावयवः । प्रमातुः प्रमाणानि प्रवर्तमानानि प्रमेयमर्पयितुं पारयन्तीति सम्भावना शक्यप्राप्तिः, सापि तद्वदेव, न तदवयवत्वं स्पृशति । तत्त्वावधारणफलात्मकं प्रयोजनमपि न वाक्यैकदेशः, तस्यापि निश्चयरूपत्वेनान्तरधर्मत्वात् । संशयव्युदासः प्रतिपक्षोपालम्भः, तस्य वाक्यरूपत्वेऽपि स न साधनवाक्यावयवः, अपि तु वाक्यान्तरमेव । एवं प्रवृत्तिहेतवोऽपि इमे जिज्ञासादयो न न्यायावयवा इति प्रतिज्ञादयः पञ्चैव न्यायावयवाः"[4] इति सिद्धम् ।

### अवयवेषु प्रमाणानुग्राहकता

यथासम्भवमागमादिप्रमाणानुगृहीता एतेऽवयवाः परस्पराऽनुषक्ताश्च सन्तः स्वार्थं साधयन्ति । तत्र मुख्यया वृत्त्या प्रतिपाद्येनानुमानेनैव सर्वेऽनुगृह्यन्ते प्रपञ्चाय तु प्रमाणान्तरानुग्रहं एषामुच्यते । तत्र प्रतिज्ञायास्तावदागमोऽनुग्राहकः, उपदेशस्वभावत्वात् । हेतुवाक्यं तु अनुमानेनैवानुगृह्यते । उदाहरणं तु प्रत्यक्षेण, तन्मूलत्वाद् व्याप्तिनिश्चयस्य । उपमानकारणभूतवनेचरादिवचनतुल्यत्वादुपनयस्यानुग्राहकमुपमानम् । निगमनस्य तु सर्वावयवानामेकत्र नियोजनार्थत्वात् सर्वप्रमाणानुग्राह्यतैव, इतरेतरानुषक्तत्वात् । स्पष्टं चेदं न्यायमञ्जर्याम्[5] । शाब्दिकानां नये उपमानस्य प्रामाण्याभावे[6] उपनयस्यानुग्राहकोऽनुमानः शब्दो वेति विशेषः ।

---

1. वे. प., टी. द्व., पृ १८४-८५ ।
2. माठर. ५ ।
3. गौ. सू. १।१।३२ ।
4. न्या. म., द्वि. भा., अवयवप्र., पृ १३१-३२ ।
5. न्या. म., द्वि. भा., अवयवप्र., पृ. १४४ ।
6. न्या. म., द्वि. भा., अवयवप्र., पृ. १४४ ।

### एतेषु क्रमनिर्णयः

न्यायदर्शन एतेषां क्रमो निर्णीतः । तथा हि– "प्रतिज्ञां विना हेतुर्निराश्रयो भवेदिति प्रतिज्ञावाक्यं पूर्वं प्रयोक्तव्यम् । ततो हेतुजिज्ञासेति हेतुवाक्यप्रयोगः । तस्मिंश्च कुत्रास्य व्याप्तिरवधृतेति उदाहरणवाक्यमुच्यते । ततः किमीदृशो हेतुः साध्यधर्मिणि भवेत्, न वा, इति शङ्कनमपाकर्तुमुपनयप्रसक्तिः । ततोऽमुना क्रमेण तथापि साध्यप्रतीतिर्भवत्विति सर्वावयवानेकत्र साध्येऽर्थे समर्थयितुं निगमनमभिधीयते । अन्यतममवयवमन्तरेण सर्वमिदमननुषक्तार्थवाक्यं स्यादिति पञ्चावयवमेव यथोपदिष्टक्रमकं वाक्यं प्रयोक्तव्यम्"[1] इति ।

### व्याकरणशास्त्रदृष्ट्या क्रमनिर्णयः

परिभाषेन्दुशेखरीयपञ्चावयववाक्यप्रयोगदर्शनेन[2] तु परिज्ञायते यत् प्रतिज्ञा-हेतूदाहरणादीनां क्रमेणैव प्रयोगः कार्य इत्यत्र नास्ति आग्रह इति । स्फुटं चैतत् तत्त्वप्रकाशिकायां तट्टीकायाम्[3] ।

वस्तुतस्तत्रापि दृष्टान्तात् पूर्वं हेतुवाक्यमध्याहृत्य क्रमयोजना करणीया । कृताऽपि च सा भूतितिलके[4] । अत एव महाभाष्ये वाक्यपदीयादौ च प्रतिज्ञादीनां क्रमेणैवोपन्यासः प्रदर्शितोऽस्ति । क्रमे मूलं तु न्यायमञ्जर्युक्तं[5] सम्यगेव । तदेवात्रापि स्वीकरणीयम्, भाष्यकृदाद्यनुगृहीतत्वात् ।

### प्रकारान्तरेणानुमानं त्रिविधम्

(१) पूर्ववत्, (२) शेषवत्, (३) सामान्यतोदृष्टं च ।

#### पूर्ववदनुमानम्

तत्र पूर्वं कारणं तदस्यास्तीति व्याख्यया पूर्ववत् कारणलिङ्गकं बोध्यम् । यत्र कारणेन कार्यमनुमीयते, यथा 'मेघोन्नत्या भविष्यति वृष्टिः', अत्र 'मेघा भविष्यद्वृष्टिमन्तः, गम्भीरध्वानवलाकादिमत्त्वात्, वृष्टिकरमेघवत्' इत्यनुमान-प्रयोगो बोध्यः । वाक्यपदीये हेलाराजसम्मते त्रिविधे हेतुस्वरूपे तृतीयमिदमेव । कार्य-विच्छेदेन यथा "मेघादयः कारणानि वृष्टिरूपकार्यस्य परिच्छेदकतया लक्षणानि" इति पूर्वमुक्तमेव[6] ।

---

1. न्या. म., द्वि. भा., अवयवप्र., पृ. १४४ ।
2. परि. शे., परिभाषा–४ ।
3. तत्त्वप्र., पृ. २१ ।
4. परि. शे., भूतिति., पृ. २१ ।
5. न्या. म., द्वि. भा., अवयवप्र. पृ. १४४ ।
6. अत्रैव निबन्धे, अनु. प्र. पु. ।

## शेषवदनुमानम्

शिष्यते कारणेन विधीयते योऽसौ शेषः कार्यम्, सोऽस्यास्तीति शेषवदिति व्याख्यया कार्यलिङ्गकं शेषवद् बोध्यम् । यत्र कार्येण कारणमनुमीयते, यथा सरित्स्रोतसां मालिन्यं पूर्णत्वं शीघ्रगत्वं चावलोक्य "उपरिदेशे नदी, तद्देशवृष्टिमती, मलिनस्रोतःसम्बन्धित्वे सति शीघ्रगामित्वे च सति काष्ठादिवहनशीलत्वात्" इत्यनुमीयते । अत्र साध्यहेत्वोः समव्याप्तिर्बोध्या । "आद्यन्तौ टकितौ" इति सूत्रे भाष्योद्द्योते स्फुटमुक्तमिदम्[1]। "स्त्रियाम्" इति सूत्रे भाष्यकृता स्वयमपि अस्यानुमानस्य सङ्केतः कृतोऽस्ति । तत्र हि– यथा "आकाशेन ज्योतिषः । तद्यथा आकाशं दृष्ट्वा ज्योतिरत्रेति गम्यते" इति भाष्यम्[2] । अत्र आकाशत इत्याकाशः, प्रकाशं आलोक इति यावत्, तेन यथा मेघान्तरितं ज्योतिरनुमीयते, तथा लिङ्गकार्येण टाबादिप्रत्ययेन तत्कारणलिङ्गस्यानुमितिरित्यादि च व्याख्यातं प्रदीपकृता[3] । अनेन कार्यलिङ्गकमनुमानं स्पष्टमागच्छति । ननु कार्यं कारणपूर्वकमिति सामान्यतो व्याप्तिमत्रादृत्य सामान्यतोदृष्टमनुमानमिदमिति कुतो नाभ्युपेतमिति चेत्, न, ज्योतिःप्रकाशयोः प्रत्यक्षेण कार्यकारणभावावगमाद् भवतु कार्येण कारणानुमानम्, खट्वादिषु तु लिङ्गस्य कदाचिदप्यग्रहणान्न तेन कस्यचित् कार्यकारणभावग्रहणम्" इति प्रदीपग्रन्थेनैव[4] तत्प्रतिक्षेपात् । व्याख्यातश्चायं ग्रन्थ उद्द्योतकृता तथैव[5] ।

## सामान्यतोदृष्टमनुमानम्

सामान्यतोदृष्टं तु कार्यकारणभिन्नलिङ्गकम्, यथा प्रगतिपूर्वकमन्यत्रावलोकितस्यादित्यस्यान्यत्रावलोकनविषयत्वं सम्यग् विज्ञाय, अप्रत्यक्षापि आदित्यगतिः कार्यकारणभिन्नेनानुमानेन विज्ञायते ।अनुमानप्रयोगश्च– देशान्तरप्राप्तिमान् आदित्यः, प्रगतिमान्, प्रातः पूर्वाभिमुखस्थितव्यक्तेर्दर्शनविषयस्य तस्याधुना परावृत्य दर्शनविषयत्वादिति । एतदपि बहुत्र भाष्ये प्रदीपादौ च स्फुटं निर्दिष्टमस्ति । यथा "स्त्रियाम्" इति सूत्रे भाष्यम्– "आदित्यगतिवत् सन्न, अथवा यथा आदित्यगतिः सती नोपलभ्यते, तद्वत् खट्वावृक्षयोः सल्लिङ्गं नोपलभ्यते"[6] इति ।

---

1. म. भा. १।१।४५ ।
2. म. भा. ४।१।३ ।
3. म. भा., प्र. ४।१।३ ।
4. म. भा., प्र. ४।१।३ ।
5. म. भा., प्र. उ. ४।१।३ । "न तेन कस्यचित् कार्यकारणेति-अनेन दृष्टविषयानुमानायोगोऽत्र दर्शितः" इति ।
6. म. भा. ४।१।३ ।

अत्र प्रदीपः – "यथा आदित्यगतिः सती प्रत्यक्षेण नोपलभ्यते, देशान्तरप्राप्त्या अनुमीयते, तथा खट्वावृक्षयोः सदपि लिङ्गं सूक्ष्मत्वात् प्रत्यक्षेणाशक्यं ग्रहीतुम्, तत्कृतकार्यदर्शनादनुमीयते"[1] इति ।

'लटः शतृशानचौ." इति सूत्रे भाष्यादिषु तु लक्षणमिदं प्रदर्शितम् । तथा हि– "आदेशेन सामानाधिकरण्यं दृष्ट्वा अनुमानाद् गन्तव्यम्, प्रकृतेरपि सामानाधिकरण्यं भवति" इति भाष्यम् । अत्र प्रदीपः– "अनन्यसिद्धेन तु सामान्यतोदृष्टेन अनुमानेन लटोऽप्रथमासामानाधिकरण्यावगमः" इति । उद्द्योतश्च–सामान्यतोदृष्टेनेति । कार्यकारणभिन्नलिङ्गकेनेत्यर्थः"[2] इति ।

"तस्य भावस्त्वतलौ" इति सूत्रेऽपि भाष्येऽस्य निर्देशोऽस्ति[3] । प्रदीपकारेण तु तत्रास्मिन्ननुमाने प्रत्यक्षपूर्वकत्वाभावोऽपि कथितः[4] । तस्य साक्षात् तत्पूर्वकत्वाभावे पर्यवसानं मन्तव्यम् । उद्द्योतकृता चास्यानुमानस्याकारः प्रदर्शितः –'द्रव्यं गुणेभ्योऽन्यत्, विशेषवत्त्वात्, यद्यतो विशेषवत्, तत्ततोऽन्यत्, यथा लोहकार्पासे परस्परस्मात्" इति । अतोऽग्रे विशेषात्मकहेतोर्ज्ञानस्य सिद्धिप्रकारोऽपि दर्शितः[5] ।

अन्यत्रापि भाष्ये उद्द्योतकृता स्फुटमस्य स्वरूपं निरदेशि[6] । एवं 'ङ्याप्प्रातिपदिकात्" इति सूत्रे भाष्ये प्रदीपोद्द्योतयोरस्य सङ्केतः स्पष्टमुपलभ्यते[7] ।

---

1. म. भा., प्र. ४।१।३ ।
2. म. भा., प्र. उ. ३।२।१२४ ।
3. "अन्यच्छब्दादिभ्यो द्रव्यम्, तत्त्वनुमानगम्यम्" । (म. भा. ५।१।११९)
4. "प्रत्यक्षापलापिनं प्रति प्रत्यक्षपूर्वकानुमानासम्भवात् सामान्यतोदृष्टमनुमानमुपन्यस्यते– ओषधिवनस्पतीनामिति"– प्रदीपः (म. भा. ५।१।११९, पृ. ३४३) ।
5. म. भा., प्र. उ. ५।१।११९ ।
6. "यत्कर्मनान्तरीयककर्मजन्यो यो विपरीतत्वमात्रेण कल्प्यो वैधो दोषः, स तत्कर्मजन्यफलनाश्यः, यथा कूपखनननान्तरीयकशरीरव्यापारजन्यो मृल्लेपस्तत्फलजलनाश्य इति सामान्यतोदृष्टानुमानात् तन्नाशानुमानमिति" । (म. भा., प्र. उ. १।१।१)
7. "नानारूपा हि शब्दानां शक्तयो न सामान्यतोदृष्टेनानुमानेन व्यवस्थापयितुं शक्यन्ते" । (म. भा., प्रदीपः – ४।१।१), अत्रोद्द्योतः – "सामान्यतोदृष्टेति विमतं न लिङ्गयोगि, क्रियात्वात्, यथा पचतीत्येवंरूपेणानुमानेनेत्यर्थः" इति ।

## पूर्वोक्तत्रिविधानुमानस्य प्रकारान्तरेण व्याख्यानं योगशास्त्रे

पूर्ववदित्यादि त्रिविधमनुमानं प्रकारान्तरेण व्याख्यातं योगदर्शने । तथा हि– "पूर्वम् अन्वयव्याप्तिस्तद्वद् अनुमानं केवलान्वयि" इत्यर्थः । यथा घटोऽभिधेयः, प्रमेयत्वादिति । अत्राभिधेयत्वप्रमेयत्वयोर्व्यतिरेकव्याप्तिर्नास्ति, पदार्थमात्रस्यैवाभिधेयत्वात् प्रमेयत्वाच्च ।

शेषवदित्यस्य शेषो व्यतिरेकव्याप्तिः, तद्वत् केवलव्यतिरेकि इत्यर्थः । यथा पृथिवी स्वेतरभिन्ना, गन्धवत्त्वादिति । अत्र यद् गन्धवत् तदितरभिन्नमिति अन्वयव्याप्तिर्नास्ति, किन्तु यत्र स्वेतरजलादिभेदाभावः, तत्र गन्धाभाव इति व्यतिरेकव्याप्तिमात्रसत्त्वात् केवलव्यतिरेकित्वम् ।

सामान्यतोदृष्टमन्वयव्यतिरेकि । अन्वयेन व्यतिरेकेण च व्याप्तिमदिदं भवति, यथा 'पर्वतो वह्निमान्, धूमात्' इति । अत्र वह्नेर्धूमेऽन्वयव्याप्तिर्महानसादौ प्रसिद्धैव । ह्रदादौ विपक्षे चानयोर्व्यतिरेकव्याप्तिरपि प्रसिद्धैवेति अन्वयव्यतिरेकित्वमस्य सम्पन्नम्[1] ।

यद्यपि लिङ्गस्येदं त्रैविध्यमस्ति, तथापि तज्ज्ञानरूपानुमानस्यापि तत्त्वं सिध्यत्येवार्थत इति नास्त्यनुपपत्तिः ।

## शब्दशास्त्रेऽप्यस्य त्रिविधानुमानस्य सत्ता, तत्र केवलान्वयिनिरूपणम्

व्याकरणशास्त्रेऽपीदं त्रिविधमनुमानं तत्र तत्राभ्युपगतमेव । तथा हि–केवलमन्वेति न क्वचिदपि व्यभिचरतीति केवलाऽन्वयि, यथा प्रमेयत्वादि । तल्लिङ्गकमनुमानं केवलान्वयि इत्युच्यते । उक्तं च श्रीनागेशभट्टेन शब्देन्दुशेखरे–"अर्थनिष्ठं लिङ्गं केवलान्वयि, इयं व्यक्तिः, इदं वस्तु, अयं पदार्थ इति त्रिविधव्यवहारस्य पदार्थमात्रे सत्त्वात्"[2] इति । अत्र कलाकृता श्रीभैरवमिश्रेणोच्यते– "अत्र केवलान्वयित्वमन्योऽन्याभावप्रतियोगितानवच्छेदकत्वम् । तदेवोपपादयति– इयमित्यादिना"[3] इति ।अत्र वस्तुत्वस्य पदार्थत्वस्य व्यक्तित्वस्य वा पदार्थमात्रे सत्त्वेन केवलान्वयित्वात् तद्विषयकव्यवहारस्यापि तत्त्वं बोध्यम् । एवं चायं पदार्थः, वस्तुत्वादित्यत्र पदार्थत्वसाध्यकं वस्तुत्वलिङ्गकमनुमानं केवलान्वयि मन्तव्यम् । किञ्च, साहचर्यसम्बन्धस्य व्याप्तित्वे[4] इदमनुमानमङ्गीकृतमेव शाब्दिकैः ।

---

1. योगद. भा. १।१।७, पृ. ६२ ।
2. ल. श. शे., (स्त्रीप्रत्ययप्र.), पृ. ४२२ ।
3. ल. श. शे., चन्द्रकला, पृ. ४२२ ।
4. अत्र निबन्धे, अनु. स., प्र. पु. ।

## केवलव्यतिरेकि

केवलव्यतिरेकि अपि बहुतरस्थलेषु महाभाष्यादौ सङ्कीर्तितमस्ति । यथा अनुबन्धत्वावच्छेदेन प्रत्याहारग्राह्यत्वाभावसाधने आचारादिहेतुकानुमानम्[1] । अत्र हेत्वधिकरणस्य सर्वस्यैव पक्षतया सपक्षाभावेनान्वयव्याप्तिर्नास्तीति व्यतिरेकमात्र-व्याप्तिकतया केवलव्यतिरेकित्वम् ।

एवमेव उभयशब्दस्य सर्वादिपाठप्रत्याख्यानावसरे उक्तं भाष्ये– "अन्याभावो द्विवचन'टाप्'विषयत्वात्"[2] इति । अत्रापि यत्र अन्यत्कार्यमस्ति, तत्र द्विवचन-विषयतानियमो नास्ति, यथा विश्वादिशब्दे, इति व्यतिरेकव्याप्तिरेवास्ति, न तु अन्वयव्याप्तिरिति केवलव्यतिरेकित्वमुपपन्नम् ।

किं बहुना "इन्द्रियमिन्द्रलिङ्गम्." इति सूत्रयता भगवता पाणिनिनापि इदमङ्गी-कृतमेव । अन्यथा –जीवच्छरीरत्वावच्छेदेनात्मानुमितौ इन्द्रियवत्त्वरूपे हेतौ अन्वय-व्याप्तिः कथं सम्भवति ? व्यतिरेकव्याप्तिस्तु घटादौ अनात्मनि तादृशहेत्वभावे नास्त्येव । उक्तं च बौद्धदर्शनेऽस्य केवलव्यतिरेकित्वम्[3] ।

## अन्वयव्यतिरेकि

अन्वयव्यतिरेक्यनुमानमपि पदे पदे व्यवहृतमस्ति । यथा भाष्ये वर्णानामर्थ-वत्त्वसाधने वर्णत्वहेतौ उभयविधव्याप्तिसत्त्वेनेदमेवानुमानम् । तत्रैकवर्णरूपधातु-निपातादौ अन्वयसहचारः, अर्थावबोधके ध्वन्यादौ वर्णत्वस्याप्यभावेन व्यतिरेक-सहचारः[4] ।

किञ्च 'भूवादयः' इति सूत्रे क्रियाया अनुमेयत्वप्रतिपादनपरे भाष्येऽपि इदमेवानुमानमुपतिष्ठते । अनुमानं तु तत्रेत्थम्–"संयोगजभिन्नः संयोगः क्रियाजन्यः, कारकाजन्यत्वे सति जन्यत्वात्"[5] इति । अत्र 'तण्डुलं पचति' इत्यादौ पचादिवाच्य-

---

1. नवा. म. भा. १।१।१ ।
2. नवा. म. भा. १।१।२६ ।
3. "किञ्च व्यतिरेक्यपि हेतुः स्यात्, नेदं निरात्मकं जीवच्छरीरम्, अप्राणादिमत्त्वप्रसङ्गात् । निरात्मकेषु घटादिषु दृष्टादृष्टेषु प्राणाद्यदर्शनात्, तन्निवृत्त्या आत्मगतेः" । (प्रमा. वा. १।१९, पृ. ६२) स्ववृत्तिः (धर्मकीर्तिः), स्वार्थाऽनुमानपरिच्छेदः ।
4. म. भा. १।१।५ ।
5. म. भा., प्र. उ. १।३।१, पृ. १६० ।

विक्लित्यादिषु अन्वयसाहचर्यम् । घटादिषु व्यतिरेकसाहचर्यं बोध्यम् । संयोगरूप-पक्षस्य क्रियाफलमात्रोपलक्षकत्वे तादृशफलत्वावच्छेदेनानुमितौ तु पक्षैकदेशे संयोगादौ अन्वयसहचारो ग्राह्यः, अन्यथा तु केवलव्यतिरेकित्वमेवास्य ज्ञेयम् ।

किञ्च, चतुर्थाध्याये महाभाष्योद्द्योते उक्तम्–"विमतं न लिङ्गयोगि, क्रियात्वात्" इति[1] । एतस्यान्वयव्यतिरेकित्वं निश्चप्रचम्, यत्र यत्र क्रियात्वं तत्र तत्र लिङ्ग-योगाभावः, यथा पचाद्यर्थक्रियायाम् । यत्र च लिङ्गयोगस्तत्र न क्रियात्वम्, यथा घटादिषु, इत्युभयविधसाहचर्यसम्भवात् ।

लोके 'वह्निमान् धूमात्' इत्यादौ धूमादिषु इदं सुप्रसिद्धमेव ।

## वाक्यपदीये द्विविधमनुमानम्

श्रीपुण्यराजेन वाक्यपदीयव्याख्याने तु द्विविधमनुमानं दर्शितम्, सामान्यतोदृष्टं विशेषतोदृष्टं चेति[2] । तत्र सामान्यतो व्याप्तिस्थले प्रथमं यथा धूमेनाग्न्यनुमानम् । विशेषतो व्याप्तिर्यत्र तत्र द्वितीयम्, यथा तद्रूपवान् तद्रसादित्यत्रैकव्यक्तिसाध्यके । किं वा रोहिण्यनुमितौ कृत्तिकोदयलिङ्गके ।

मीमांसकैस्तु दृष्टं सामान्यतोदृष्टं चेत्येवंरूपेण इदमेवानुमानद्वयं स्मर्यते[3] ।

## न्यायदर्शने उक्तविषये विशेषः

न्यायदर्शने मञ्जरीकृता तु एकत्राप्युदाहरण एतत् त्रिविधमपि प्रदर्शितम् । यथा–इच्छादिकार्यमाश्रितम्, कार्यत्वात्, घटवदित्याश्रयमात्रे साध्ये पूर्ववदनुमानम् । प्रसक्तशरीरेन्द्रियाद्याश्रयप्रतिषेधेन विशिष्टाश्रयसाधने तु शेषवत् । अनुमेयस्य नित्यपरोक्षतया इदमेव सामान्यतोदृष्टं चेति । एवमेव पूर्ववदित्यादौ वतिप्रत्ययेनापि व्याख्यानम्, शेषवत्सामान्यतोदृष्टयोर्भेदश्च बहुविधं प्रादर्शि । तत्र नित्यपरोक्ष-विषयमेव सामान्यतोदृष्टं स्वमतमुक्तम् । अदृष्टस्वलक्षणविषयं शक्तिक्रियानुमानं सामान्यतोदृष्टमित्यादि मतं प्रस्तूय युक्तिभिर्निराकृतं च[4] ।

---

1. म. भा., प्र. उ. ४/१/१ ।
2. वा. प., टी. २/१९० ।
3. मानमे., अनुमानपरीक्षा, पृ. २६ ।
4. न्या. म., प्र. भा., पृ. १२०-१२३ ।

**अनुमितिद्वैविध्यादपि अनुमानद्वैविध्यम्**

अनुमितिर्द्विविधा भवति। एका पक्षतावच्छेदकावच्छेदेन, अपरा तु पक्षतावच्छेदकसामानाधिकरण्येन। पक्षतावच्छेदकावच्छिन्ने सकलपक्षे यत्र साध्यस्यानुमितिः कर्तुमिष्यते तत्राद्या भवति। अत्र हि पक्षतावच्छेदकव्यापकत्वं हेतावावश्यकं भवति। अत एवोक्तं शब्देन्दुशेखरे–"तृतीयहेतोरव्यापकत्वापत्तिः"[1] इति।

किञ्च, साध्यप्रतियोगिकसंसर्गेऽपि पक्षताऽवच्छेदकस्य व्यापकतात्रापेक्ष्यते[2]। अनुबन्धानामच्प्रत्याहारे ग्रहणे आचारादिहेतून् प्रदर्शयता भाष्यकृता इयमेवानुमितिरुक्ताऽस्ति[3]। तत्र हि सर्वेषु अनुबन्धेषु प्रत्याहारग्रहणग्राह्यत्वाभावः सिषाधयिषितः, न तु कतिपयेष्वेव।

एवमेव 'वर्णा अर्थवन्तः' इत्यत्र वर्णात्मके पक्षे वर्णत्वसामानाधिकरण्येन अर्थवत्त्वानर्थक्यान्यतरसाधने द्वितीयाऽपि उपदर्शिताऽस्ति[4]। तत्र हि न सर्वेषु वर्णेषु अर्थवत्त्वं साधितम्; किन्तु एकवर्णरूपधात्वादिषु। एवं संघातावयवभूतवर्णेषु आनर्थक्यं च साधितम्। एवं चानुमितिद्वैविध्येन तत्करणस्यानुमानस्य तत्त्वं स्फुटत्येव।

**तर्कनिरूपणम्**

अनुमानभेदं निरूप्य अनुमानरूपे व्याप्तिज्ञाने प्रतिबन्धिकाया व्यभिचारशङ्काया निवर्तकस्तर्कस्तन्निरूपणमवसरप्राप्तं विधीयते।

कार्यमात्रे प्रतिबन्धकाभावस्य हेतुत्वेन व्याप्तिनिश्चयेऽपि तत्प्रतिबन्धकीभूतव्यभिचारसन्देहस्य निवृत्तिरवश्यमपेक्षणीयेति 'तादृशनिवृत्तिजनको ज्ञानविशेषःस्तर्कः' इत्युच्यते। उक्तं चैतत् तर्कस्वरूपं सरूपसूत्रे भाष्यादौ। तथा हि–"तस्यैवोपोद्बलकमेतत्" इति भाष्यम्। "बलमुद्दीपयति उपोद्बलकमुपबृंहकमुच्यते" इति प्रदीपः।

---

1. ल. श. शे., संज्ञाप्रकरणम्।
2. "पर्वतत्वावच्छेद्यत्वं न स्वरूपसम्बन्धविशेषः, मानाभावात्। किन्तु पर्वतत्वव्यापकसाध्यप्रतियोगिकत्वम्, तदपि संसर्गमर्यादयैव भासते। पर्वतो वह्निमानित्याकारानुमितौ पर्वतत्वव्यापकवह्निप्रतियोगिकसंयोगत्वेनैव संयोगस्य सम्बन्धविधया भानस्वीकारात्"।
(पक्षता., जाग., पृ. १०६)
3. म. भा. १/१/५।
4. म. भा. १/१/५।

अत्रोपबृंहकमिति प्रतीकमादायोद्द्योते उक्तम्–भ्रान्तत्वाशङ्कानिवर्तनेन प्रमात्वनिर्वाहकस्तर्क इत्यर्थः" इति[1] । अत्र हेतौ साध्यनिरूपितव्याप्तेर्भ्रमो ग्राह्यस्तन्निवर्तनेन हेतुधर्मिकव्याप्तिज्ञाने प्रमात्वं सम्पादयति, यतस्तस्य तर्क इति व्यपदेशः कृतोऽस्ति । एवं च व्यभिचारशङ्कानिवर्तकत्वम्, अनुमानबलोद्दीपकत्वं वा तर्कस्य लक्षणं सम्पन्नम् ।

## न्यायदर्शने तर्कस्वरूपम्

श्रीजयन्तभट्टेन न्यायमञ्जर्यामुक्तम्–"अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः" इति गौतमसूत्रे कारणोपपत्तितः" इति कारणनिर्देशः, "अविज्ञाततत्त्वेऽर्थे" इति विषयनिर्देशः "तत्त्वज्ञानार्थः" इति फलनिर्देशः, ऊहरूपत्वमेव तर्कस्य लक्षणम् ।

'स्थाणुर्वा पुरुषो वा' इति प्रतीतिरेका, 'पुरुष एवायम्' इत्यन्या, 'पुरुषेणानेन भवितव्यम्' इति मध्यवर्तिनी तृतीया सम्भावना प्रतीतिः सहृदयसाक्षिकैव–

**साम्येन हि समुल्लेखः संशये पक्षयोर्द्वयोः ।**
**निर्णये त्वितरः पक्षः स्पृश्यते न मनागपि ॥**
**तर्कस्त्वेकतरं पक्षं विभात्युत्थापयन्निव ॥**

एवं च "संशयनिश्चययोरन्तराले सम्भवनात्मको मानसप्रत्ययस्तर्क इति वेदितव्यम्" इति[2] ।

"हेतुर्व्याप्तिग्रहे तर्कः क्वचिच्छङ्कानिवर्तकः" इति मुक्तावल्याम् मूले[3] ।

मुक्तावलीटीकायां दिनकराचार्येणोक्तम्–"तर्कश्चाहार्यारोपविशेषः, तत्त्वं च मानसत्वव्याप्यो जातिविशेषः, तर्कयामीत्यनुभवात्, जिज्ञासाविशेषनिवर्तकत्वाद् वा सिद्धः । स च द्विविधः – विषयपरिशोधको व्याप्तिग्राहकश्च । तत्राद्यः – निर्वह्निः स्यान्निर्धूमः स्यादित्यादिः । द्वितीयस्तु धूमो यदि वह्निव्यभिचारी स्यात्, वह्निजन्यो न स्यादित्यादिश्च इति[4] ।

"व्याप्यारोपेण व्यापकारोपस्तर्कः, यथा यदि वह्निर्न स्यात्, तर्हि धूमोऽपि न स्यात्" इति, इत्येवंरूपेणापि प्रतिपादितं तर्कस्वरूपं बहुत्र[5] ।

---

1. म. भा., प्र. उ. १/२/६४ ।
2. न्या. म., द्वि. भा., तर्कप्र., पृ. १४५-६४ ।
3. न्या. सि. मु., कारि. १३७, पृ. ४५३ ।
4. न्या. सि. मु. दि., कारि. १३७, पृ. ४५५ ।
5. तर्कस. नील. भा., पृ. १७५; चिन्ता. अनु., पृ. २१0; न्या. द., वृत्ति. १/१/४0 ।

## भाष्योद्द्योतसम्मतं तर्कोदाहरणम्

"उभयोऽन्यत्र" इति वार्त्तिकव्याख्यावसरे उद्द्योतकृतोच्यते–"उभयोऽन्यत्रेति । द्विवचनविषयत्वाभावसम्भावनायामित्यर्थः । लुग्विषये लुका विषयस्यैवापहारान्न दोषः ...... । यद्यत्र तसिलादि स्यात् तर्हि लुगपि स्यादिति सम्भावनया विषयाभावसम्भावना अस्त्येवेति न दोषः"[1] इति ।

अत्र यद्यपि तसिलादि स्यादित्यनेन तसादिसत्ताया व्याप्यभूताया आरोपो दर्शितः, ततश्च तर्हि लुगपीत्यादिना व्यापिकाया द्विवचनलुक्कर्तृकसत्ताया आरोपः कृत इति व्याप्यारोपेण व्यापकारोपस्तर्क एव प्रयुक्तः ।

"लटः शतृशानचौ." इति सूत्रभाष्ये उद्द्योतकृतानुमानस्य प्रत्यक्षात् प्राबल्ये पूर्वम्, पश्चाच्च सहकारिविशेषबलाद् विशेषानुमितौ, इति द्वेधा तर्क प्रदर्शितः । तथा हि उक्तसूत्रे भाष्यम्–"आदेशेन सामानाधिकरण्यं दृष्ट्वा अनुमानाद् गन्तव्यम्, प्रकृतेरपि सामानाधिकरण्यं भवति" इति । अत्र प्रदीपः – "अनन्यथासिद्धेन सामान्यतोदृष्टेनानुमानेन लटोऽप्रथमासामानाधिकरण्यावगमो न ह्यन्यथा आदेशस्य तदुपपद्यते" इति । अत्रोद्द्योतः – न ह्यन्यथेति । एवं च शतृशास्त्रवैयर्थ्यरूपानुकूल-तर्कसहितमनुमानमन्यथासिद्धप्रत्यक्षात् प्रबलमिति भावः" इति[2] ।

अत्र लट् अप्रथमासामानाधिकरण्यवान्, अप्रथमासमानाधिकरणशत्राद्यादेश-स्थानित्वादित्यनुमानाकारो बोध्यः । तत्र हेतुरस्तु, साध्यो माऽस्तु इति व्यभिचार-सन्देहेऽयं तर्क उत्तिष्ठति–"अयं हेतुर्यदि उक्तसाध्यव्यभिचारी स्यात्, तर्हि उक्तसूत्रेणाप्रथमासमानाधिकरणस्य लटः स्थाने तावादेशौ न विधेयाताम्, यतश्च तस्य स्थाने तौ विधीयेतेऽतो नास्ति व्यभिचारिता" इति । अत्रोक्तव्यभिचारित्व-रूपव्याप्यस्य आरोपेण शतृशास्त्रकर्तृकादेशविधानवैयर्थ्यरूपस्य व्यापकस्यारोपस्तर्को वेदितव्यः । अनेनानुमानस्य अन्यथासिद्धात् प्रत्यक्षात् प्राबल्यं बोध्यते ।

अग्रे च प्रकृतानुमाने व्याप्तिग्रहोपायप्रदर्शनपरभाष्यादिव्याख्यानावसरे उद्द्योत-कृतोक्तम्–"ननु लट् अप्रथमान्तसामानाधिकरण्यवान्, तदनुवादेन विहितादेश-स्थानित्वादित्यनुमानम्, तत्र दृष्टान्ताभावेन कथं व्याप्तिग्रह इति चेत्, न, यः स्थानी स आदेशसमानधर्मा इति सामान्यतो व्याप्त्यैव सहकारिविशेषबलाद् विशेषानुमितिः । अत्रापि शतृविधायकशास्त्रमेवानुकूलतर्क इत्याहुः" इति[3] ।

---

1. म. भा., प्र. उ. १/१/२६ ।
2. म. भा., प्र. उ. ३/२/१२४ ।
3. म. भा., प्र. उ. ३/२/१२४ ।

अत्र यः स्थानी स आदेशसमानधर्मा, इति सामान्यतो व्याप्तौ यदि लड्रूप-स्थानिविशेषे साध्यविशेषस्यानुमितिर्न स्यात्, तदा पुनरपि उक्तसूत्रं व्यर्थमेव स्यादित्यस्य शास्त्रस्यानुकूलतर्कता सुस्थिरायत एव । "समर्थः पदविधिः" इति सूत्रे लघुशब्देन्दुशेखरेऽप्ययं तर्कः स्मारितः श्रीनागेशेन "अत्रानुमाने सौत्रानुवाद एवानुकूलस्तर्कः" इत्यनयोक्त्या[1]।

## आचार्यश्रीभर्तृहरिमते तर्कस्वरूपम्

आचार्यश्रीभर्तृहरिमते शब्दप्रमाणानुग्राहकः शब्दनिष्ठशक्तिविशेषो न्यायस्तर्क इत्युच्यते । तथा हि–

**वेदशास्त्राविरोधी यस्तर्कश्चक्षुरपश्यताम् ।**
**रूपमात्राद्धि वाक्यार्थः केवलान्नावतिष्ठते ॥**
**सतोऽविवक्षा पारार्थ्यं व्यक्तिरर्थस्य लैङ्गिकी ।**
**इति न्यायो बहुविधस्तर्केण प्रविभज्यते ॥**
**शब्दानामेव सा शक्तिस्तर्को यः पुरुषाश्रयः ।**
**स शब्दानुगतो न्यायोऽनागमेष्वनिबन्धनः**[2] ॥ इति ।

अत एव.........."श्रुत्योर्विरोधे सतर्का बलवती" इति प्राहुः प्रामाणिकाः । एवमनुमानरूपता, किं वा अनुमानानुग्राहकतापि तर्कस्य स्फुटमायाति, यतो हि तत्रैवोक्तम्–

**"न चागमादृते धर्मस्तर्केण व्यवतिष्ठते**[3] ।" इति ।
**"न तांल्लोकप्रसिद्धत्वात् कश्चित्तर्केण बाधते**[4] ॥" इति च ।

एतयोर्व्याख्याने हरिवृषभकृते गुरुचरणैः कृतायामम्बाकर्त्र्यां टीकायां चापि स्पष्टमेतत् सर्वमुक्तम्, तत एवावगम्यतां विशदं जिज्ञासुभिः[5] ।

## मीमांसादर्शने तर्कस्य स्वरूपं फलं च

प्रमाणेन साध्यमानस्यार्थस्यान्यथात्वशङ्कायां तन्निरासायान्यथात्वे दोषकथनं तर्कः । अस्य च पञ्च अङ्गानि भवन्ति, यदाहुः –

---

1. ल. श., शे. (अव्ययीभावप्र.), पृ. ६४३ ।
2. वा. प. १/१३७-१३९ ।
3. वा. प. १/३० ।
4. वा. प. १/३१ ।
5. वा. प., वृषभदेवीये, अम्बाकर्त्र्यां च ।

**व्याप्तिस्तर्काप्रतिहतिरवसानं विपर्यये ।**
**अनिष्टाननुकूलत्वे इति तर्काङ्गपञ्चकम्** ॥ इति ।

स चायं तर्को व्याप्तिग्रहणवेलायामनुमानोत्थानसमये वा व्यभिचारशङ्कां निरस्य व्याप्तिं शोधयन्ननुमानस्यानुग्राहको भवति । शङ्काव्याघातो यावन्न स्यात् तावत्तर्कः समाश्रयणीय एव । यथा यद्यग्न्यभावेऽपि धूमः स्यादिति शङ्का उदेति, तदा कारणं विनापि कार्यजननमङ्गीकृतं स्यादिति तर्कः प्रयुज्यते । ननु तदपि किं न स्यादिति शङ्का अग्रे लोकविदां नाङ्कुरति । ननु तथापि धूमस्याग्निः कारणमिति कुतो निश्चीयत इति शङ्का नापैति, मैवम्, यद्यग्निः कारणं न स्यात् तर्हि कारणान्तरानुपलम्भेन निष्कारणत्वमेव धूमस्य प्रसजेदिति तर्के समस्तविजयात् । उक्तं च–

**शङ्का व्याघातपर्यन्तमेवं सर्वानुमास्वपि ।**
**तर्कजालं प्रयोक्तव्यमत्यल्पं चेदमुच्यते**[1] ॥ इति ।

एवं प्रत्यक्षप्रमाणेऽपि तर्क उपजीव्यो भवति । यथा 'अयं घटः' इति प्रत्यक्षं यदि (सौगतमते) परमाणुविषयकं स्यात् तर्हि एकत्वेन महत्त्वेन चावभासो घटस्य न स्यादिति तर्केण बौद्धमतमुपक्षेप्तव्यम् ।

एवमेव शब्दप्रमाणेऽपि अस्योपयोगिता ।

यथा–

**उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः ।**
**सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ॥**

(मनु. ६/१४०)

इति स्मृतिर्यद्यध्यापनविधिः स्यात्, तर्हि तु 'यो द्विजस्तमाचार्यं प्रवक्षते' इत्यंशेनैकता न स्यादिति तर्केण आचार्यलक्षणपरता निर्णीयतेऽस्याः स्मृतेः ।

एवं रीत्या सर्वप्रमाणानुग्राहकता तर्कस्येति सिद्धम्[2] ।

### शब्दशास्त्रेऽप्ययमेव सिद्धान्तः

मीमांसापद्धतिमनुरुन्धानं पूर्वोक्तभर्तृहरिसिद्धान्तं वैयाकरणाः सम्मन्यन्ते । अत्र शास्त्रेऽपि "वृद्धरादैच्" इत्यादिप्रमाणे तर्कानुग्रह इत्थं चिन्तनीयः । यदि वृद्धिरादै-

---

1. म. भा., अनु. परीक्षा, पृ. १५-१८ ।
2. मानपरीक्षा, पृ. १८-१९ ।

जिति सूत्रं संज्ञासंज्ञिभावविशेषबोधकं न स्यात् तर्हि वृद्धिपदघटितं "मृजेर्वृद्धिः" इत्यादिसूत्रं व्यर्थं स्यात् । ननु स्यान्नाम व्यर्थमिति शङ्क्यते, तर्हि शब्दानां साधुत्वं न व्यवतिष्ठेत इति शब्दसाधुत्वसम्पादकस्तर्को व्याकरणस्मृतौ आश्रयणीय इति तत्त्वम् ।

## तर्को न स्वतन्त्रं प्रमाणमित्यत्र दर्शनान्तराणि

"प्रमाणतर्कसाधनोपालम्भः सिद्धान्तविरुद्धः" इति गौतमसूत्रे[1] वादलक्षणं व्याचक्षाणेन श्रीजयन्तभट्टेन प्रमाणभिन्नत्वेनैव तर्को व्यवस्थापितः[2] । अत एव सूत्रे प्रमाणपदात् पृथक् तर्कपदमुपात्तम् । तद्व्याख्यानादेव चेदमपि प्रतीयते यन्मीमांसकैरस्यानुमाने शब्दे वान्तर्भावः स्वीक्रियत इति[3] ।

बौद्धाचार्यैरपि तर्कस्य नस्वतन्त्रं प्रामाण्यम्, अपि तु प्रमाणानुग्राहकतैवाभ्युपेयते[4] ।

## स्वतन्त्रं प्रमाणमिदमिति जैनसिद्धान्तः

जैनाचार्येण श्रीमता अकलङ्केन "परोक्षप्रमाणविशेषस्तर्को ज्ञानव्यापारः" इत्यादि प्रतिपादितम्[5] । आचार्यहेमचन्द्रेणापि सैव परम्परानुकृता[6] । अत एव सूत्रितं तेन— "उपलम्भानुपलम्भनिमित्तं व्याप्तिज्ञानमूहः" इति । अत्रोहपदं तर्कपरम् । तदपि (अ. १, पा. २, सू. ११) इत्यङ्किते सूत्रे ऊहात् तर्कादिति व्याख्यातं तेनैव । प्रमाणान्तरागृहीतव्याप्तिग्रहणप्रवणो निर्णयविशेषस्तर्कः प्रमाणान्तरमेतन्मत उक्तः ।

## अत्र निष्कर्षः

वस्तुतो व्याप्तिग्रहस्य प्रत्यक्षादिरूपतायाः पूर्वमुक्तत्वेन तत्तत्प्रमाणेनैव तदुत्पत्तिसम्भवे नोहस्य स्वातन्त्र्येण तत्रापेक्षा इति न तस्य प्रमाणान्तरत्वप्रसक्तिः, व्याप्तिज्ञानस्य विलक्षणप्रमारूपत्वाभावात् । व्यभिचारसंशयनिर्वर्तकत्वेऽपि न तस्य कामपि प्रमां प्रति करणत्वम्, अपि तु प्रमाणमात्रानुग्राहकत्वमेव सम्मतं व्याकरणदर्शनेऽपि ।

---

1. गौ. सू. १/२/२ ।
2. न्या. म., द्वि. भा. १/१/४०, पृ. १४५-१४८ ।
3. "त्रिविधश्च ऊहः, मन्त्रसामसंस्कारविषयः" ।(शाब. भा. ९/१/१; जै. न्या. मा., ९/१/१)
4. हेतुवि. टी., लि., पृ. २५ ।
5. लघी. ३/२ ।
6. प्र. मी. २/२/५ ।

## ऊहस्य वस्तुतो विविधरूपता

ऊहशब्दो मीमांसकैरनुमान एव प्रयुक्तः । तथा हि –"वैकृतं कर्म तत्समवेतार्थ-मन्त्रप्रकाशकप्रयोगनिर्वर्त्यम्, कर्मत्वात्, प्राकृतकर्मवत्" इति प्राकृतेषु तेषु कर्मसु व्याप्तिग्रहात् सर्वोऽयमनुमानमार्गो निर्बाधः ।

एवमेव स्मृतिकारा अपि अनुमाने एवोहपर्यायं तर्कशब्दं प्रयुञ्जते । यथा मनुः –

**आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना ।**
**यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः ॥** इति ।

तदेतत् सर्वं न युक्तिसहम्, ऊहलभ्यस्यार्थस्य चोदनार्थता मा निर्वर्तिष्ट इति ऊहः शब्दप्रमाण एवान्तर्भावयितुं युक्तः । प्रमाणान्तरगोचरो वा धर्मः स्यात् । अग्नये इत्यस्य स्थाने सूर्यायेति पदस्य प्रयोगस्तूहस्य फलम्, न तु ऊहः । न्यायविशेषात्मकस्तूहो नानुमानादतिरिच्यते । श्रोत्रियास्तु तस्य प्रमाणातिरेकप्रकारानभिज्ञतया न्याये न्यायफले वा ऊहशब्दमुपचरितवन्तः । तस्मान्मीमांसकपद्धतिरत्र न समीचीना । अस्मन्मते संशयनिश्चययोरन्तरालवर्ती प्रत्ययविशेषस्तर्कः पूर्वमुक्त एवेत्यादिकं बहूक्तं न्यायमञ्जर्यां तर्कप्रकरणे[1] । "बुद्धेर्धर्मविशेषस्तर्क इति कापिलाः"[2] इत्यप्युक्तं तत्रैव ।

## शब्दशास्त्रे ऊहपदेन तर्को व्यह्रियते न वा ?

व्याकरणेऽपि कुत्रचिदूहपदेन तर्को व्यवहृतः, यथा "अकृतव्यूहाः पाणिनीयाः" इति परिभाषायामूहपदस्य तर्क एवार्थः कैयटमते । न कृतो व्यूहो विशिष्टस्तर्को निमित्तकारणविनाशेऽपि कार्यस्थितिरूपो यैरिति व्याख्यायास्तदभिप्रेतत्वात् । "निमित्तापाये नैमित्तिकस्याप्यपायः" इति हि तत्सिद्धान्तः[3] । 'अत्र निमित्तकारणं नश्यतु, तत्कार्यं तु तिष्ठतु' इति तर्काकारो बोध्यः ।

अत्र पूर्वव्याख्यान ऊहपदस्य निश्चयोऽप्यर्थः स्वीकृतः । न कृतो विशिष्ट ऊहो निश्चयः शास्त्रप्रवृत्तिविषयो यैरिति व्याख्यानात्[4] ।

---

1. न्या. म., तर्क. प्र., पृ. १४७ ।
2. न्या. म., तर्क. प्र., पृ. १४६ ।
3. परि. शे., प्र. २, परिभाषा-५६ ।
4. तदेव ।

व्याकरणाध्ययनप्रयोजनप्रतिपादने महाभाष्ये रक्षोहागमलघ्वसन्देहाः प्रयोजनमित्युक्तम्[1] । तत्रोहपदेन मन्त्रसामसंस्कारविषयकस्त्रिविध ऊहो गृह्यते[2] । तत्र मन्त्रविषयक एव ऊहः प्रदर्शितः, "अग्नये त्वा जुष्टं निर्वपामि" इत्यत्र 'अग्नये' इत्यस्य स्थाने 'सूर्याय' इति प्रयोगरूपः । एवं च विकृतियागीयमन्त्रे आनुपूर्वीविशेषकल्पनारूपोऽयमूहः, न तूक्तारोपात्मकतर्करूप इति क्वचिदेवोहपदेन तर्कव्यवहारः, क्वचिदन्य एवेति सरणिरभ्युपेता शब्दशास्त्रे ।

### तर्कदोषनिरूपणम्

न्यायशास्त्रे त्रयो दोषास्तर्क उक्ताः, तेऽत्र शास्त्रेऽपि सम्मान्यन्ते । तद्रहित एव तर्कः समीचीनः, अन्यथा तु तर्काभास एव । त्रयो दोषाश्च–(१) इष्टापत्तिः, (२) मूलशैथिल्यम्, (३) विपर्यये तर्ककोटिकमात्रापर्यवसानं चेति । तत्र यदि ह्रदो निर्वह्निः स्यात्, तर्हि निर्धूमः स्यादिति प्रथमो दोषः । ह्रदो यदि निर्वह्निः स्यात्, तर्हि द्रव्यं न स्यादिति द्वितीयः, वह्न्यभावादेर्द्रव्यत्वाभावाद्यव्याप्यत्वात् । रूपे चक्षुर्ग्राह्यत्वशङ्कानिरासतात्पर्यके रूपं चक्षुरितराग्राह्यत्वे सति चक्षुर्ग्राह्यं न स्यात्, तर्हि ग्राह्यं न स्यादित्यादिस्तृतीयः, चक्षुर्ग्राह्यत्वात्मककोटिमात्रस्यासिद्धेः[3] ।

### तर्कभेदानां निरूपणम्

व्याप्यारोपेण व्यापकारोपरूपः, किं वा अनिष्टप्रसञ्जनरूपो व्यभिचारशङ्कानिर्वर्तकस्तर्क उक्तः ? इदानीं तस्य भेदा निरूप्यन्ते ये महाभाष्यादौ बहुशो व्यवहृता दृश्यन्ते । तथा हि–आत्माश्रयान्योन्याश्रयचक्रकानवस्थादिभेदैः पूर्वोक्तद्विविधोऽपि तर्को बहुविधोऽवगन्तव्यः ।

### आत्माश्रयनिरूपणम्

तत्र प्रथमस्तावदात्माश्रयः । आत्मानमाश्रयतेऽसौ, आत्मन आश्रयो यत्रासौ वा आत्माश्रयस्तर्कः, यथा–"एकवचनत्वं यदि एकत्ववाचकत्वमेव, तदा एकत्वरूपार्थनिष्ठवाच्यतानिरूपितवाचकतावच्छेदकमेकत्ववाचकत्वरूपमेकवचनत्वं स्यात्, तत्र च वाचकतावच्छेदकशरीरे वाचकतायाः प्रवेशाद् आत्मन एव समाश्रयेण अवच्छेद्यावच्छेदकभावनिर्वाहो न स्यात्, ततश्च शक्तिग्रहो दुर्घटः स्यात्"[4] इति ।

---

1. म. भा., वा. १/१/१।
2. शाब. भा. ९/१/१ ।
3. न्या. सि. मु., किरणा., प्रत्येकगुणनिरू., कारि. १३७, पृ. ४५२ ।
4. "न चैकत्वादिवाचकत्वं तत्, वाचकतायाः शक्ततावच्छेदकत्वे आत्माश्रयात्" ।
(व्यु. वा., प्रथमाकारकम्, जयाटीकासहितः, पृ. पृ. १५०)

व्यवहृतश्चायं तर्कः शब्दकौस्तुभे श्रीभट्टोजिदीक्षितेन–"तथा वैयाकरणानामपि व्याकरणसूत्रघटकशब्देषु व्याकरणादेव साधुत्वबोधे तदुत्तरकाले च वाक्यार्थावगतौ आत्माश्रयान्योऽन्याश्रयचक्रकाणां दुर्वारत्वादिति दिक्"[1] इति ।

अत्र हि व्याकरणसूत्रघटकशब्देषु यदि व्याकरणसूत्रेणैव साधुत्वज्ञानम्, तर्हि तावत्काममात्माश्रय आपतति, स्वेनैव स्वस्य साधनात् । स्वेन स्वस्य या सिद्धिस्तस्या एवात्माश्रयदोषतया सङ्कीर्तनात् । यथा पूर्वत्र स्थले वाचकतारूपस्य स्वस्य ग्रहेणैव वाचकतारूपशक्तेर्ग्रह एकवचनपदे स्यादिति अयं दोष उद्भावितः ।

मीमांसकनिकायेऽपि अस्य दोषस्येदमेव लक्षणमुक्तमस्ति–"स्वेनैव स्वस्य सिद्धिर्या तदात्माश्रयदूषणम्"[2] इति ।

## अन्योऽन्याश्रयनिरूपणम्

द्वितीयोऽयमन्योऽन्याश्रयदोषः परस्परं सापेक्षत्वलक्षणः[3] पदे पदे व्याकरण-शास्त्र उट्टङ्कितोऽस्ति । यथा अनुपदमेव शब्दकौस्तुभोक्तिरेतद्विषये प्रदर्शितैव । तत्र हि व्याकरणसूत्रजबोधोत्तरं तद्घटकशब्दसाधुत्वबोधः, तदुत्तरं च तत्तच्छब्दघटित-सूत्रजबोध इति ज्ञप्तौ द्वयोरन्योऽन्याश्रय आगतः । वृद्धिरादैजिति सूत्रे स्वयमेव भगवता भाष्यकृता अयं दोष उपस्थापितः ।

"सतो वृद्ध्यादिषु संज्ञाभावात् तदाश्रये इतरेतराश्रयत्वादप्रसिद्धिः सतः संज्ञिनः संज्ञाभावात् तदाश्रये संज्ञाश्रये संज्ञिनि वृद्ध्यादिषु इतरेतराश्रयत्वादप्रसिद्धिः । का इतरेतराश्रयता ? सतामादैचां संज्ञया भवितव्यम्, संज्ञया चादैचो भाव्यन्ते, तदितरेतराश्रयं भवति । इतरेतराश्रयाणि च कार्याणि न प्रकल्पन्ते । तद्यथा नौर्नावि बद्धा नेतरत्राणाय भवति"[4] इति ।

द्वयोरुत्पत्तौ स्थितौ ज्ञप्तौ वान्योऽन्याश्रयादीनां दोषत्वेन सङ्कीर्तनात् । प्रकृते उत्पत्तिज्ञप्त्योरयं दोष इति स्फुटीकृतमुद्द्योते । तथा हि– "मृजेर्वृद्धिरिति सूत्रजबोधा-धीना आदैचामुत्पत्तिः, तदधीनस्तत्सूत्रजबोधो वृद्धिपदार्थबोधनद्वारा इति वृद्धिविधायक-सूत्रात्मकवाक्यार्थाप्रसिद्धिः स्यात्"[5] इति ।

---

1. म. भा., स. कौ. १/१/१ ।
2. मानमे. कारि. १२, पृ. १७ ।
3. ल. श. शे., टि., संज्ञाप्र. ।
4. म. भा. १/१/१; वै. भू. सा. (धात्वर्थनिर्णयः), कारि. ११, प्र. टी. च ।
5. म. भा., प्र. उ. १/१/१ ।

सिद्धान्तकौमुद्या अध्ययने 'हलन्त्यम्' इत्यस्य 'आदिरन्त्येन सहेता' इत्यनेन सहान्योऽन्याश्रयो ज्ञप्तौ प्रसिद्ध एव[1] । लकारस्येत्त्वज्ञप्त्यधीना हल्प्रत्याहारज्ञप्तिः, तदधीना च तस्येत्त्वज्ञप्तिरिति ।

"इग्यणः सम्प्रसारणम्,[2] अदर्शनं लोपः[3], तद्धितश्चासर्वविभक्तिः"[4] इत्यादि-सूत्रेष्वपि भाष्यकृतायं दोषः स्फुटं प्रस्तावितः ।

मीमांसकसम्प्रदायेऽपि अस्येदं लक्षणं समादृतमस्ति । अनेनान्यंस्ततश्चाय-मित्यन्योऽन्याश्रयं भवेत्[5] । इति ।

## न्यायदर्शने आत्माश्रयोऽन्योऽन्याश्रयश्च

स्वस्य स्वापेक्षितत्वेऽनिष्टप्रसङ्ग आत्माश्रयः । स चोत्पत्तिस्थितिज्ञप्तिद्वारा त्रिविधः । यथा यद्यदं घट एतद्घटजन्यः स्यात्, एतद्घटानधिकरणोत्तरक्षणवर्ती न स्यादिति प्रथमः[6] । यद्ययं घट एतद्घटवृत्तिः स्यात्, एतद्घटव्याप्यो न स्यादिति द्वितीयः[7] । यद्ययं घट एतद्घटज्ञानभिन्नः स्यात् ज्ञानसामग्रीजन्यः स्यादिति तृतीयः[8] ।

---

1. वै. सि. कौ., संज्ञाप्र., पृ. ३-४ ।
2. म. भा. १।१।४४ ।
3. म. भा. १।१।५९ ।
4. म. भा. १।१।३७ ।
5. मानमे., अनु. परि., कारि. १२, पृ. १७ ।
6. "यद्ययं घटः स्वस्मादेव जायेत, तर्हि स्वानधिकरणक्षणा ये स्वाधिकरणक्षणपूर्वक्षणा-स्तदुत्तरवर्तित्वमत्र (घटे) न स्यात् । यथा दण्डकपालाद्यनधिकरणीभूता ये तत्प्रागभावाधिकरणक्षणास्तदव्यवहितोत्तरवर्तित्वं घटे न सम्भवति । अस्ति चात्र घटप्रागभावाधिकरणक्षणाव्यवहितोत्तरवर्तित्वमेवेति न घटे स्वजन्यत्वमिति भावः ।" (न्या. द., वि., सू. वृ. १।१।४०, न्या. सि. मु., किरणा., पृ. ४५२)
7. "यद्ययं घट एतद्घटवृत्तिः स्यात्तदा तत्र स्वव्याप्यत्वं न स्यात्, व्याप्यत्वस्य व्यापकाधि-करणवृत्तित्वरूपत्वेनाधिकरणभिन्नत्वनियमात् । अत्र तु अधिकरणत्वमेव, न त्वधिकरणभेद इति तत्त्वम् । किं वा यद्वृत्ति यद् भवति तत् तद्व्याप्यमिति नियमेन स्वाधिकरणवृत्ति एव स्वव्याप्यं भवति, न तु स्ववृत्ति इति दोषोद्भावनम् । अस्ति च स्वव्याप्यमिति न स्ववृत्तित्वमिति परिहारः" । (न्या. द. वि., सू. वृ. १।१।४०; न्या. सि. मु., किर., पृ., ४५२)
8. "अत्रापाद्यकदलं परमताभिप्रायेण । विज्ञानवादिबौद्धमतेनेयं शङ्का क्रियेत चेत्, तदा ज्ञानसामग्रीजन्यत्वमापाद्य सा शङ्कापनेया । अस्ति चात्र स्वस्य (घटस्य) ज्ञानद्वारा स्वापेक्षा । यदि स्वं स्वज्ञानविषयः स्यादिति शङ्क्येत, तदा इष्टापत्तिमेव कुर्यात् ।" इति । (न्या. द., वि. सू. वृ. १।१।४०; न्या. सि. मु., किर., पृ. ४५२)

एवमेव तदपेक्षापेक्षितत्वनिबन्धनोऽनिष्टप्रसङ्गोऽन्योऽन्याश्रयः। सोऽपि पूर्ववत् त्रिविधस्तत्र प्रथमो यथा–'यद्येतौ बीजवृक्षौ अन्योऽन्यजन्यौ स्याताम्, तदा उभयभिन्नौ स्याताम्, एकासिद्ध्या वा उभावपि न स्याताम्। यद्वा यदि सुखदुःखे परस्पराभावात्मके स्याताम्, तदा एकासिद्ध्या उभे अपि न स्याताम्' इति। द्वितीयस्तु 'यदि सुख- दुःखस्थितिः परस्परासाधारणकारणादृष्टजन्या स्यात्, परस्परविजातीयप्रतियोगिताका न स्यादिति'। तृतीयस्तु 'यदि सुखदुःखे परस्पराभावज्ञानाभिन्ने स्याताम्, तर्हि ज्ञानसामग्रीजन्ये स्याताम् इति'।

**चक्रकदोषनिरूपणम्**

त्रयाणां तदधिकानां वा परस्परं सापेक्षत्वं चक्रकदोष उच्यते। "धातोः" इति सूत्रे भाष्येऽयं दोषः प्रस्तावितोऽस्ति। तत्र हि–"धातोरित्यस्याधिकारो यदि आतृतीयाध्यायसमाप्तेः, तदा 'आतः' इति सूत्रे धातोः कथमन्वयः ? इति विचारे धातुग्रहणस्य विहितविशेषणत्वम्, आत इत्यस्य आनन्तर्य्यविशेषणत्वं च स्वीकृत्य 'अलुनन्' इत्यत्रापि 'झेर्जुस्' प्राप्नोति, क्षिप्रत्ययस्य धातुविहितत्वात्, आकारान्तात् परत्वाच्चेति दोषमुद्भाव्य, नैष दोषः। लोपे कृते न भविष्यति, नात्र लोपः प्राप्नोति, किं कारणम्, ? अन्तिभावेन बाध्यते। नात्रान्तिभावः प्राप्नोति, किं कारणम् ? लोपेन बाध्यते। लोप ईत्वेन, ईत्वमन्तिभावेन, अन्तिभावो जुस्भावेन, जुस्भावो लोपेनेति चक्रकमव्यवस्था प्रसज्यते" इति सूत्रचतुष्टयेन कार्यचतुष्टयस्य परस्परं प्रसङ्गरूप उक्तो दोषः सङ्केतितः। अत्र चक्रकदोषोऽव्यवस्थापदेनापि भाष्य उद्द्योते च स्मृतः। अत एवाग्रे न ह्यव्यवस्थाकारिणा शास्त्रेण भवितव्यम्, शास्त्रेण नाम व्यवस्थाकारिणा भवितव्यम्। न चात्र हलादिना मुहूर्तमपि शक्यमवस्थातुम्, तावत्येवान्तिभावेन भवितव्यम्, इत्युक्त्वायं दोष आञ्जस्येन परिहृतोऽपीत्यन्यत्[1]।

एवमेव "न क्त्वा सेट्" इति सूत्रे भाष्यप्रदीपोद्द्योतेषु[2], "जनसनखनां सञ्झलोः" इत्यत्र भाष्यप्रदीपयोः[3], "असिद्धवदत्राभात्" इत्यत्र भाष्यप्रदीपोद्द्योतेषु[4] "अनुबन्धा एकान्ताः" इति परिभाषावर्णनप्रस्तावे परिभाषेन्दुशेखरे भूतितिलके[5] च बहुत्र उपन्यस्तोऽयं दोषः।

---

1. म. भा., प्र. उ. ३/१/९१।
2. म. भा., प्र. उ. १/२/२१।
3. म. भा., प्र. ६/४/४२।
4. म. भा., प्र. उ. ६/४/२२।
5. परि. शे., भूति., तत्त्वप्र., पृ. २४।

### द्वयोश्चक्रकं भवति न वा?

"ह्रस्वो नपुंसके" इति सूत्रे भाष्ये "यञेकादेशदीर्घत्वेषु ह्रस्वप्रतिषेधः" इति वार्तिकमुक्तम्– 'युगवरत्राय' इत्यादौ आकारस्य ह्रस्ववारणाय । तत्र प्रदीपः – "युगवरत्रायेति दीर्घे कृते पुनर्ह्रस्वः पुनर्दीर्घ इति चक्रकप्रसङ्गः"[1] इति । अनेन यद्यपि द्वयोरपि उक्तदोष आयाति, तथापि स्थानिवद्भावस्यापि द्विः प्रवेशेन चतुर्णामेव तत् पर्यवस्यति । अर्थाद् दीर्घे कृते (यथोद्देशपक्षे) स्थानिवद्भावेन प्रातिपदिकत्वे ह्रस्वप्रसक्तिः, ह्रस्वे च कृते स्थानिवत्त्वेनाङ्गत्वे दीर्घप्रसङ्ग इति शब्दानित्यत्वपक्षे उत्पत्तौ, नित्यत्वपक्षे तु ज्ञप्तौ अयं दोषो बोध्यः ।

एवमेव असिद्धवत्सूत्रभाष्ये प्रदीपः – "न च गुणभूभावयोश्चक्रकापत्तिर्दोषः" इति[2] । अनेनापि द्वयोरेव चक्रकं प्रतीयते । तथापि असिद्धवदित्यस्य मेलनेना– त्रापि चतुर्णामेव, न द्वयोः । तथा हि 'भूयान्' इति प्रयोगे गुणे कर्तव्ये भूभावशास्त्रस्याभीयस्यासिद्धत्वेन गुणे कृते भूभावः, एवं भूभावे कर्तव्ये आभीयस्य गुणशास्त्रस्यासिद्धत्वेन भूभावे कृते गुण इति न किमपि कार्यं सिद्ध्येत् ।

एवं चेदं दूषणं त्रयाणां तदधिकानामेव, न द्वयोरिति निष्कर्षः ।

### चक्रकविषये मतान्तराणि

पूर्वमीमांसादर्शनेऽपि उक्तदोष एतल्लक्षणक एवाभ्युपगतोऽस्ति[3] ।

उक्तं च न्यायदर्शनेऽपि "तदपेक्षापेक्षितत्वनिबन्धनोऽनिष्टप्रसङ्गश्चक्रकम्" । इदमपि ज्ञप्त्युत्पत्तिस्थितिभेदात् त्रिविधम् । तत्राद्यं तत्स्वरूपं यथा सिद्धान्तलक्षणे– "व्याप्तिः संसर्गाभावघटिता, संसर्गाभावः (संसर्गारोपजन्यप्रतीतिविषयः) जन्यता- घटितः, जन्यत्वं (तद्व्याप्यत्वे सति तन्निष्ठान्यथासिद्ध्यनिरूपकत्वम्) व्याप्तिघटितम्, व्याप्तिश्च संसर्गाभावघटिता इति । तत्र यदि व्याप्तिज्ञानं स्वग्रहसापेक्षजन्यता- ग्रहसापेक्षसंसर्गाभावग्रहसापेक्षग्रहविषयः स्यात्, तदा स्वभिन्नः स्यात्" इति । द्वितीयं तत्स्वरूपं तु "घटो यदि स्वकारणसापेक्षकारणसापेक्षकारणसापेक्षकारणात्मकः स्यात् स्वभिन्नः स्यात्" इति ।

---

1. म. भा., प्र. १।२।४७ ।
2. म. भा., प्र. ६।४।२२ ।
3. मा. मे., अनु. परि. ।

तृतीयस्थितौ तत्स्वरूपं यथा–"घटो यदि स्ववृत्तिसापेक्षवृत्तिसापेक्षवृत्तिसापेक्ष-वृत्त्यात्मकः स्यात्, स्वभिन्नः स्यात्" इति । एवं च त्रयाणां चक्रकम्– ज्ञप्तौ चेत्तर्हि ज्ञप्तिचतुष्टयघटितम्, उत्पत्तौ चेत्तदा कारणचतुष्टयघटितम्, स्थितौ चेत्तदा वृत्तिचतुष्टय-घटितं तत्स्वरूपं पर्यालोचनीयम् । चतुर्णां स दोषश्चेत्तदा ज्ञप्त्यादिपञ्चकघटितं स्वरूपम् । एवमेवोत्तरोत्तरं वर्धनीयम् । सर्वत्र च स्वभिन्नत्वं सामान्येनापादनीयम्[1] ।

## अनवस्थात्मकतर्कनिरूपणम्

अनवस्थारूपोऽनिष्टप्रसङ्गात्मकतर्कोऽपि महाभाष्ये बहुत्र उपन्यस्तः । तत्र समाप्त्यभावात्मिका अप्रामाणिककल्पनानवस्थापदेन सङ्केतिता[2] । तथा हि "समर्थः पदविधिः" इति सूत्रे भाष्य उक्तम्–"किं पुनः कारणमर्था नादिश्यन्ते, तच्च लघ्वर्थम्, लघ्वर्थं ह्यर्था नादिश्यन्ते । अवश्यं ह्यनेनार्थानादिशता केनचिच्छब्देनार्थ-निर्देशः कर्तव्यः स्यात्, तस्य च तावत् केन कृतः, येनासौ क्रियते? अथ तस्य केन कृतः, तस्य केन कृतः, तस्य केन कृतः – इत्यनवस्था च स्यात्"[3] इति ।

## अनवस्थादोषसत्त्वे का हानिः ?

नन्वस्त्वनवस्था, तथा सति व्याकरणशास्त्रे किं हीयेत इति चेत्, उच्यते–शब्दानां साधुत्वज्ञानार्थं प्रवृत्तमिदं व्याकरणशास्त्रम्, तद्दोषसत्त्वे तु तस्य तज्ज्ञापकत्वं हीयेत, शब्दानां साधुत्वव्यवस्थाया असत्त्वात् । उक्तं चैतत् स्फुटं भाष्य-प्रदीपोद्द्योतेषु[4] । तथा हि–"उच्चनीचस्यानवस्थितत्वात् संज्ञाऽप्रसिद्धिः, इदमुच्चनीच-मनवस्थितपदार्थकम्, तदेव हि कञ्चित् प्रति उच्चैर्भवति, कञ्चित् प्रति नीचैः" इति "उच्चैरुदात्तः" इति सूत्रीयं भाष्यम् । तत्र प्रदीपः – "उच्चनीचस्येति । न चानवस्थित-वस्त्वाश्रयेण साधुत्वं व्यवतिष्ठते" इति । अत्रोद्द्योतः – "नन्वस्त्वनवस्थितत्वम्, को दोषोऽत आह–न चेति" इति ।

## अव्यवस्थापदेनाप्यनवस्थादोष एवोक्तः

"उच्चैरुदात्तः" इति सूत्रे भाष्य उद्द्योतकृतोच्यते–"श्रोता हीति–आयामादीनां श्रुतिप्रकर्षानुमेयत्वात् तस्य चाव्यवस्थितत्वादव्यवस्थितत्वमिति भावः"[5] इति ।

---

1. न्या. द., विश्वनाथसूत्रवृत्तिः, अ. १, सू. ४०; न्या. सि. मु., किर. टी., पृ. ४५२ ।
2. न्या. सि. मु., किरणावलीटाका, प्र. ख., कारि. ३७ ।
3. म. भा. २।१।१।
4. म. भा., प्र. उ. १।२।२९-३० ।
5. म. भा., प्र. उ. १।२।२९-३० ।

अत्राव्यवस्थितत्वपदं तत्परमेव, एवमव्यवस्थाशब्दोऽपि । केवलं 'वि' इत्युपसर्गकृतो भेदोऽव्यवस्थाऽनवस्थयोः ।

**प्रतीतस्य प्रत्यायने (पुनः पुनर्बोधने) अनवस्थादोषः**

"कुत्सिते" इति सूत्रे भाष्ये प्रदीपकृतोक्तम्– "अनिर्धारितविशेष एवार्थे यदा प्रकृतिर्वर्तते, तदा तद्विशेषद्योतनाय स्वार्थिकः प्रत्ययो विधीयते, यदा तु निर्ज्ञातविशेष एवार्थे कुत्सितादयः शब्दा वर्तन्ते, तदा विशिष्टस्यार्थस्य प्रतीतत्वात् चरितार्थत्वात् प्रत्ययाप्रसङ्गः, प्रतीतप्रत्यायनेऽनवस्थाप्रसङ्गादिति भावः" इति[1] ।

अयमाशयः –यदि उक्तार्थानामिति न्यायं बाधित्वाज्ञातस्याप्यर्थस्य शब्देन पुनर्ज्ञापनं क्रियेत, तदा पुनः पुनरत्र कप्रत्ययापत्तिरूपानवस्था स्यात्, या च नेष्यते शब्दानां साधुत्वमभिलषद्भिः शाब्दिकैरिति ।

वाक्यपदीये तृतीयकाण्डे दिक्समुद्देशेऽवयविनां भेदनिरूपणे श्रीहेलाराजेन चक्रकमनवस्था चेति तर्कद्वयं निरूपितमस्ति[2]। तत्रैव साधनसमुद्देशे तु "सत एव शक्त्यनवस्थायां शक्त्यन्तरेण योगादनवस्थाऽपि नास्ति" इत्युक्त्या[3] अस्या दोषत्वमाशङ्क्य तत्र स्थले निराकृतमपि इत्यन्यत् ।

**लाघवगौरवे असम्भवश्चापि दोषः**

"समर्थः पदविधिः" इति सूत्रे भाष्यप्रदीपोद्द्योतेषु अनवस्थाया गौरवस्यासम्भवस्य च दोषतया स्फुटं प्रतिपादनमस्ति[4]। तत्र हि यथा सूत्रकृता प्रकृतिप्रत्ययोपदेशः कृतः, तथा वाक्यभेदेनार्थादेशनमपि कथं न कृतमिति सन्देहे समाहितं भाष्यकृता–"लघ्वर्थमिति । लाघवार्थमर्था नादिष्टाः, अन्यथानवस्था गौरवं च प्रसज्येत । किञ्च, धातुप्रातिपदिकप्रत्ययादीनामर्थादेशने सामर्थ्याभावादसम्भवोऽपि स्यात्" इति । तत्र प्रदीपकृता–गौरवानवस्थासम्भवाः परस्परान्तर्भावेण न पृथगुपन्यसितुमर्हा इत्याशङ्क्य दोषबाहुल्यं प्रतिपादयितुं भेदेनोक्तिरिति समाहितम् । अनेन गौरवासम्भवयोरपि दोषत्वं स्पष्टमेवायाति । लाघवं यद्यपि इष्टं वस्तु वर्तते,

---

1. म. भा., प्र. ५।३।७४ ।
2. वा. प., हे. टी. ३।६।१६ ।
3. वा. प., हे. टी. ३।७।३।
4. म. भा., प्र. उ. २।१।१।

शाब्दिकानां निकाये तु अर्धमात्रालाघवेन पुत्रोत्सवाभिमानः प्रसिद्धिमारूढ एव तथापि क्वचित्तदपि अनिष्टतयाभ्युपगम्यत एव, यथा बहुभिः शब्दैर्बोधनीयशिष्याय अल्पशब्दप्रयोगः, बह्वायाससाध्येऽनुष्ठानादौ लघ्वायासप्रयोग इत्यादि ।

अत एव सूत्राक्षरेष्वेव लाघवगौरवचर्चायाः प्रामाणिकत्वमभ्युपयन् उद्द्योतकृद् ब्रवीति– "न च नेत्येव सिद्धे पुंवद्वचनं व्यर्थम्, वार्त्तिकाक्षरेषु लाघवगौरव-विचाराभावादित्याहुः" इति[1] ।

"ईयसो बुहव्रीहौ पुंवत्" इति वार्त्तिकमुद्दिश्येयमुक्तिः । अत्र च वार्त्तिके पुंवद्वचनमिति ग्रहणमेवात्र मानम्, अन्यथा लाघवाद् न इत्येव ब्रूयुः । एवं चेदृशेषु लाघवमनिष्टप्रसञ्जनरूपस्तर्क एव ।

गौरवमपि न सर्वत्र दोष एव , अपि तु क्वचित् तदपि गुण एव । यथा फलमुखं गौरवम् ।

प्रथमाध्याये "तस्यादित" इति सूत्रे उक्तं भाष्यकृता– "एवं तर्हि उभयमनेन क्रियते । अन्वाख्यानं च संज्ञा च" इति । तत्रोभयमिति प्रतीकमादायोक्तं प्रदीपकृता– "सत्यप्यक्षरगौरवे महतोऽर्थस्य व्याप्तिर्भवति, सुखेन विभागस्यापि परिज्ञानात्" इति । तत्रैवोक्तं श्रीनागेशभट्टेनोद्द्योते–"सत्यपि इति । प्रयोजन-विशेषलाभाद् गौरवं न दोषाय इति भावः" इति[2] ।

उक्तं च न्यायसिद्धान्तमुक्तावल्यां विश्वनाथभट्टाचार्येण– "इत्थं च यत्र ज्ञानद्वयम्, तत्रापि विशिष्टज्ञानं कल्पनीयम्, फलमुखगौरवस्यादोषत्वात्" इति[3] ।

उक्तभाष्यादितोऽत्र कल्पनाधिक्यं गौरवम्, अल्पकल्पना लाघवम्, उक्तिसम्भवा-भावोऽसम्भव इति बोध्यम् । एवमेव विरुद्धसमुच्चयरूपो व्याघातः[4], अनिष्टान्त-रापादकोक्तिरूपा प्रतिवन्दी[5] च दोषतया अनेकत्राम्नायते शब्दशास्त्रे ।

**अनवस्थादिविषये दर्शनान्तरविचारः**

व्याकरणदर्शनवद् मीमांसादर्शनेऽपि अनवस्थादीनां स्वरूपाणि कथितानि । यथा–

---

1. म. भा., प्र. उ. १।२।४८ ।
2. म. भा, प्र. उ. १।२।३२ ।
3. न्या. सि. मु., अनु. ख., कारि. ६८, पृ. २९८ ।
4. ल. श. शे., कारकप्र., सदीपक., पृ. ५६२ ।
5. वै. भू. सा., सु. टी., समासशक्तिप्र., पृ. ९२ ।

**अतीतास्पृष्टमन्यान्यग्रहणं त्वनवस्थितिः ।**
**गौरवं लाघवं चेति तर्कौ सार्वत्रिकावुभौ ॥**
**गौरवं कल्पनाधिक्यं लाघवं त्वल्पकल्पना ॥**
**दोषप्रसङ्गरूपत्वं गौरवस्यैव विद्यते ।**
**साध्ये गुणकथाद्वारा लाघवस्य प्रसङ्गता**[1] ॥ इति ।

न्यायशास्त्रे "अव्यवस्थितपरम्परोपाधीनामनिष्टप्रसङ्गरूपस्तर्कोऽनवस्था" इत्युच्यते । यथा–"यदि घटत्वं घटजन्यत्वव्याप्यं स्यात्, तर्हि कपालसमवेतव्याप्यं न स्यात्" इति ।

लाघवगौरवादिकं तु प्रसङ्गानात्मकत्वान्न तर्कः, किन्तु प्रमाणसहकारित्वरूपसाधर्म्यात् तथा व्यवहारः। एवमेव प्रथमोपस्थितत्वविनिगमनाविरहादीनामपि स्थितिः । तदन्यबाधितार्थप्रसङ्गरूपोऽपि तर्कभेदस्तत्रोक्तः – "धूमो यदि वह्निव्यभिचारी स्यात्, तर्हि वह्निजन्यो न स्यात्" इति[2] ।

अद्वैतदर्शने तु "आत्माश्रयोऽन्योऽन्याश्रयश्चक्रकं व्याघातोऽनवस्था प्रतिवन्दी चेत्यापाद्यैर्भिद्यमाना षट्तर्की इष्यते"[3] इत्येवं षट् तर्का उपवर्णिताः सन्ति । एतेषां लक्षणान्यपि उक्तानि सन्ति ।

## अथोपाधिनिरूपणम्

इदानीं व्यभिचारशङ्कानिवर्तकतर्कनिरूपणानन्तरं व्यभिचारशङ्काकारणीभूतज्ञानविषयत्वेनोपाधेः स्मरणे सति प्रसङ्गसङ्गत्या तन्निरूपणमारभ्यते–

अनेन परकीयव्याप्तिग्रहस्य प्रतिबन्धः क्रियत इति विजयरूपमेतस्य फलं बोध्यम् ।

यद्यपि उपाधेर्हेतुदोषतया हेत्वाभासप्रकरण एवास्य निरूपणमुचितम्, तथापि व्यभिचारात्मकदोषोद्भावकस्यास्य हेत्वाभासत्वमनङ्गीकर्तृणां मतेन ततः पूर्वमेव निरूपणं क्रियत इति भावः[4] ।

---

1. मानमे., प्र. परि., कारि. १३-१५, पृ. १७ ।
2. न्या. द., वि. सू. वृ. १।१।४० । न्या. सि. मु., किरणावली, कारि. १३७, पृ. ४५२ ।
3. खण्डनख. खा., च. परि. ।
4. न्या. सि. मु., किरणावलीटीका, कारि. १३८, पृ. ४५३ ।

**उपाधेर्लक्षणम्**

साध्यव्यापकत्वे सति साधनाव्यापकत्वमुपाधिलक्षणम् । स्फुटं चैतत् परिज्ञायते– "विषम उपन्यासः, नैको द्रष्टा आदित्यमनेकाधिकरणस्थं युगपद् देशपृथक्त्वेषूपलभते, अकारं पुनरुपलभते"[1] इति भाष्यग्रन्थेन । तथा हि– तत्रानेकदेशेषूपलभ्यमानोऽकारादिः पक्षतया ग्राह्यः, ऐक्यं साध्यतया ग्राह्यम्, प्रत्यभिज्ञायमानत्वं हेतुत्वेनोपादेयम् ।

अस्मिंश्च हेतौ "एकद्रष्टृकानेकदेशोपलब्धिविषयत्वाभावरूप उपाधिर्विद्यते । यतो हि ऐक्यरूपसाधयस्य व्यापकोऽयम् । यत्र यत्र ऐक्यम्, तत्र तत्र ईदृश उपाधिः, यथा आदित्यादौ । प्रत्यभिज्ञायमानत्वरूपसाधनस्य चाव्यापकः, आदित्यादिदृष्टान्ते द्वयोः सत्त्वेऽपि अकारादिपक्षे व्यभिचारात्, हेतोस्तत्र सत्त्वेऽपि उक्तोपाधेरसत्त्वात्, "अकारं पुनरुपलभते" इति भाष्योक्त्या तादृशोपलब्धिविषयत्वस्यैव तत्र सत्त्वात् । स्फुटं चैतदत्रैवोद्द्योते राजलक्ष्म्यां च[2] ।

**न्यायदर्शनसम्मतं परिष्कृतमुपाधिलक्षणम्**

साध्यव्यापकत्वे सति साधनाव्यापकत्वरूपं लक्षणं सोपाधि हेतौ न संघटते, सिद्धिजनकत्वरूपसाधनत्वस्य तत्राभावात्, तत्रत्यसाध्ये सिद्धिविषयत्वरूपसाध्यत्वस्य चाभावात् । अतः साध्यसाधनशब्दाभ्यां साध्यसाधनत्वाभ्यामभिमतयोर्ग्रहणमिति साध्यत्वाभिमतव्यापकत्वे सतीत्यादि लक्षणमुन्नेयम् ।

वस्तुतस्तु अभिमतत्वनिवेशेऽपि यत्र नाभिमानः, तत्राव्याप्तिरेव स्यादिति यो यदवच्छिन्नव्यापकत्वे सति यदवच्छिन्नाव्यापकः, स तदवच्छिन्नसाध्यकतदवच्छिन्नहेतौ उपाधिरित्यत्र तात्पर्यमवसेयम् । 'स श्यामः, मित्रातनयत्वात्' इत्यत्र यद्धर्मपदेन मित्रातनयत्वमादाय तस्यैव साध्यसाधनयोर्विशेषणत्वस्वीकारेण शाकपाकजत्वरूपे उपाधौ लक्षणसमन्वयः कार्यः । लक्षणे दलद्वयेऽपि यत्पदेन एक एव कश्चन धर्मो ग्राह्यः । स्पष्टं चैतत् सर्वं न्यायसिद्धान्तमुक्तावल्यां दिनकर्यादौ च[3] ।

**शब्दशास्त्रेऽपि इदं लक्षणम्**

व्याकरणदर्शनेऽपि न्यायशास्त्रीयं परिष्कृतं लक्षणमभ्युपेयते । तथा हि भूषणसारे निपातार्थनिर्णये–प्रादीनां द्योतकता वाचकता वा यथेच्छं स्वीकार्या, परन्तु तस्या अवच्छेदकता तु सामान्यधर्मे प्रमाणानां पक्षपाताद् निपातत्व एवं स्वीकरणीयेति सिद्धान्तितम् ।

---

1. म. भा. नवा., राजलक्ष्मी-टीका., पृ. ९५ ।
2. म. भा. नवा., उ., रा. ल., पृ. ९५ ।
3. न्या. सि. मु., दि. रा., कारि. १३८, पृ. ४५५-४५६ ।

**अत्र दर्पणकृतामाशयः**

निपातत्वस्य व्यापकत्वादधिकसंग्राहकत्वेऽपि विशेषस्योपसर्गत्वस्याप्येकत्वेन तस्यैवावच्छेदकत्वमुचितम् । यथा व्यापारत्वस्याधिकसंग्राहकत्वेऽपि कृतित्वस्यैवाख्यातशक्यताऽवच्छेकत्वमङ्गीकृतं तार्किकप्रवरैः, तद्वत् । न च प्रादीनां द्योतकता निपातत्वलिङ्गेनैव सेत्स्यतीति वाच्यम्, तस्योपसर्गत्वरूपोपाधिमत्तया तदसाधकत्वात् । न च चेष्टादौ साध्याव्यापकत्वान्न तस्योपाधित्वमिति वाच्यम्, शुद्धसाध्याव्यापकत्वेऽपि निपातत्वरूपसाधनधर्मावच्छिन्नसाध्यव्यापकत्वसम्भवात् । अस्ति हि निपातत्वरूपसाधनावच्छिन्नं द्योतकत्वं यत्र, तत्रोपसर्गत्वम्, तादात्म्येन निपातत्वरूपधर्मावच्छिन्नं निपातत्वरूपसाधनं यत्रास्ति नञादौ, तत्रोपसर्गत्वं नास्त्येवेति साधनाव्यापकत्वं चेति लक्षणसमन्वयो बोध्यः । एवं च यद्धर्मपदेन निपातत्वरूपो धर्मोऽत्र गृहीतः । अग्रे च प्रकर्षाद्यर्थं पक्षीकृत्य प्रादिवाच्यत्वसाधने तदन्वयव्यतिरेकानुविधायिशाब्दधीविषयत्वहेतौ अनन्यलभ्यत्वस्योपाधित्वमाशङ्कितम्[1] ।

**॥ इत्यनुमानसमीक्षायां द्वितीयं पुष्पम् ॥**

●

---

1. वै. भू. सा., निपातार्थनि., दर्पणटीका, कारि. ४८ ।

# ॥ अथानुमानसमीक्षायां तृतीयं पुष्पम् ॥

**हेत्वाभासनिरूपणम्**

सद्धेतून्निरूप्य तत्त्वनिर्णयविजयरूपफलयोः सिद्ध्यर्थं हेत्वाभासा निरूप्यन्ते । तत्र प्रथमतो हेत्वाभाससामान्यलक्षणमुच्यते–"हेतुवदाभासन्त इति व्युत्पत्तौ आङ्पूर्वाद् भास-धातोः पचादित्वादचि समासे च सति हेत्वाभासपदं दुष्टहेतुपरत्वेन व्याचक्षतेऽभियुक्ताः"[1] ।

यद्यपि महाभाष्ये 'दर्शनं वै हेतुः'[2] इत्यादौ यथा हेतुपदं प्रयुक्तम्, तथा हेत्वाभासपदं क्वचिदपि न साक्षात् प्रयुक्तम्, नैव च सूत्रवार्त्तिकयोः, तथापि "एतदपि अनैकान्तिकम्"[3] इत्यादिभाष्यव्यवहारेण वक्ष्यमाणप्रकरणेन च शब्दशास्त्रेऽसद्धेतवोऽपि व्यवह्रियन्त एव । लघुमञ्जूषायां "वस्तुतः साध्यबाधो न हेत्वाभासः"[4] इति हेत्वाभासस्य साक्षादेव निर्देशः कृतः ।

अस्तु यदि दुष्टा हेतवो हेत्वाभासः, तर्हि दोषलक्षणं किम् ? येन दुष्टहेतवोऽपि सुज्ञायेरन्निति चेदुच्यते–

"अनुमितिकारणीभूताभावप्रतियोगियथार्थज्ञानविषयत्वम्"[5] । अथवा–"यद्विषयकत्वेन ज्ञानस्यानुमितिप्रतिबन्धकत्वं तत्त्वम्"[6] इति न्यायदर्शनसम्मतं लक्षणमत्रापि स्वीकरणीयम्, "अशिष्टाप्रतिषिद्धं चानुमतम्"[7] इति न्यायात्, "सर्ववेदपार्षदं चैतद् व्याकरणम्"[8] इति भाष्याच्च ।

**लक्षणसमन्वयप्रकारः**

अत्र सिद्धान्तभूतद्वितीयलक्षणस्य समन्वयो निरूप्यते । तत्र यद्विषयकत्वं यादृशविशिष्टविषयकत्वम्, अतो भ्रमस्यानुमितिविरोधित्वेऽपि न क्षतिः । पर्वतो

---

1. न्या. म., २ भा., पृ. १४३ ।
2. म.भा. २।२।२९, पृ. २३४ ।
3. म. भा. १।२।३0, पृ. ३५ ।
4. वै. सि. ल. म., र. प्र. युता, योग्यताप्र., पृ. ५१८ ।
5. सामान्यनि., गङ्गाटीकायुता, १ ल., पृ. ९ ।
6. सामान्यनि., गङ्गाटीकायुता, २ ल., पृ. १0३ ।
7. म. भा. १।१, पृ. ६६ ।
8. म. भा. २।१।५८ ।

वह्न्यभाववानिति विशिष्टस्याप्रसिद्धत्वान्न धूमहेतौ दोषशङ्का आयाति । हेतौ दोषस्य सत्त्वे हेतुर्दुष्ट इति व्यवहारो भवति । हेतौ दोषवत्ता च स्वविषयकज्ञानविषयप्रकृत-हेतुतावच्छेदकवत्त्वसम्बन्धेन बोध्या । एवं च यादृशविशिष्टपदेन 'ह्रदो वह्निमान्' इत्यत्र वह्न्यभाववद्ह्रदो ग्राह्यः, तद्विषयकं ज्ञानं ह्रदो वह्न्यभाववानित्याकारकम्, तच्च ह्रदो वह्निमानित्यनुमितिं प्रतिबध्नात्येवेति तत्त्वं (दोषत्वम्) वह्न्यभाववद्-ध्रदत्वरूपमत्र सम्पन्नम् । तद्वान् वह्न्यभाववद्ध्रदो दोषः । अयं च बाधाख्यो दोषः । ईदृशदोषवत्ता धूमहेतौ निरुक्तसम्बन्धेनेति उक्तानुमितौ धूमो हेतुर्दुष्टः (बाधितः) अस्ति । हेतौ सम्बन्धसङ्घटनं स्वं दोषस्तद्विषयकं ज्ञानं वह्न्यभाववान् ह्रदो धूमश्चेति समूहालम्बनात्मकम्, तद्विषयः प्रकृतहेतुतावच्छेदकधर्मो धूमत्वम्, तद्वत्ता धूम इति बोध्यम् । यादृशविशिष्टविषयकत्वनिवेशाद् बाधभ्रमे नातिव्याप्तिः । तथा हि–'पर्वतत्वावच्छेदेन सकलपर्वते वह्नेरनुमितौ पर्वतो वह्न्यभाववानिति बाधज्ञानं भ्रमात्मकमेव भवितुमर्हति, सकलपर्वते वह्न्यभावस्य असम्भवात् । एवं च यादृशविशिष्टपदेन तत्र वह्न्यभावविशिष्टपर्वतस्य ग्रहणं कर्तुं न शक्यत इति बाधभ्रमस्यानुमितिविरोधित्वेऽपि न तत्रत्ये धूमादिहेतौ बाधादिदोषशङ्कालेशः"[1] ।

## अनुमितिपदमत्रानुमितितत्करणान्यतरपरम्

उक्तलक्षणेऽनुमितिविरोधित्वमित्यनेनानुमितितत्करणान्यतरविरोधित्वमुच्यते । अतः 'पर्वतो धूमवान् वह्नेः' इत्यादौ व्यभिचारिणि नाव्याप्तिः, तत्रानुमितिं प्रति विरोधित्वाभावेऽपि व्याप्तिज्ञानं प्रति व्यभिचारनिश्चयस्य विरोधित्वसत्त्वात् । दोष-ज्ञानं यद्धेतुविषयकं भवति, तद्धेतुकानुमितावेव तत्प्रतिबन्धकं भवति, तेनैकहेतौ व्यभिचारज्ञाने सत्यपि हेत्वन्तरेणानुमितिरुत्पद्यत एव । यथा प्रमेयत्वहेतौ वह्निव्यभि-चारग्रहे सत्यपि हेत्वन्तरेण धूमेन वह्न्यनुमितिर्भवत्येव[2], इत्यादिन्यायशास्त्रसिद्धा-न्तोऽत्रापि समादरणीय एव, उक्तयुक्तेः ।

## हेत्वाभासभेदनिरूपणम्

एते पञ्चसंख्याका हेत्वाभासा न्यायशास्त्रे निरूपिताः । यथा पक्षधर्मत्वादीनि पञ्चरूपाणि हेतोरुक्तानि, तेषामेकैकापायात् पञ्च हेत्वाभासा भवन्तीति[3] तान् दर्शयति महर्षिर्गौतमः –"सव्यभिचारविरुद्धप्रकरणसमसाध्यसमातीतकाला हेत्वाभासाः" इति सूत्रेण[4] ।

---

1. न्या. सि. मु., किर. टी., कारि. ७१, पृ. २५७ ।
2. न्या. सि. मु., किर. टी., कारि., ७१, पृ. २६०-६१ ।
3. न्या. म., २ भा., हेत्वाभासप्रक., पृ. १५३ ।
4. गौ. सू., अ. १, आ. २, सू. ४ ।

न्यायसिद्धान्तमुक्तावल्यां विश्वनाथभट्टाचार्येण च–

**अनैकान्तो विरुद्धश्चाप्यसिद्धः प्रतिपक्षितः ।**
**कालात्ययापदिष्टश्च हेत्वाभासास्तु पञ्चधा**[1] ॥ इति ।

अत्रानैकान्तः सव्यभिचारः, कालात्ययापदिष्टो बाधितः[2], अन्यत् सर्वं सुगममेव । अत्र व्याकरणदर्शनेऽपि प्राय एत एव तत्र तत्र व्यवहृताः सन्ति ।

**अनैकान्तरूपो हेत्वाभासः**

तत्र प्रथममनैकान्तरूपहेत्वाभासस्य लक्षणादिकं निरूप्यते "अन्तनम् अन्तो बन्धनं सम्बन्धः" इति यावत्, 'अति बन्धने'[3] इत्यस्माद् घञ्-प्रत्ययेन[4] निष्पन्न-त्वादन्तशब्दस्य । एको नियतश्चासौ अन्तश्च एकान्तः, नियतसम्बन्धो व्याप्तिरिति यावत्, एकशब्दस्य केवलार्थकत्वे[5] नियतार्थकत्वस्यापि सम्भवात् । तत्र भवो[6] हेतुरैकान्तः, न ऐकान्तोऽनैकान्तः । अनैकान्तिक इति प्रयोगे तु एकान्तशब्दात् ठञ् बोध्यः[7] ।

"अनैकान्तिकः सव्यभिचारः" इति सूत्रं व्याचक्षाणेन श्रीजयन्तभट्टेनेयमेव व्युत्पत्ति-रादृताऽस्ति–"एकस्मिन्नन्ते भवन्नैकान्तिकः, तद्विपर्ययादनैकान्तिकः" इत्यादिना[8] ।

एवं चानया व्युत्पत्त्या साध्यनिरूपितव्याप्तिरहितत्वमस्य लक्षणमायाति । साध्यनिरूपितव्याप्तिग्रहप्रतिबन्धकग्रहविषयविशिष्टत्वमिति यावत्[9] । यथा धूमे साध्येऽग्नेर्हेतोरयं दोषः, तत्र धूमनिरूपितव्याप्तेरभावात्, अयोगोलके व्यभिचारात् । महाभाष्ये बहुत्रायमुपात्तः, यथा–'कूपः, सूपः, यूपः' इत्यादिषु वर्णव्यत्ययेन हेतुना

---

1. न्या. सि. मु., अनु. ख., कारि. ७१ ।
2. न्या. सि. मु., कि. टी., पृ. २५४ ।
3. पा. धा. पा., भ्वा. ग. प्र., धा. सं. २५ ।
4. पा. सू. ३।३।१८ ।
5. ल. श. शे., अजन्तपुं. प्र., पृ. २६७ ।
6. पा. सू. ४।३।५३ ।
7. "अध्यात्मादेष्ठञिष्यते" । (म. भा. ४।३।६०)
8. न्या. म., २ भा., पृ. १५४ ।
9. न्या. सि. मु., किर. टी., अनु. ख., पृ. २५४ ।

'वृक्षः, ऋक्षः' इत्यादिषु वर्णानुपलब्धिहेतुना चार्थान्तरं साधयित्वाऽपि स्वयमेव भगवता भाष्यकृता कृतस्तर्कः, 'हिंसेः सिंहः' इत्यादौ प्रथमस्य हेतोः, 'हन्ति, हतः' इत्यादौ द्वितीयस्य हेतोः सत्त्वेऽपि पूर्वतनस्यैवार्थस्य सत्त्वेन अर्थान्तररूपसाध्यस्यासत्त्वेन व्यभिचारः प्रदर्शितः । प्रदीपोद्योतयोश्च स्फुटीकृतः[1] ।

उदात्तानुदात्तसंज्ञयोः प्रस्तावे तु स्वयमेव भाष्यकृता अनैकान्तिकशब्देनैवायं दोषः प्रकाशितः । तत्र हि–"उच्चनीचमनवस्थितपदार्थकमिति संज्ञयोरप्रतिपत्तिः, अतो वक्तुरायामादयो धर्माः शब्दस्योच्चत्वकराः, मार्दवादयो धर्मास्तन्नीचत्वकराः" इति समाधाय 'एतदप्यनैकान्तिकम्' इति कृत्वा निराकृतम् । यद्धि अल्पप्राणस्य सर्वोच्चैस्तद्धि महाप्राणस्य सर्वनीचैरिति व्याख्यातं च ।

अत्र एते आयामादयो धर्माः शब्दगतोच्चनीचत्वान्यतरसम्पादकाः, एतत्त्वात्, इत्यनुमानाकारः । तत्र तेषु धर्मेषु एतत्त्वरूपहेतोः सत्त्वेऽपि यद्धि अल्पप्राणस्येत्यादिना साध्यासत्त्वं प्रदर्शितम्[2] ।

### वाक्यपदीय एतद्दोषविमर्शः

वाक्यपदीये प्रथमे द्वितीये च काण्डे टीकायामयं दोषः स्फुटं विमृष्टः । तत्र प्रथमकाण्डे "यत्र यत्र अभिव्यङ्ग्यत्वं तत्रानित्यत्वमिति नियमो जातौ व्यभिचरितः । यतो हि जातौ अभिव्यङ्ग्यत्वरूपो हेतुरस्ति, अनित्यत्वरूपं साध्यं नास्तीति व्याप्यमस्ति, व्यापकं नास्तीति जात्यन्तर्भावेण व्यभिचरितत्वमस्य हेतोर्बोध्यम्"[3] इत्युक्तम् । द्वितीये तु "तस्मात् संघातार्थवत्त्वादिति भागासिद्धमनैकान्तिकं च बोद्धव्यम्"[4] इत्युक्तम् ।

### विरुद्धहेत्वाभासनिरूपणम्

अथ विरुद्धो हेत्वाभासो निरूप्यते । तत्र साध्यव्यापकीभूताभावप्रतियोगित्वमस्य लक्षणम् । अयं साध्याभावग्रहसामग्रीत्वेन प्रतिबन्धकः, सत्प्रतिपक्षं प्रति हेतुः साध्याभावसाधकः, अत्र तु एक एव हेतुरिति विशेषः । यथा 'घटो नित्यः, कार्यत्वात्' इत्यत्र कार्यत्वहेतुर्विरुद्धः । नित्यत्वस्य व्यापको योऽभावः कार्यत्वाभावस्तत्प्रतियोगित्वात् कार्यत्वस्य[5] ।

---

1. नवा. म. भा., प्र. उ., पृ. १४२ ।
2. म.भा., प्र. उ. १।२।२९-३० ।
3. वा. प., टी. वृ., अ., च १।१।९५ ।
4. वा. प., टी., पु. २।११ ।
5. न्या. सि. मु., किर. टी., अनु. ख., कारि. ७१, पृ. २६४-६५ ।

महाभाष्येऽर्थान्तरसाधने प्रयुक्तो वर्णव्यत्ययो हेतुर्विरुद्धोऽपि, यतो हि "संघातान्तरकृतमेवार्थान्तरत्वं वर्णव्यत्ययादिकृतम्" इति प्रतिपादयता भगवता "उक्तसाध्यस्य व्यापकीभूतो यो वर्णव्यत्ययाभावस्तत्प्रतियोगित्वमुक्तहेतौ"[1] इति ध्वनितम् ।

**सत्प्रतिपक्षनिरूपणम्**

एकस्मिन् पक्षे विरोधिसाध्यद्वयसाधकं हेतुद्वयं यत्र यौगपद्येन प्रवर्तते, तत्रोभयोर्हेत्वोः सप्रतिपक्षितत्वव्यवहारो भवति । सन् (विद्यमानः) प्रतिकूलः पक्षः स्वसाध्याभावसाधकोऽपरहेतुर्यस्य स सत्प्रतिपक्षः, तस्य भावः सत्प्रतिपक्षता (दोषः) इति व्युत्पत्तिरपि एतल्लक्षणेऽनुकूलाऽस्ति । परिभाषेन्दुशेखरे सकृद्गताविति परिभाषायामुक्तम्– "जातिपक्षे तूद्देश्यताऽवच्छेदकाक्रान्ते क्वचिल्लक्ष्ये चरितार्थयोर्द्वयोः शास्त्रयोः सत्प्रतिपक्षन्यायेन युगपदुभयासम्भवरूपविरोधस्थले उभयोरप्यप्राप्तौ परविध्यर्थमिदमिति पुनः प्रसङ्गविज्ञानसिद्धिः" इत्याहुरिति । अत्रोच्यते भैरवमिश्रैः –"सत्प्रतिपक्षन्यायेनेति । यथा सत्प्रतिपक्षस्थले विरोधिसाध्यद्वयव्याप्यवत्तापरामर्शसत्त्वेन तदभावव्याप्यवत्ताज्ञानस्य तद्वत्ताबुद्धिं प्रति प्रतिबन्धकतया न कस्यापि साध्यस्यानुमितिः, तथात्रापि परस्परं प्रतिबन्धान्न कस्यापि शास्त्रस्य प्रवृत्तिः स्यादित्यर्थः" इति[2] ।

एवं च स्वसाध्यविरुद्धसाध्याभावव्याप्यवत्तापरामर्शकालिकसाध्यव्याप्यवत्तापरामर्शविषयहेतुत्वमस्य निष्कृष्टं लक्षणं बोध्यम् । कपिसंयोगतदभावव्याप्यवत्तापरामर्शेऽपि न हेतौ सत्प्रतिपक्षितत्वमिति विरुद्धत्वनिवेशः । स्फुटमुक्तं चैतद् न्यायसिद्धान्तमुक्तावल्यां तट्टीकायां किरणावल्यां च[3] ।

वाक्यपदीये द्वितीयकाण्डे स्वव्याख्याने श्रीपुण्यराजेन प्रत्यनुमानपदेन सत्प्रतिपक्ष एव स्मृतः[4] ।

वर्णानामर्थवत्त्वसाधनावसरे स्फुटं व्यवहृतोऽयं हेतुः । तत्र हि धातुप्रातिपदिकादिकमेकवर्णरूपं दृष्टान्तीकृत्य वर्णत्वेन हेतुनार्थवत्त्वं साधितं वर्णेषु । पुनश्च प्रतिवर्णमर्थानुपलब्धिरूपहेतुना आनर्थक्यमपि साधितम् । एवं चाग्रे स्फुटमुक्तं भगवता "उभयमिदं वर्णेषूक्तम्, अर्थवन्तोऽनर्थका इति च"[5] इति ।

---

1. म.भा., नवा., २आ., पृ. १४३ ।
2. परि. शे., भै. टी., २ प्र., परिभाषा-४०, पृ. १७९ ।
3. न्या. सि. मु., किर. टी., कारि. ७७, पृ. २८५-८६ ।
4. वा. प. २।१९६ ।
5. म. भा. १।१।५, पृ. १३८-४२ ।

## न हि हेत्वोरेव सत्प्रतिपक्षता, अपि तु दृष्टान्तयोरपि

"सरूपाणाम्०" इति सूत्रे भाष्ये उक्तम्–"न चैकमनेकाधिकरणस्थं युपगत्, न खल्वप्येकमनेकाधिकरणस्थं युगपदुपलभ्यते । न ह्येको देवदत्तो युगपत् स्रुघ्ने च भवति मथुरायां च" इति । अत्र प्रदीपः – "न चैकमिति । न च हेतु-रहितेनादित्यदृष्टान्तेन साध्यसिद्धिर्भवति, देवदत्तदृष्टान्तेन विपर्ययस्यापि साधनात्" इति । अत्रोद्द्योतः – विपर्ययस्यापीति सत्प्रतिपक्षसम्भवादित्यर्थः । एवं चानेक-द्रव्यगतैका जातिरभ्युपगन्तुमेव न शक्यत इति भावः"[1] इति ।

अनेन प्रघट्टकेन दृष्टान्तयोरपि विरुद्धसाध्यसाधकयोः सत्प्रतिपक्षितत्वं स्फुट-मायाति ।

## असिद्धाख्यहेत्वाभासनिरूपणम्

असिद्धोऽपि हेत्वाभासो व्याकरणशास्त्रे समादृत एव । तत्रासिद्धिर्दोषः क इति जिज्ञासायामुच्यते – "आश्रयासिद्धिव्याप्यत्वासिद्धि-स्वरूपासिद्धिभिन्नभिन्नत्वमेवा-सिद्धित्वम्"[2] । तत्र पक्षतावच्छेदकविशिष्टपक्षस्याभाव आश्रयासिद्धिः, यथा "अतो रोः" इत्यनेन[3] रुशब्दमुद्दिश्य उकारादेशविधाने रुरेवासिद्धः । तत्र रुशब्द उकारा-देशवान्, अतो रोरित्यस्योद्देश्यत्वात्, इत्यनुमानप्रयोगः ।

पक्षे व्याप्यत्वाभिमतस्याभावः स्वरूपासिद्धिः । "सरूपाणाम्०" इति सूत्रे भाष्योद्द्योतः– "प्रत्यर्थमित्यादिस्तु न हेतुः, अपक्षवृत्तित्वात्" इति[4] । अत्र सरूपैकशेषे पक्षे तस्यासत्त्वेन उक्तदोष आपादितः ।

भूषणसारे निपातार्थनिर्णये दर्पणकृता इयमेव स्वरूपाऽसिद्धिर्व्यवहृता । तत्र हि प्रकर्षाद्यर्थरूपे पक्षे प्रादिवाच्यत्वसाधने तदन्वयव्यतिरेकानुविधायि शाब्दधीविषयत्वं हेतुत्वेनोक्तम्[5] । तस्य च हेतोर्धातोरेव प्रकृष्टजयार्थकत्वेनोपसर्गस्य तात्पर्यग्राहकत्वात् पक्षावृत्तित्वं दर्शितम् ।

## उद्द्योतकृता असम्भवपदेनापीयं व्यवहृता

"भूवादय" इति सूत्रे भाष्ये प्रदीपः – "देशान्तरप्राप्तिलक्षणेन कार्येणाबाधितेन क्रियाख्यं कारणमनुमीयत इत्यर्थः" इति ।

---

1. म. भा., प्र. उ. १।२।६४ ।
2. न्या. सि. मु., कि. टी., कारि. ७१, पृ. २६९ ।
3. पा. सू. ६।१।११३ ।
4. म. भा., प्र. उ. १।२।६४ ।
5. वै. भू. सा., निपातार्थप्र., दर्पण., पृ. ३८४ ।

अत्रोद्द्योतः – "देशान्तरेति । संयोगजभिन्नः संयोगः क्रियाजन्यः, कारकाजन्यत्वे सति जन्यत्वादिति प्रयोगः । संयोगस्य क्रियाफलमात्रोपलक्षकत्वं बोध्यम्, फलानुमेया क्रियेति तात्पर्यम् । एतेन पचत्यादिष्वस्य हेतोरसम्भव इत्यपास्तम्"[1] इति ।

अत्र संयोगस्य क्रियाफलमात्रोपलक्षकत्वकथनेनोक्तहेतोः सर्वधातुषु प्रवृत्तिं सुघटयति उद्द्योतकारः । एवं च पचतीति स्थलेऽपि विक्लित्तिः अधिश्रयणादिव्यापारजन्या, कारकाजन्यत्वे सति जन्यत्वादिति प्रयोगो बोध्यः । अतश्च नास्त्यस्य हेतोः पक्षावृत्तित्वेनासम्भव इति हृदयम् । अत्रासम्भवपदेन स्वरूपासिद्धेरेव सङ्केतः । पक्षे हेतोरवृत्तितायां तत्स्वरूपमेव न सम्पद्यत इति स्वरूपासिद्धिरित्युच्यते, पक्षे हेतोरभावे ज्ञाते साध्यव्याप्यहेतुमान् पक्ष इति परामर्शप्रतिबन्धः फलमस्या बोध्यम्[2] । अत्रत्यं रहस्यमनुपदं बाधनिरूपणे उद्घाटयिष्यते ।

### व्याप्यत्वासिद्धिः

सोपाधिकहेतुत्वं हेतुनिष्ठ उपाधिरेव वा व्याप्यत्वासिद्धिः । तद्वान् हेतुर्व्याप्यत्वासिद्धो भवति । उक्तं च "सोपाधिको हेतुर्व्याप्यत्वासिद्धः"[3] इति । यथा 'धूमवान् वह्नेः' इत्यत्रार्द्रेन्धनसंयोगरूपोपाधियुतो वह्निर्हेतुः । किं वा अकारादिवर्णेषु ऐक्यस्य साधने प्रत्यभिज्ञायमानत्वरूपो हेतुः सोपाधिकतया पूर्वमुक्त एव[4] ।

साध्याप्रसिद्धिः साधनाप्रसिद्धिश्चात्रैवान्तर्भवति, न्यायदर्शनवत्[5] ।

### भागाऽसिद्धिः

भागेंऽशे पक्षैकदेशे हेतोरवृत्तित्वरूपा भागासिद्धिरप्यत्र शास्त्रे बहुत्रोपन्यस्ताऽस्ति । यथा–"अनर्थकास्तु प्रतिवर्णमर्थानुपलब्धेः" इति वार्त्तिकव्याख्याऽवसरे उक्तमुद्द्योते–"सर्ववर्णानां पक्षत्वे हेतोर्भागासिद्धिः स्यात्, अत आह–धात्वादि"[6] इति । अत्र "धात्वादिव्यतिरिक्ता वर्णाः पक्षीक्रियन्ते" इति प्रतीपग्रन्थस्य 'धात्वादि' इति प्रतीकमुपात्तम् । यद्यत्र वर्णत्वावच्छेदेन साध्यसिद्धिरुपेयते, तदा प्रतिवर्णमर्थानुपलम्भरूपो हेतुर्भागेऽसिद्धः स्यात्, एकवर्णात्मके धात्वादौ अस्य हेतोरभावेन तत्रानर्थक्यरूपसाध्यसाधनेऽस्यासामर्थ्यात् ।

---

1. म. भा., प्र. उ. १।३।१।
2. न्या. सि. मु., किर., पृ. २७० ।
3. तर्कसंग्रहः, दीपिका, नी. क., भा. सहितः, पृ. ११७ ।
4. अत्रैव निबन्धे, उपाधिलक्षणे ।
5. न्या. सि. मु., कि. युता., पृ. २७१ ।
6. म. भा., प्र. उ. १।१।५ ।

वाक्यपदीये द्वितीयकाण्डव्याख्यानावसरे श्रीपुण्यराजेनापि स्फुटमस्याः स्मरणं कृतम्–"तस्मात् संघातार्थवत्त्वादिति भागासिद्धम्"[1] इति ।

## बाधितहेत्वाभासनिरूपणम्

बाधाख्यदोषवान् बाधितो हेत्वाभासो निरूप्यते । अयमेव न्यायनये 'कालात्ययापदिष्टः' इत्यपि कीर्त्यते । यस्मिन् काले पक्षे साध्यं वर्तते, स साध्यस्य कालः; यस्मिन् काले तु साध्यं नोत्पन्नं नष्टं वा नैवास्तीति यावत्, तत्र साध्यकालस्यात्ययो बोध्यः । तत्रापदिष्टः प्रयुक्तः कालातिक्रमे प्रयुक्त इति यावत्, ईदृशो हेतुः 'कालात्ययापदिष्टः' इत्युच्यते[2] । एवं च पक्षे साध्याभावः, साध्याभाववत्पक्षो वा बाधदोषः, तद्वान् हेतुर्बाधित इत्युच्यते । यथा 'ह्रदो वह्निमान्, धूमात्' इत्यत्र वह्न्यभाववद्ध्रदो दोषः, तद्वान् धूमो हेतुर्बाधितः । महाभाष्ये–वर्णमात्रेऽर्थवत्त्वसाधने प्रयुक्तो वर्णत्वहेतुर्बाधित एव, वर्णमात्रे (पक्षे) अर्थवत्त्वरूपसाध्याभावात्[3] ।

## व्याकरणदर्शने पक्षे हेत्वभाव एव बाधः

इदानीं यावद् यदुक्तम्, तत् परमतमभिप्रेत्य । वस्तुतः शब्दशास्त्रे "पक्षे साध्याभावो न बाधः, अपि तु पक्षे हेतोरभावः सः" । प्रतिपादितं चैतद् महता संरम्भेण लघुमञ्जूषायां श्रीनागेशभट्टेन । तत्रोक्तं हि–"वस्तुतः साध्यबाधो न हेत्वाभासः, सर्वसाधारणबाधबुद्धिप्रतिबन्धकतयैव निर्वाहेण तस्य विशिष्य हेत्वाभासेषु ग्रहणानौचित्यात् । किन्तु हेतुबाधज्ञानस्यैव तत्त्वमुचितम् । उक्तं च न्यायभाष्यवार्त्तिककाराभ्यां तथैव" इति[4] ।

यद्यपि इतः पूर्वं लघुमञ्जूषायामेव अनुमितौ अप्रामाण्यज्ञानजनकतया बाधस्य हेत्वाभासत्वमुक्तम्, तथापि परमताभिप्रायेण तन्नेयमिति न कोऽपि विरोधः ।

एवं च पूर्वं परमताभिप्रायेण स्वरूपासिद्धिपरतया योजितौ उद्द्योतग्रन्थौ लघुमञ्जूषैकवाक्यतया बाधपरतयैव योजनीयौ ।

---

1. वा. प., पु. टी. २।२११ ।
2. "कालात्ययापदिष्टः कालातीतः" (गौ. सू. १।२।९); "यथाप्राप्तं प्रयोगकालमतीत्य हेतुरपदिश्यते, स कालात्ययापदिष्टः कालातीत इत्युच्यते" ।(न्या. म., २ भा., पृ. १६७)
3. म. भा. १।२, मा. सू. ५ ।
4. वै. सि. ल. म., योग्यतानि., र. प्र. टी., पृ. ५१९ ।

"देशान्तरप्राप्तिलक्षणेन कार्येणाबाधितेन क्रियाख्यं कारणमनुमीयते" इति कथयता श्रीकैयटेनापि एतदेव स्मारितम्[1] । क्रियायाः प्रत्यक्षतो बाधेऽपि देशान्तर-संयोगरूपकार्यस्य न बाध इति तेन लिङ्गेन कारणीभूतक्रियानुमीयत इति तद्भावः ।

यत्तु "क्ङिति च" इति सूत्रे कैयटः –परमार्थतस्तु उत्सर्गापवादयोरेकवाक्य-तायामप्राप्त्यनुमानं बाधः" इति[2] । तस्यायमाशयः – पदैकवाक्यत्वाभावेऽपवाद-शास्त्रेणोत्सर्गशास्त्रं बाध्यते, अपवादत्वात् । पदैकवाक्यतायां तु न द्वयोः पृथक् शाब्दबोध इति कथमपवादशास्त्रेणोत्सर्गशास्त्रबाध इत्यत आह–अप्राप्त्यनुमानमिति । अस्मिन् पक्षे उत्सर्गस्य तत्र तत्र लक्ष्येऽप्राप्तिरेवानुमीयत इति तदनुमितिरेव बाधो बाधफलमिति । अत्र हेतोर्दोषरूपो न बाधः, अपि तु मणिमन्त्रादिन्यायेन बाधकतारूप इति नात्र तस्य दोषतया विचारावसरः ।

## शाब्दिकनये स्वरूपासिद्धिः

ननु पक्षे हेत्वभावो यदि बाधः, तर्हि व्याकरणदर्शने स्वरूपासिद्धिः का ? इति जिज्ञासायामुच्यते–हेतोः स्वरूपमेवासिद्धं यत्र, तत्र स्वरूपासिद्धिर्व्यवहर्तव्या, साधना-प्रसिद्धिरिति यावत् । एवं च व्याप्यत्वासिद्धावेवास्या अन्तर्भावो बोध्यः । यत्तु 'अर्थवत्' सूत्रे भाष्यम्–"एवं च किल नाम कृत्वा चोद्यते समुदायस्यार्थे प्रयोगाद-वयवानामप्रसिद्धिः" इति । अत्रोद्द्योतः – "अवयवानामप्रसिद्धिरिति । अवयवमात्रादर्थगत्यभावेनावयवानामर्थवत्त्वे हेतोरप्रसिद्धिरित्यर्थः" इति[3] । तत्तु बाधितहेत्वाभासाभिप्रायकम् । तत्र हि हेतोरप्रसिद्धिरभावरूपा, इति नास्ति तत्र स्वरूपासिद्धेः स्वातन्त्र्यगन्ध इति भावः ।

## मीमांसादर्शने स्वरूपासिद्धिर्बाधश्च

मीमांसादर्शने स्वरूपासिद्धिरित्थं वर्ण्यते–यस्य वादिनः कृते यस्य हेतोः स्वरूपमसिद्धम्, तस्य वादिनः स हेतुः स्वरूपासिद्ध इति । यथा 'बुद्धो मोहरहितः, सर्वज्ञत्वात्' इत्यत्र सर्वज्ञत्वहेतुर्बौद्धेतराणां वादिनां कृते स्वरूपासिद्धः, क्वचिदपि तेषां सिद्धत्वाभावात् । उभयोरप्यसिद्धौ उभयासिद्धता बोध्या, यथा 'शशो हिंस्रः, विषाणित्वात्' इत्यत्र विषाणित्वस्य शशात्मके पक्षे वादिप्रतिवादिनोरुभयोरपि न सिद्धिरिति ।

---

1. म. भा., प्र. १।३।१ ।
2. म. भा., प्र. १।१।५ ।
3. म. भा., प्र. उ. १।२।४५ ।

बाधितो हेत्वाभासस्तु बाधितविशेषणो नाम पक्षाभास उच्यते भाट्टनय इति विवेकः[1] ।

## अव्याप्त्यतिव्याप्त्यसम्भवानां कुत्रान्तर्भावः ?

ननु बहुत्र स्थले लक्षणगता अव्याप्त्यादिदोषा निरूप्यन्ते । तत्रेदं विचार्यते यत् कस्मिन् हेत्वाभासेऽन्तर्भवन्ति एत इति ।

"गोस्त्रियोः" इतिसूत्रीयभाष्योद्योते लक्ष्यैकदेशावृत्तित्वरूपा अव्याप्तिरुच्यते, हल्ङ्यादिसूत्रे हल्ङ्याबन्ताद् विहितस्येत्यर्थकरणे 'या, सा' इत्यादावव्याप्तिः कर्तेत्यादावव्याप्तिश्चेति[2] ।

तत्र 'या' इत्यादिपक्षे सुलोपरूपसाध्यस्यानुमापकता अस्य लक्षणस्य (हल्ङ्यादिसूत्रस्य) न स्यात्, इष्यते च तत्रापि, इति पक्षैकदेशावृत्तित्वरूपा भागासिद्धिः प्रसक्ता, इयमेवाव्याप्तिपदेन[3] सङ्कीर्त्यत इति असिद्धिरूपे दोषेऽस्या अन्तर्भावः ।

लक्ष्यवृत्तित्वे सत्यलक्ष्यवृत्तित्वरूपातिव्याप्तिस्तु[4] व्यभिचारेऽन्तर्भवति । यथा "सार्वधातुकमपित्" इति सूत्रे भाष्यम्– "सार्वधातुकग्रहणं किमर्थम्? अपिदितीत्युच्यमाने आर्धधातुकस्याप्यनेनापितो ङित्त्वं प्रसज्येत–कर्ता, हर्ता" इत्यादि । अत्र प्रदीपः – "लिङ्गादव्याप्तिरतिव्याप्तिर्वेति प्रदर्शनाय सार्वधातुकग्रहणस्याक्षेपप्रतिसमाधाने भाष्यकारेणोपन्यस्ते" इति[5] । अत्र 'सार्वधातुकग्रहणाभावे कर्ता' इत्यादौ तृजादेरार्धधातुकस्याप्यपितो ङित्त्वमतिप्रसजति इति अलक्ष्ये तत्रातिव्याप्तिरेव प्रदर्शिता भगवता । तत्र तृजादौ यद्येतल्लक्षणं ङित्त्वं साधयितुं प्रवर्तेत, तदा मन्ये विपक्षवृत्तितया व्यभिचार्येव स्यात् ।

हेतोरसम्भवस्तु लक्ष्यमात्रावर्तनं[6] न्यायनये स्वरूपासिद्धौ अत्र शाब्दिकनये तु बाधेऽन्तर्भवतीति व्यवस्थाप्यताम् ।

## अवान्तरभेदानां केषाञ्चिदनिरूपणेऽपि न क्षतिः

यद्यपि साधारणासाधारणानुपसंहारिभेदेनानैकान्तिकस्त्रिविध उक्तोऽन्यत्र[7] । षट्प्रकाराः परैरनैकान्तिका इष्यन्त इति जयन्तभट्टेन परमतमनूदितम्[8], तथापि अत्र

---

1. मानमेयो., अनु. प्र., पृ. ३०-३६ ।
2. म. भा., प्र. उ. १।२।४८ ।
3. तर्कसंग्रहः, प्र. ख., दीपिका, पृ. १६ ।
4. तदेव ।
5. म. भा., प्र. १।२।४ ।
6. म. भा., प्र. उ., १।३।१ ।
7. न्या. सि. मु., दि. रा., कारि. ७२, पृ. ३३३ ।
8. न्या. म., २ भा., हेत्वाभासप्र., पृ. ११५ ।

शास्त्रे प्रतिपदमनुक्ततया भेदप्रभेदनिरूपणा अशक्यतया निष्प्रयोजनतया च नोपन्यस्यते । उक्तं च जयन्तभट्टेनैव– "अवान्तरभेदविवक्षायां तु हेत्वाभासानामियत्तानिश्चयो न शक्यक्रियः, न च सप्रयोजन इति तद्भेदप्रभेदनिरूपणमनावश्यकतयोपेक्ष्यते" इति[1] ।

अत एव च "यादृशसाध्यपक्षहेतौ यावन्तो दोषास्तावदन्यान्यत्वं तत्र हेत्वाभासत्वम्, पञ्चत्वकथनं तत्सम्भवस्थलाभिप्रायेण" इत्युक्तं श्रीविश्वनाथभट्टाचार्येण न्यायसिद्धान्तमुक्तावल्याम्[2]।

**निग्रहस्थाननिरूपणम्**

हेत्वाभासस्यापि वस्तुतो निग्रहस्थान एवान्तर्भावादिदानीं तस्यैव परिचय उपक्रम्यते–

महर्षिणा गौतमेन द्वाविंशतिधा विभज्यैकेनैव सूत्रेणोपवर्णितानि इमानि ।

"प्रतिज्ञाहानिः, प्रतिज्ञान्तरम्, प्रतिज्ञाविरोधः, प्रतिज्ञासन्न्यासः, हेत्वन्तरम्, अर्थान्तरम्, निरर्थकम्, अविज्ञातार्थम्, अपार्थकम्, अप्राप्तकालम्, न्यूनम्, अधिकम्, पुनरुक्तम्, अननुभाषणम्, अज्ञानम्, अप्रतिभा, विक्षेपः, मतानुज्ञा, पर्यनुयोज्योपेक्षणम्, निरनुयोज्यानुयोगः, अपसिद्धान्तः, हेत्वाभासाश्च निग्रहस्थानानि" इति[3] ।

निग्रहः पराजयस्तस्य स्थानानि आश्रयाः कारणमिति यावत् । प्रतिज्ञाहान्यादयो हेत्वाभासान्ता एते धर्माः पराजयहेतव इति[4] स्वस्य पराजयो मा भूत्, परस्यैव निग्रहः स्यादित्येतेषां ज्ञानमावश्यकं परकीयरीत्या अत्रापि ।

महाभाष्यादौ बहुशो व्यवहृतान्यपि । यथा सरूपसूत्रे भाष्यम्–"भवेल्लिङ्गपरिहार उपपन्नः, वचनपरिहारस्तु नोपपद्यते । यदि हि कदाचिदाकृतिरेकत्वेन युज्यते, कदाचिद् द्वित्वेन, कदाचिद् बहुत्वेन, एकाकृतिरिति प्रतिज्ञा (च) हीयेत" इति[5] ।

---

1. न्या. म., २ भा., हेत्वाभासप्र., पृ. १५४ ।
2. न्या. सि. मु., टीकाद्वय., अनु. ख., पृ. ३३२-३३३ ।
3. गौ. सू. ५/२/१।
4. न्या. म., २ भा., पृ. १९० ।
5. म. भा. १/२/६४।

"अत्र लिङ्गपरिहारे न किञ्चिद् दुष्यति, वचनपरिहारे त्वभिधीयमान एकाकृतिरिति प्रतिज्ञाहानिः, द्वित्वबहुत्वसम्बन्धस्याभ्युपगमात्" इति वदता प्रदीपकृता[1] स्फुटं प्रतिज्ञाहानिर्दोषत्वेन निर्दिष्टा । उद्द्योतकृताऽपि चानुमोदितेयमन्यत्र[2] ।

प्रतिज्ञाहानिरूपेऽस्मिन्निग्रहस्थाने स्वीकृतायाः प्रतिज्ञाया हानिर्भवति, इदमेवास्या लक्षणं परिचेयम् ।

**न्यायदर्शने प्रतिज्ञाहानेर्निरूपणम्**

न्यायमञ्जर्याम् "प्रतिदृष्टान्तधर्मानुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानिः" (५/२/२) इति गौतमसूत्रं विवृण्वता जयन्तभट्टेनोच्यते– "प्रतिज्ञासिद्धये वादिना साधनेऽभिहिते, तत्र प्रतिवादिना च दूषणे उद्भाविते, तृतीये वचसि तु वर्तमानो वादी यदि प्रतिदृष्टान्तधर्मं स्वदृष्टान्तेऽनुजानाति, तदस्य प्रतिज्ञा हीयेत, इति प्रतिज्ञाहानिर्नाम निग्रहस्थानं भवति, तद्यथा 'अनित्यः शब्द ऐन्द्रियकत्वाद् घटवत्' इत्युक्ते पर आह– 'सामान्यमैन्द्रियकमनित्यं दृष्टमित्यनैकान्तिको हेतुः' इति, तत्र साधनवाद्याह– 'सामान्यमैन्द्रियकमनित्यं दृष्टमित्यनैकान्तिको हेतुः' इति, तत्र साधनवाद्याह– 'सामान्यमैन्द्रियकं नित्यम्, तर्हि तथैव घटोऽपि नित्योऽस्तु' इति । अयमस्यैवंवदतो प्रतिज्ञाहानिर्भवति, घटस्य हि नित्यत्वे तद्दृष्टान्तबलादेव शब्दोऽपि नित्यः स्यात्" इति[3] ।

**अन्यान्यपि निग्रहस्थानानि महाभाष्ये**

प्रतिज्ञाहानिवदन्यान्यपि निग्रहस्थानानि भाष्ये सङ्केतितानि सन्ति । यथा "वृद्धिरादैच्" इति सूत्र उक्तम्–"वर्णेनाप्यनर्थकेन न भवितव्यम्, किं पुनरियता सूत्रेण" इति[4] । एवमेव "सामर्थ्ययोगान्नहि किञ्चिदत्र पश्यामि शास्त्रे यदनर्थकं स्यात्" इति[5] । एषु सर्वत्र अनर्थकं (निरर्थकम्) नाम निग्रहस्थानमेव निराकृतमस्ति । एवमेव "पूङः क्त्वा च" इति सूत्रीयं भाष्यं व्याचक्षाणः प्रदीपकृन्निर्दिशति– "पूङ इति सेडन्यतरस्यामिति चानुवर्तनात् सेटोरेव क्त्वानिष्ठयोः कित्त्वविकल्पः स्यात्" इति[6] । अत्रोद्द्योतः – "नन्विटि वा प्रसङ्ग इत्यत्र सेट् प्रकरणादिति हेतुर्न्यूनः, अत आह–अन्यतरस्याम्" इति[7] ।

---

1. म. भा., प्र. १/२/६४ ।
2. म. भा., प्र. उ. १/२/६४ ।
3. न्या. म., २ भा., पृ. १९२।
4. म. भा. १/१/१।
5. म. भा. ६/१/७७ ।
6. म. भा., प्र. १/२/२२ ।
7. म. भा., प्र. उ. १/२/२२ ।

अत्र हेतुर्न्यून इति हेतुनिष्ठं न्यूनत्वं प्रतिपादयन्नुद्द्योतकृन्न्यूनाख्यं निग्रहस्थानमेव स्मारयति ।

एवमेव यथानाम एषां लक्षणानि परिचेयानि । न्यायशास्त्रे स्फुटमुक्तान्यपि । अत्र शास्त्रेऽपि समादरणीयानि , अप्रतिषिद्धं यत्तदनुमतमेवेति न्यायात् ।

**अर्थान्तरं नाम निग्रहस्थानं वैयाकरणसम्मतमिति मञ्जरीकारः**

प्रकृतादर्थाद् अर्थान्तरमनौपयिकं यदभिधीयते, तद् अर्थान्तरं नाम निग्रहस्थानं भवति । यथा कश्चन वैयाकरणो निरवयवत्वादिहेतुना शब्दानां नित्यत्वं साधयन्नात्मनः पाणिनीयत्वं ख्यापयति ।

तस्मिन्नेवावसरे केनचित् स पृष्टः 'कस्तावद् भवतामाचार्यः, पाणिनिः ?' इति । 'भगवतो महेश्वरादक्षरसमाम्नायमधिजगाम' इति तेनोत्तरिते सति 'कः पुनर्भगवान् महेश्वरः ?' इति पुनः पृष्टो ब्रवीति–

**अचिन्त्यवेशाभरणस्य तत्त्वतो यदृच्छया यस्य निशासु ताण्डवम् ।**
**सभस्मभक्तीनि बिभर्ति मौलिना कृताञ्जलिः पादरजांसि वासवः ॥** इति ।

'कीदृशं पुनरिदं ताण्डवम्' इति प्रश्ने तत्स्वरूपमुपवर्णयन् उत्थाय नृत्यति 'तदेतदर्थान्तरं निग्रहस्थानमसाधनाङ्गवचनम्' इति वदन्न्यायमञ्जरीकारो वैयाकरणसम्मतमेतदित्यभिप्रैति[1] । अन्यथा तत्रैतदसम्प्रतिपत्तौ तं प्रति इमं दोषं नोपन्यस्येत् ।

**सूत्रकृत्सम्मतमपि निग्रहस्थानम्**

"निगृह्यानुयोगे च" इति सूत्रयता महर्षिपाणिनिनाऽपि निग्रहस्थानाभिधो दोषः स्वीकृत एव ।

**छलनिरूपणम्**

'तत्त्वाध्यवसायसंरक्षणं जल्पवितण्डयोः प्रयोजनम्' इति तदङ्गभूतस्य छलस्य जातेश्च निरूपणमावश्यकमिति[2] प्रथमं छलं निरूप्यते ।

तत्र 'वचनविघातोऽर्थविकल्पोपपत्त्या छलम्' इति[3] न्यायसम्मतमेवैतल्लक्षणमत्रापि शास्त्रेऽभिप्रेयते, महाभाष्ये तथैवास्योदाहरणात् । तथा हि–"नवेति विभाषा" इति सूत्रे इतिशब्दस्यार्थविपर्यासकत्वे 'नवेति' शब्दो निषेधविकल्पवचनः, नूतन-

---

1. न्या. म., २ भा., पृ. १९७ ।
2. न्या. म., २ भा., पृ. १६८ ।
3. गौ सू. १/२/१० ।

वचनोऽपि च । तत्र नूतनस्यार्थस्य विभाषासंज्ञाप्रसक्तौ उक्तं वार्त्तिककृता– "समानशब्दानां प्रतिषेधो वक्तव्यः,'नवा कुण्डिका, नवा घटिका" इति । तत्रोच्यते भाष्यकृता–"न वैष दोषः, तद्यथा लोके ग्रामो भवता गन्तव्यो न वा नेति गम्यते" इति[1] ।

अत्र वाक्छलेनैव कश्चन प्रवृत्तस्तन्निरोधायैव प्रतिषेधवार्त्तिकम्, भाष्यकारीयं तत्प्रत्याख्यानं च ।

यतो हि–"अनेकधा शब्दार्थे सम्भवति वक्त्रभिमतादर्थादन्यस्य कल्पनं कृत्वा तत्प्रतिषेधो वाक्छलम्' इत्युच्यते । यथा– 'केनचिदुच्यते – नवकम्बलोऽयम्' इति, तत्र तस्य नूतनकम्बलत्वरूपमभिप्रायमपलप्य कश्चन वदेत् 'कुतोऽयं नवकम्बलः ? एकस्यापि कम्बलस्याऽस्य पार्श्वेऽभावात्' इति[2] । तथा प्रकृतेऽपि नवेत्यस्य नूतनार्थत्वं परिकल्प्य कुतोऽस्य नूतनार्थपरता? लोकत एव तत्रार्थे प्रवृत्तिविघातात् ।

महार्षिगौतमेनापि "जल्पवितण्डाङ्गभूतानि छलादीनि तत्त्वाध्यवसायसंरक्षणार्थम्, कण्टकशाखापरिवरणवत्" इति सूत्रयता छलादेः प्रयोजनं सम्यगुक्तमेव[3] ।

**शिष्यस्य वादिनो वा बुद्धिपरीक्षायै असदुत्तररूपाया जातेः प्रयोगः**

तत्र च "साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः" इति न्यायसम्मतलक्षणेनैव[4] व्यवहर्तव्यं शाब्दिकैरपि, एतदीयभाष्योदाहरणस्य तथैव सङ्गमनात् । तथा हि– "अनुर्लक्षणे किमर्थमिदमुच्यते? कर्मप्रवचनीयसंज्ञा यथा स्यात् । गत्युपसर्गसंज्ञे मा भूतामिति । किञ्च स्यात् ? शाकल्यस्य संहितामनुप्रावर्षत्, गतिर्गताविति निघातः प्रसज्येत । यद्येवं वेरपि कर्मप्रवचनीयसंज्ञा वक्तव्या, वेरपि निघातो नेष्यते, प्रादेशं प्रादेशं विपरिलिखति" इति भाष्यम् । अत्र प्रदीपः – "किमर्थमिति । लक्षणेनेत्थम्भूताख्यानेत्यनेनैव सिद्धत्वादिति प्रश्नः । इतरः शिष्यबुद्धिपरीक्षार्थं जात्युत्तरं ददाति–कर्मप्रवचनीयसंज्ञा" इति । अत्रोद्द्योतः – "जात्युत्तरम्, असदुत्तरम् । तत्त्वं च लक्षणेत्थमित्यनेनैव गत्यादिसंज्ञाबाधसिद्धेरिति भावः" इति[5] ।

अत्र अनोर्यथा निघातो नेष्टस्तथैव वेरपि नेष्ट इति साधर्म्येण प्रतीपम् (प्रतिकूलम्) अवस्थानमस्त्येव प्रतिवादिन इति जात्युत्तरमिदं व्यवहृतं दार्शनिकतत्त्वविद्भिः ।

---

1. म. भा. १/१/४३ ।
2. न्या. म., २ भा., पृ. १७२ ।
3. न्या. सू. ४/२/५० ।
4. गो. सू. १/२/१८; न्या. म., पृ. १७३ ।
5. म. भा , प्र. उ. १/४/८४ ।

**क्व चास्या जातेः प्रयोगः, साधनाभासे सम्यक् साधने वा ?**

साधनाभासे सम्यक्साधने वा क्व जातेः प्रयोग इति प्रश्ने न्यायमञ्जरीकृतोच्यते "उभयत्रापि इति । तथा हि ज्ञाततत्त्वस्य मुमुक्षोस्तत्प्रतिकूलवादिना केनचिदाक्षिप्तस्य तत्प्रयुक्त तत्त्वप्रतिक्षेपबलात् साधनाभास एव सम्यग्दूषणमपश्यतो जातिप्रयोगावसरः । ज्ञात्वाऽपि साधनाभासं यथा तथा सत्त्वरमेव निर्भर्त्स्यतामयं दुराचार इति पार्श्वस्थितसुकुमारमतिशिष्यजनोत्साहजननाय जात्याद्याडम्बरविरचनमुचितमेव मुमुक्षोः। अत एव च भाष्यकृता प्रथमं साधनाभासविषय एव जात्युदाहरणं दर्शितम् । लाभादि-कामानां तु सम्यक् साधनेऽपि प्रयुक्ते युक्त एव जात्याद्युपक्रमः । इतरथा हि निःसंशय एव पराजयः स्यात्" इति[1] ।

पूर्वोक्ते कर्मप्रवचनीयसंज्ञाप्रयोज्यगत्यादिसंज्ञाबाधरूपनिघाताभावस्य साधनं तु न मुख्यम्, अपि तु आभासत एव, लक्षणेत्थमित्यनेन सिद्धत्वात् । अतस्तत्र जातेः प्रयोगः साधनाभास एव । किं वा गत्यादिसंज्ञाबाधाय नेदं साधनमनुर्लक्षण इति, अपि तु परस्यास्तृतीयाया बाधनार्थमेवेति गत्यादिसंज्ञाबाधन इदं सूत्रं साधनाभासत्वेन मन्तव्यमेव ।

एवमेव दर्शनान्तरे भूयान् प्रपञ्चो जातेः प्रदर्शितः, स्वशास्त्रेऽनुपयोगान्नोपन्यस्तः ।

**वादस्य जल्पवितण्डयोरपि चात्र शास्त्रे प्रयोजनम्**

न्यायदर्शने त्रिविधाः कथा न्यायपरीक्षाद्वारकवस्तुविचारयोग्याः कथिताः, वादो जल्पो वितण्डा चेति[2] । ताश्चात्रापि व्याकरणदर्शनेऽभ्युपगताः सन्ति । तत्र गुरुशिष्याभ्यां सब्रह्मचारिभ्यां वीतरागाभ्यां वा क्रियमाणा स्पर्धानुबन्धविधुरा निर्णयफला या कथा सा वादकथा[3] । अत्र शास्त्रे महाभाष्यं वादकथाप्रधानमेव । यथा 'कानि खलु शब्दानुशासनस्य प्रयोजनानि' ? इति पृष्ट आचार्य उत्तरयति– 'रक्षोहागमलघ्वसन्देहाः प्रयोजनम्' इति । प्रश्नोत्तररूपेयमीदृशी अन्या च निर्णय-पर्यवसाना कथा वादरूपैव सङ्केतिता भाष्ये[4] ।

**जल्पकथा न्यायशास्त्रचर्चिता**

स्वपक्षस्थापनपुरस्सरं परपक्षप्रत्याख्यानं यत्र, सा कथा जल्प इत्युच्यते । अनया च परस्य पराजयः, आत्मजयः, आत्मरक्षा वा भवति । छलादीनि अस्या अङ्गानी-

1. न्या. म., २ भा., जातिप्र., पृ. १७५ ।
2. न्या. म., २ भा., जातिप्र., पृ. १५० ।
3. न्या. म., २ भा., वादप्र., पृ. १५१ ।
4. म. भा., पस्प., पृ. १६–१७ ।

त्युक्तमेव । उक्तं च मञ्जरीकारेण–"यदा जानन्नपि परपक्षक्रशिमानं स्वपक्षे द्रढिमानं च क्वचिदवसरे परप्रयुक्ते साधने दूषणं सपदि न पश्यति, स्वपक्षसाधनं च झटिति न स्मरति, तदा छलादिभिरप्युपक्रम्य परमभिभवति, आत्मानं च रक्षति" इति[1] ।

वीतरागस्य मुमुक्षोरपि इयं कथा क्वचित् प्रसङ्गे आवश्यकी, अन्यथा कश्चन नास्तिकस्तत्पार्श्वमागत्य गर्वगद्गदया गिरा ब्रूयात्–'भोः तपस्विन्! क्व वेदाः? क्व च तत्प्रामाण्यम्?, क्व चात्मज्ञानम्? क्व मोक्षः?' इत्यादि । एवं मन्दं विहसन्त-मास्तिकवर्गञ्चाकुलयन्तं तं यदि आस्तिको मुमुक्षुरुपेक्षेत, न तिरस्कुर्यान्न वा छलादि-प्रयोगेण शमयेत्, तदा तस्मिन् गते सति शिष्यगणा उत्थाय ब्रूयुः – 'अहो! वयमस्थाने क्लिष्टाः स्मः, अस्माकं न्यायवित्तम आचार्योऽन्येन पण्डितेन पराजितो वेदस्य प्रामाण्यरक्षणेऽशक्तः सन्' । इदं श्रुत्वा इतरोऽपि तं नास्तिकमेवानुयास्यतीति नूनं स वावदूकपाशोऽवश्यं परिभवभूमिकां नेतव्यो जल्पाद्याश्रयेण"[2]।

## महाभाष्ये जल्पकथा

उपर्युक्तलक्षणिका जल्पकथा बहुशो महाभाष्ये व्यवहृताऽस्ति । यथा चतुर्थाध्याये महाभाष्य उक्तम्– "किं पुनर्लोके दृष्ट्वा एतदवसीयते– इयं स्त्री, अयं पुमान्, इदं नपुंसकमिति? लिङ्गं किं पुनस्तत्?"

**स्तनकेशवती स्त्री स्याल्लोमशः पुरुषः स्मृतः ।**
**एतयोरन्तरं यच्च तदभावे नपुंसकम्** ॥ इति ।

अत्र बहून् दोषान् प्रदर्श्योक्तम्–"न वैयाकरणैः शक्यं लौकिकं लिङ्गमास्थातु-मिति । अवश्यं कश्चित् स्वकृतान्त आस्थेयः, कोऽसौ स्वकृतान्तः, संस्त्यानप्रसवौ लिङ्गमास्थेयौ स्वकृतान्तः" इति[3] ।

अत्र लौकिकलिङ्गपरिजिहीर्षया स्वशास्त्रीयलिङ्गसञ्जिघृक्षया प्रचाल्यमानेयं कथा जल्पात्मिका एव । लौकिकानां पराजयः, वैयाकरणानां च जयः फलत्वेन बोध्यः ।

---

1. न्या. म., २ भा., जल्पप्र., पृ.१५२ ।
2. न्या. म., २ भा., जल्पप्र., पृ. १५३ ।
3. म. भा. ४/१/३ ।

## वितण्डाख्या तृतीया कथा

अस्यां कथायां स्वपक्षस्थापना न क्रियते, केवलं परपक्षस्य खण्डनमेव क्रियते[1]। उक्तं च महामुनिना गौतमेन–"स प्रतिपक्षस्थापनाहीनो वितण्डा" इति[2]। अत्र 'सः' इत्यनेन जल्पः परामृश्यते । खण्डनखण्डखाद्ये इयमेव वितण्डा-कथा गीताऽस्ति ।

महाभाष्येऽपि क्वचन व्यवहृतेयं कथा । यथा– "विप्रतिषेधाद्वा प्रथमाभावः, अथवा द्वितीयादयः क्रियन्तां प्रथमा वेति, प्रथमा भविष्यति विप्रतिषेधेन" इति । अत्र प्रदीपः – "विप्रतिषेधाद्वेति । सावकाशत्वमभ्युपगम्येदमुच्यते" इति । अत्रोद्द्योतः – "अनवकाशत्वमुक्त्वा विप्रतिषेधोपन्यासोऽसङ्गत इत्यत आह– सावकाशत्वमभ्युपगम्येति । नीलमिदम्, न तु रक्तमित्यादौ रक्तत्वादिनिवृत्तिपरे वाक्ये सत्ताया अनावश्यकत्वादस्तिर्भवन्तीपर इत्यस्याभावात् । साहचर्यं च न सर्वत्र व्यवस्थापकमिति अभिमानः । वैतण्डिकोक्तिरियमिति तात्पर्यम् । अनेन वस्तुतो निरवकाशत्वमेवेति सूचितम्, उक्तरीत्या तत्रापि सत्ताक्षेपात् । अत एव 'तिङ्समानाधिकरणे प्रथमा' इति न्यासः सङ्गच्छत इति बोध्यम्" इति[3]।

अत्रायमाशयः – कर्मणि द्वितीयेत्यादिसाहचर्येण प्रथमाया अपि क्रियायोग एव प्रवृत्तिरिति, वृक्षः प्लक्ष इत्यादावपि अस्तिक्रियायोगे कारकत्वात्तृतीययैव भाव्यम्, अनभिहिताधिकाराभाव इति प्रथमाया अनवकाशत्वमेव वास्तविकमिति, तत एव हेतोरस्याः प्राबल्यम्, न तु विप्रतिषेधहेतोः, सावकाशत्वाभावात् । एवं च सत्यपि यदि केनचिदुच्येत 'विप्रतिषेधात् प्रथमा भविष्यति' इति, तर्हि मन्ये नूनं स वैतण्डिकः, स्वपक्षस्य विप्रतिषेधहेतुगर्भस्य स्थापनाभावात् । अतः सुष्ठूक्तम्– 'वैतण्डिकोक्तिरियम्' इति ।

### प्रत्यक्षानुमानयोर्बलाबलविचारः

निरूपितयोः प्रत्यक्षानुमानयोः प्रमाणयोर्यौगपद्येन प्राप्तौ सत्यां कतरत् प्रबलं कतरच्च दुर्बलमित्यवश्यं विचारणीयतामर्हति, प्रमाणेनैव वस्तुतः प्रमाया जननात् । "उभाभ्यां प्रमाणाभ्यां सहैव प्रमयोर्द्वयोरुत्पादनासम्भवात्, योग्यविभुविशेष-गुणानां युगपदनवस्थानम्" इति सिद्धान्तात्[4] । यद्यपि वैयाकरणानां मते मनसो

---

1. न्या. म., २ भा., पृ. १५३ ।
2. न्या. सू. १/२/३ ।
3. म. भा., प्र. उ. २/३/१ ।
4. (क) "यावद्गकारे वाग् वर्तते न तावदौकार इति उपादाय द्वितीयः प्रवर्तते" । (म. भा. १/४/१०९ ) ।

मध्यमपरिमाणवत्तया संङ्कोचविकासशालित्वस्य पूर्वमुक्ततया[1] यौगपद्येन ज्ञानद्वयस्य ज्ञानत्रयादेर्वा अस्ति सम्भवः, तथापि सर्वदा न तादृशी स्थितिः सम्भवतीति बाध्यबाधकभावविचारोऽनयोरावश्यक एवात्र मतेऽपि ।

तत्र यद्यपि "सूक्ष्मो हि भावोऽनुमितेन गम्यः" इति भाष्योक्त्या[2] क्रियात्मकस्य ईश्वरादिरूपस्य वा सुसूक्ष्मतत्त्वस्य अनुमानेनैव ज्ञानादनुमानस्यापि परमं महत्त्वम्, तथापि प्रत्यक्षपूर्वकमेवानुमानमिति उपोद्घलकपदेन पूर्वं व्याख्यातमेवेति [3]प्रत्यक्षस्यानुमाने उपजीव्यतया तस्यैव सर्वथा प्राबल्यम् ।

किञ्च "सरूपाणाम्." इति सूत्रे भाष्यप्रदीपोद्द्योतेऽपि [4]स्फुटं प्रत्यक्षस्यानुमानापेक्षया प्राबल्यमुक्तम् ।

तत्र हि भाष्य उक्तम्–"एवं तर्ह्यनवयवेन चोद्यते, प्रत्येकं च परिसमाप्यते" इति। अत्र प्रदीपः – "एवं तर्हीति । सर्वाभिर्व्यक्तिभिः सम्बन्धस्य तुल्यत्वात् सर्वत्रैवाभिन्नबुद्ध्युत्पादात् प्रत्येकं परिसमाप्तत्वादेकस्मिन्नपि द्रव्ये तत्कर्म क्रियमाणं जातौ कृतमेव भवतीत्यर्थः" इति ।

अत्रोद्द्योतः – "नन्वाश्रयभेदात् तद्भेदः, अत आह – सर्वाभिरिति । भेदकाभावान्न भेद इति भावः । प्रत्यक्षविरोधाद् धर्मिग्राहकमानविरोधाच्च भेदानुमानमसङ्गतमिति भावः" इति ।

अत्र यदि आश्रयभूतानां व्यक्तीनां भेदादाश्रिताया जातेरपि भेदोऽनुमीयेत, आश्रितगुणक्रियादिवत्, तदा प्रोच्यते उद्द्योतकृता "अनुमानमसङ्गतम्" इति । हेतुश्चात्रोपन्यस्यते – प्रत्यक्षविरोधादिति । एवं च प्रत्यक्षेण जातेरैक्ये प्रमिते अनुमानेन भेदप्रमाऽसम्भविनी, यौगपद्येन प्रसक्तयोः प्रत्यक्षानुमानयोः प्रत्यक्षस्यैव प्राबल्यादिति भावः ।

तृतीयाध्यायभाष्ये अत्यन्तापरदृष्टानां वा परभूतलोपार्थमिति वाक्यं विवृण्वता प्रदीपकृतोच्यते–"परेण प्रधानेन प्रमाणेन प्रत्यक्षेण न क्वचिद् दृष्टा ये क्विबादयस्तेषां नित्यशब्ददर्शने कार्यदर्शने वा सत्ताया अभावात्" इति[5]। अत्र प्रत्यक्षस्य प्रमाणान्तरापेक्षया प्राधान्यं वदता कैयटेन स्फुटमभिहितं तस्य प्राबल्यम् ।

---

(ख) "तदुपरागनाशिका च तद्बोध्यार्थाकारवृत्तिरेव" ।
(वै. सि. ल. म., शक्त्याश्रयनि., र. प्र. युता, पृ. १५१; न्या. सि. मु., प्र. ख. ।)

1. अत्रैव निबन्धे प्रत्यक्षसमीक्षायां द्वितीयपुष्पे मनस इन्द्रियत्वनिरूपणे ।
2. म. भा. ३/२/१२३ ।
3. अत्रैव अनुमानसामान्यलक्षणनिरूपणे ।
4. म. भा., प्र. उ. १/२/६४ ।
5. म. भा., प्र. ३/१/२ ।

एवमेव–अनुमानेन साधितामर्थवत्तां प्रत्यक्षविरोधेन दूषयति–"अनर्थकास्त्विति"[1] इत्याद्युद्द्योतग्रन्थेन च प्रत्यक्षस्य प्राबल्यमुक्तमेव ।

एवमेव "स्त्रियाम्" इति सूत्रे भाष्यप्रदीपोद्द्योतेष्वपि[2] चानुमानस्यानन्यथासिद्धत्वरूपबलवत्त्वाभावे प्रत्यक्षबाध्यता स्पष्टमभिहिता । तथा हि भाष्यम्– "प्रत्यक्षेण खल्वपि स विरुध्यते य आह–'खट्वावृक्षयोः सल्लिङ्गं नोपलभ्यते' इति । तत्र स्वेन्द्रियविरोधः कृतो भवति, न च नाम स्वेन्द्रियविरोधिना भवितव्यम्" इति । अत्र प्रदीपः – "प्रत्यक्षेणेति । लिङ्गस्वरूपविविक्तखट्वादिवस्तुविषयेण प्रत्यक्षेण लिङ्गाभावनिश्चयकारिणा विरुध्यत एतदित्यर्थः । इन्द्रियदौर्बल्यमनुपलब्धिकारणं प्रमाणान्तरावसितवस्तुविषयमेवाभिधातुं शक्यते" इति । अत्रोद्द्योतः – "एतदिति । लिङ्गकार्यदर्शनेन लिङ्गानुमानमित्यर्थः, साधुलिङ्गकार्येण लिङ्गसत्तानुमानम्, लिङ्गसत्ताज्ञानेन च तत्साधुत्वज्ञानमित्यन्योऽन्याश्रय इति भावः । लिङ्गस्वरूपविविक्तेति । लिङ्गस्वरूपेण विविक्तं रहितं यत् खट्वादि तत्प्रत्यक्षेणेत्यर्थः । एवं च प्रत्यक्षबाधितमनुमानमिति भावः । भाष्ये स्वेन्द्रियविरोध इति। स्वेन्द्रियजन्यप्रत्यक्षविरोधः, अनुमानेन च स्वेन्द्रियजप्रत्यक्षविरोधिना न भवितव्यमित्यर्थः । अनयोः प्रत्यक्षानुमानयोरनुमानस्यानन्यथासिद्धत्वरूपबलवत्त्वाभावेन प्रत्यक्षेण बाध एवोचित इति तात्पर्यम्" इति । अनेन ग्रन्थत्रितयेनोपर्युक्तं स्फुटमायाति । अन्यथासिद्धत्वं चात्रानुकूलतर्कराहित्यमेव बोध्यम् ।

## प्रत्यक्षस्य बलवत्त्वे किं बीजम्?

षष्ठाध्याये "विभाषापः" इति सूत्रे भाष्यकृता–"लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्येत्येवं न भविष्यति" इति ।

अत्र कैयटः – "लाक्षणिकस्यानुमेयरूपत्वाद् विलम्बितप्रतीतिगोचरत्वात् । प्रतिपदोक्तस्य तु प्रत्यक्षत्वादविलम्बितप्रतीतिविषयत्वात्" इति[3] ।

अनेनापि स्फुटमेव प्रत्यक्षस्यानुमानापेक्षया प्राबल्यमुक्तम्, अविलम्बितप्रतीतिजनकत्वं च तत्र बीजमङ्गीकृतम् ।

---

1. (क) म. भा., प्र. उ. १/१/१, पृ. १४२ ।
   (ख) "प्रत्यक्षे ऋवर्णस्य स्थानित्वे चरितार्थस्यानुमानिके प्रवृत्त्ययोगात्" ।
   (म. भा., प्र. उ. १/१/४९)
2. म. भा., प्र. उ. ४/१/३ ।
3. म. भा., प्र. ६/४/५७ ।

एवमेवाष्टमाध्यायेऽपि भाष्ये, प्रदीपे, उद्द्योते चास्य प्राबल्य एतदेव बीजं निर्दिष्टमस्ति[1] ।

नवाह्निकेऽपि च भाष्योद्द्योते इदन्निर्दिष्टं द्रष्टव्यम्[2] ।

**भवति वै प्रत्यक्षादनुमानबलीयस्त्वमिति भाष्यस्यायमभिप्रायः**

ननु तृतीयाध्याये महाभाष्य उच्यते भाष्यकृता[3]–"भवति वै प्रत्यक्षादनुमानबलीयस्त्वम्, तद्यथा अलातचक्रं प्रत्यक्षं दृश्यतेऽनुमानाच्च गम्यते नैतदस्ति" इति । तत्कथं सङ्गच्छेतेति चेद् उच्यते, तस्य भाष्यस्यायमाशयः – यथा आशुसञ्चाराच्चक्रभ्रान्तिरुत्पद्यते, रूपसहचारिणस्तु स्पर्शस्यानेकदिक्कस्य युगपदग्रहणादनन्यथासिद्धानुमानेन प्रत्यक्षाभासो बाध्यते । उक्तं च हरिणापि–

**स्पर्शप्रबन्धो हस्तेन यथा चक्रस्य सन्ततः ।**
**न तथाऽलातचक्रस्य विच्छिन्नं स्पृश्यते हि तत् ॥** इति ।

तथैव यद्यपि "लटोऽप्रयोगादप्रथमासामानाधिकरण्याभावप्रत्यक्षेण निश्चीयते, तथापि तादृशाभावग्राहिणः प्रत्यक्षस्यान्यथासिद्धत्वाद् बाध्यत्वम् । अनन्यथासिद्धेन त्वनुमानेन लटोऽप्रथमासामानाधिकरण्यानुमितिः, न ह्यन्यथा आदेशस्य तदुपपद्येत"[4] इति । एवं च प्रत्यक्षाभासो बाध्यते, न तु प्रत्यक्षमिति न पूर्वतनसिद्धान्ताद् विरोधशङ्का ।

"अलातचक्रदर्शनवद्" इति सूत्रे अलातचक्रप्रत्यक्षस्याभासरूपता महर्षिगौतमेनापि स्फुटमुक्ता[5] ।

---

1. "लाक्षणिकस्यानुमानेन रूपावधारणम्, प्रतिपदोक्तस्य तु प्रत्यक्षेण । प्रत्यक्षानुमानयोश्चाविलम्बितप्रतीतिरूपत्वात् प्रत्यक्षं बलीयः" इति । (म. भा., प्र. ८/१/३०)
   "श्रुत्या प्रकरणबाध एव युक्त इत्याशयः" इति । (म. भा., प्र. उ. ८/३/३८)
2. "प्रत्यक्षत्वमबिलम्बितप्रतीतिकत्वम्, अनुमेयत्वं च बिलम्बितप्रतीतिकत्वम्" इति । (म. भा., प्र. उ., नवा., २ आ., मा. सू. ५)
   "विलम्बिततत्कत्वं चानुमेयत्वम्" इति । (म. भा., प्र. उ. २ आ., मा. सू. ५, पृ. १३२)
3. म. भा., ३/२/१२४ ।
4. म. भा. प्र. उ. ३/२/१२४ ।
5. न्या. द., अ. ३, आ. २, सू. ५८ ।

**प्रमाणेषु प्रत्यक्षं ज्येष्ठमनुमानं मध्यममित्यस्य कोऽभिप्रायः ?**

बहुत्र दर्शनग्रन्थेषु उच्यते चैतद् यत् "सर्वेषु प्रमाणेषु प्रत्यक्षं ज्येष्ठम्" इति[1]। तच्च ज्येष्ठत्वं समाने विषये बाधकत्वरूपमेव, असमाने विषये तु अनुमानस्य मध्यमत्वं बोध्यम् । यतो हि मध्यमः सः, यः कस्यचिद् बाधकः, कस्यचिद् बाध्यः । ज्येष्ठो यो बाधकस्यापि बाधकः । असमाने विषये शब्दानुमानयोः प्रसक्तौ अनुमानस्यैव शब्दबाधकतेति, तद्बाधकस्यानुमानस्य बाधके प्रत्यक्षे ज्येष्ठत्वमागतम् । अनुमानं तु प्रत्यक्षबाध्यं शब्दप्रमाणबाधकं चेति मध्यमत्वं तत्र । उक्ते चैतादृशे ज्येष्ठत्वमध्यमत्वे अङ्गाधिकारे षष्ठे महाभाष्ये प्रदीपे[2]।

वस्तुत इदं न रुचिकरम् । समानविषये प्रत्यक्षस्य तत्त्वेऽपि अनुमानस्य शब्दप्रमाणबाध्यत्वेन कस्यचिद् बाधक इत्यंशस्याभावात् । विभिन्नविषये तद्बाधकत्वेऽपि प्रत्यक्षबाध्यत्वाभावेन कस्यचिद् बाध्य इति द्वितीयांशस्याभावात् । एवं रीत्या समाक्रान्तस्य शब्दप्रमाणे कनीयस्त्वस्य सहृदयैः सोढुमशक्यत्वाच्च ।

अतश्चानुमानस्य प्रत्यक्षपूर्वकत्वेनोपजीव्यतया तत्र प्रत्यक्षस्य ज्येष्ठत्वम् । एवं शब्दप्रमाणेऽपि[3] तत्स्वरूपसम्पत्तौ श्रवणेन्द्रियरूपप्रत्यक्षप्रमाणस्यापेक्षालक्षणमुपजीव्यत्वमित्येव ज्येष्ठत्वम्, न तु स्वप्नमित्युत्पत्तावपीति सर्वं सुस्थम् ।

**विभिन्ने विषये त्वनुमानमेव बाधकम्**

प्रत्यक्षानुमानयोर्यौगपद्ये प्रत्यक्षस्य बाधकत्वमित्यत्रेयती या कथा प्रचलिता, सा तु समान एव विषये । यथा 'अग्न्यादिरूपे एकस्मिन्नेव विषये प्रत्यक्षसामग्री चक्षुःसंयोगादिरूपा, अनुमितिसामग्री व्याप्तिपक्षधर्मताज्ञानादिरूपा च युगपत्प्रसक्ता । तत्र प्रत्यक्षसामग्र्याः प्राबल्येन प्रत्यक्षमेव जायते, न त्वनुमितिः' इति । विभिन्ने विषये तु अनुमितिसामग्र्या एव बाधकत्वम्, यथा 'घटविषयकप्रत्यक्षसामग्रीकाले अग्निविषयकानुमितिसामग्रीसम्बलनेऽनुमितिरेव भवति, न तु प्रत्यक्षम्' । उक्तं चैतद् विषयभेदेऽनुमानस्य प्राबल्यम् "ऊकालोऽज्." इति सूत्रे भाष्य-

---

1. ब्र. सू., शा. भा. भाम., प्र. वि., पृ. ३० ।
2. म. भा. ६/४/१२० । "अभ्यासविकारेष्वपि ज्येष्ठमध्यमकनीयांसः प्रकारा भवन्ति" इति । अत्र प्रदीपः "मध्यमो यः कस्यचिद् बाधकः, कस्यचिद् बाध्यः । ज्येष्ठो यो बाधकस्यापि बाधकः" इति ।
3. ब्र. सू., शा. भा., प्र., पृ. ३० ।

प्रदीपे[1]। तत्र हि–प्रत्यक्षेणैकस्यैवोकारस्य श्रवणम्; अनुमानेन तु त्रयाणामुकाराणां बोधः प्राप्नोति । तत्रोच्यते भाष्यकृता–"कथं पुनस्त्रयाणामयं प्रश्लिष्टनिर्देश इति तिसृणां संज्ञानां करणसामर्थ्यात्" इति । अत्र प्रदीपः – "कथं पुनरिति । प्रत्यक्षेणैकस्यैव शब्दस्य श्रवणाद् भेदावगमे प्रमाणाभाव इति भावः । तिसृणामिति । अनुमानाद् भेदावसाय इति भावः" इति । अथ विभिन्ने विषयेऽपि प्रत्यक्षसामग्र्या एव प्राबल्ये यत्किञ्चिदिन्द्रियस्य विषयेण सह संयोगस्य जाग्रद्दशायां नैयत्येन अनुमितेरुच्छेद एव स्यात् । किञ्चेन्द्रियविकलानामेव अनुमानप्रमाणेनानुमितिः स्यात् । किञ्च, साऽपि कथं स्यात्? अनुमानस्य प्रत्यक्षपूर्वकत्वादिति तु न शङ्क्यम्, चक्षुरादिबाह्येन्द्रियाणामसत्त्वेऽपि अन्तरिन्द्रियस्य मनस एव सत्त्वेन बहुत्र सुख-दुःखादौ मानसप्रत्यक्षविषयतायाः सत्त्वेन प्रत्यक्षसामान्याभावस्यापादयितुमशक्यत्वात् ।

**उक्तविषये न्यायदर्शनस्यापि सम्मतिः**

समाने विषयेऽनुमानापेक्षया प्रत्यक्षस्य, विभिन्ने तु विषये प्रत्यक्षापेक्षया अनुमानस्य प्राबल्यं सम्मन्वते न्यायशास्त्रवित्तमा अपि । तथा हि–"प्रत्यक्षानुमिति-सामग्र्योरेकत्र एकदा सन्निपाते प्रत्यक्षसामग्र्या लघुशरीरतया प्रत्यासन्नतया च प्राबल्येन प्रत्यक्षमेवोत्पद्यते, न त्वनुमितिः, तत्सामग्र्याः पक्षताव्याप्तिग्रहादिघटिततया गुरुशरीरत्वात् । विषयेण सह मनःसंयुक्तेन्द्रियसंयोगे जाते तदिन्द्रियजप्रत्यक्षस्य ब्रह्मणाऽपि निवारयितुमशक्यत्वाच्च"[2] ।

किञ्च, "बुभुत्सितार्थावगतिः सामग्र्यधीना, तत्र गुरुसामग्रीसम्पादनापेक्षया लघुसामग्रीसम्पादनं न्याय्यमिति विभिन्ने विषये द्वयोः संवलने यत्सामग्र्या गुरुत्वं तयैव कार्यं जननीयमन्यथा पुनस्तस्याः सम्पादने गौरवप्रयोज्यः क्लेशातिशयः स्यात् । लघुसामग्र्याः सम्पादने तु न पुनस्तादृशः क्लेशः" इत्यादि स्फुटीकृतं तत्र तत्र न्यायग्रन्थेषु[3]।

**प्रत्यक्षानुमानयोः क्वचित् समकक्ष्यत्वमपि**

अष्टमाध्याये महाभाष्ये प्रदीपकृतोच्यते–"तत्र यदा प्रायोगिकं रूपमाश्रीयते, तदा शास्त्रानपेक्षणाल्लक्षणप्रतिपदोक्तपरिभाषा नोपतिष्ठते । शास्त्रापेक्षायां वा प्रत्यक्षानुमानयोः समकक्ष्यत्वाश्रयणम् । तत्र निपातग्रहणमिह प्रकरणे तत्परिभाषा-नाश्रयणस्य लिङ्गम्" इति ।

---

1. म. भा., प्र. १/२/२७ ।
2. प. जा. पृ. ६८ ।
3. व्यु. वा., त. लो., पृ. ८३ ।

अत्रोद्द्योतः – "समकक्ष्यत्वस्यायुक्तत्वं मनसि निधायाह–तत्रेति । ज्ञापकेनैव निर्वाह इति भावः" इति[1]।

अयं भावः – "निपातैर्यद्यदि" इति सूत्रे भाष्ये निपातग्रहणस्य "यत्कूजति शकटम्' इत्यादौ उक्तसूत्रव्यावृत्तिः फलत्वेनोक्ता । यत्कूजतीत्यत्र यच्छब्द इणः शतरि लाक्षणिको बोध्यः । तत्र पुनर्लक्षणप्रतिपदोक्तपरिभाषयाऽस्यात्र ग्रहणं न भविष्यतीति शङ्कित्वा, अनेन निपातग्रहणेनैव तत्परिभाषाया अत्र प्रकरणे नाश्रयणमिति समाहितम् । अत्र प्रदीपकृतोक्तम्– "यदि प्रायोगिकं रूपमाश्रीयते तदा शास्त्रानपेक्षणात् परिभाषाया नोपस्थितिः, यदा तु शास्त्रीयप्रक्रियायां शास्त्रीयमेव रूपं ग्राह्यमिति शास्त्रापेक्षा, तदा लाक्षणिकस्यापि समादरः" इति प्रत्यक्षानुमानयोः समकक्ष्यत्वम् । अर्थात् परिभाषया प्रायोगिकं ग्राह्यम्, अथवा शास्त्रबलाद् लाक्षणिकमिति उभयोरत्र साम्यमागतम् । परिभाषा प्रत्यक्षस्यानुग्राहिका, शास्त्रमनुमानस्य ।

एवं चोभयोः प्राप्तौ ज्ञापकेनैव निर्वाह इत्यादि बोध्यम् ।

अयं भावः – शास्त्रापेक्षत्वे शास्त्रीयप्रक्रियायां शास्त्रीयरूपस्यैव ग्रहणमुचितम्, शास्त्रसामर्थ्यात् । प्रतिपदोक्तपरिभाषया तु प्रायोगिकस्य ग्रहणं युक्तमिति शास्त्रापेक्षत्वपक्ष एव प्रत्यक्षस्यानुग्राहिका प्रतिपदोक्तपरिभाषा प्राप्ता, अनुमानस्यानुग्राहकं शास्त्रसामर्थ्यमप्यत्रैव पक्षे; यतो हि लाक्षणिकस्य ग्रहणेऽनुमानमनुगृहीतं स्यादिति प्रत्यक्षानुमानयोः समाना स्थितिरागता । इदमेवोक्तं कैयटेन समकक्ष्यत्वमिति । तत्र किं भवेदित्यत आह उद्द्योतकृत् – ज्ञापकेनेत्यादीत्यन्यत् ।

## बाधकत्वस्य लक्षणं ग्राहकं च

ननु किमिदं बाधकत्वं यत् प्रत्यक्षादावुक्तमिति चेत्, उच्यते "सत्यां सामग्र्यां कार्यविरोधित्वमेव तत्" इति । उक्तं चैतद् लघुमञ्जूषायां श्रीनागेशभट्टेन[2] । तद्ग्राहकमित्युक्तं तत्रैव । तथा हि–"न्यायशास्त्रवदत्र शास्त्रे प्रमाया गुणजन्यत्वं नाङ्गीक्रियते, मानाभावात् । किन्तु चक्षुर्गतपित्तदोषाभावे शङ्खे श्वैत्यप्रमा, तत्सत्त्वे तु न । एवमेव तद्गतमण्डूकवसाञ्जनाभावे वशप्रमा, तत्सत्त्वे तु न, अपि तूरगभ्रम इत्यन्वयव्यतिरेकाभ्यां तत्तत्प्रमायां तत्तद्दोषस्य प्रतिबन्धकतायाः कल्पेनेनेष्टसिद्धेः" इति । एवं चान्वयव्यतिरेकसहचारावेव तद्ग्राहकाविति सिद्धान्तः शब्दतत्त्वविदां बोध्यः । प्रतिबन्धकता चैषा न तदभाववत्तानिश्चयमुद्रया, अपि तु मणिमन्त्रादिन्यायेन मन्तव्या सहृदयैरिति दिक् ।

**॥ इत्यनुमानसमीक्षायां तृतीयं पुष्पम् ॥**

●

---

1. म. भा., प्र. उ. ८/१/३० ।
2. ल. म., टीकाद्वय., निपातार्थनिरू., पृ. ७०१-७०२ ।

## ॥ अथ शब्दसमीक्षायां प्रथमं पुष्पम् ॥

### शब्दप्रमाणविमर्शः

अथ प्रत्यक्षानुमानोभयविधं प्रमाणं निरूप्य शाब्दबुद्धौ श्रावणप्रत्यक्षात्मकशब्दज्ञानस्यानुमित्याद्यात्मकशक्तिज्ञानस्य कारणत्वेनोपजीव्योपजीवकभावसङ्गत्या[1] शब्दाख्यं प्रमाणं विम्रष्टुं पुरस्क्रियते ।

### शब्दप्रमाणे विसंवादिमतानि

तत्रास्तिकदर्शनेषु वैशेषिकमेव दर्शनं शब्दस्य स्वतन्त्रं प्रामाण्यं नाभ्युपगच्छति, अपि त्वनुमानविधया स्वीकरोति । तथा हि–"दण्डेन गामानयेत्यादिलौकिकपदानि, यजेतेत्यादिवैदिकपदानि वा तात्पर्यविषयस्मारितपदार्थसंसर्गप्रमापूर्वकाणि, आकाङ्क्षादिमत्पदकदम्बत्वात्, घटमानयेतिपदकदम्बवत्" इत्यनुमानप्रयोगो व्याप्तिपक्षधर्मताज्ञानादिना समीचीनतया प्रतिपाद्यते तदीयैः[2]। एवमेवान्येऽपि अनुमानप्रकाराः सन्ति तन्मते[3]।

किञ्च, न्यायसूत्रभाष्यकृद्भ्यामपि "शब्दोऽनुमानमर्थस्यानुपलब्धेरनुमेयत्वात्" इत्यादिसूत्रेषु पूर्वपक्षतया शब्दस्यानुमानत्वं पुरस्कृतमस्ति[4]।

नास्तिकदर्शनेषु[5] चार्वाकबौद्धाभ्यां[6] नैवास्य प्रामाण्यमभ्युपेयते । जैनाचार्यैस्तु[7] परोक्षप्रमाणान्तर्गततयास्य स्वतन्त्रं प्रामाण्यं स्वीक्रियते ।

### शब्दप्रमाणे संवादिमतानि

मीमांसाशास्त्रे शब्दस्य प्रामाण्यसमर्थने शब्दश्रवणोत्तरमर्थप्रतिपत्तिर्लिङ्गत्वेनोक्ता । ननु वक्तुरभिप्रायानुमित्यैव सा उपपद्यत इति चेत्, अर्थाभिप्रायशून्येनापि स्वापाद्य-

---

1. न्या. सि. मु., कि. टी., श. ख., का. ८१,पृ. २९१ ।
2. न्या. सि. मु., का. १४०-१४१,पृ. ४६१ ।
3. द्र.-ल. म., शक्तिनिरू., र. प्र., पृ. ४८ ।
4. न्या. भा., २।१।५०-५२ ।
5. स. द स., चा. द., पृ. ७ ।
6. प्रत्यक्षमनुमानं च प्रमाणं हि द्विलक्षणम् । (पृ. समु., का. २, पृ. ४)
7. प्र. मी. १।२।२, पृ. ३३ ।

वस्थायां परप्रयुक्तैः शब्दैरपि बोधदर्शनात् । अनर्थज्ञैरपि प्रयुक्तेनापौरुषेयवेदेन व्युत्पन्नानां बोधदर्शनाच्चेति शब्द एव प्रत्यायकः[1] ।

तत्र "प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि"[2] इति शब्दस्य प्रामाण्यमभ्युपगच्छन्यायदर्शनमेवं मनुते– "यदत्यन्तादृष्टपूर्वं स्वर्गापूर्वदेवतादि, तद् वाक्यार्थरूपमेव, नास्मदादिप्रत्यक्षगोचरम्, न चागृहीतं लिङ्गमस्मिन् प्रवर्तितुमर्हति । न चागृहीते सम्बन्धिनि सम्बन्धः शक्यग्रहः । पदान्येव हि पदार्थस्मरणद्वारेण तत्संसर्गं लक्षयन्ति वाक्यार्थे प्रमाणम् । तेषां चापक्षधर्मतया न लिङ्गत्वम् । स्मृतिजनकत्वमपि पदानां वाक्यार्थप्रत्यायनाय कल्पितं न सम्बन्धान्तरं व्यनक्ति"[3] इति ।

मुक्तावल्यां "नहि सर्वत्र शब्दश्रवणानन्तरं व्याप्तिज्ञाने प्रमाणमस्ति । किञ्च सर्वत्र यदि शब्दस्थले व्याप्तिज्ञानं कल्प्यते, तदा सर्वत्रानुमितिस्थले पदज्ञानं कल्पयित्वा शाब्दबोध एव किं न स्वीक्रियताम्" इति वदता श्रीविश्वनाथभट्टाचार्येणापि एतस्य प्रामाण्यं सुष्ठु स्वीकृतमेव[4]। एवमेव सांख्यादिदर्शनान्यपि अत्रानुकूलान्येव[5]। व्याकरणदर्शनस्य त्वेतद् हृदयमेव । उक्तं च भगवता पाणिनिना–"अर्थवदधातुः" इति[6]। अत्रार्थविषयकबोधजनकत्वघटितमेवार्थवत्त्वं सर्वसम्मतमस्ति[7] । तत्र बोधः शाब्दबोध एव, प्रत्यासन्नत्वाल्लाघवाच्चेति शब्दप्रमाणमन्तरा कथमिदं सङ्गच्छेत ?

किञ्च "तदशिष्यं संज्ञाप्रमाणत्वात्"[8] इति सूत्रे तु संज्ञाशब्दानां प्रामाण्यमुपस्थापयतः सूत्रकारस्याभ्युपगतमेव शब्दानां प्रमाणत्वम् । "लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे

---

1. शा. दी., पा. १, सू. अ. ५, पृ. ३५९-६० ।
2. न्या. सू. १/१/३ ।
3. न्या. द., २/१/५३,खद्योतटी. पृ. ३१९-२० ।
4. न्या. सि. मु., किर. युता, कारि. १४१, पृ. ४६४ ।
5. सां. त. कौ., कारि. ५, यो. द. १-७ ।
6. पा. सू. १/२/४५ ।
7. ल. श. शे, टीका च वरवर्णिनी-अर्थवत्सूत्रे ।
8. पा. सू. १/२/५३ ।

शास्त्रेण धर्मनियमः क्रियते" इत्युक्त्या वार्त्तिककारोऽप्यत्र सम्मत[1] एव । भगवान् भाष्यकारस्तु "शब्दप्रमाणका वयम्, यच्छब्द आह तदस्माकं प्रमाणम्" इति स्मारयन् शब्दप्रामाण्ये व्याकरणदर्शनस्य हार्दमेव पुरस्कृतवानस्ति[2]।

किञ्च, सूक्ष्मातिसूक्ष्मपदार्थस्य (ईश्वरस्य धर्माधर्मादेर्वा) ज्ञापने शब्दस्यैव सामर्थ्यम्, न प्रत्यक्षस्य, नाप्यनुमानस्य । उक्तं च शब्दतत्त्वविद्भिः शिष्टैः –

**प्रत्यक्षेणानुमित्या वा यस्तूपायो न विद्यते ।**
**एनं विदन्ति वेदेन तस्माद् वेदस्य वेदता**[3] ॥ इति ।
**इदं पुण्यमिदं पापमित्येतस्मिन् पदद्वये ।**
**आचाण्डालं मनुष्याणां समं शास्त्रप्रयोजनम्**[4] ॥ इति ।

"अनुमानप्रधानेन विनिपातो न दुर्लभः"[5] इत्यादि च ।

किञ्चास्मिँल्लोके सर्वापीतिकर्तव्यता शब्देष्वेवाऽऽश्रिताऽस्ति, यथा घोरतमेऽन्धकारे महानिशायां झञ्झावाते प्रवहति जलनिमग्ने विषमस्थले यत्र तत्र परिभ्रमन् आपद्ग्रस्तः कश्चन पथिकः शब्देनैव सङ्केतयितव्य इष्टस्थलं प्राप्तुम्, न तु प्रत्यक्षेण, दीपादेरभावात्, नाप्यनुमानेन, तत्सामग्र्यभावात् । इदमप्युक्तं श्रीहरिणैव "इतिकर्तव्यता लोके सर्वा शब्दव्यपाश्रया"[6] इति । लघुमञ्जूषायां श्रीनागेशभट्टेनापि गभीरदृशा एतस्य प्रामाण्यं समर्थितम्[7]। किं बहुना, यदा शयानेषु परस्सहस्रेषु जनेषु कश्चन देवदत्त इति नामग्राहमाहूयते, तदा एकलो देवदत्त एव जागर्ति, नान्यः, तत्रापि शब्दप्रमाणस्यैव महिमा वेदितव्यः । तत्र देवदत्त इति संज्ञाशब्दं शृण्वन्नेव साक्षी तत्तादात्म्येन जीवं प्रबोधयति[8]।

---

1. म. भा., नवा. १/१/१, पृ. ५५ ।
2. म. भा., नवा. १/१/१, पृ. ६६ ।
3. ऋग्वेद-भा. भू. ।
4. वा. प. १/४० ।
5. वा. प. १/४२ ।
6. वा. प. १/१२१ ।
7. ल. म., शक्तिनि., पृ. ४८-५२ ।
8. श्रीमद्भाग. १२/६/४० ।

## शब्दो न स्वरूपसन् हेतुः, अपि तु तत्प्रत्यक्षमेव

तत्र शब्दशास्त्रे स्वरूपसतः शब्दस्य न हेतुता, अस्मदादिभिस्तादृशस्याननुभवात् । अपि तु श्रुतस्य तस्य, किं वा तदीयश्रावणप्रत्यक्षस्य? उक्तं च भगवता भाष्यकारेण–"ह्रस्वसम्प्रत्ययादिति चेत्, उच्चार्यमाणः शब्दः सम्प्रत्यायको भवति, न सम्प्रतीयमानः"[1] इति ।

उक्तं च श्रीनागेशेन लघुमञ्जूषायां महता संरम्भेणैतदेव– "यथा घ्राणेन्द्रियगृहीतस्यैव गन्धस्य सुखादिजनकत्वम्, यथा च महतः पटहादिशब्दस्य कर्णपीडाजनकत्वं श्रुतस्यैव, न स्मृतस्य, तथा पदानां बोधजनकत्वं श्रुतानामेव, न यथाकथञ्चित्प्रतीतानाम्" इति[2] ।

## श्रुतत्वं शब्दस्योपरञ्जकमेव विशेषणम्

इदं श्रुतत्वं शब्दस्योपरञ्जकमेव विशेषणं न तु व्यावर्तकम्, अव्यभिचारात् । उक्तं च "परोक्षे लिट्" इत्यत्र भाष्यकृता–"परोक्ष इति न धातोर्विशेषणम्, शब्दस्वरूपस्य तस्य परोक्षत्वासम्भवात्" इत्यर्थकम्[3]। अत्र कैयटः – "अत्र प्रत्ययप्रकृतेः शब्दस्योच्चार्यमाणस्यानुभूतत्वात् परोक्षत्वासम्भवः, ततो यथा प्रत्यक्षत्वमव्यभिचाराच्छब्दस्य विशेषणं न सम्भवति । एवं परोक्षत्वमप्यसम्भवादविशेषणम्"[4] इति ।

## पदज्ञानस्य करणत्वं तु न युक्तम्

न्यायदर्शने श्रीमतामुदयनाचार्याणां मते तु ज्ञायमानपदस्यैव करणत्वं यद्यप्युक्तम्, तथापि नव्यतार्किकैस्तन्न समाद्रियते, मौनिश्लोकादौ पदस्याविद्यमानतया शाब्दबोधाभावप्रसङ्गात् । अतः पदज्ञानमेव तत्र करणम्, अस्ति च तत्रापि स्मृत्याद्यात्मकं पदज्ञानमिति नानुपपत्तिः[5] । तच्चेदं न रोचते शाब्दिकमूर्धन्येभ्यः, स्मृत्यादिपरोक्षस्थले स्फोटात्मकशब्दस्यानभिव्यञ्जनेन शाब्दबोधेऽनुपयोगात्[6]। निरूपयिष्यते चैतत् स्फोटस्वरूपमग्रे ।

---

1. म. भा. १/१/६८, पृ. ५२३-२४ ।
2. वै. सि. ल. म., लक्षणानिरूपणम्, पृ. १२९ ।
3. म. भा. ३/२/११५ ।
4. म. भा., प्र. ३/२/११५ ।
5. न्या. सि. मु., श. ख., कारि. ८१, पृ. २९१ ।
6. म. भा. १/१/६८ ।

## शब्दप्रमाणे व्यापारविमर्शः

सुस्थितं तावच्छब्दस्य प्रमाणत्वमथ करणस्य व्यापारवत्त्वनियमेनात्रापि प्रमाकरणे को व्यापार इति जिज्ञासायामुच्यते–पदनिष्ठवृत्तिज्ञानजन्यपदार्थज्ञानमेव सः, तस्य पदप्रत्यक्षजन्यत्वे सति तज्जन्यशाब्दधीजनकत्वेन व्यापारलक्षणाक्रान्तत्वात् ।

अनुमोदितं चैतद् भगवता पतञ्जलिना– "नेत्याह–सर्वथावरकालैवेति । वर्णानामुपदेशस्तावत्, उपदेशोत्तरकाला इत्संज्ञा, इत्संज्ञोत्तरकालः "आदिरन्त्येन सहेता" इति प्रत्याहारः, प्रत्याहारोत्तरकाला सवर्णसंज्ञा, सवर्णसंज्ञोत्तरकालमणुदित्-सवर्णस्य चाप्रत्यय इति । सैषोपदेशोत्तरकाला अवरकाला सती वर्णानामुत्पत्तौ निमित्तत्वाय कल्पयिष्यत इत्येतन्न" इत्युक्त्या[1] । स्फुटीकृतं चैतत्तात्पर्यं श्रीनागेशेना-त्रैवोद्द्योते–"अवरकालैवेति । वाक्यार्थज्ञाने पदार्थज्ञानस्य कारणत्वादिति भावः" इत्युक्त्या[2]।

यद्यप्याभ्यां भाष्योद्द्योताभ्यां पदार्थज्ञानस्यैव हेतुत्वमुक्तम्, न तूक्तस्य पदनिष्ठवृत्तिज्ञानजन्यस्य, तथापि वृत्तिज्ञानस्यापि हेतुताया अनुपदमेव वक्ष्यमाण-तया प्रत्यासत्त्या अतिप्रसङ्गादिदोषवारकतया च तादृशस्यैव पदार्थज्ञानस्य तत्त्व-मुचितम् । गभीरदृशा विचारे सति इतो भाष्यादपीदृशस्यैव पदार्थज्ञानस्य व्यापार-त्वमायाति ।

## प्राच्यवैयाकरणसम्मतमेतद् व्यापारस्वरूपम्

श्रीभर्तृहरिसम्मतमप्येतद् व्यापारत्वं तादृशे पदार्थज्ञान एव । किन्तु तज्ज्ञानं स्मरणरूपम्, नानुभवरूपम् । उक्तं च–

**संयोगो विप्रयोगश्च साहचर्यं विरोधिता ।**
**अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ॥**
**सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ।**
**शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः**[3] ॥ इति ।

अत्र विशेषस्मृतिः पदार्थविशेषस्य स्मृतिः संयोगादिभिः संस्कारोद्बोधेन जनिता सती शाब्दबोधं जनयति, इत्यत्र तात्पर्यमिति व्यापारविधया पदार्थस्य स्मृतिरूपमेव ज्ञानं स्वीकृतम् ।

---

1. म. भा. १/१/६७ ।
2. म. भा., प्र. उ. १/१/६७ ।
3. वा. प. २/३१७-१८ ।

श्रीकौण्डभट्टेन तु–"विषयतया शाब्दबोधं प्रति तदंशविषयकवृत्तिजन्योपस्थितिर्हेतुरिति वाच्यम्" इति वदता[1] पदनिष्ठवृत्तिज्ञानजन्यपदार्थोपस्थितिर्व्यापारतयाऽङ्गीकृता अस्ति । मन्ये तत्रोपस्थितिपदं स्मृतिपरमेव स्यात्, हरिणापि सह तथा सत्येव एकवाक्यत्वलाभात् । न्यायदर्शनेऽपि स्मृतिरूपमेवैतज्ज्ञानं व्यापारतया गृहीतमस्ति[2]।

**नव्यवैयाकरणसम्मतं व्यापारस्वरूपम्**

शाब्दिकचक्रचूडामणयः श्रीनागेशभट्टास्तु "पदार्थोपस्थितिर्न शाब्दे कारणम्, किन्तु पदज्ञानोद्बुद्धः पदार्थविषयकः संस्कार एव तत्र कारणम्" इति सिद्धान्तयन्ति । तेषामयमाशयः – पदार्थोपस्थितिर्न स्मृतिरूपा, पूर्वानुभूततताया अनुल्लेखात् । किञ्च, पदजन्ये पदार्थज्ञाने शाब्दयामीत्येवानुभवः, न तु स्मरामीति । अतश्चोद्बुद्धस्य शक्तिग्रहजनितसंस्कारस्य पदजपदार्थज्ञाने हेतुत्वं कल्प्यते, फलबलात् ।

किञ्च, यादृशो ह्यनुभवस्तादृश्येव स्मृतिः । तथा च पदार्थस्मृतिकारणस्यानुभवस्य घटपदस्य घटे शक्तिरिति शक्तिज्ञानस्वरूपतया, तत्र चार्थस्य विशेषणतयैव भानात् स्मृतिरपि घटाद्यर्थविशेषणिका शक्तिविशेष्यिकैव स्यात्, न तु घटाद्यर्थविशेष्यिका भवदभिमता । अतश्चोक्तः संस्कार एव हेतुः, स च शक्तिविषयकग्रहजनितत्वाच्छक्तिविषयोऽपि ।

तत्र यद्यप्युक्ते संस्कारे श्रावणप्रत्यक्षात्मकपदज्ञानजन्यत्वं साक्षान्नास्ति, तथापि तद्विशेषणीभूते उद्बोधनांशे तजन्यत्वतज्जन्यशक्तिज्ञानजन्यतया तज्जन्यत्वसत्त्वाद् विशिष्टे संस्कारे तदारोपेण वा व्यापारलक्षणं संघटनीयमिति[3]।

**अत्रायं निष्कर्षः**

वस्तुतस्तु विचारे क्रियमाणे उक्तपदार्थज्ञानस्यैव व्यापारता लभ्यते । तथा हि उक्तस्य संस्कारस्य तत्त्वपक्षे तस्यातीन्द्रियतया अप्रत्यक्षत्वेन तद्गतकारणताऽपि शाब्दबोधादिफलबलेन अनुमातव्यैव स्यात्, न तु कदाचिदपि प्रत्यक्षा, मम तु ज्ञानस्यानुव्यवसायविषयत्वेन साक्षिभास्यत्वेन वा प्रत्यक्षतया तदीयकारणताया अपि प्रत्यक्षत्वं स्यात् । एवं च प्रत्यक्षं व्यापारं परित्यज्यानुमेयस्य तत्त्वपक्षे न किमपि रहस्यं प्रतीयते ।

---

1. वै. भू. सा., शक्तिनि., पृ. १९७ ।
2. न्या. सि. मु., श. ख., कारि. ८१, पृ. २९१-९२ ।
3. द्र.-ल. म., र. प्र. टीका च, पृ. ४०८-११ ।

किञ्च, 'हा मम माता' इत्यादौ तत्ताया अनुल्लेखेऽपि स्मृतिरभ्युपेयत एव सहृदयैः । किञ्च, पदजन्यपदार्थज्ञाने स्मरामीत्यनुभवाभावः शपथैकशरणः । किञ्च, घटपदनिष्ठशक्तिनिरूपको घटरूपोऽर्थ इत्याकारके शक्तिग्रहेऽर्थस्यैव विशेष्यतेति तादृशशक्तिग्रहजन्यस्मृतावपि अर्थस्य विशेष्यता सुलभैव । अत एवोद्द्योते भवद्भिः पदार्थज्ञानस्यैव भाष्यानुगुणं व्यापारत्वं व्याख्यातम् इति[1] पूर्वतनः पन्था एव रमणीयः ।

## एतद्विषये महाभाष्योक्तं मतान्तरम्

अर्थवत्सूत्रीयभाष्येण तदनुगुणप्रदीपोद्द्योताभ्यां चोपस्थितपदार्थानां करणत्वं तज्जन्ययोग्यताज्ञानादीनां च व्यापारत्वं प्रतीयते । तथा हि–"अर्थवद्ध्येतद् वाक्यम्, न वै पदार्थादन्यस्यार्थस्योपलब्धिर्भवति वाक्ये" इति भाष्यम्[2]। अत्र प्रदीपः – "न वै पदार्थादिति । पदान्येव स्वं स्वमर्थं प्रतिपादयन्ति वाक्यम्, पदार्था एव त्वाकाङ्क्षायोग्यतासन्निधिवशात् परस्परं संसृष्टा वाक्यार्थ इत्यर्थः"[3] इति । अत्रोद्द्योतः – "पदार्था एव तु इत्यनेन संसर्गबोधे पदानां व्यापारो नास्तीति दर्शयति । एवं च पदार्थैरेवाकाङ्क्षादिभिः संसर्गस्य गम्यमानत्वान्न तत्र वाक्यशक्तिः, वाक्यस्यातिरिक्तस्याभावाच्च"[4] इति ।

अनेन भगवान् भाष्यकारो व्याकरणदर्शनस्य सर्ववेदपारिषदत्वं स्फुटं सङ्केतयति । यतो हि मीमांसादर्शनीयोऽयं राद्धान्तः । उक्तं च तन्त्रवार्त्तिके–"पदार्थैः पदविज्ञातैर्वाक्यार्थः प्रतिपद्यते"[5] इति । पदार्था अवगताः सन्तो वाक्यार्थं गमयन्तीति भाष्यकारेण शबरस्वामिना च[6]।

पदार्थोपस्थित्या कृतार्थस्य पदज्ञानस्य न कारणभावो भवितुमर्हति, अन्यथासिद्धिग्रस्तत्वादित्यादिरभिप्राय एषाम् ।

## स्फुटति चास्य मतान्तरत्वं भाष्यत एव

अर्थवत्सूत्र एव भाष्यप्रदीपोद्द्योतैरस्य मतान्तरत्वं स्फुटं प्रतीयते । तथा हि– "पदार्थाभिसम्बन्धस्योपलब्धिर्भवति वाक्ये"[7] इति भाष्यम् । अत्र प्रदीपः – "पदार्थाभिसम्बन्धस्येति ।ध्वनिव्यङ्ग्यं नित्यं वाक्यं विशिष्टस्यार्थस्य पदार्थसंसर्गरूपस्य

---

1. म. भा., उ. १/१/६७ ।
2. म. भा. १/२/४५ ।
3. म. भा., प्र. १/२/४५ ।
4. म. भा., प्र. उ. १/२/४५ ।
5. त. वा. २/१/६ ।
6. शाब. भा. १/१/२५ ।
7. म. भा. १/२/४५ ।

वाचकम्, अन्यथा अशाब्दो वाक्यार्थः स्यात्" इति[1] । अत्रैवोद्द्योतः – "पदार्थानां संसर्गबोधकत्वे दोषमाह– अन्यथेति । न च शब्दप्रयोज्यत्वाच्छाब्दत्वम्, प्रत्यक्षदृष्ट-धूमबोध्यवह्नेरपि प्रत्यक्षत्वापत्तेः । श्रुतधूमशब्दोपस्थितधूमार्थबोध्यवह्नेरपि शाब्दत्वा-पत्तेश्च । यदि तु पदसमभिव्याहाररूपा आकाङ्क्षा तत्कारणत्वज्ञानं च शाब्दबोधे कारणमिति शाब्दत्वम्, तदा पदानां पदार्थेष्वपि शक्तिर्न सिध्येत्, तदुक्तम्–अशाब्दो यदि वाक्यार्थः पदार्थोऽपि तथा भवेत्"[2] इति ।

एवं च वाक्यस्फोटस्य प्रामाण्यं सुस्थिरमेव, न तूपस्थितपदार्थानाम्, अशाब्द-त्वापत्तेः । पूर्वोक्तभाष्येण[3] अन्येन च भाष्येणापि[4] उक्तमतस्य न स्वसम्मतत्वमिति स्पष्टमायाति ।

तत्त्वबिन्दौ वाचस्पतिमिश्रा अपि "पदान्येवाकाङ्क्षितयोग्यसन्निहितार्थान्तरान्वित-स्वार्थाभिधायीनि इत्यपरे"[5] इत्युक्त्या पदानामेव प्रामाण्यं व्यवस्थापयाञ्चक्रुः । अतश्च तादृशपदार्थज्ञानस्य व्यापारत्वं शाब्दिकनये निराबाधम् ।

**शाब्दिकनये वृत्तिस्वरूपस्य तज्ज्ञानकारणत्वस्य च विमर्शः**

ननूक्तव्यापारस्य वृत्तिघटिततया केयं पदनिष्ठा वृत्तिरिति चेत्, उच्यते– शाब्दबोधानुकूलपदार्थज्ञानजनकज्ञानविषयः पदपदार्थयोः सम्बन्धविशेष एव वृत्तिः । ध्वनितं चेदं वृत्तेः स्वरूपं महाभाष्ये "हलोऽनन्तराः संयोगः" इति सूत्रे । तत्र हि– "ग्रामशब्दोऽयं बह्वर्थः । अस्त्येव शालासमुदाये वर्तते, तद्यथा 'ग्रामो दग्धः' इति । तद् यः सारण्यके ससीमके सस्थण्डिलके वर्तते, तमभिसमीक्ष्यैतत्प्रयुज्यते– अनन्तराविमौ ग्रामाविति"[6] इत्युक्तम् । अत्र 'अस्त्येव शालासमुदाये वर्तते' इति वाक्ये 'वर्तते' इत्यस्य वृत्तिरित्यर्थः, लडर्थस्याविवक्षितत्वात्, वृतुधातोः प्रकृतिभूत-स्यैवार्थस्य विवक्षणात् । अन्यथा 'अस्ति'-पदोपादानं व्यर्थं स्यात् । एवं च अस्ति शालासमुदाये वृत्तिर्ग्रामशब्दस्य इत्यर्थः सम्पन्नस्तस्य वाक्यस्य । सङ्केतितश्चायमर्थ उद्द्योतकृतापि[7]।

---

1. म. भा., प्र. १/२/४५ ।
2. म. भा., प्र. उ. १/२/४५ ।
3. म. भा. १/१/६८ ।
4. म. भा. १/१/१।
5. त. बि., पृ. ७ ।
6. म. भा., नवा. १/१/७ ।
7. म. भा., प्र. उ. १/१/७ ।

एवं च पदपदार्थयोर्वृत्तिनामकः कश्चन विलक्षणः सम्बन्धोऽस्तीत्यागतम् । तद् यःसारण्यके वर्तते तमभिसमीक्ष्य इति कथनेन पदज्ञानस्य पदनिष्ठवृत्तिज्ञानस्यापि च शाब्दबोधे हेतुता लभ्यते । "एतत्प्रयुज्यते अनन्तराविमौ ग्रामौ" इत्यनेन अनन्तराविमौ ग्रामाविति शाब्दबोधाकार एव दर्शितो भगवता ।

अत्र च पदपदार्थयोः सम्बन्धविशेषत्वमेव वृत्तिलक्षणं बोध्यम्, शाब्दबोधानुकूलेत्यादिर्विषयान्तरस्तु न विशेषणम्,[1] अपि तूपलक्षणम्[2]। अन्यथा वृत्तित्वग्रहे शाब्दबोधपदार्थज्ञानयोः कार्यकारणभावग्रहः, तद्ग्रहे च निरुक्तपदपदार्थसम्बन्धत्वात्मकवृत्तित्वग्रह इत्यन्योऽन्याश्रयदोषोऽत्र दुर्वारः स्यात् । अर्थे वर्तते शब्दोऽनया सम्बन्धव्यक्त्या सा वृत्तिः, वृतुधातोः करणे क्तिन् । एवं चोक्ते सम्बन्धे वृत्तिपदस्य योगरूढिशक्तिरप्यनुकूला । सङ्केतितं चैतल्लक्षणं श्रीकौण्डभट्टेन वैयाकरणभूषणसारे यद्यपि दोषवत्तया[3], तथापि मदुक्तरीत्या अस्य निर्दोषत्वमेव ।

एवमेव शक्ति-व्यञ्जनयोर्द्वयोरेव वृत्त्योरत्र मते सिद्धान्तयिष्यमाणत्वात् शक्तिव्यञ्जनान्यतरत्वमपि वृत्तिलक्षणं निर्दुष्टमेव, अन्यतरत्वस्य तद्भिन्नभिन्नत्वरूपत्वेन गुरुशरीरत्वेऽपि भेदवृत्तिभेदत्वस्याखण्डोपाधित्वस्वीकारेणाननुगमादिदोषवारणात् ।

यत्तु लघुमञ्जूषाटीकायां रत्नप्रभायां "वृत्तिपदव्यवहार्यत्वम्, पदपदार्थोभयनिरूपितसम्बन्धत्वं वा वृत्तित्वम्" इति वृत्तेर्लक्षणद्वयं प्रदर्शितम्[4]। तत्तु न रोचयामहे, तथा हि लक्षणज्ञानात्प्राग् अस्य पदस्यात्रार्थे वृत्तिरित्यादिर्व्यवहारो न सम्भवति, व्यावृत्तिर्व्यवहारो वा लक्षणस्य प्रयोजनमिति सिद्धान्तात्[5]। एवं च व्यवहारघटितस्य प्रथमलक्षणस्यासम्भवः, व्यवहारज्ञानाधीनत्वाल्लक्षणज्ञानस्य, लक्षणज्ञानाधीनत्वाच्च व्यवहारज्ञानस्येति अन्योऽन्याश्रयदोषग्रस्तत्वात् । द्वितीयमपि न सम्भवति, समवायकालिकादिष्वपि अतिप्रसङ्गात् । यदि तु सकलपदपदार्थसाधारण एकजातीयः

---

1. "विद्यमानं सदितरव्यावर्तकं विधेयान्वयि विशेषणम्" इत्युच्यते । (प्रौ. म., टिप्प., र. प्र., स्वरसन्धि., "अचः परस्मिन्" सूत्रम्)
2. "कादाचित्कं विधेयानन्वयि सदितरव्यावर्तकमुपलक्षणम्" इत्युच्यते । (प्रौ. म., र. प्र. टिप्प., स्वरसन्धिः–"अचः परस्मिन्" सूत्रम्)
3. वै. भू. सा., शक्तिनि., पृ. १९६ ।
4. वै. सि. ल. म., रत्नप्रभाटीका., पृ. १८ ।
5. त. स., दी. टी.,प्रत्य. ख. ।

सम्बन्धः, समवायस्तु सकलपदानामाकाश[1] एव, न तु सर्वपदार्थे । कालिकोऽपि पदानामनित्येष्वेवार्थेषु,[2] न तु नित्येष्वित्युच्यते, तदा 'ओमिति ब्रूमहे' मदुक्त एव पर्यवसानात् । यद्यपि साकल्यस्य योगिगम्यत्वेनेदमपि लक्षणं नास्मदादिव्यवहार-क्षमम्, तथापि पदपदार्थयोर्विजातीयसम्बन्धस्य वृत्तित्वमभ्युपेयम्, पदत्वपदार्थत्वयोरुप-लक्षणविधया प्रवेशः, वैजात्यं च सम्बन्धे शाब्दबोधानुकूलपदार्थस्मृत्यनुकूलज्ञान-विषयतयेति कथञ्चिद् वक्तुं शक्यते ।

एवं चैकसम्बन्धिज्ञानमपरसम्बन्धिनं स्मारयतीति विधया[3] प्रकृते पदस्य श्रावणप्रत्यक्षे सति अर्थनिरूपितवृत्त्याख्यसम्बन्धस्य स्मरणम्, ततश्च सम्बन्धि-नोऽर्थस्य स्मरणमिति वृत्तिज्ञानस्य कारणत्वमुपपन्नम् ।

## न्यायदर्शने वृत्तिस्वरूपम्, शाब्दिकदृष्ट्या तन्निरासश्च

शक्तिवादे [4]श्रीगदाधरभट्टाचार्येण "सङ्केतो लक्षणा चार्थे पदवृत्तिः" इत्युपन्य-स्यता शक्तिलक्षणान्यतरत्वं वृत्तित्वमित्येवाभिप्रेतम्, अन्यथा वृत्तेः सामान्यस्वरूप-निरूपणे तद्विशेषनिरूपणं कथं युज्येत? विशेषजिज्ञासायां सामान्यज्ञानस्य हेतुत्वात् । तत्रैव टीकायां श्रीहरिनाथभट्टाचार्येण तु–"शाब्दबोधनिरूपिता या स्मृतित्वावच्छिन्ना जनकता, तन्निरूपिताव्यवहितोत्तरत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपितावच्छेदकता-वत्सांसर्गिकविषयतात्वं वृत्तित्वम्" इति क्रमेण लक्षणं परिष्कृतम्[5]।

तदेतद् द्वयमपि शाब्दिकेभ्यो न रोचते, लक्षणाया अग्रे खण्डयिष्यमाणत्वेन[6] प्रथमस्य वृत्तित्वज्ञान एतद्घटककार्यकारणभावज्ञानम्, तज्ज्ञाने चोक्तवृत्तित्वज्ञान-मित्यन्योऽन्याश्रयदोषेण स्मृतेर्व्यापारत्वाभावोपपादकेन नव्यानां सिद्धान्तेन च द्वितीयस्याप्यसम्भवात् ।

---

1. "गुणगुणिनोः समवायः" । (न्या. सि. मु., प्र. ख., कारि., ११)
2. "नित्येषु कालिकायोगात्" । (व्या. पञ्चकं विवृतिटीका, पृ. ३५)
3. सा. नि., गा. टी. पृ. ३ ।
4. श. वा., प्र. का., पृ. १ ।
5. श. वा., ह. ना. टी., प्र. का., पृ. ३ ।
6. एतन्निबन्धे लक्षणाप्र. ।

## वृत्तिभेदनिरूपणम्

सा चेयं वृत्तिस्त्रिधा–शक्तिर्लक्षणा व्यञ्जना चेति लघुमञ्जूषायां नागेशभट्टाः[1]। तत्र परमताभिप्रायेण लक्षणाया निरूपणम् । वक्ष्यते चेदमग्रे स्वयमेव[2] ।

**॥ इति शब्दसमीक्षायां प्रथमं पुष्पम् ॥**



1. ल. म., श. प्र., पृ. १६ ।
2. एतन्निबन्धे लक्षणाप्र. ।

## ॥ अथ शब्दसमीक्षायां द्वितीयं पुष्पम् ॥

**शाब्दिकमते शब्दस्वरूपम्**

तत्र प्रथमतः सूत्रभाष्यादिसम्मता तादात्म्यसम्बन्धरूपैव पदपदार्थयोः शक्तिः । तथा हि–"वृद्धिरादैच्,[1] अदेङ्गुणः"[2] इत्यादिषु सूत्रेषु शक्तिग्राहकेषु समानविभक्तिक-निर्देशं करोति भगवान् सूत्रकारः । यथा 'नीलो घटः' इत्यत्र तादात्म्यसम्बन्धेन[3] नीलविशिष्टो घट इति बोधः, तथैवात्रापि तादात्म्यसम्बन्धेन वृद्धिपदविशिष्टा आदैच इति बोधः । एवं च तादात्म्यसम्बन्धस्यैव शक्तित्वं पर्यवस्यति ।

अत्र "वृद्धिरादैच्" इति सूत्रे भाष्यकारोऽपि ब्रवीति "द्वयोरेव सामानाधि-करण्यम्, विशेषणविशेष्ययोर्वा, संज्ञासंज्ञिनोर्वा"[4] इति । अत्रैवोद्द्योतकारः स्पष्टं ब्रूते–"तादात्म्यमेव शब्दार्थयोः शक्तिः"[5] इति ।

वाक्यपदीयटीकाकृता श्रीहरिवृषभेणापि "तादात्म्यमेव शब्दार्थयोः सम्बन्धो नादाभिव्यक्तस्यान्तःकरणसन्निवेशिनः शब्दस्यार्थबोधने कारणम्" इत्युक्त्या[6] उक्तपक्ष एव पूर्णं समर्थितः ।

आचार्यः श्रीभर्तृहरिस्तु–

> **इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा ।**
> **अनादिरर्थैः शब्दानां सम्बन्धो योग्यता तथा ॥**

इति कारिकया बोधजनकत्वरूपां योग्यतामेव शब्दनिष्ठां शक्तिं मन्यते[7] । अनुमोदन्ते चैनं मार्गं श्रीभट्टोजिदीक्षित-श्रीकौण्डभट्टप्रभृतयो वैयाकरणमूर्धन्याः[8]।

---

1. पा. सू. १/१/१ ।
2. पा. सू. १/१/२ ।
3. व्यु. वा., संसर्गतामतम्, कार. प्र. ।
4. म. भा., नवा. १/१/१ ।
5. म. भा., प्र. उ. १/१/१ ।
6. वा. प. १/२४-२६ ।
7. वा. प. ३/३/२९ ।
8. वै. भू. सा., शक्तिनि. ।

शाब्दिकमूर्धन्यः श्रीनागेशभट्टस्तु समीचीनयुक्तिभिर्बोधजनकत्वस्य सम्बन्धत्वमेवासम्भावयन् शब्दार्थोभयनिष्ठं वाच्यवाचकभावलक्षणसम्बन्धं शक्तिरूपत्वेन स्वीकृत्य, उक्तस्य तादात्म्यस्य तद्द्योतकत्वं सिद्धान्तितवान्[1] ।

## तादात्म्यस्वरूपनिरूपणम्

ननु किमिदं तादात्म्यमिति चेदत्रोच्यते– तद्भिन्नत्वे सति तदभेदेन प्रतीयमानत्वमेव तादात्म्यस्य स्वरूपं सिद्धान्तितं शाब्दिकमते । तत्र शब्दस्यार्थे भेदो वास्तवः, अभेद आरोपितः, इति न भेदाभेदयोरेकत्र विरोधः । ध्वनितं चैतत् स्वरूपं वाक्यपदीयटीकायां श्रीहरिवृषभेण–"बुद्ध्या गृहीतार्थप्रतिपादनाय शब्दप्रयोगादर्थः शब्दस्य निमित्तम्, कार्यकारणयोश्चाभेदाध्यवसायात् सोऽयमिति प्रतीयमानं तादात्म्यम्"[2] इत्युक्त्या । अत्र कार्यकारणयोरभेदाध्यवसायादिति कथनेनाभेदांशस्याध्यस्तत्वं बोध्यते । स्फुटमुक्तमिदं स्वरूपं लघुमञ्जूषायां श्रीनागेशभट्टेन[3]। तत्र भेदस्योद्भूतत्वविवक्षया 'अस्यार्थस्यायं शब्दो वाचकः' इत्यादिर्भेदेन व्यवहारः । "तपरस्तत्कालस्य",[4] "तस्य वाचकः प्रणवः"[5] इत्यादिसूत्राणि चास्य पक्षस्योपष्टम्भकानि । अभेदस्योद्भूतत्वविवक्षया 'देवदत्तोऽयम्' इत्यादिव्यवहारः सङ्गच्छते । वृद्धिरादैजित्यादिसूत्राणि[6] चास्य पक्षस्योपोद्बलकानि ।

योगदर्शनभाष्येऽपि इदमेव तादात्म्यस्य स्वरूपं स्पष्टमभिहितमस्ति । सङ्केतस्तु पदपदार्थयोरितरेतराध्यासरूपः स्मृत्यात्मकः, योऽयं शब्दः सोऽर्थः, योऽर्थः स शब्दः"[7] इति ।

## तादात्म्यस्य स्वरूपविषये मतान्तराणि

न्यायदर्शनेऽपि तादात्म्यस्य स्वरूपमुक्तम् "अभेदस्तादात्म्यम्" इति । स च स्वनिष्ठोऽसाधारणो धर्मस्तद्व्यक्तित्वादिरूपो बोध्यः । उक्तं च व्युत्पत्तिवादे श्रीगदाधरभट्टाचार्येण[8] –"स्वसामानाधिकरण्यस्वप्रतियोगिवृत्तित्वोभयसम्बन्धेन भेदविशिष्टं

---

1. ल. म., र. प्र. युता., शक्तिनि., पृ. १६-१७ ।
2. वा. प., ह. वृ. टी. १/२४-२६ ।
3. वै. सि. ल. म., र. प्र. युता, शक्तिनि., पृ. २५ ।
4. पा. सू. १/१/६९ ।
5. यो. सू. १/१/२७ ।
6. पा. सू. १/१/१ ।
7. वा. प., ह. वृ. टी. १/२४-२६ ।
8. व्यु. वा., कार. प्र. ।

यत् तदन्यत्वरूपं तादात्म्यम् । घटत्वादयः सर्वे धर्मा उभयसम्बन्धेन भेदविशिष्टा एव, तद्भिन्नं तद्व्यक्तित्वमेव । 'नीलो घटः' इत्यत्र तद्व्यक्तित्वरूपतादात्म्यसम्बन्धेन नीलविशिष्टो घट इति बोध एतन्मते ।

पूर्वमीमांसादर्शने वास्तवभेदाभेदघटितमेव तादात्म्यम् । 'द्रव्यं घटः' इत्यत्र जात्यादिरूपधर्मेण भेदः, व्यक्त्यात्मना विशेष्येणाभेद इत्यवच्छेदकभेदेनैकत्रैव वृक्षे कपिसंयोगतदभावयोः सत्त्वमिव न तयोर्विरोध इति स्थितम्[1] ।

अद्वैतवेदान्तदर्शने त्वभेद एव तादात्म्यम् । "सर्वं खल्विदं ब्रह्म" इति श्रुत्या प्रपञ्चमात्रे ब्रह्मणोऽभेदात् परस्परमपि प्रपञ्चेऽभेद एव, तदभिन्नाभिन्नस्य तदभिन्नत्वनियमात् । किन्तु नात्यन्तिकोऽयमभेदः, नीलत्वघटत्वयोर्धर्मयोर्भेदेन नीलघटयोस्तदसम्भवात् । अतश्च भेदसमानाधिकरणोऽभेदस्तादात्म्यमुच्यते । अत एव च घटपटयोर्न तादात्म्यम् । तत्रोक्तश्रुतिबलेन अभेदो वास्तवः, भेदस्तु आरोपित इति न तयोर्विरोधः[2]। तादात्म्यमखण्डोपाधिरेवेत्यपि अद्वैतमतविशेष इति[3]।

## अत्र निष्कर्षः

अत्र न्यायदर्शनसम्मतं तादात्म्यं न रोचते विद्वन्मूर्धन्येभ्यः, 'नीलो घटः' इत्यादिषु नीलत्वघटत्वयोर्विशेषणीभूतधर्मयोर्भेदात् । मीमांसासम्मतमपि तन्न सम्यक्, कल्पनागौरवात्, श्रुतिविरुद्धत्वाच्च । तस्माद् भेदसमानाधिकरणाभेदरूपमेव तादात्म्यमभ्युपेयम् । तत्र व्यवहारदशायां भेदो वास्तवोऽभेद आरोपितः । परमार्थदशायामभेदो वास्तवः, भेदः काल्पनिक इति विशेषः । तदुक्तं श्रीनागोजिभट्टैः – तादात्म्यं च तद्भिन्नत्वे सति तदभिन्नत्वेन प्रतीयमानत्वम् । व्यवहारावस्थीयमेतल्लक्षणमत एव तद्भिन्नत्वेन प्रतीतिर्भ्रमरूपा गृहीता (ल. म., शक्तिनि.) ।

## न्यायशास्त्राभिमतं शक्तिस्वरूपम्

न्यायदर्शनेऽपि पदेन सह पदार्थस्य सम्बन्ध एव शक्तिः । स च "अस्मात् पदादयमर्थो बोद्धव्यः" इत्याकारा पदजन्यबोधविषयत्वप्रकारिका अर्थविशेष्यिका या ईश्वरेच्छा, 'इदं पदमिममर्थं बोधयतु' इत्याकारा अर्थविषयकबोधजनकत्वप्रकारिका पदविशेष्यिका वा या ईश्वरेच्छा, तद्रूपः[4]। किन्त्वेवं सति आधुनिकसङ्केतिते देवदत्तादिपदे

---

1. मा. मे., प्र. निरूपणम् ।
2. अ. सि., प्र. परि., पृ. ५९-७८ ।
3. तदेव ।
4. श. वा., सामान्यका. ।

शक्तिर्न सिध्येदिति तादृशेच्छामात्रं शक्तिः, न तु ईश्वरीयत्वमपि विशेषणतया तत्र निविष्टमिति । तस्याश्चेच्छाया विषयत्वलक्षणः सम्बन्धः पदे पदार्थे जन्यजनकभावसम्बन्धबोधे चेति एषां समेषां वाचकत्वं वाच्यत्वं वा प्रसक्तम्, तथापि तस्यां बोधनिरूपितजनकतावत्त्वेन विषयो वाचकः, बोधविषयत्वेन विषयो वाच्य इति जन्यजनकभावादौ न वाचकत्वादिप्रसङ्ग इति नव्यन्यायसिद्धान्तः[1]।

यद्वा तादृशबोधविषयको बोध एव शक्तिरित्यपि न्यायमतविशेषः[2]।

## शाब्दिकदृष्ट्या उक्तमतखण्डनप्रकारः, नान्तरीयकतया आदौ शक्तिग्रहप्रकारश्च

तदेतन्मतं वैयाकरणेभ्यो न रोचते । तथा हि–घटमानयेति प्रयोजकवृद्धेनोक्ते सति घटमानयन्तं प्रयोज्यवृद्धं पश्यन् व्युत्पित्सुर्बालोऽनुमिनोति–अयं प्रयोज्यवृद्धो घटानयनं मदिष्टसाधनमिति ज्ञानवान्, घटानयनविषयकचेष्टावत्त्वात्, 'यो यद्विषयकचेष्टावान् स तद्विषयकज्ञानवान्' यथा अश्वारोहणविषयकचेष्टावान् देवदत्तः अश्वारोहणविषयकज्ञानवान्, तथा चायं प्रयोज्यवृद्धोऽपीति, अयमपि घटानयनविषयकज्ञानवानिति । ततश्चेदं प्रयोज्यवृद्धज्ञानम्, घटमानयेति वाक्यजन्यम्, तद्वाक्यश्रवणाव्यहितोत्तरमेव जातत्वादित्यनुमानेन तस्मिन् वाक्ये तज्ज्ञानजनकत्वं निश्चीयते । तत आवापोद्वापाभ्यामन्वयेन व्यतिरेकेण च सहचारेण पदेऽपि बोधजनकत्वं निर्धार्य्यते । तच्चेदं पदे वाक्ये वा बोधजनकत्वं पदस्य वाक्यस्य वार्थेन सह सम्बन्धाभावे नोपपद्यते, विषयेण घटादिना सह सम्बद्धानामेव चक्षुरादीनां (प्रमाणानाम्) बोधजनकत्वदर्शनात् । न हि घटेन सह सम्बन्धं विना चक्षुरादीन्द्रियं तज्ज्ञानं जनयितुं प्रभवति ।

तथा च पदवाक्ययोर्बोधजनकत्वस्यान्यथानुपपत्त्या कल्प्यमानः शक्तिरूपः कारणसम्बन्धो ज्ञानरूपकार्योत्पत्तेः प्राग् एवापेक्ष्यते । तदानीं नैयायिकाभिमतस्य बोधजनकत्वघटितस्योक्तेच्छारूपस्य सम्बन्धस्य स्वयमेवासिद्धत्वेन उक्तजनकतानियामकतया कल्पयितुमशक्यत्वात् ।

यदि तु विषयतासम्बन्धेन यत्र पदार्थे शाब्दबोधः, तत्रैव स्वप्रयोज्योपस्थितीयविषयतासम्बन्धेन पदं पदज्ञानं वा वर्तत इति नोक्तदोष इत्युच्यते, तदाऽपि इच्छाबोधयोरन्यतरस्य शक्तित्वे विनिगमनाविरह एव । ननु जानाति, इच्छति, ततो यतते, इति सर्वानुभवसिद्धे कार्यकारणभावे ज्ञानस्य कारणतया प्राथम्येनोपस्थितत्वात् तस्यैव शक्तित्वमुचितमिति चेत्, न, ज्ञानस्य कार्यकारित्वे इच्छायत्नयोरुभयोः सहकारित्वापेक्षा, इच्छायास्तत्त्वे तु यत्नस्यैवेति लाघवेनेच्छाया एव तत्त्वाङ्गीकारः । भगवतोऽपि सृष्टिकरणे सिसृक्षैव प्रधानसहकारिणी, न तु ज्ञानमिति ।

---

1. वै. सि. ल. म., र. प्र., शक्तिनि., पृ. १६-१७ ।
2. वै. सि. ल. म., र. प्र., शक्तिनि., पृ. १६-१७ ।

किञ्च, 'अस्मात् पदादयमर्थो बोद्धव्यः, इदं पदमिममर्थं बोधयतु' इतीच्छाया एवाकारौ भवितुमर्हतः, न तु बोधस्य, "इच्छार्थेषु लिङ्लोटौ" इति सूत्रेणेच्छार्थक-धातूपपदत्व एव लिङादीनां साधुत्वान्वाख्यानात् । अत्रेच्छापदमुपपदमस्त्येव, अतोऽपि इच्छाया एव शक्तित्वमिति यदि विभाव्यते, तदाऽपि 'इदमस्माद् भवतु' इतीच्छाविषयत्वमेव दण्डादावपि घटादिजनकत्वं स्यादिति बहूपप्लवः स्यात् ।

न च प्रमारूपकार्यस्थल एवैषा कल्पना न तु सर्वत्रेति नास्ति कोऽपि दोष इति वाच्यम्, प्रमाणानां जनकत्वतद्घटितसम्बन्धातिरिक्तसम्बन्धेनैव प्रमेयसम्बद्धानां ज्ञान-जनकत्वदर्शनेन इह जनकत्वघटितस्य तस्य सम्बन्धत्वानौचित्यात् । अन्यथा 'धूमाद् वह्निज्ञानं जायताम्' इतीच्छाविषयत्वमेव हेतुसाध्ययोः सम्बन्धः स्यादिति व्याप्ति-ज्ञानेऽनुमितिहेतुत्वमुच्छिन्नमेव स्यात् । यदि तु विनापीच्छां घनगर्जितेन गगने मेघानुमितिरनुभूयत एवेति नेच्छाघटितस्य सम्बन्धत्वं कल्पयितुं शक्यत इत्युच्यते, तदपि अकिञ्चित्करमेव, सम्बन्धिभिन्नत्वे सति द्विष्ठत्वे च सति विशिष्ट-बुद्धिनियामकत्वस्य सम्बन्धलक्षणस्य उक्तेच्छायामसम्भवात् । न हि विषय इच्छावा-निति व्यवहारः क्वापि । एवं चान्ततः सम्बन्धत्वाभावादेवायं पन्था नाभ्युपगतः शाब्दिकैः[1]।

## मीमांसकसम्मतं शक्तिस्वरूपम्

मीमांसादर्शनेऽपि वाच्यवाचकभावरूपैव शक्तिः पदपदार्थयोः स्वीकृताऽस्ति । ननु शब्दनिष्ठशक्तिज्ञाने सत्येव शाब्दबोधः, शाब्दबोधे च सत्येवोक्तशक्तिस्वरूप-ज्ञानमित्यन्योऽन्याश्रयदोषेण कथमिदं शक्तिस्वरूपं प्रमितं स्यादिति चेत्, शास्त्र-दीपिकायां प्रथमे तर्कपाद एव "स्वभावसिद्धत्वात्" इति समाहितत्वात्[2]। इदमेव वाक्यपदीये "अनादिर्योग्यता तथा" इत्यत्र अनादिपदेनोक्तम्[3]। अतोऽनादित्वाद् (स्वभावसिद्धत्वात्) नास्ति दोषलेशः ।

श्लोकवार्त्तिकेऽप्ययं सम्बन्धः साक्षादुक्तः[4]। लघुमञ्जूषायाः संवाद्येवैतन्मतम् ।

---

1. वै. सि. ल. म., र. प्र. च, शक्तिनि., पृ. १६-२३ ।
2. "अस्ति तु सम्बन्धः प्रत्याय्यप्रत्यायकत्वलक्षणः, असत्येव सम्वन्धान्तरे स्वभावत एव शब्दोऽर्थस्य प्रत्यायकः, अर्थश्च प्रत्याय्य इत्ययमेव सम्वन्धो भविष्यति" । (शा. दी., १ पा., पृ. ३५६-५८ )
3. वा. प. ३/३/२९ ।
4. श्लो. वा. ।

**उक्तशक्तिस्वरूपेषु निष्कर्षः**

सूत्रभाष्यादिसम्मतं पदपदार्थयोस्तादात्म्यमेव शक्तिः । न च भेदाभेदरूपस्य तस्य सम्बन्धत्वं न युक्तमिति वाच्यम्, वृत्तित्वानियामकत्वेऽपि सम्बन्धितानियामकत्वेनास्यापि सम्बन्धत्वाभ्युपगमे क्षतिविरहात्, स्वस्वामिभावादिवत् । "वृद्धिरादैच्" इत्यादौ समानविभक्तिकत्वेन प्रयोगस्यैव तस्य तत्त्वे प्रमाणाच्च । स्वीकृतं च केवलाभेदरूपतादात्म्यस्यापि सम्बन्धत्वं नैयायिकवरिष्ठैः । द्विष्ठत्वमपि द्वित्वविशिष्टत्वरूपमुपपाद्यते तदीयैः । वैशिष्ट्यं च स्वसामानाधिकरण्य-स्वाश्रयाश्रयवृत्तित्वान्यतर-सम्बन्धेन । एवमेव तत्तद्रूपस्य तादात्म्यस्य सम्बन्धत्वं स्वीकृतमेवान्यैरपि दर्शन-तत्त्वविद्भिः ।

यत्तु "वाच्यवाचकभावरूपैव मुख्या शक्तिः, तादात्म्ये तु तद्द्योतकतया आरोपितं शक्तित्वम्" इति मञ्जूषाकृतः, तन्न मनोहरम्, मुख्यत्वे सम्भवति आरोपितत्वस्वीकारे मानाभावात्, वाच्यवाचकभावेऽन्योऽन्याश्रयदोषग्रासाच्च, अनादित्वविशेषणेन तत्परिहारे गौरवाच्च । तद्रीत्या अस्यापि वृत्तित्वानियामकत्वेन सम्बन्धत्वासम्भवाच्च ।

तादात्म्यघटकस्य भेदाभेदान्यतरस्योद्भूतत्वेन जायमानो यः 'अस्येदं नामधेयम्, सोऽयम्' इत्यादिव्यवहारस्तस्य तादात्म्यपक्ष एव निर्भराच्च ।

'योग्यतालक्षणः सम्बन्धः' इति पक्षेऽपि तादात्म्ययोग्यता इत्यर्थः कर्तव्य एतदेकवाक्यतया । अत एवोक्तं श्रीहरिवृषभेण–"यथेन्द्रियं प्रकाशकम्, विषयः प्रकाश्यः, तद्वद् यः शब्दः प्रकाशकः, यश्चार्थस्तस्य प्रकाश्यस्तत्र द्वयोः प्रकाश्य-प्रकाशकभावेन तादात्म्ययोग्यतानुमितिः कर्तव्या" इति[1]।

यदपि बोधजनकत्वरूपयोग्यताऽपि पक्षान्तरम्, तच्चापि न युक्तिसहम्, मञ्जूषाकृतैव आत्माश्रयादिदोषप्रदर्शनेन निरस्तत्वात् ।

एतेन शब्दे बोधजननसामर्थ्यमेव शक्तिरित्यपि[2] पक्षान्तरं निरस्तं वेदितव्यम् । शक्तेरपि कार्यजनने सम्बन्धस्यैव नियामकत्वात्, दीपगतप्रकाशकत्वशक्तावपि तस्य प्रकाशने घटादिना सह संयोग एव नियामकः । उक्तं च श्रीहरिणापि–

**उपकारः स यत्रास्ति धर्मस्तत्रानुगम्यते ।**
**शक्तीनामप्यसौ शक्तिर्गुणानामप्यसौ गुणः**[3] ॥ इति ।

1. वा. प., ह. वृ. टी. १/२४-२६ ।
2. श. कौ., उद्धृ. ल. म., शक्तिनि. ।
3. वा. प. ३/३/६ ।

## तादात्म्यस्य शक्तित्वेऽपि अग्न्यादिशब्देन न मुखदाहः

ननु पदपदार्थयोस्तादात्म्येऽभ्युपगतेऽग्न्यादिशब्दोच्चारणे मुखं कथं न दह्यते? गुडशब्दोच्चारणे च कथं न मुखे माधुर्यमनुभूयते? इति चेत्, उच्यते–आरोपिताभेदघटितस्यैव शब्दार्थयोस्तादात्म्यस्य स्वीकारेणादोषात् । न ह्यारोपिताभेदेनैकस्य सम्बन्धिनः कार्यमपरेण सम्बन्धिना कर्तुं शक्यम् । शाब्दिकनये "बौद्ध एवार्थः शक्यः, बौद्ध एव शब्दः शक्तः" इति सिद्धान्ताच्च[1]। न च बौद्धे पदार्थे दाहादिशक्तिमत्त्वमनुभूयते ।

किञ्च, कारणतावच्छेदकसंयोगसम्बन्धेनाग्नेस्तत्राभावेन बाह्यपदार्थवादेऽपि न दाहप्रसङ्ग इति सर्वं सुस्थम् ।

## एकस्मिन् शब्देऽनेकार्थनिरूपितं तादात्म्यमेकमनेकं वा?

एकशब्देऽनेकार्थनिरूपिततादात्म्यमेकमपि, अनेकमपि । एतद्विषयेऽस्ति पक्षत्रयम् । तथा हि – अर्थभेदात्तादात्म्यभेदः, शब्दभेदश्चेत्येकः पक्षः । अर्थभेदेऽपि तादात्म्यभेदः, शब्दैक्यं चेति द्वितीयः पक्षः । अर्थभेदेऽपि तादात्म्यैक्यं शब्दैक्यं चेति तृतीयः पक्षः ।

"हलोऽनन्तराः संयोगः" इति सूत्रे भाष्यकृता सूचितमिदं पक्षत्रयम्[2]। तथा हि तत्र ग्रामशब्दोऽयं "बह्वर्थः" इत्युक्त्या अर्थभेदेऽपि शब्दैक्यमेवेत्यायाति । अत्र पक्षे तादात्म्यरूपा शक्तिराश्रयस्य शब्दस्यैक्येनैका, एकत्राम्रफले रूपरसगन्धादीनामनेकेषामेकतादात्म्यवत् । "निरूपकस्यार्थस्य भेदाद् भिन्नान्येव तादात्म्यानि" इत्यपि मतम् । इतोऽग्रे च "तद् यः सारण्यके ससीमके सस्थण्डिलके वर्तते" इत्युक्त्या अर्थभेदाच्छब्दे भेद इत्यायाति । अत्र पक्षे तु तादात्म्यभेद एव, निरूपकाश्रययोरुभयोरपि भेदात् । एवं चार्थभेदस्तादात्म्यभेदः शब्दभेद इत्येकः पक्षः (१) । अर्थभेदस्तादात्म्यभेदः शब्दैक्यमिति द्वितीयः पक्षः (२) । अर्थभेदस्तादात्म्यैक्यं शब्दैक्यमिति तृतीयः पक्षः (३) । लाघवादेष तृतीय एव पक्षः सिद्धान्ततया मन्तव्यः ।

"सरूपाणाम्" इति सूत्रेऽपि भाष्ये स्फुटमिदं पक्षत्रयम्[3] । "प्रत्यर्थं शब्दाभिनिवेशः, किमिदं प्रत्यर्थमिति ? अर्थमर्थं प्रति प्रत्यर्थम्, प्रत्यर्थं शब्दनिवेशात्"

---

1. ल.म., शक्तिनि. ।
2. म. भा. १/१/७ ।
3. म. भा. १/२/६४ ।

अनयोक्त्या अर्थभेदेन शब्दभेदः स्फुटमायाति । पुनरग्रे भाष्ये "यदपि ह्यर्थावर्थौ प्रति तदपि प्रत्यर्थमेव, यदपि अर्थानर्थान् प्रति तदपि प्रत्यर्थमेव' इत्यभिधानेन अर्थभेदेऽपि न शब्दभेद इत्यागच्छति । तादात्म्यस्य भेदाभेदौ तु पूर्ववदेव बोध्यौ ।

**अपशब्देऽपि शक्तिरस्त्येवेति शब्दशास्त्रसिद्धान्तः**

सा चेयं तादात्म्यलक्षणा शक्तिः साधुशब्देष्विवापशब्देष्वप्यस्त्येव । ततोऽपि निराबाधं व्यवहारादिना बोधानुभवात् । उक्तं च भगवता भाष्यकृता–"गौः, इत्यस्य शब्दस्यार्थे बहवो गावी, गोणी, गोता, गोपोतलिका इत्यादयोऽपभ्रंशा वर्तन्ते" इत्यर्थ-कम्[1] "गौः, इत्यस्य शब्दस्य गाव्यादयोऽपभ्रंशाः"[2] इति । "समानायामर्थावगतौ शब्देन चापशब्देन च तत्र धर्मनियमः क्रियते, शब्देनैवार्थोऽभिधेयः, नापशब्देनेति । एवं क्रियमाणमभ्युदयकारि भवति"[3] इति च ।

हरिणाऽप्युक्तम्–

**शिष्टेभ्य आगमात् सिद्धाः साधवो धर्मसाधनम् ।**
**अर्थप्रत्यायनाभेदे विपरीतास्त्वसाधवः ॥**
**पारम्पर्यादपभ्रंशा विगुणेष्वभिधातृषु ।**
**प्रसिद्धिमागता येषु तेषां साधुरवाचकः ॥**
**दैवी वाग् व्यवकीर्णेयमशक्तैरभिधातृभिः ।**
**अनित्यदर्शिनां त्वस्मिन् वादे बुद्धिविपर्ययः**[4] ॥ इति ।

भूषणकारेणापि समीचीनयुक्तिभिरयं पक्षः प्रसाधितः । यथा–"अपभ्रंशानाम-शक्तत्वे ततो बोध एव न स्यात्, न च साधुस्मरणात् ततो बोधः, तानविदुषां पामराणामपि बोधात् । न च शक्तिभ्रमात् तेभ्यो बोधः, बोधकत्वस्य बाधेन शक्तिग्रहस्याभ्रमत्वात् । किञ्च, विनिगमनाविरहाद् भाषाशब्देष्वपि शक्तिरावश्यकी । न हि तेषु नानात्वं प्रतिबन्धकं कल्पयितुं शक्यम्, संस्कृतवद् महाराष्ट्रादिभाषायाः सर्वत्रैकत्वेन प्रत्येकं विनिगमनाविरहतादवस्थ्यात्"[5] ।

लघुमञ्जूषाकृताऽपि नानाप्रमाणैरयं पक्षः सिद्धान्तितः, विपक्षश्च निराकृतः[6]।

---

1. वैं. सि. ल. म., र. प्र., पृ. ६९ ।
2. म. भा., नवा. १/१/१ ।
3. म. भा., नवा. १/१/१ ।
4. वा. प. १/२७, १५३-५४ ।
5. वै. भू. सा. प्रभादर्पण., शक्तिनि., पृ. ३३९-४२ ।
6. वै. सि. ल. म., र. प्र. युता, पृ. ५४-८६ ।

**एतद्विषये वैशेषिकदर्शनसंवादः**

"सामयिकः शब्दादर्थप्रत्ययः" (७/२/२०) इति सूत्रयता महर्षिकणादेनापि शब्दापशब्दयोस्तुल्यं सामयिकत्वमङ्गीकृतमस्ति सामयिकत्वं चात्र समय-(सङ्केत) गृहीतसम्बन्धजन्यत्वम्" इति मञ्जूषाकारो व्याख्यत्[1]।

**अत्र काव्यप्रकाशसंवादः**

काव्यप्रकाशकृन्मतेऽपि अपभ्रंशे स्वारसिकी शक्तिरस्त्येव, अन्यथा शक्य-सम्बन्धादिरूपलक्षणाऽपि तत्र कथं सिध्येत्?

किञ्च, लक्ष्यस्य व्यञ्जकतायाम् "साहेन्ती" इत्याद्युदाहरणदानमपि कथं सङ्गच्छेत[2]?

**अत्र न्यायदर्शनविसंवादः**

न्यायदर्शने तु अपभ्रंशानामनादित्वाभावेन साधूनामेवानादित्वेन साधुष्वेव वाचकत्वं व्यवस्थापितम् । उक्तं च मञ्जरीकृता "स्वाध्यायाध्ययनसमये यादृशमेव शब्दं यथोचितमात्रानुस्वारस्वरादिरूपसमुत्थितमुच्चारयति, आचार्यस्तादृशमेव शिष्यं प्रत्युच्चारयति । सोऽपि शिष्यो यदा गुरुर्भविष्यति, तदा स्वशिष्यं तथैव शिक्षयिष्यति । आचार्यो यदा शैशवे शिष्य आसीत्, तदा अन्येन गुरुणा शिक्षितोऽभूत्, सोऽपि तदन्येन, सोऽपि तदन्येन इत्येवमनादित्वम् ।

इत्थमेव यदि गाव्यादीनां गवादिवत् प्रमादतः सुपरिरक्षितः प्रयोगः, तथैव तेभ्योऽर्थप्रतिपत्तिपूर्वको व्यवहारः, तदा अनादिगवादिशब्दसमानविषया एव गाव्यादयः स्युः ।

न चैवमस्त्विति शक्यमभ्यनुज्ञातुमिदानीमेव भ्रश्यतां तेषां प्रत्यक्षत उपलब्धेरिति । तस्मादवश्यं तावदद्यत्वे गाव्यादयः प्रकारान्तरोपपत्तिसम्भवनाङ्कुरप्रभवाः सन्तो न गवादिशब्दसमानविधित्वमध्यवसातुं शक्नुवन्ति इति[3] ।

**उक्तविषये मीमांसादर्शनविमतिः**

पूर्वमीमांसका अपि अपभ्रंशे शक्तिं नाङ्गीकुर्वन्ति । अशक्त्या असामर्थ्येन साधूनामेव तथोच्चारणमर्थतोऽवयवतश्चानुरूपत्वादित्यर्थकम् "तदशक्तिश्चानुरूपत्वात्" इति जैमिनिसूत्रं तत्र प्रमाणयन्ति[4] ।

---

1. वै. सि. ल. म., पृ. ६४ ।
2. का. प्र., उ. २, कारि. ७ ।
3. न्या. म., प्र. प्रक., पृ. ३८६-८७ ।
4. जै. द. १/३/२८ ।

भाष्यकृता श्रीशबरस्वामिनापि "प्रतीयते हि गाव्यादिभ्यः सास्नादिमानर्थः, तस्मादितो वर्षशतेऽप्यस्य सम्बन्धोऽर्थेन सह आसीदेव, ततः परेण, ततः परतरेणेत्येवमपशब्दानामप्यनादित्वम् 'हस्तः, करः, पाणिः' इतिवत् साधुत्वं चाशङ्क्य[1] अन्यायश्चानेकशब्दत्वम्' इति सूत्रेण[2] न चैष न्यायो यत्सदृशाः शब्दा एकमर्थमभिनिविशमानाः सर्वे विच्छिन्नपारम्पर्य्या एव" इत्यर्थकेन समाहितम् । ततोऽर्थावबोधस्तु सादृश्यात् साधुशब्देऽवगते सति सम्भविष्यति । 'हस्तः करः' इत्यादीनां पर्यायाणां त्वभियुक्तोपदेशात् सर्वेषामर्थेन सम्बन्धोऽनादिरिति विनिगमकाभावात् समेषां साधुत्वमिति च व्याख्यायते ।

"शब्दे प्रयत्ननिष्पत्तेरपराधस्य भागित्वम्" इति सूत्रेऽपि[3] शबरस्वामिना "अपराधात् प्रवृत्ता गाव्यादयो न नियोगतो विच्छिन्नपारम्पर्याः" इति स्फुटमुक्तम् । तस्मात् शब्दानामेवानादित्वं साधुत्वं च, नापशब्दानामिति मीमांसाराद्धान्तश्चकास्ति ।

**उक्तविषये निष्कर्षः**

निःसंशयमपभ्रंशेष्वपि शक्तिरस्त्येव आनुपूर्व्यवच्छेदेन,[4]यथा साधुशब्दे शक्तिस्तथैवानुपूर्व्याः सत्त्वे को नाम समर्थो यदपभ्रंशेषु शक्तिमवहेलयेत् । यदप्युच्यतेऽधुनैव केनचिन्नूतनमपभ्रष्टम्, तत्रापि शक्तिस्तिष्ठतु नाम । एवंरीत्या अनवस्था ध्रुवं प्रसज्येतेति, तदपि न सम्यक् । शक्ततावच्छेदकानुपूर्व्याः सत्त्वे का हानिः, तत्र शक्त्यभ्युपगमे ? अन्यथा ततो बोध एव कथं भवेत् ?

किञ्च यदुक्तम्–[5]"गाव्यादयः शब्दा न अनादयः, अपि तु साधवो गवादिशब्दा एवेति न तेषु शक्तिः, अनादिशब्देष्वेव तत्स्वीकारेण व्यवहारोपपत्तौ, आधुनिकेषु गाव्यादिषु तत्स्वीकारे गौरवात्, वैयर्थ्याच्चेति । तदपि न रुचिकरम्, स्वयमेव भवद्भिर्मीमांसकैर्मन्यते नानीदृशं जगत्" इति ।

किं वा वाल्मीकीयरामायणे सुन्दरकाण्डे श्रीहनूमतोच्यते[6]–

**यदि वाचं प्रदास्यामि द्विजातिरिव संस्कृताम् ।**
**रावणं मन्यमाना मां सीता भीता भविष्यति ॥** इति ।

---

1. शा. भा. १/३/२४ ।
2. मी. द., शा. भा. १/३/२८ । } उद्धृतमिदम्, वै. सि. ल. म., पृ. ७१-७२ ।
3. मी. द., शा. भा. १/३/२५ । }
4. मी. द., शा. भा. १/३/२५ ।
5. तदेव ।
6. वा. रा., सु. का. ३०/१८ ।

अनयोक्त्या अनुमीयते यत् संस्कृता असंस्कृता चेति द्विविधा वाक् प्राक्कालत एव प्रचलति । अन्यथा 'संस्कृता' इति वाचो विशेषणं कथं सङ्गच्छेत? वाग्रूपे विशेष्ये संस्कृतात्वस्य सर्वदा सत्त्वेन व्यभिचाराभावात् । "सम्भवव्यभिचाराभ्यां स्याद् विशेषणमर्थवत्" इति प्रसिद्धनियमविरोधात् ।

एवमेव अध्यात्मरामायणेऽपि भगवता रामेणोक्तम्–

**बहु व्याहरतानेन न किञ्चिदपभाषितम्**[1] ॥ इति ।

अनयाऽप्युक्त्या अपभ्रंशानामनादिता निश्चीयत एवेति साधुवदेव तत्र शक्तिः प्रमितैवेति निष्कर्षः ।

**शक्तिभेदनिरूपणम्**

सा चेयं शक्तिस्त्रिधा, योगो रूढिर्योगरूढिश्चेति भेदात् । तत्र शास्त्रकृत्कल्पितावयवार्थाप्रतीतौ यदर्थनिरूपितं प्रकृतिप्रत्ययसमुदायमात्रे बोधकत्वं तत्पदे सा तदर्थनिरूपिता शक्ती रूढिरित्युच्यते, यथा मणिनूपुरशब्दादौ । न हि मणिशब्दे शब्दार्थकाद् मण्धातोः कर्तरि इन्प्रत्यये सति निष्पन्नादपि मणिशब्दात् शब्दकर्तृरूपोऽर्थः प्रतीयते, अपि तु रत्नरूप एवार्थः, स च रूढिमहिम्नैव ।

शास्त्रकृत्कल्पितावयवार्थमात्रबोधकत्वं यत्र पदे, तत्र योगशक्तिरभ्युपेया । यथा पाचकपाठकादिशब्देषु । अत्र पचिधातुना विक्लित्तिस्तदनुकूलो व्यापारश्च बोध्यते । अक्प्रत्ययेन कर्तृरूपोऽर्थः । एवं च मिलित्वा विक्लित्त्यनुकूलव्यापाराश्रयरूपार्थबोधः सम्पद्यते ।

यत्र शास्त्रकल्पितावयवार्थान्वितविशेष्यभूतार्थनिरूपितं समुदाये वोधकत्वम्, तत्र योगरूढिः । यथा पङ्कजादिपदेषु । अत्र पङ्कजनिकर्त्रभिन्नं पद्ममिति बोधः ।

परन्त्वेतच्छक्त्याश्रयीभूतं पदं यौगिकम्, रूढम्, योगरूढं चेति त्रिविधमेव न, अपि तु यौगिकरूढमिति चतुर्थमपि बोध्यम् । यथा अश्वगन्धाशब्दोऽश्वसम्बन्धवत्तया वाजिशालाबोधे यौगिकम्, ओषधिविशेषे रूढं चेति कदाचिद् यौगिकम्, कदाचिद्रूढम्, यौगिकरूढमित्युच्यते[2]।

**क्वचन शब्दनिष्ठायाः शक्तेर्नियमनमपि**

संयोगविप्रयोगादिभिरेषा शक्तिर्नियम्यतेऽपि । उक्तं च हरिणा–

---

1. अ. रा., कि. का. १/१६-१८ ।
 {पा.–अनेन भाषितं कृत्स्नं न किञ्चिदपशब्दितम् । }
2. वै. सि. ल. म., र. प्र., पृ. ८८-८९ ।

**संयोगो विप्रयोगश्च साहचर्यं विरोधिता ।**
**अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ॥**
**सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ।**
**शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः**[1] ॥ इति ।

शब्दार्थस्यानवच्छेदेऽनिश्चये (सन्देहे) तदपाकरणद्वारेण एते संयोगादयो विशेष-स्मृतिहेतवो निर्णयकारणानि भवन्तीति यावत् ।

तत्र 'सवत्सा धेनुः' इत्यत्र धेनुपदेन गोधेनुरेव गृह्यते, वत्ससंयोगात् । 'अवत्सा धेनुः' इत्यत्रापि गोधेनुरेव ग्राह्या, वत्सविप्रयोगात् । 'रामलक्ष्मणौ' इत्यत्र परस्पर-साहचर्यादुभौ दाशरथी एव गृह्येते । 'रामार्जुनगतिस्तयोः' इत्यत्र विरोधात् परशुराम-सहस्रबाह्वोरेव ग्रहणम् । 'अञ्जलिना जुहोति, अञ्जलिना सूर्यमुपतिष्ठते' इत्यादौ जुहोत्यादिपदार्थवशाद् अञ्जलिपदस्य तत्तदाकाराञ्जलिपरत्वम् । 'सैन्धवमानय' इत्यत्र प्रकरणवशेनाश्वलवणयोरन्यतरस्य ग्रहणम् । 'अक्ताः शर्करा उपदधाति' इत्यत्र 'तेजो वै घृतम्' इति घृतस्तुतिरूपाल्लिङ्गाद् 'अक्ताः' इत्यस्य घृतसाधनाञ्जनपरत्वम् । 'रामो जामदग्न्यः' इत्यत्र जामदग्न्यपदसन्निधानेन रामपदेन परशुरामो ग्राह्यः । 'अभिरूपाय कन्या देया' इत्यत्राभिरूपतरायेत्यर्थः सामर्थ्यात् प्रतीयते । सामर्थ्यमेवात्र मुख्यं निर्णायकम्, संयोगादयस्तु तद्व्यञ्जकप्रपञ्चः, तैः सामर्थ्यस्यैवाभिव्यक्तेः ।

**यश्च निम्बं परशुना यश्चैनं मधुसर्पिषा ।**
**यश्चैनं गन्धमाल्याभ्यां सर्वस्य कटुरेव सः ॥**

इत्यादौ परशुना इत्यस्य छेदनार्थत्वम्, औचित्यात् । एवमेवापराण्यप्युदाहरणानि लघुमञ्जूषादौ[2] स्पष्टानि । संख्यासंज्ञासूत्रे भाष्येऽपि एष नियमः स्फुटीकृतोऽस्ति । तत्र हि–"अर्थात् प्रकरणाद्वा लोके कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्ययो भवति । अर्थो वास्यैवंसंज्ञकेन भवति, प्रकृतं वा तत्र भवति, इदमेवंसंज्ञकेन कर्तव्यमिति । आतश्च अर्थात् प्रकरणाद्वा, अङ्ग! हि भवान् ग्राम्यं पांशुलपादमप्रकरणज्ञमागतं ब्रवीतु गोपालकमानय, कटजकमानयेति, उभयगतिस्तस्य भवति, साधीयो यष्टिहस्तं गमिष्यति"[3] इत्युक्तम् ।

---

1. वा. प. २/३१७-१८ ।
2. ल. म., र. प्र. युता, शक्तिनिरू., पृ. ९०-९१ ।
3. म. भा. १/१/२२ ।

अत्र प्रदीपः – "अर्थः सामर्थ्यम्, यथा गोपालकमानय, माणवकमध्यापयिष्यतीति, यष्टिहस्तस्याध्यापनासम्भवात् संज्ञिनो ग्रहणम्, प्रकरणं प्रस्तावः, यथा भोजनप्रकरणे सैन्धवमानयेति लवणे प्रतीतिः, गमनप्रकरणे त्वश्वे" इति[1] ।

**लक्षणानिरूपणम्**

शक्तेरतिरिक्तायाः लक्षणायाः स्वीकारे शाब्दबोधजनकपदार्थोपस्थितिं प्रति शक्तिज्ञानत्वेन लक्षणाज्ञानत्वेन हेतुतायां गौरवमालोच्य 'लक्षणा नातिरिक्ता शक्तितः' इति सिद्धान्तो महाभाष्यानुमोदितो भूषणसारकृदादीनाम्[2]।

परमलघुमञ्जूषायां श्रीनागेशभट्टोऽपि–"प्रसिद्धाप्रसिद्धभेदेन शक्तेरेव द्वैविध्यमभ्युपेत्य लक्षणा अप्रसिद्धशक्तितो नान्या" इति सिद्धान्तितवान्[3]।

तत्र आपामरविद्वज्जनवेद्यात्वं प्रसिद्धात्वम्, यथा गङ्गापदस्य जलप्रवाहविशेषरूपेऽर्थे प्रसिद्धा शक्तिरियम् ।

सहृदयमात्रवेद्यात्वमप्रसिद्धात्वम्, यथा 'गङ्गायां घोषः' इत्यत्र गङ्गापदस्य तीररूपेऽर्थे एषाऽप्रसिद्धा शक्तिः ।

लघुमञ्जूषायामपि[4]–"आरोपितशक्यतावच्छेदकरूपेण शक्त्यैव तत्पदवाच्यत्वेन प्रसिद्धान्यव्यक्तिबोधे व्यक्तिविशेषबोधे वा लक्षणा इति व्यवहारः" इत्युक्त्या परमतसिद्धौ लक्षणा इति व्यवहार इति सूच्यते, स्वमते तु शक्तिरेव इत्यपि 'शक्त्यैव तत्पदवाच्यत्वे' इत्युक्त्या सूच्यते ।

**लक्षणालक्षणम्**

एवं च शक्यतावच्छेदकारोप एव लक्षणा अत्र शास्त्रेऽभ्युपेया । यथा उक्तस्थले 'गङ्गायां घोषः' इत्यत्र गङ्गात्वस्य तीरे आरोपः । स च गङ्गात्वाभाववत्तीरं गङ्गात्वेन जानीयामिति आहार्यरूपो ग्राह्यः,[5] न तु भ्रमरूपः । "पुंयोगादाख्यायाम्" इति सूत्रे भाष्यकृता ध्वनितश्चायं पन्थाः । तत्र हि–"गोपी इत्यादौ गोपस्येयमिति गोपसम्बन्धि-

---

1. म. भा., प्र. १/१/२२ ।
2. वै. भू. सा., शक्तिनिरू. ।
3. पर. ल. म., पृ. ८-९ ।
4. वै. सि. ल. म., लक्षणानि. ।
5. वै. सि. ल. म., लक्षणानि. ।

स्त्रीत्वेन बोधे तस्येदमिति सूत्रेण तादृशेऽर्थेऽण्प्रत्यये सति 'गौपी' इति स्यात् । तादृशवाक्यस्यैव वा साधुत्वं स्यादिति 'गोपी' इत्यस्यासाधुत्वमाशङ्क्य नावश्यमयमेवाभिसम्बन्धो भवितुमर्हति तस्येदमिति; किन्तु तन्मूलकः सोऽयमित्यप्यभिसम्बन्धोऽस्ति । चतुर्भिः प्रकारैस्तस्मिन् स इत्येतद् भवति तात्स्थ्यात्, ताद्धर्म्यात्, तत्सामीप्यात्, तत्साहचर्यात् । 'मञ्चा हसन्ति, सिंहो माणवकः, गङ्गायां घोषः, यष्टीः प्रवेशय' इत्युदाहरणानि"[1] इत्युक्तम् ।

तत्रैव प्रदीपकृताऽपि–"आरोप्यते ताद्रूप्यम्, न तु मुख्यम् । बालेषु मञ्चत्वारोपान् मञ्चपदप्रवृत्तिर्हसन्तीति पदान्तरप्रयोगाद् विज्ञायते" इत्युक्तम् ।

वाक्यपदीयेऽपि–

**गोत्वानुषङ्गो वाहीके निमित्तात् कैश्चिदिष्यते ।**
**अर्थमात्रं विपर्यस्तं शब्दः स्वार्थे व्यवस्थितः[2] ॥**

इत्युक्तमस्ति । लघुमञ्जूषायां चास्य श्लोकस्यायमभिप्रायः प्रकाशितोऽस्ति यत्– "कैश्चित् शब्दार्थसम्बन्धनित्यत्ववादिभिर्वैयाकरणैर्जात्यादेर्निमित्ताद् वाहीके गोत्वानुषङ्गो गोत्वसम्बन्ध इष्यते । अर्थमात्रमित्यत्र अर्थो विशेष्यभूतो ग्राह्यः । स्वार्थः प्रवृत्तिनिमित्तम्, तत्र शब्दो व्यवस्थित एवेति नोक्तसम्बन्धस्यानित्यत्वप्रसक्तिः" इति[3]। एवं च 'शक्यतावच्छेदकस्य प्रवृत्तिनिमित्तस्य गोत्वादेरारोपोऽपि शब्दार्थसम्बन्धतया अङ्गीकृत एवैतन्मतेऽपि' इत्यायातम् । 'प्रसिद्धस्य चार्थस्य यत्रार्थे कश्चन सम्बन्धोऽस्ति, तत्रैवायमारोप इत्यपि जाड्यादेर्निमित्तात्' इत्यनेनात्र ध्वनितम् । एवं च 'स्ववृत्तिजाड्यसदृशजाड्यवत्त्वं गोः सम्बन्धो वाहीके यदा ज्ञायते, तदैव गोत्वारोपः । गङ्गापदार्थस्य च सामीप्यसम्बन्धो यदा तीरे गृह्यते, तदैव गङ्गात्वारोप इति निरुक्तसम्बन्धज्ञानस्य फलभूतोऽयमारोपः' इत्यादि च बोध्यम् ।

## आरोपात्मकलक्षणापक्षे कार्यकारणभावगतलाघवस्य स्फुटीकरणम्

लक्षणावृत्तेरनतिरिक्तत्वे तदर्थविषयकशाब्दबोधे तदर्थनिरूपिततत्पदनिष्ठशक्तिग्रहः, तदधीनतदर्थोपस्थितिश्च कारणमिति एकरूपेणैव कार्यकारणभावः कल्पनीयः स्यात् । तस्याः पृथक् सत्तावादिनां नैयायिकादीनां मते तु तदर्थविषयकशाब्दं प्रति

1. म. भा. ४/१/८ ।
2. वा. प. २/२५७ ।
3. वै. सि. ल. म., र. प्र. युता, पृ. १२३ ।

तदर्थनिरूपिततत्पदनिष्ठलक्षणाग्रहस्य तदधीनतदर्थोपस्थितेश्चापि हेतुतायाः स्वीकारे गौरवं दृढं स्यादेव[1]। यत्तु–इदं पदमेतदर्थबोधकमिति शक्तिज्ञानेन कार्यकारण-भावकल्पनेऽपि पदतदर्थभेदेनानेककार्यकारणभावकल्पनायां लक्षणानङ्गीकर्तृमतेऽपि गौरवं समानमेव ।

अयं भावः – यथा भगीरथखातावच्छिन्नप्रवाहविषयकोपस्थितिं प्रति गङ्गापदं भगीरथखातावच्छिन्नप्रवाहविषयकबोधजनकमिति शक्तिज्ञानस्येव जाह्नवीपदं तादृशार्थ-बोधजनकमिति शक्तिज्ञानस्यापि कारणत्वमिति पदभेदेन कार्यकारणभावभेदः । एवं प्रवाहविषयकोपस्थितिं प्रति गङ्गापदं प्रवाहविषयकबोधजनकमिति शक्तिज्ञानस्येव, तीरविषयकोपस्थितिं प्रति गङ्गापदं तीरविषयकबोधजनकमिति शक्तिज्ञानस्यापि कारणत्वमिति अर्थभेदेन कार्यकारणभावभेदः ।

एवं लक्षणावादिनयेऽपि प्रवाहविषयकोपस्थितिं प्रति गङ्गापदनिष्ठशक्तिज्ञानं कारणम्, तीरविषयकोपस्थितिं प्रति गङ्गापदनिष्ठलक्षणाज्ञानं कारणमिति कार्यकारण-भावद्वयेन साम्यमेव ।

तत्तु न समीचीनम्– गङ्गापदस्य तीरे शक्तिभ्रमकाले ततस्तीरोपस्थित्यादेः सर्व-सम्मततया लक्षणावादिनस्तवापि तत्तत्कारणतावच्छेदककोटौ तत्तत्पदतत्तदर्थनिवेश-स्यावश्यकत्वात् । लक्षणाग्रहप्रयुक्तकार्यकारणभावकल्पनागौरवं तु तव मतेऽति-रिच्यत एवेत्यादि बहु स्पष्टं भूषणसारे, दर्पणे रत्नप्रभायां च[2]।

## अत्र पक्षे बाधज्ञानस्य न प्रतिबन्धकत्वम्

ननु 'गङ्गायां घोषः' इत्यादौ आरोपितगङ्गात्वेन तीरस्य बोध इति तज्ज्ञानस्य भ्रमत्वेन तदुत्तरं गङ्गागतशैत्यपावनत्वप्रतीतिरूपं फलं न सिध्येत् । अत एव शुक्तौ रजतज्ञाने भ्रमत्वज्ञानवतः पुंसो न प्रवृत्तिरिति चेत्, उच्यते–मध्ये व्यञ्जनया तीरे मुख्यगङ्गापदार्थाभेदस्यापि प्रतीतिः । व्यञ्जनाजन्यज्ञाने अन्वयबोधानुपपत्ति-मूलके आरोपितार्थविषयकबोधे च बाधनिश्चयेनाप्रामाण्यग्रहो न जायते । यतो हि बाधनिश्चये प्रतिबन्धकत्वं हि तद्वत्ताबुद्धेरप्रमात्वबोधनरूपमेव । तच्चानाहार्यज्ञानस्यैव भवितुमर्हति, आहार्यं तु प्रमाभिन्नमेव । प्रकृते तु आहार्यमेव ज्ञानमिति पूर्वमेवोक्त-मिति न तस्य प्रतिबध्यत्वम्, नापि प्रतिबन्धकत्वम् । शाब्दिकमते चैतत्

1. वै. भू. सा., शक्तिनि., पृ. ३२५ ।
2. वै. भू. सा., र. प्र., पृ. ३२६-२७ ।

प्रत्यक्षभिन्नमपि सिद्धान्तितमिति [1]प्रकृते तस्य शाब्दबोधात्मकत्वेऽपि न क्षतिः । अत एव 'स्थाली पचति' इत्यत्र पचिधातुवाच्ये स्थालीस्थे व्यापारे एकदेशभूतेऽपि अधिश्रयणाद्यधःश्रयणान्तव्यापारत्वारोपेण तद्विषयकबोधे नाप्रमात्वग्रहः । अन्यथा अनुपपत्तिपरिहारो न सम्भवेत्[2]।

## कतिपयस्थलेषु आरोपस्य प्रकार ः

अत्र पक्षे कतिपयस्थलेषु आरोपस्य प्रकारः प्रदर्श्यते । तथा हि–'गङ्गायां घोषः' इत्यत्र तु गङ्गात्वारोपः सामीप्यसम्बन्धमूलक उक्त एव, विशेषस्तु अग्रे वक्ष्यते । 'काकेभ्यो दधि रक्ष्यताम्' इत्यत्र तु काकाकाकसमुदाये दध्युपघातकमात्रे काकत्वारोपः । तादृशसमुदायान्तःपातिनि काके यद्यपि काकत्वमस्त्येवेति कथमत्रारोपः, तथापि दध्युपघातकमात्रवृत्तिसमुदायत्वावच्छेदेन तत्समुदाये तस्याभाव एवेति तदभाववति तद्धर्मप्रकारिका बुद्धिरुदेतुमर्हत्येव[3] ।

"रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि" इत्यत्र तु सौरभातिशयविशिष्टकमलस्य कमलात्मकव्यक्तिविशेषस्य कमलत्वेन बोधः, तादृशे कमले कमलत्वस्य सत्त्वेऽपि सौरभातिशयावच्छेदेन तदभावान्नारोपानुपपत्तिः[4] । रत्नप्रभायां तु लक्षकपदस्य स्वशक्यतानवच्छेदकधर्मवन्निष्ठविशेष्यतानिरूपितस्वशक्यतावच्छेदकनिष्ठप्रकारताकप्रतीतिजनकत्वेन तादृशप्रतीतेरेवात्रारोपपदार्थत्वं सिद्धान्तितम्[5] ।

तत्तु न मनोहरम्–उपर्युक्तेन लघुना प्रकारेणैव सर्वसम्मतेनेष्टसिद्धेः । तत्र सौरभविशेषरूपे विशेषणे कमलत्वाभाववति कमलत्वारोपे विशिष्टेऽपि तदारोपव्यवहारो भाक्तः । यथा संयुक्तसमवायसन्निकर्षस्य संयोगरूपविशेषणांश एव तज्जन्यत्वे सति तज्जन्यजनकत्वरूपं व्यापारत्वं संघटते, विशिष्टे तु तदारोप एव क्रियते । यथा च 'शिखी ध्वस्तः' इत्यादौ शिखानिष्ठस्य ध्वंसप्रतियोगित्वस्य विशिष्टे आरोपः, तद्वत् । किं वा–"तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः, आकाशाद्वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी" इति श्रुतेरपि यथा न्यायनये आरोपमुद्रयैवोपपत्तिः । अत्र हि शब्दविशिष्टे आकाशे विशेषणीभूतशब्दांशगतोत्पत्तेर्विशिष्टे आकाशे आरोपः । अन्यथा तन्नये आकाशस्य नित्यत्वेन उत्पत्तेरुपपादनं न सम्भवति, तथा प्रकृतेऽपि निर्वाहः सुकरः ।

---

1. वै. सि. ल. म., कुञ्जिकाटीका, पृ. १३८ ।
2. वै. सि. ल. म., र. प्र. युता, पृ. ११३-१७ ।
3. वै. सि. ल. म., पृ. ११२ ।
4. वै. सि. ल. म., पृ. ११२ ।
5. वै. सि. ल. म., र. प्र. टीका, पृ. ११३ ।

किञ्च–"विशिष्टं शुद्धादतिरिच्यत इति पक्षे नानुपपत्तिलेशोऽपि । उक्तं चाद्वैतसिद्धिकृता–"गुणो गुणिनो भिन्नोऽभिन्नश्च"[1] इति । शाब्दिकनयेऽत्र लक्षणास्थले सर्वत्र लक्ष्यतावच्छेदकीभूततत्तद्धर्मविशिष्ट एव धर्मिणि शक्यतावच्छेदकस्यारोप इत्यपि ज्ञातव्यम्[2] ।

## 'कचतस्त्रस्यति वदनम्' इत्यत्रारोपोपपत्तिः

अथ 'कचतस्त्रस्यति वदनम्' इत्यत्र राहुत्वविशिष्टे कचत्वारोपः, चन्द्रत्वविशिष्टे च वदनत्वारोप इति न त्रासान्वयानुपपत्तिः । अत्र प्रथमारोपेण त्रासप्रयोजकत्वमारोपितकचत्ववति राहौ किञ्च 'कचतः' इत्यत्र तसर्थप्रयोजकत्वस्य स्वनिरूपितप्रयोज्यत्वसम्बन्धेन त्रासेऽन्वय उपपद्यते । अन्यथा कचपदार्थः केशास्तत्प्रयोज्यत्वस्य त्रासे बाधात् स नोपपद्येत । द्वितीयारोपेण त्रासकर्तृत्वस्यारोपितवदनत्ववति चन्द्रे, किं वा चन्द्रस्य तिबर्थे कर्तरि अभेदेन, तादृशकर्तुश्च वृत्तित्वसम्बन्धेन त्रासेऽन्वय उपपद्यते । अन्यथा त्रासस्य चेतनधर्मतया वदनस्य तु चेतनत्वाभावेन स न स्यात्[3] ।

## आरोपस्वरूपं तदुदाहरणं च

तदभाववति तत्प्रकारकं ज्ञानमारोपः, स द्विविधः – आहार्यो भ्रमश्च । तत्र बाधज्ञानसमकालिकेच्छाजन्यज्ञानमाहार्यारोपः,[4] यथा रजतत्वाभाववतीं शुक्तिं रजतत्वेन जानीयामिति बाधज्ञानसमकालिकेच्छाजन्यम्, इदं रजतमिति ज्ञानम् । भ्रमे तूत्तरकाले नेदं रजतम्, किं तर्हि इयं शुक्तिरिति बाधज्ञानं भवतीति विशेषः । स्वविरोधिधर्मधर्मितावच्छेदक-स्वप्रकारक-ज्ञानमाहार्यमित्यपि तर्कशास्त्रे प्रसिद्धम्[5]। यथा उक्तस्थले स्वं रजतत्वं तद्विरोधी धर्मो रजतत्वाभावः स धर्मिताऽवच्छेदको यत्र, एवं स्वं रजतत्वं प्रकारो यत्र तादृशं ज्ञानमियं शुक्ती रजतमिति ज्ञानम्, तदेव आहार्यम् ।

---

1. "गुणादिकं गुण्यादिना भिन्नाभिन्नं समानाधिकृतत्वात्" । (अ. सि., परि. १, पृ. ५९ )
2. "अत्र सर्वत्र तत्तद्धर्मविशिष्टे शक्यतावच्छेदकधर्मारोपः" । (वै. सि. ल. म., लक्षणानिरू., पृ. १२२; र. प्र. टीका च)
3. वै. सि. ल. म., ल. नि. ।
4. ल. श. शे., टिप्पणे संज्ञाप्र., पू. सि. सूत्रम् ।
5. सा. नि., गङ्गा-टी., टिप्पणी २ लक्षणे, पृ. ११८ ।

### 'कचतस्त्रस्यति' इत्यत्र कचो राहुरित्याहार्याभेदबोधोऽनुयोगिमुखेन

कचतस्त्रस्यतीत्यत्रापि कचत्वाभाववन्तं राहुं कचत्वेन जानीयामिति कचो राहुरिति ज्ञानमाहार्यारोपः । न तु कचत्वविशिष्टो राहुरिति ज्ञानम्[1]। कचत्वस्य तत्रोल्लेखे, कचत्वत्वेन तद्भानप्रसङ्गात् । कचो राहुरित्यभेदबोधस्य सिद्धय एव राहुत्वविशिष्टे कचत्वारोपकथनं सङ्गच्छते[2]। अभेदबोधश्चायमनुयोगिमुखेनेति राहोरभेदस्य कचेऽपि भानेन तत्र त्रासप्रयोजकता सङ्गच्छते ।

अभेदबोधश्च क्वचन प्रतियोगिमुखेन, यथा 'घटो द्रव्यम्' इत्यादौ प्रतियोगिनो घटादेरभेदो द्रव्ये बोध्यते । क्वचनानुयोगिमुखेनापि, यथा सौजन्यचन्द्रिकाचन्द्रो 'राजा' इत्यत्र सौजन्याभिन्नचन्द्रिकासम्बन्धी चन्द्रस्तदभिन्नो राजा इति बोधः सिद्धान्तितो रसगङ्गाधरकृद्भिः । तत्र शङ्कितम्–यदा सौजन्याभेदश्चन्द्रिकायाम्, तदा राजप्रतियोगिक एवाभेदश्चन्द्रे प्रतिपादयितुं युक्तः, न तु चन्द्रप्रतियोगिक इति । तत्रोत्तरितम्–अभेदस्य क्वचित् प्रतियोगिमुखेन क्वचिच्चानुयोगिमुखेन ग्रहणमिति न प्रकृते कश्चन दोष इति[3]। एवमेव 'वदनात् कुचमण्डलं बिभेति' इत्यादावपि आरोप उपपादनीयः । सर्वतोभावेनेदं फलति–यदहो! सौन्दर्यातिशयवतीयं कामिनी, अतो दर्शनीया इति । एतेन कचत्वारोपे कृतेऽपि न त्रासान्वयोपपत्तिः, कचत्वेन राहोर्बोधात्, न तु राहुत्वेनेति लघुमञ्जूषाग्रन्थोऽसङ्गत एवेति कथनमपास्तम् । राहुत्वेन ज्ञात एव कचत्वारोपात् ।

किञ्च, "कचत्वराहुत्वोभयधर्मप्रकारकोऽत्र बोधः" इति पण्डितराजोक्त्या स्फुटमायाति[4]। प्रयोजनानुसारमन्यतरधर्मप्रकारको बोध ईदृशस्थलेषु मन्तव्य इत्यपि केचित्[5]। नास्त्यत्र लक्षणा, व्यङ्ग्यं रूपकमलङ्कार इत्यपि बहव इत्यन्यत् ।

'उभयधर्मप्रकारकबोधस्वीकारादेव शक्यादन्येन रूपेण ज्ञाते भवति लक्षणा' इति शिष्टोक्तिरपि सङ्गच्छते । शक्यतावच्छेदकान्यरूपवत्त्वेन गृहीतेऽर्थे लक्षणा शक्यतावच्छेदकारोप इत्यर्थः । यथा तीरत्वविशिष्टस्य गङ्गात्वेन बोध इति हृदयम्[6]।

---

1. वै. सि. ल. म., कला-टीका, पृ. १५० ।
2. वै. सि. ल. म., लक्षणानि. ।
3. रसगङ्गा., रूपकनिरू., पृ. ४८५ ।
4. रसगङ्गा., अतिशयोक्तिनिरूपणारम्भे ।
5. तदेव ।
6. वै. सि. ल. म., पृ. ११७ ।

## 'गङ्गायां घोषः' इत्यत्र पुनः कश्चन विशेषः

गङ्गादिना घोषस्य व्यवहितसामीप्ये तीरे गङ्गात्वारोपः कथितो भाष्यकृता[1]। अव्यवहितसामीप्ये तु गङ्गादौ तीरधर्माधारत्वारोपेण गौणेऽधिकरणे सप्तमी, न तु तत्र लक्षणा । स्फुटं चैतत् "स्वरितेनाधिकारः" इत्यत्र भाष्ये[2]। तत्र हि– स्वरितेनाधिकं कार्यमित्युपक्रम्य गङ्गायां गाव इत्युदाहृतम् ।

अयमाशयः – "आधारोऽधिकरणम्" इत्यत्राधारपदेन स्वरितत्वयुक्तेनाधिकं कार्यं करणीयमिति बोध्यते । तेन सर्वावयवव्याप्त्या आधारत्वाभावेऽपि 'गङ्गायां गावः, कूपे गर्गकुलम्' इत्यादिष्वपि अधिकरणे सप्तमी सिध्यति, अन्यथा 'तिलेषु तैलम्, दध्नि घृतम्' इत्यादावेव सा स्यात्, न त्वेषु गौणाधिकरणेषु इति । न्यायदर्शनकृता महर्षिणा गौतमेनाप्ययं प्रकारः सुष्ठु प्रदर्शितोऽस्ति[3] ।

ननु व्यवहितस्थलेऽपि "इको यणचि" इत्यादाविव सामीप्येऽर्थे सप्तमी स्वीकृत्य लक्षणाप्रयासो मुधैवेति चेदुच्यते । तथा सति तीरे उत्कटशैत्यपावनत्वप्रतीतिर्न सिध्येत् । प्रयोजनवत्या अस्या लक्षणायाः स्वीकारे तु एतन्मूलकव्यञ्जनया सा सिध्यति । न च शक्तिमूलकव्यञ्जनयैव तत् प्रतीयेतेति वाच्यम्, एवं सति तस्याः प्रतीतेर्नैयत्यं न स्यात् । घोषपदस्य शब्दार्थकत्वेऽपि गङ्गापदस्य गङ्गावच्छिन्ने नभसि लक्षणा विधातव्यैव, अन्यथा शब्दस्याकाशगुणतया गङ्गापदार्थे प्रवाहविशेषे तदधिकरणत्वस्य बाध एव स्यात् ।

यत्तु वेदान्तनये पञ्चस्वपि महाभूतेषु पञ्चीकरणप्रक्रियया[4] चत्वारि स्वातिरिक्तभूतानि अष्टमांशरूपेण स्वस्मिन् वर्तन्त इति गङ्गापदार्थे प्रवाहविशेषेऽपि स्वातिरिक्तस्याकाशस्यापि सत्त्वेन तत्र न शब्दात्मकघोषाधिकरणत्वस्य बाध इति विभाव्यते । तत्तु न मनोहरम्, तत्र वस्तुत आकाशस्य सत्त्वेऽपि आकाशत्वेनोपस्थित्यभावेन शब्दस्यान्वययोग्यत्वाभावात् । अन्वयिताऽवच्छेदकरूपेणोपस्थित एव पदार्थे पदार्थान्तरस्यान्वय इति नियमात्[5] । अतस्तत्रापि आकाशत्वावच्छिन्नो लक्ष्य एव । ननु तावतापि तत्राकाशस्यारोपितगङ्गात्वेनैव बोधः, न त्वाकाशत्वेनेति

---

1. म. भा. ४/१/४८ ।
2. म. भा. १/३/११ ।
3. न्या. द., अ. २, आ. २, सू. ६३ ।
4. वे. प., सुबोधिनी., विषयपरि., पृ. ३५७-६० ।
5. व्यु. वा., प्र. कार., जया-टी., पृ. २४ ।

कथमन्वयसङ्गतिरिति चेत्, न, 'शक्यादन्येन रूपेण ज्ञाते भवति लक्षणा' इति अनुपदमेव दत्तोत्तरत्वात् । एवं चाकाशत्वेन ज्ञाते आकाशत्वविशिष्टे गङ्गात्वारोपे सति गङ्गा आकाशमिति प्रतीत्या सर्वमुपपन्नमिति दिक् ।

**अस्यारोपस्यानित्यत्वेऽपि शब्दार्थसम्बन्धस्य नित्यत्वमेव**

ननु शक्यतावच्छेदकारोपरूपलक्षणायाः स्वप्रकाराश्रयत्वसम्बन्धेनार्थे, स्वप्रकाराश्रयवाचकत्वसम्बन्धेन शब्दे सत्त्वेऽपि शब्दार्थयोः सम्बन्धरूपाया अस्या ज्ञानात्मकतया अनित्यत्वमेवेति "सिद्धे शब्दार्थसम्बन्धे" इति शाब्दिकसिद्धान्तो[1] व्याकुप्येतेति चेत्, उच्यते–

जाड्यस्थलौल्यबहुभक्षकत्वादिनिमित्तभेदेन गोशब्दो वाहीकमभिधातुं प्रवृत्तः, तत्र विशेष्यभूत एवार्थः केवलविपर्यस्तः, गोत्वरूपे प्रवृत्तिनिमित्ते (स्वार्थे) तु गोशब्दस्तदानीमपि वर्तत एवेति कुतः शब्दार्थसम्बन्धस्य नित्यत्वं हीयेत ? उक्तं च हरिणाऽपि–

**गोत्वानुषङ्गो वाहीके निमित्तात् केश्चिदिष्यते ।**
**अर्थमात्रं विपर्यस्तं शब्दः स्वार्थे व्यवस्थितः**[2] ॥ इति ।

एवं च विशेष्यांशे आरोपिततादात्म्यस्य सत्त्वेऽपि विशेषणांशे नित्यस्य तस्य सत्त्वेन तादृशसम्बन्धस्य नित्यत्वमक्षतमेव ।

**शब्दानां गौणमुख्यत्वोपपत्तिः**

ननु सर्वेषां शब्दानां शक्त्याश्रयत्वेऽत्रार्थेऽयं शब्दो गौणः, अत्र चार्थे मुख्य इति विभागो न सम्भवतीति चेत्, न, प्रसिद्ध्यप्रसिद्धिभ्यामेव मुख्यत्वस्य गौणत्वस्य च व्यवस्थापनात् । तथा हि यस्मिन्नर्थे यः शब्दो लोकव्यवहारे प्रसिद्धः, तस्मिन्नर्थे स मुख्यः । यस्मिन्नर्थे यः शब्दो न प्रसिद्धः, तस्मिन्नर्थे स गौण इत्युच्यते । यथा गोशब्दो गोत्वावच्छिन्ने सास्नादिमत्यर्थे प्रसिद्ध इति तत्र मुख्यः, वाहीकादौ अप्रसिद्ध इति तत्र गौण इत्युपचर्यते । उक्तं च हरिणा–

**सर्वशक्तेस्तु तस्यैव शब्दस्यानेकधर्मणः ।**
**प्रसिद्धिभेदाद् गौणत्वं मुख्यत्वं चोपचर्यते**[3] ॥ इति ।

"लक्ष्यमाणगुणैर्योगाद् वृत्तेरिष्टा तु गौणता" इति शिष्टोक्तिमुद्धरता श्रीनागेशभट्टेनापि वृत्तेर्गौणतां स्वीकुर्वाणेन शब्दानां गौणत्वं मुख्यत्वं चाङ्गीकृतमेव । तत्र "यद्-

---

1. म. भा., नवा. १/१/१ ।
2. वा. प. २/२५७ ।
3. वा. प. २/२५५ ।

गुणज्ञानपूर्वकं वाहीकादौ गोशब्दप्रयोगस्तैर्ज्ञायमानगुणैर्योगात् तद् गुणरूपात् सम्बन्धादित्यर्थः, प्रकृत्यादित्वादभेदे तृतीया" इति च व्याख्यातं तेनैव[1] ।

तत्र लक्ष्यमाणेत्यस्य ज्ञायमानेत्यर्थकरणेन आरोपरूपलक्षणातो विरोधोऽपि परिहृतः स्वमतं च पोषितम् । वृत्तेरत्र गौणत्वकथनेन तादृशवृत्तिमतः शब्दस्य गौणत्वं सुतरामायाति ।

"गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः" इति परिभाषां सम्मानयतो भाष्यकृतोऽपि[2] अयं विभाग इष्ट एवेति सर्वमनवद्यम् ।

**प्रकृतिप्रत्ययान्यतरमात्रप्रयोगे लक्षणाविमर्शः**

केवलयोः प्रकृतिप्रत्यययोः प्रयुज्यमानयोर्विशिष्टार्थे लक्षणा परमते स्वीक्रियते । यथा–'गर्गाः' इत्यादौ गर्गापत्यरूपे प्रत्ययार्थविशिष्टेऽर्थे प्रकृते 'गर्ग' इत्यस्य, 'इयान्' इत्यादौ प्रत्ययस्य च प्रकृत्यर्थविशिष्टेऽर्थे लक्षणा इति[3] । तदेतन्मतं शाब्दिकेभ्यो न रोचते, तत्र तत्रार्थे तादृशानां शब्दानां शक्तेरेव स्वीकारात् । उक्तं च हरिणा–

**शास्त्रे क्वचित् प्रकृत्यर्थः प्रत्ययेनाभिधीयते ।**
**प्रकृतौ विनिवृत्तायां प्रत्ययार्थश्च धातुभिः**[4] ॥ इति ।

"नक्षत्रे च लुपि" इति सूत्रमपि अत्र मानम्[5] । "यः शिष्यते स लुप्यमानार्थाभिधायी" इति तत्र तत्र शिष्टोक्तमप्यत्र मानमस्त्येव[6] । एवं चैषु स्थलेषु उक्ता प्रसिद्धा शक्तिरेव, न तु अप्रसिद्धशक्तिरूपा लक्षणेति सिद्धान्तः । केचित्तु प्रत्ययलोपे सति प्रकृतेः प्रत्यये प्रत्ययार्थे लक्षणं लक्षणा इति रीत्या व्याख्याय "प्रत्ययलोपे प्रत्ययलक्षणम्"[7] इति सूत्रं लक्षणासमर्थकं प्रमिण्वन्ति, तत्तु भाष्याद्यननुगुणत्वान्न समादर्तुमिष्यते ।

**आरोपात्मकलक्षणायां महर्षिगौतमसम्मतिः**

"सहचरणस्थानतादर्थ्यवृत्तमानधारणसामीप्ययोगसाधनाधिपत्येभ्यो ब्राह्मण-कट-राज-सक्तु-चन्दन-गङ्गा-शाटकान्न-पुरुषेष्वतद्भावेऽपि तदुपचारः" इति सूत्रं प्रणयता

1. वै. सि. ल. म., लक्षणानिरू., पृ. १२० ।
2. म. भा. ८/३/८२ ।
3. उद्धृतम्, वै. सि. ल. म., र. प्र. टीकातः, लक्षणानिरू., पृ. १२८ ।
4. वा. प. २/२३१ ।
5. पा. सू. २/३/४५ ।
6. प्रौ. म., अजन्तपु., सरूपसूत्रम् ।
7. पा. सू. १/१/६२ ।

महर्षिगौतमेनेयमारोपरूपैव लक्षणाऽभ्युपगताऽस्ति । अत्र भाष्यम्–अतद्भावेऽपि तदुपचार इति अतच्छब्दस्य तेन शब्देनाभिधानमिति । सहचरणात्–'यष्टिकां भोजय' इति यष्टिकासहचरितो ब्राह्मणोऽभिधीयत इति । स्थानात्–'मञ्चाः क्रोशन्ति', इति मञ्चस्थाः पुरुषा अभिधीयन्ते । तादर्थ्यात् 'कटार्थेषु वीरणेषु व्यूह्यमानेषु कटं करोति' इति भवति । वृत्तात्–'यमो राजा, कुबेरो राजा' इति तद्वद् वर्तत इति । मानात्–'आढकेन मिताः सक्तव आढकसक्तवः' इति । धारणात्–'तुलायां धृतं चन्दनं तुलाचन्दनम्' इति । सामीप्यात्–'गङ्गायां गावश्चरन्ति' इति देशोऽभिधीयते सन्निकृष्टः । योगात्–'कृष्णेन रागेण युक्तः शाटकः कृष्णः' इत्यभिधीयते । साधनात्–''अन्नं प्राणाः' इति । आधिपत्यात्–'अयं पुरुषः कुलम्, अयं गोत्रम्''[1] इति ।

आभ्यां सूत्रभाष्याभ्यां स्फुटमेवोक्तारोपात्मिका लक्षणा लभ्यते ।

**साहित्यशास्त्रेऽपि उक्तारोपरूपा लक्षणा**

शक्यतावच्छेदकारोपरूपा लक्षणा यद्यपि काव्यप्रकाशादौ मूलकृता शब्दतो नोक्ता। तत्र हि–

**मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात् ।**
**अन्योऽर्थो लक्ष्यते यत् सा लक्षणारोपिता क्रिया[2] ॥**

इत्यनेन सूत्रेण "रूढितः प्रयोजनाद्वा मुख्येनामुख्योऽर्थो लक्ष्यते यत् स आरोपितो व्यवहितार्थविषयकबोधजनकः शब्दव्यापारो लक्षणा"[3] इत्येव प्रतिपाद्यते । तथापि यद् इत्यस्य लक्ष्यत इति क्रियाविशेषणत्वं स्वीकृत्य ज्ञानरूपा लक्षणा व्याख्यातुं शक्यत एव । अत एव लक्ष्यते यत् स इत्येव व्याख्यातम्, न तु यथा इति । किञ्च, लुप्तकरणतृतीयान्तमव्ययं यदिति पक्षे लक्षणक्रियायां तस्य भेदेनान्वयः स्यात्, क्रियाविशेषणत्वपक्षे त्वभेदेनेति सम्भवति सामानाधिकरण्ये वैयधिकरण्यमन्याय्यमिति नियमेन मदुक्त एव प्रकारः समीचीनः । महर्षिणा पतञ्जलिना गौतमेन चैकवाक्यतालाभाय तज्ज्ञानं प्रकृते उक्तारोपात्मकमेव ग्राह्यम् । काव्यप्रकाशीये उक्तसूत्रे च 'मुख्यार्थबाधे तद्योगे' इति सत्सप्तमी, ज्ञाते इत्यस्य चाध्याहारः । एवं च मुख्यार्थबाधे तद्योगे च ज्ञाते सति अन्योऽर्थो यल्लक्ष्यते आरोप्यते उक्तारोपविषयीक्रियते सा आरोपिता कल्पिता क्रिया शब्दनिष्ठो व्यापारो लक्षणा इति व्याख्येयम् ।

---

1. न्या. द., वात्स्या. भा. २/२/६४ ।
2. का. प्र., द्वि. उ., सू. १२, पृ. ९ ।
3. का. प्र., द्वि. उ., सू. १२ ।

उक्तसम्बन्धज्ञानस्यायमारोपः फलमित्यस्य पूर्वमप्युक्तत्वात्[1] । न्यायशास्त्रदृष्ट्या हि एकमेव ज्ञानं समवायेनात्मनि उत्पद्यमानं सद् विषयतासम्बन्धेन विषये, कालिकसम्बन्धेन काले, अवच्छेदकतासम्बन्धेन शरीरे उत्पद्यते, अतश्च शब्दे उक्तसम्बन्धचतुष्टयान्तर्गतेन केनापि सम्बन्धेन तस्यावृत्तित्वात् कल्पितमेव वृत्तित्वम्, तदेवोक्तं मूले 'आरोपिता क्रिया' इति ।

स्पष्टीकृतं च यदित्यस्य क्रियाविशेषणत्वं लक्षणाया उक्तारोपरूपत्वं च काव्य-प्रकाशटीकायाम्[2] । यत्तु तत्रैव 'प्रतिपत्तिरेव (ज्ञानमेव) लक्षणा' इति कस्यचिद् व्याख्यानं खण्डितं टीकाकृता[3], तत्तु लक्षणारूपवृत्तिज्ञानजन्यपदार्थोपस्थितिरूपाया-स्तज्जन्यतदर्थविषयकशाब्दप्रमितिरूपाया वा प्रतिपत्तेस्तात्पर्येण, न तु उक्तारोपात्मक-प्रतिपत्तेस्तात्पर्येण, अस्या लक्षणारूपत्वेन लक्षणाख्यवृत्तिजन्यत्वाभावात् ।

## नव्यन्यायशास्त्रे शक्यसम्बन्धरूपा लक्षणा

नव्यनैयायिकास्तु "शक्यसम्बन्धो लक्षणा" इति सिद्धान्तयन्ति । यथा 'गङ्गायां घोषः' इत्यत्र शक्यो जलप्रवाहविशेषः, तस्य सामीप्यं सम्बन्धस्तटे इति सामीप्यसम्बन्ध-रूपा लक्षणा गङ्गापदस्य तटे तैरभ्युपेयते । सा चैषा लक्षणा स्वाश्रयसम्बन्धिवाचकत्वेन पदनिष्ठा बोध्या । स्वं लक्षणा तदाश्रयोऽर्थस्तटादिस्तत्सम्बन्धी शक्यार्थो जल-प्रवाहादिस्तद्वाचकत्वं गङ्गापदे । एवमेव स्ववाच्यसम्बन्धिवृत्तित्वेन चैषा अर्थनिष्ठा । यथा स्वं स्वीयं गङ्गादि लाक्षणिकं पदं तद्वाच्यो जलप्रवाहविशेषस्तत्सम्बन्धी तटादि-स्तद्वृत्तित्वं सामीप्यादिसम्बन्धरूपलक्षणायाम्, इत्येवं रीत्या पदपदार्थयोः सम्बन्धत्वं चोपपादयन्ति[4] ।

## मीमांसादर्शने ज्ञाप्यसम्बन्धो लक्षणा

पूर्वमीमांसादर्शने तु ज्ञाप्यसम्बन्धरूपा लक्षणा सम्मन्यते । अन्यथा 'गभीरायां नद्यां घोषः' इत्यादौ 'गभीरायां नद्याम्' इति वाक्यस्य गभीराभिन्ननदीतीरे लक्षणा न स्यात्, तन्मते वाक्ये शक्तेरभावेन शक्यसम्बन्धरूपलक्षणायास्तत्रासम्भवात् । तथा हि—"न हि तत्र 'गभीरपदं तीरलक्षकम्, नद्यामित्यनन्वयापत्तेः, न हि तीरं नदी ।

---

1. अत्र सूत्रे "अन्योऽर्थो लक्ष्यते यत् सा लक्षणा" इति लक्षणम् । मुख्यार्थबाधः, मुख्यार्थयोगः, रूढिप्रयोजनान्यतरच्चेति त्रयं लक्षणायां हेतुः । (का. प्र., द्वि. उ., वा. टी., पृ. ४१)
2. का. प्र., द्वि. उ., वा. टी., पृ. ४० ।
3. तदेव ।
4. न्या. सि. मु., कि. टी., कारि. ८२ ।

अत एव न नदीपदेऽपि सा, गभीरपदार्थानन्वयप्रसङ्गात्, न हि भवति तीरं गभीरमिति । न च पदद्वये प्रत्येकं सा इति वाच्यम्, विशिष्टनदीतीराप्राप्तिप्रसङ्गात् । न च नदीपदमेव गभीरनदीतीरलक्षकम्, गभीरपदं तत्र तात्पर्यग्राहकमिति वाच्यम्, विनिगमकाभावात् । न च नदीपदस्य द्रव्यवाचकतया साक्षात्सम्बन्ध एव तत्र विनिगमक इति वाच्यम्, गभीरपदस्यापि नित्यं गुणिवाचकतया तेनापि साक्षात्सम्बन्धेऽविशेषात् । अतः समुदाय एव साङ्गीकार्येति हृदयं मीमांसकाग्रेसराणाम्[1] ।

**उक्तलक्षणायां ज्ञाप्यांशविमर्शः**

ज्ञाप्यसम्बन्धरूपलक्षणायां ज्ञाप्यस्य सम्बन्ध इति षष्ठीतत्पुरुषः, तत्र ज्ञाप्योऽर्थ एव ग्राह्यः, योग्यताबलात् । स च ज्ञाप्यतावान् भवति । तत्र ज्ञाप्यता च यत्किञ्चिन्निष्ठज्ञापकतानिरूपितैव भवति । ज्ञापकतावत् च प्रकृते शाब्दबोधप्रकरणे पदं वाक्यं वा बोध्यम् । तत्र तत्तदर्थविषयकज्ञापकता पर्याप्त्या ग्राह्येति न प्रत्येकं वर्णेषु लक्षणाया आपत्तिः ।

ननु एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकमिति विधया 'घटं पश्य' इत्यादौ घटपदात् समवायेनाकाशोऽप्युपस्थातुमर्हतीति सोऽपि घटपदनिष्ठज्ञापकतानिरूपित-ज्ञाप्यतावान् सञ्जातः, तस्य च सम्बन्धः संयोगादिरूपश्चन्द्रादाविति ज्ञाप्यसम्बन्धरूपा लक्षणा घटपदस्य तत्रापि स्यादिति चेत्, उच्यते–प्रकरणबलेन ज्ञापकताशरीरे ज्ञानं शाब्दबोधरूपमेव ग्राह्यमिति आकाशस्य शाब्दविषयत्वाभावेन नोक्तसम्बन्धरूपलक्ष-णायाश्चन्द्रादाववसरः ।

अत्र लघुमञ्जूषामूले "ज्ञापकताशरीरे ज्ञानं च शाब्दबोधरूपमेव निविष्टमिति न समवायेन घटादिपदज्ञाप्याकाशसम्बन्धिनोऽप्युपस्थितस्य शाब्दबोधविषयत्वम्" इत्येव पाठोऽर्थानुगुणः प्राचीनपुस्तकेषूपलभ्यते, कलाटीकादिसम्मतश्च[2] । "अर्थासङ्गत्या तमपपाठं स्वीकृत्य ज्ञापकताशरीरे ज्ञानं च शाब्दबोधरूपमेव निविष्टमिति न शब्दसमवायेन घटादिपदज्ञाप्याकाशस्य शक्तिं विनाऽप्युपस्थितस्य शाब्द(बोध) विषयत्वम्" इति पाठं योजयन्तो मान्या मान्या एव[3] । ज्ञापकताशरीरे शाब्दबोधरूपज्ञानग्रहणाभावे घटादिपदस्य ज्ञाप्य आकाशोऽपि स्यात्तर्हि स्यान्नाम, तत्र शाब्दविषयत्वं स्यादिति कथमापाद्यते ?

---

1. वै. सि. ल. म., लक्षणानिरू., पृ. १०८ ।
2. वै. सि. ल. म., कु. कलाटीकाद्वयोपेता, पृ. १३० ।
3. वै. सि. ल. म., र. प्र. टीकायुता, पृ. १०८ ।

पूर्वपाठे तु ज्ञाप्यस्याकाशस्य संयोगादिसम्बन्धरूपा लक्षणा चन्द्रादौ प्रसज्येतेति लक्षणया चन्द्रादीनामपि तत्र शाब्दविषयता आपादयितुं शक्यत इति पूर्वतन एव पाठः समीचीनः । द्वितीय एव पाठोऽपपाठः, अर्थासङ्गतेरिति विवेकः ।

**पूर्वतन एव पाठे श्रीदिनकराचार्यस्यापि सम्मतिः**

न्यायसिद्धान्तमुक्तावलीटीकायां श्रीदिनकराचार्येण स्वबोध्यसम्बन्धरूपां मीमांसकाभिमतां लक्षणां खण्डयता—'स्वबोध्यत्वं शक्त्या स्वजन्यबोधविषयत्वम्' इति परिष्कृत्य 'न च शक्त्या इत्यधिकम्' इत्याक्षिप्य 'समवायेन घटपदस्मारिताकाशस्यापि स्वबोध्यत्वापत्त्या तत्सम्बन्धज्ञानाद् घटपदेन पटादेः शाब्दबोधप्रसङ्गात्'[1] इति समाहितम् । अनेन पूर्वपाठ एव तदीयाऽपि पूर्णा सम्मतिरित्यवधारणीयम् ।

**अद्वैतवेदान्तमतेऽपीदमेव लक्षणास्वरूपम्**

अद्वैतिनां मतेऽपि वाक्ये लक्षणायाः सिद्धये इयमेव सरणिरादृताऽस्ति । उक्तं च वेदान्तपरिभाषायाम्—लक्षणा च न पदमात्रवृत्तिः, किन्तु वाक्यवृत्तिरपि । यथा गम्भीरायां नद्यां घोष इत्यत्र गम्भीरायां नद्यामिति पदद्वयसमुदायस्य तीरे लक्षणा ।

**एवमर्थवादवाक्यानां प्रशंसाबोधकानां प्राशस्त्ये लक्षणा ।**
**सोऽरोदीदित्यादिनिन्दार्थवाक्यानां निन्दितत्वे लक्षणा[2] ॥**

**प्रतीतिरूपा लक्षणा इत्यपि मतम्**

काव्यप्रकाशे—"अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते, इत्यनेन वाच्यार्थेन अविनाभूतस्य सम्बद्धस्य या प्रतीतिर्ज्ञानं सा लक्षणा"[3] इत्यपि मतमुल्लिखितम् । तत्र वामनाचार्यकृतटीकादर्शनेन पूर्वमीमांसकानामिदं मतम्, साधारणगुणाश्रयत्वेन परार्थ एव लक्ष्यत इति स्वोक्तेऽर्थे सम्मतिप्रदर्शनाय मूलकृतोक्तमिति प्रतीयते । तत्रैव प्रतीयतेऽनया, सा प्रतीतिरिति करणव्युत्पत्त्या ज्ञानरूपतां निराकृत्य स्वानुकूल्यमपि स्थापितम्[4] ।

---

1. न्या. सि. मु., दिन., पृ. ३७७ ।
2. वे. प., टीकाद्वय., पृ. २४३-४६ ।
3. का. प्र., द्वि. उ., का. १६ ।
4. का. प्र. २/१६; वा. टी., पृ. ५० ।

तादृशसम्बन्धज्ञानजन्या तदुपस्थितिरेव लक्षणा । स्वविषयसम्बन्धिवाचकत्वेन चैषा पदनिष्ठा, वृत्तित्वं तु शाब्दबोधजनकपदपदार्थसम्बन्धत्वमिति परे, इत्यनेन ग्रन्थेन लघुमञ्जूषायां श्रीनागेशभट्टेनापि ज्ञानरूपा लक्षणा मतान्तरीयतया प्रस्ताविताऽस्ति[1] ।

मन्ये तावत्पूर्वोक्ता एवेयं शब्दभेदेनात्रोक्ता । एवं च प्रतीतिपदस्य करणव्युत्पत्तिर्नाभ्युपगम्यतेऽनेन । अत एव स्वविषयसम्बन्धिवाचकत्वेनेत्यत्र स्वविषयेत्युक्तम् । स्वमुपस्थितिस्तद्विषयस्तटादिरिति हि तदर्थः । स च भावक्तिन्नन्तपक्ष एव सङ्गच्छत इति न तिरोहितं सचेतसाम् ।

**उक्तलक्षणालक्षणेषु निष्कर्षः**

यद्यपि ज्ञाप्यसम्बन्धरूपलक्षणापेक्षया शक्यसंम्बन्धरूपलक्षणायां लाघवं स्फुटं प्रतीयते, वाक्यस्फोटवादिनां वैयाकरणानां मते तु वाक्येष्वपि शक्तेः सत्त्वेन तत्रापि तस्याः स्वीकारे नास्ति किञ्चिद् बाधकम् । तथापि शाब्दिकनिकाय एषा न समाद्रियते, महाभाष्यकृताऽसम्मतत्वात् । उक्तसम्बन्धस्य तादृशारोप एव प्रयोजकत्वेनोपक्षीणसामर्थ्याच्च । किञ्चारोपपक्ष एव 'गङ्गायां मीनघोषौ स्तः' इति वाक्यस्य शाब्दबोधजनकत्वमुपपद्यते । अन्यथा द्वन्द्वाद्यर्थस्यैकधर्मावच्छिन्नेऽन्वयस्य, तादृशस्य द्वन्द्वाद्यर्थेऽन्वयस्यैव वा 'अजाविधनौ देवदत्तयज्ञदत्तौ' इत्यादौ यथासंख्यान्वये द्वन्द्ववारणाय 'पयः पयो नयति' इत्यादावेकशेषवारणाय चावश्यकत्वेन पररीत्या च मीनस्य नीरत्वावच्छिन्नेऽन्वयेन घोषस्य च तीरत्वावच्छिन्नेऽन्वयेन द्वन्द्वोऽसाधुः स्यात्। मम तु गङ्गात्वेनैव तीरस्यापि बोधादेकधर्मावच्छिन्नेऽन्वयसत्त्वेन क्षतिविरहः ।

यत्र यौगपद्येन वृत्तिद्वयं प्रसरति, तत्रैव तद्दोषावहं भवति; यत्र तु क्रमिकम्, न तत्र कश्चन दोषलेशः; यथा 'चित्रगुधनम्' इत्यत्र बहुव्रीहौ गोपदं चित्राभिन्नगोस्वामिनि लाक्षणिकम् । ततः षष्ठीतत्पुरुषे तादृशस्वामिसम्बन्धिनि इति क्रमिकं लक्षणाद्वयं परैरप्यभ्युपगम्यत एव[2] ।

पूर्वोक्ता प्रतीतिरुपस्थितिर्वापि लक्षणात्वेनादतुं कथमपि न शक्यते, उक्तयुक्तेः । कार्यकारणभावकल्पनायां गौरवस्यापि अन्यप्रसङ्गेनोक्तत्वाच्च । अत उक्तारोप एव लक्षणात्वेन समादरणीय इति सर्वं समञ्जसम् ।

---

1. वै. सि. ल. म., लक्षणानिरू., पृ. ९७ ।
2. वै. सि. ल. म., लक्षणानिरू., र. प्र. टीका च, पृ. ११७ ।

## लक्षणाबीजनिरूपणम्

उक्तारोपरूपलक्षणाया बीजं वैयाकरणैरवश्यं विवेचनीयम्, अन्यथा आरोपस्यावसर एव न स्यात् । तत्र च पूर्वोक्तभाष्येण तात्पर्यानुपपत्तेस्तद्बीजत्वं लभ्यते । यतो हि–'चतुर्भिः प्रकारैरतस्मिन् स इत्येतद् भवति' इत्यत्र चतुर्थप्रकार-स्योदाहरणम् 'यष्टीः प्रवेशय' इत्युक्तम्[1] । तत्रान्वयानुपपत्तिर्नास्त्येव । लघुमञ्जूषा-कृताऽपि इयमेव सरणिरादृताऽस्ति । अत एव च 'गङ्गायां घोषः' इत्यादौ घोषादिपदानां मकरादिषु लक्षणा वारिता तत्र । 'आयुर्वै घृतम्' इत्यादौ वेदे तात्पर्यानुपपत्तेरभावेन[2] तात्पर्यान्वयान्यतरानुपपत्तिरेव तद्बीजमित्युपाध्यायाः[3] ।

'काकेभ्यो दधि रक्ष्यताम्,' 'यष्टीः प्रवेशय' इत्यादौ अन्वयानुपपत्त्यभावेन तात्पर्यानुपपत्तिरेव तद्बीजमिति नैयायिका अद्वैतवेदान्तिनश्च[4] । वेदे कर्तृपुरुषा-भावेन तात्पर्याभावादन्वयानुपपत्तिरेव तद्बीजमिति पूर्वमीमांसकाः । वस्तुतस्तु तात्पर्यविषयीभूतान्वयानुपपत्तेर्बीजत्वे 'यष्टीः प्रवेशय' इत्यादौ न काप्युनपपत्तिः । "मुख्यार्थबाधे तद्योगे ज्ञाते भवति लक्षणा" इति शिष्टोक्तिविरोधोऽपि न, यतो हि 'मुख्यार्थबाधे' इत्यनेन मुख्यार्थान्वयबाध इत्यस्य लाभेऽन्वयानुपपत्तेरेव तद्बीजत्व-मायाति, मदुक्तप्रकारेण त्वस्यैव सङ्कुचितं स्वरूपं तात्पर्यविषयान्वयानुपपत्ति-रित्यस्य बीजत्वे क्व विरोधसन्देहः ? वस्तुतोऽस्यापि तात्पर्यानुपपत्तावेव पर्यव-सानमिति सर्वमुपपन्नम् ।

वेदेऽपि तदन्यवोधेच्छया अनुच्चरितत्वे सति तद्वोधजननस्वरूपयोग्यत्वं पद-निष्ठतात्पर्यं[5] गृहीत्वा निर्वाहः सुकर एवेति सर्वं समञ्जसम् ।

## लक्षणाभेदनिरूपणम्

सा चेयं लक्षणा द्विविधा–गौणी, शुद्धा चेति । स्वनिरूपितसादृश्याधिकरणत्व-सम्बन्धेन शक्यसम्बन्ध्यर्थप्रतिपादिका गौणी, तदितरसम्बन्धेन तत्प्रतिपादिका शुद्धा[6] ।

---

1. म. भा. ४/१/४८ ।
2. वै. सि. ल. म., र. प्र. युता, पृ. ९४ ।
3. वै. सि. ल. म., र. प्र. युता, टिप्पणी, पृ. ९६ ।
4. (क) न्या. सि. मु., श. ख., कारि. ८२, पृ. ३१९ ।
   (ख) वे. प., टीकाद्वय., आगमपरि., पृ. २४३ ।
5. वे. प., टीकाद्वय., आगमपरि., पृ. २५५ ।
6. वै. सि. ल. म., र. प्र. युता, लक्षणानिरू., पृ. १०० ।

'गौर्वाहीकः' इत्यादावाद्या । तत्रोक्तसम्बन्धेन गोत्वारोपरूपलक्षणया शक्यसम्बन्धिनो वाहीकस्य बोधः । 'गङ्गायां घोषः' इत्यादिषु द्वितीया । तेषु ह्युक्तसम्बन्धेतरेण सामीप्यसम्बन्धेन गङ्गात्वारोपरूपलक्षणया तीरस्य बोधः ।

पुनरपि प्रकारान्तरेण सा द्विविधा । अजहत्स्वार्था जहत्स्वार्था च । शक्यार्था-परित्यागेनेतरार्थलक्षणमाद्या, तदपरित्यागश्च शक्यार्थस्य येन केनापि रूपेण लक्ष्यार्था-न्वयिनाऽन्वयित्वम् । तेन 'छत्रिणो यान्ति' इत्यादौ अच्छत्र्यादिसाधारणरूपेणैकसार्थ-वाहित्वेन छत्र्यादेः (शक्यार्थस्य) लक्ष्यार्थान्वयियानक्रियाविशेषणत्वाल्लक्षणसमन्वयः । स्वार्थपरित्यागेनेतरार्थलक्षणमन्त्या, तत्परित्यागश्च शक्यार्थस्य येन केनापि रूपेण लक्ष्यार्थान्वयिनानन्वयित्वम् । यथा 'गां वाहीकं पश्य' इत्यादौ मतान्तरे गोसदृशे लक्षणायां गोर्विशेषणत्वेऽपि न दर्शनक्रियायामन्वयः । स्वमते आरोपितस्य गोत्वस्यान्वयितावच्छेदकत्वेऽपि वास्तविकगोत्वस्य तदभावेन लक्षणसमन्वयो बोध्यः[1] ।

अत्र कुञ्जिकाकृतस्तु—प्रत्येकं जातीनां व्यापकत्वेऽपि यत्र तस्या अभिव्यक्ति-स्तत्रैव सा कार्यसाधिका इति सिद्धान्तमनुरुध्य "वाहीके गोत्वारोपेऽपि तस्य अभि-व्यक्त्यभावेन नान्वयसाधकत्वमिति स्वार्थत्यागोऽस्त्येव" इति समादधुः[2] ।

'काकेभ्यो दधि रक्ष्यताम्' इत्यत्राजहत्स्वार्था लक्षणेति लघुमञ्जूषाकृतः[3] । तत्र जहदजहल्लक्षणा इति वेदान्तपरिभाषाकृतः । तत्र शक्यस्य काकत्वस्य परित्यागेन अशक्यस्य दध्युपघातकत्वस्य पुरस्कारेण अकाके काके च काकशब्दस्य प्रवृत्तेरिति उपपादयन्ति[4] ।

एवं निरूढा प्रयोजनवतीति भेदाभ्यां पुनरपि सा द्विविधा । अनादिकाल-तात्पर्योपहिता प्रथमा । यथा 'त्वचा ज्ञातम्' इत्यादौ त्वगिन्द्रिये त्वक्शब्दस्य। असति प्रयोजने शक्यार्थबाधे च सतीयं प्रवर्तते । 'गङ्गायां घोषः' इत्यादौ तु द्वितीया । उत्कटशैत्यपावनत्वप्रतीतिरूपप्रयोजनस्य तत्र सत्त्वात्[5] ।

---

1. वै. सि. ल. म., लक्षणाप्रक., पृ. १०१-१०४ ।
2. वै. सि. ल. म., टी. कु., पृ. १२५ ।
3. वै. सि. ल. म., र. प्र. युता, पृ. १०१ ।
4. वे. प., टीकाद्वययुता, आ. परि., पृ. २४३ ।
5. वै. सि. ल. म., र. प्र. टी., लक्षणानिरू., पृ. १०१ ।

वेदान्तपरिभाषायां तु केवललक्षणा, लक्षितलक्षणा इत्यपि भेदद्वयं प्रदर्शितम् । तत्र शक्यस्य साक्षात्सम्बन्धरूपाद्या सर्वत्र प्रसिद्धैव । परम्परासम्बन्धरूपा द्वितीया तु 'द्विरेफो रौति' इत्यादौ[1] । अत्र हि रेफपदस्यैव स्वशक्यरेफद्वयघटितपदवाच्यत्व-सम्बन्धात्मिका लक्षणा जन्तुविशेषे भवति । पूर्वं त्वत्र रेफपदस्य भ्रमरपदे लक्षणा, तावतापि रौतिक्रियया अन्वयासम्भवे उक्तसम्बन्धरूपा पुनर्लक्षणा इति लक्षितेन घटितेयं लक्षणा लक्षितलक्षणा इत्युच्यते । समासे विशिष्टशक्तिवादिनामस्माकं नये त्वत्र द्विरेफपदस्य रूढिशक्तिरेवेति[2] नेयं लक्षणा समादरार्हा ।

### अत्र श्रीनागेशभट्टस्य प्रौढिवादः

यत्त्वत्र "द्विरेफपदेन भ्रमरपदोपस्थितावपि भ्रमर इति शक्ततावच्छेदकानुपूर्वी-रूपेणोपस्थित्यभावाद् बोधानापत्तेः । न च द्विरेफपदाल्लक्षणया तदुपस्थितिः, अत एवात्र लक्षितलक्षणा इति व्यवहारः, प्रत्ययार्थान्वये च प्रकृतिप्रयोज्योपस्थितिः कारण-मिति वाच्यम् । एवमपि तस्यानुच्चरितत्वेनोच्चारितस्यैव च बोधकत्वेन ततो बोधाना-पत्तेः, इत्युक्तम्" श्रीनागेशेन[3] । तत्तु प्रौढिवादमात्रमेव । भ्रमरपदस्य तादृशलक्षणा-घटकतयैव ग्रहणम्, न तु लक्षणाश्रयतयाऽपीति तस्योच्चारणं न सप्रयोजनं प्रती-यते । लक्षितलक्षणावृत्तिस्तु रेफपदस्यैव । तदुच्चारणं तु वर्तत एवेति भ्रमर-पदानुच्चारणं पुरस्कृत्येदं खण्डनं न रोचते ।

एवमेव–उपादानलक्षणा, लक्षणलक्षणा, सारोपा, साध्यवसाना इत्यादिभेदैरस्या भूयान् प्रपञ्चः साहित्यशास्त्रे पुरस्कृतोऽस्ति[4] । श्रीहरिदासभट्टाचार्येण मूलोक्ता अशीतिसंख्याका भेदा विस्तरेण निरूपिताः सन्ति[5] ।

व्युत्पत्तिवादे श्रीगदाधरभट्टाचार्येण स्वारसिकलक्षणाया अपि निर्देशःकृतोऽस्ति[6] । अत्र वक्तुरिच्छैव प्रयोगनियामिका भवति । वेदान्तग्रन्थेषु तत्त्वमस्यादिवैदिक-वाक्येषु तत्त्वंपदयोर्भागत्यागनामिका लक्षणाऽपि प्रसिद्धाऽस्ति । अनपेक्षितत्वान्नेह प्रतन्यन्ते ।

---

1. वे. प., टीकाद्वयोपेता, आ. परि., पृ. २३९ ।
2. वै. सि. ल. म., र प्र., पृ. १२८ ।
3. वै. सि. ल. म., र. प्र. युता, लक्षणाप्रक., पृ. १२८ ।
4. सा. द. २/६-९।
5. सा. द. २/१८ ।
6. व्यु. वा., प्र. कार. ।

**व्यञ्जनावृत्तिनिरूपणम्**

आदौ स्वरूपप्रमाणे निरूप्येते–'अर्कोऽस्तं गतः' इत्यादिवाक्यतो 'मया सन्ध्योपासनं विधेयम्' इत्यादिद्वितीयार्थबोधसिद्धये वाक्ये पदादौ वा स्वीक्रियमाणा शब्दतदर्थयोर्द्योत्यद्योतकभावसम्बन्धरूपा व्यङ्ग्यव्यञ्जकभावसम्बन्धरूपा वा शक्तितो लक्षणातो वा भिन्ना व्यञ्जनानाम्नी वृत्तिर्निरूप्यते । इयं च व्याकरणशास्त्रप्राणभूतैवास्ति । एनां विना व्याकरणदर्शनहृदयभूतस्फोटतत्त्वस्य प्रकाशनमेव न स्यात् । उक्तं च महर्षिणा श्रीव्याडिना–

**शब्दस्य ग्रहणे हेतुः प्राकृतो ध्वनिरिष्यते ।**
**स्थितिभेदे निमित्तत्वं वैकृतः प्रतिपद्यत**[1] ॥ इति ।

श्रीहरिणा च–

**प्रत्येकं व्यञ्जका वर्णा भिन्ना वाक्यपदेषु ये**[2] । इति ।

ननु आभ्यामुक्तिभ्यां ध्वनिगता वर्णगता वाऽस्तु नामेयं वृत्तिः, बोधकशब्दगताऽप्यस्तीति कुत आयातमिति चेत्, उच्यते–"भूवादयः" इति सूत्रभाष्यतः 'उपसर्गाः क्रियायोगे' इति सूत्रतो वाऽस्याः शब्दवृत्तित्वस्यापि लाभः । तथा हि– "आद्ये क्रियाविशेषक उपसर्गः, पचतीति क्रिया गम्यते तां प्रत्युपसर्गो विशिनष्टि" इत्युक्तं भाष्ये । अत्रोद्द्योतकृता व्याख्यातम्–"क्रियाविशेषक उपसर्ग इति–यथान्वयव्यतिरेकाभ्यां प्रत्ययोऽर्थबोधकस्तथा ताभ्यामेव क्रियागतविशेषद्योतक उपसर्गः, क्रियावाची धातुरेवेति भावः"[3] इति । द्वितीये[4]–क्रियायोग इत्यनेनोक्त एव सम्बन्धोऽभिप्रेतो भगवतः पाणिनेः, न तु वाच्यवाचकभावः, तस्य धातुना सहैव भूवादय इति सूत्रे भाष्ये व्यवस्थापनात्[5] । किं वा भूवादय इत्यस्य क्रियावाचिन इत्यर्थोऽपि अस्या एव महिम्नोपस्थापितो भाष्यकृदादिभिः[6] । एवमेव आरोपितत्वं नञ्द्योत्यम्,[7]

---

1. वा. प. १/७६, हरिवृषभटीकायामुद्धृतेयं कारिका ।
2. वा. प., १/८८ ।
3. म. भा., प्र. उ. १/३/१ ।
4. पा. सू. १/४/५९ ।
5. म. भा. १/३/१ ।
6. म. भा. १/३/१ ।
7. वै. भू. सा., कारि. ४० ।

'द्योतकाः प्रादयो येन'[1] इत्यादिकया श्रीभट्टोजिदीक्षितोक्त्या, लघुमञ्जूषायामेतत्समर्थनाय श्रीनागोजिभट्टोक्त्या,[2] "किञ्च व्यर्थं सद् यद्यत्सूत्रं तत्पदं वा ज्ञापकमुच्यते, तत्सर्वं व्यञ्जकमेव, शब्दप्रमाणपर्यालोचनायाम्" इति भैरवमिश्रोक्त्या[3] चैषा प्रतिपदं समादृतास्त्यत्र शास्त्रे ।

**अस्या वृत्तेः स्वीकारे कलाकृतां श्रीबालम्भट्टानां युक्तयः**

लघुमञ्जूषायाः कलाटीकायां श्रीबालम्भट्टेनास्याः समर्थने बहवो युक्तय उपस्थापिताः सन्ति । तथा हि–"यत्तु 'गतोऽस्तमर्कः' इत्यादौ न व्यञ्जना पदमाधातुमर्हति, एकसम्बन्धिदर्शनादपरसम्बन्धिस्मरणवत् स्मृत्यैवोपपत्तेरिति, तन्न सम्यक्, उक्तवाक्यश्रवणसमनन्तरं 'सन्ध्यावन्दनं कर्तव्यम्' इति मया स्मृतमित्यनुव्यवसायाभावात्, तत्तानुल्लेखाच्च । इदं पदमेतदर्थस्य न वाचकम्, नापि लक्षकम्, नापि स्मारकम्, अपि तु व्यञ्जनया बोधकमिति प्रामाणिकव्यवहारेण शक्त्यादिभिन्नाया अस्याः स्वीकाराच्च । असम्बद्धस्यापि अनया बोधदर्शनाच्च"[4] इति ।

**एतस्याः स्वरूपनिरूपणे श्रीनागोजिभट्टस्य महान् विनोदः**

लघुमञ्जूषायां श्रीनागोजिभट्टेनैतत्स्वरूपविवेचनावसरे "संस्कारविशेषो व्यञ्जना" इत्युक्तम् । संस्कारे विशेषश्च त्रिविध उक्तः । तथा हि–यथा लक्षणया मुख्यार्थबाधग्रहपूर्वकमेव बोधो जन्यते, तथाऽत्र न भवति; अपि तु मुख्यार्थस्य बाधग्रहो भवतु न वा भवतु, अनया तु बोधः क्रियत एवेति मुख्यार्थबाधग्रहनिरपेक्षबोधजनकत्वं संस्कारे प्रथमो विशेषः । लक्षणया तु मुख्यार्थसम्बद्धस्यैव अप्रसिद्धस्यैव वा बोधः क्रियते, अनया तु स नियमो न परिपाल्यत इति मुख्यार्थसम्बद्धासम्बद्धसाधारणप्रसिद्धाप्रसिद्धार्थविषयकत्वमुक्तसंस्कारे द्वितीयो विशेषः । उक्तसंस्कारस्योद्बुद्धानुद्बुद्धत्वसाधारण्ये सर्वत्रैव सर्वेषामनया बोधः कथं न ? इत्यतिप्रसङ्गवारणाय वक्त्रादिवैशिष्ट्यज्ञानस्यैतज्जन्यबोधे सहकारित्वं स्वीक्रियत इति वक्त्रादिवैशिष्ट्यज्ञानप्रतिभाद्युद्बुद्धत्वमपि तत्र तृतीयो विशेष इति[5] ।

---

1. वै. भू. सा., कारि. ४२ ।
2. वै. सि. ल. म., र. प्र. युता, पृ. १३३ ।
3. भैर., परि. शे. टी., १ प्रक. ।
4. वै. सि. ल. म., क. टी., पृ. १६३ ।
5. वै. सि. ल. म., र. प्र. युता, पृ. १३३ ।

अत्रोच्यते–एषा संस्कारविशेषरूपा व्यञ्जना न्यायमते समवायेनात्मनिष्ठा, वेदान्तिमते तादात्म्येनान्तःकरणनिष्ठेति शब्दतदर्थयोरुभयोरपि अवर्तमानत्वेन तयोः सम्बद्धताऽस्या नैव स्यात्, सम्बन्धस्योभयवृत्तित्वनियमात्[1]। एवं च न्यायदर्शनाभिमताया इच्छायाः शक्तित्वस्वीकारे तस्याः पदपदार्थयोः सम्बन्धत्वाभावरूपो यो दोषः पूर्वं भवद्भिरुपस्थापितः, स एव दोषोऽधुनोक्तसंस्कारस्य वृत्तित्वसमर्थने भवतां भालेऽप्यापतितः कथमुपेक्षित इत्यहो महान् विनोदो मान्यानाम् ।

व्यङ्ग्यव्यञ्जकभावसम्बन्धरूपैवात्र व्यञ्जनाऽस्तु । संस्कारविशेषस्तु तज्ज्ञापक इति ज्ञापकहेतौ तस्मिन् व्यञ्जनापदव्यवहारो लाक्षणिकः । दृश्यते च क्वचित् कार्ये (फले) क्वचिच्च कारण एकस्यैव शब्दस्य प्रयोगः, यथा शक्यसम्बन्धरूपे कारणे लक्षणापदप्रयोगो न्यायनये । शक्यतावच्छेदकारोपात्मके तत्फले लक्षणापदप्रयोगः शाब्दिकनये ।

आह च स्वयमपि–"द्योतकत्वं च क्वचित् समभिव्याहृतपदीयशक्तिव्यञ्जकत्वम्"[2] इति । अनेनोक्तस्य व्यङ्ग्यव्यञ्जकभावसम्बन्धस्य व्यञ्जनापदेन ग्रहणं शब्दस्थले स्फुटं ध्वन्यते ।

किं वा, यथा दीपे प्रकाशकत्वशक्तावपि घटादिना संयोगसम्बन्धे सत्येव तस्याश्चारितार्थ्यं नान्यथा, तथैव शब्दे व्यङ्ग्यव्यञ्जकभावसत्त्वेऽपि अर्थेन सह तदतिरिक्तस्य समानसंस्कारविशेषविषयत्वस्य सत्त्वेनैव तच्चारितार्थ्यम् । उक्तं च 'उपकारः स यत्रास्ति' इति[3] ।

ननु अर्थबोधात् प्राक्कथं व्यङ्ग्यव्यञ्जकभावस्यास्य ज्ञानम् ? एतस्य ज्ञानं विना च कथमर्थविषयकशाब्दबोध इति चेत्, उच्यते–"वाच्यवाचकभावसम्बन्धवदस्याप्यनादित्वेन दोषाभावात् । एतच्च पदवृत्तिव्यञ्जनाविषयकम् । वाक्यवृत्तिर्व्यञ्जना तु स्वरूपसत्येव वाक्यार्थबोधिका, वाक्यशक्तिवत्"[4] । अत एवोक्तं कलाकृद्भिः "व्यञ्जना स्वरूपसती हेतुः"[5] इति ।

---

1. वै. सि. ल. म., र. प्र. युता, शक्तिनिरू., पृ. १७ ।
2. वै. सि. ल. म., व्य. निरू. ।
3. वा. प. ३/३/६ ।
4. "यदि च पदशक्तिः पदार्थांशे ज्ञाते अन्वयांशे चाज्ञातोपयुज्यत इति कुब्जशक्तिवादस्तदा ममापि वाक्यस्य शक्तिरज्ञातैवोपयुज्यत इति वादाभ्युपगमस्तुल्य इति भावः" । (वै. भू. सा., स्फोटनिरू., कारि. ६६, पृ. २६७)
5. वै. सि. ल. म., क. टी., पृ. १६१ ।

वस्तुतस्तु वाक्यनिष्ठा शक्तिरपि ज्ञातैव शाब्दबोधे हेतुरित्येव सिद्धान्तः[1] । नन्वेवं वाक्यार्थस्य वाक्यशक्त्यैव ज्ञातत्वेऽपूर्वत्वं तस्य कथं स्यादिति चेत्, उच्यते– पदार्थांशे पदस्य शक्तेः सत्त्वेन पारिशेष्याद् अन्वयांश एव वाक्यशक्तिर्विश्राम्यति । तत्रान्वयसामान्ये सा शक्तिरन्वयविशेषस्तु समभिव्याहाररूपाकाङ्क्षयैव लभ्य इति अन्विताभिधानवादिमतवदेतदुपपाद्यम्[2] । न च समुदितार्थे विशिष्टवाक्यस्यैव प्रथमं शक्तिग्रहः, आवापोद्वापाभ्यां पश्चात्तत्तत्पदे तद्ग्रह इति वैयाकरणानां सिद्धान्तेनोक्त-व्यवस्था[3] न सम्भविनीति वाच्यम् । 'श्रीनागोजिभट्टसम्मतसिद्धान्तेन मध्ये स्मृति-रूपाया वाक्यार्थोपस्थितेरसम्भवेन व्यापारतयानपेक्षणेन च[4] सर्वेष्टसिद्धेः । स्फुटी-कृतश्चायमाशयो दर्पणकृताऽपि[5] ।

भाष्यसम्मतं वाक्यार्थज्ञाने पदार्थज्ञानस्य व्यापारत्वं तु प्रक्रियाकल्पे पदार्थ-ज्ञानविधया जायमाने वाक्यार्थबोध एव । स प्रकारोऽनुपदमेवोक्तः ।

न चैवमपि वाक्यनिष्ठशक्तिज्ञानेन वाक्यार्थस्य स्मृतिरेव कथं न ? 'एकसम्बन्धि-ज्ञानमपरसम्बन्धिस्मारकम्' इति नियमादिति वाच्यम् । एकसम्बन्धिज्ञानेनोद्बुद्ध-संस्कारमात्रेणापरसम्बन्धिनः स्मृतिर्भवति । अत एव धूमज्ञानेन व्याप्तिज्ञानादिसहकृते-नाग्नेरनुमितिरेवोत्पद्यते, न तु स्मृतिः । एवमेवात्र वाक्यशक्तिपक्षेऽपि 'सैन्धवमानय' इत्यादिनानार्थकस्थल एकतरार्थविषयकबोधजननाय तात्पर्यज्ञानस्यापि सहकारित्वा-वश्यकत्वेनोक्तशङ्कानिरासात् । शब्दानां स्वरूपेऽर्थेऽपि शक्तिरिति शाब्दिकसिद्धान्तेन 'घटमानय' इत्यादिष्वप्यर्थद्वयविषयकबोधसम्भवेन सर्वत्रैव तात्पर्यग्रहस्यापेक्षणाच्च ।

एवं तर्हि वाक्यनिष्ठाया व्यञ्जनाया अपि ज्ञानमेव वाक्यार्थबोधे हेतुतया सिद्धान्तनीयम् ।

---

1. "ननु वृद्धव्यवहारं पश्यतो मनसा पदार्थवद् वाक्यार्थेऽपि तद्ग्रह इति चेत्, तुल्यमित्याह– लक्षणादिति । लक्ष्यते तर्क्यतेऽनेनेति लक्षणं मनस्तस्मात् । अपिपदं पदपदोत्तरं बोध्यम् । पदेऽपि लक्षणात्तद्ग्रहश्चेत्, तर्ह्यस्तु वाक्येऽपि इति शेषः ।" (वै. भू.सा., स्फोटनिरू., कारि. ६७, पृ. २६७ )
2. ल. म., र. प्र., टिप्पणी, पृ. ३९४-९५ ।
3. वै. भू. सा., स्फो. नि., कारि. ६७, पृ. २६७-६८ ।
4. वै. सि.ल. म., र. प्र. युता, पृ. ४०५ ।
5. वै. भू. सा., द. टी., कारि. ६७, पृ. २६८ ।

## व्यञ्जना स्वरूपसती हेतुः

यदि तु व्यङ्ग्यार्थस्यानियतत्वान्नानादित्वमिति ब्रूषे, किञ्च, संस्कारविशेषरूपैव व्यञ्जना, न तूक्तसम्बन्धविशेषरूपा इति मन्यसे, तर्हि शाब्दबोधं प्रति सर्वत्रोक्त-संस्काररूपव्यञ्जनायाः स्वरूपसत्या एव हेतुत्वमिति शाब्दबोधात् प्राक्कथं व्यङ्ग्य-व्यञ्जकभावस्य ज्ञानमिति प्रश्नस्यावसर एव समाप्तः ।

अत एवोक्तं पूर्वं व्यञ्जनायाः स्वरूपसत्या हेतुत्वं कलाकृद्भिः– "शक्तिरेतज्ज-न्मगृहीतैव बोधहेतुः, व्यञ्जना तु जन्मान्तरगृहीताऽपि, इत्यपि शक्तेरस्या भेदकत्वम् । इदमेवाभिप्रेत्य व्यञ्जना स्वरूपसती हेतुरिति प्रवादः" इति[1] ।

अतिरिक्ताया व्यञ्जनायाः पदार्थान्तरत्वस्य स्वरूपसत्या अन्वयबुद्धौ तद्धेतुत्वस्य च प्रमाणविरहेणासत्त्वाच्चेति श्रीजगदीशतर्कालङ्कारसिद्धान्तेनापि व्यञ्जनावादिमते स्व-रूपसत्या एव तस्यास्तद्धेतुत्वस्यावगमाच्च[2] ।

## वस्तुतस्तज्ज्ञानस्य हेतुत्वेऽपि न सिद्धान्तविरोधः

यद्यपि क्वचनोक्तसम्बन्धरूपव्यञ्जनाया ज्ञानमपि शाब्दबोधे हेतुतयाऽभ्युपेयते[3] । [4]यथा "लक्षणेत्थम्भूता." इति सूत्रे उदाहृतस्य 'वृक्षं प्रति विद्योतते' इत्यस्य वृक्षसम्बन्धि विद्योतनमित्यर्थो दर्शितो मनोरमाकृता[5] । तत्र वृक्षविद्योतने शक्यार्थौ लक्ष्यलक्षणभावसम्बन्धश्च प्रतेर्द्योत्योऽर्थस्तस्य वृत्तिजन्योपस्थितेरभावे कथमन्वयबोधः स्यादिति तत्र व्यञ्जनाया ज्ञानमावश्यकम् । एवमेव 'सर्पिषोऽपि स्यात्' इत्यत्र बिन्दुरूपार्थे 'अपि'शब्दस्य व्यञ्जना वृत्तिः । तस्या ज्ञानेनैव बिन्दुरूपार्थस्योपस्थितिः, तद्विषयकः शाब्दबोधश्च । अपिशब्दश्च कर्मप्रवचनीयभेदे प्रक्रियापक्षे इदमेवो-चितम् । ध्वनितं चैतत्–"अपिः पदार्थ." इति सूत्रव्याख्यावसरे सिद्धान्तकौमुद्यां[6] लघुशब्देन्दुशेखरे[7] च ।

---

1. वै. सि. ल. म, क. टी., पृ. १६१ ।
2. श. श. प्र. कारि. २४, पृ. १७६ ।
3. पा. सू. १।४।९० ।
4. पा. सू. १।४।९० ।
5. प्रौ. म.–सि. कौ. टीका, कार. प्र., लक्षणे. ।
6. वै. सि. कौ., कारकप्रक., अपिः पदार्थ..... सूत्रम् ।
7. ल. श. शे., कारकप्र., अपिः पदार्थ...सू. ।

किञ्च, शाब्दबोधं प्रति वृत्तिविशिष्टज्ञानस्य हेतुत्वं वदद्भिर्मञ्जूषाकृद्भिरस्या[1] ज्ञानस्य हेतुता स्पष्टं प्रतिपादिता । अन्यथा लक्षणायाः शक्तिरूपत्वे व्यञ्जनायाः स्वरूपसत्या हेतुत्वे वृत्तिपदं तत्रानर्थकमेव स्यात्, शक्तिपदेनैवेष्टसिद्धेः । एवं च प्रकृति-प्रत्यय-पदान्यतमशब्दस्थलेऽज्ञाताया वृत्तेरनुपयोगे ज्ञाताया एव व्यञ्जनाया हेतुता । अन्यत्र त्वस्तु नाम स्वरूपसत्याः कारणता–इति विभाव्यतां सूरिभिः ।

किञ्चानुमानेनार्थापत्त्या लक्षणाज्ञानेन वास्या गतार्थताऽभ्युपेयते परैः । ततोऽप्यस्या ज्ञानमेव हेतुरित्यायाति । न ह्यज्ञानस्य प्रतिनिधिर्ज्ञानं भवति ।

**आलङ्कारिकाणां मते व्यञ्जनालक्षणम्**

रसरूपस्यात्मनोऽभिव्यक्तये आलङ्कारिकैरङ्गीकृता स्वप्राणभूतेव व्यञ्जना नाम शब्दस्य वृत्तिः । लक्षणं चास्या बहुत्रोल्लिखितं तदीयैः । यथा काव्यप्रकाशटीकाकृता श्रीवामनाचार्येण–"व्यञ्जना च शक्तिलक्षणाद्यजन्यप्रतीतिजनकः पदादिगतो व्यापारः"[2] इत्युक्तम् । श्रीहरिदासभट्टाचार्येणापि वाच्यादिभिन्नार्थप्रतिपादकत्वे सति वृत्तित्वमिति शब्दतो भिन्नं तदेव लक्षणमनूदितम्[3] ।

इदं लक्षणं मूलग्रन्थत एव निःसरति । तथा च–

**विरतास्वभिधाद्यासु ययार्थो बोध्यतेऽपरः ।**
**सा वृत्तिर्व्यञ्जना नाम शब्दस्यार्थादिकस्य च**[4] ॥ इति ।

शब्दस्य ज्ञानस्य क्रियायाश्च व्यापारः सकृदेव स्वकार्यसम्पादनेनोपक्षीणो भवतीति कार्यान्तरार्थं पुनरन्यो व्यापारोऽपेक्ष्यत इति नियमेनाभिधादीनां निवृत्तौ सत्यां व्यञ्जनाख्यो व्यापार आश्रीयते । व्यञ्जन-ध्वनन-गमन-प्रत्यायनादिशब्दैरपि अयमेव व्यापारः सङ्केतितो भवति[5] ।

---

1. वै. सि. ल. म., र. प्र. युता, पृ. १० ।
2. का. प्र. २।१२, पृ. ६९ ।
3. कुसु., सा. द. टी., २ परि., पृ. ५ ।
4. सा. द., २।१२-१३, पृ. ५१-५२ ।
5. सा. द. २।१२-१३, पृ. ५१-५२ ।

**प्रस्थानरत्नाकरकृतां मतेऽस्या लक्षणम्**

"लक्षणास्थले फलप्रत्यायिका, नियतशक्त्यनेकार्थस्थले विवक्षितातिरिक्तवाच्य-प्रत्यायिका वृत्तिर्व्यञ्जना" इति स्थलभेदेन लक्षणद्वयमुक्तं प्रस्थानरत्नाकरे श्रीगोस्वामि-श्रीपुरुषोत्तममहाराजेन[1] ।

**रत्नप्रभाकृत्सम्मतमेतल्लक्षणम्**

"वक्त्रादिवैलक्षण्यहेतुका या प्रतिभाशालिनामन्यार्थधीस्तद्धेतुव्यापारत्वं व्यञ्जना-त्वम्"[2] इति ।

**अत्र निष्कर्षः**

अलङ्कारशास्त्रोक्तं लक्षणं भेदघटिततया प्रतियोगिज्ञानापेक्षमिति गुरुशरीरम्, मदुक्तलक्षणाऽपेक्षया । किञ्च, व्यावृत्तिर्व्यवहारो वा लक्षणस्य प्रयोजनमिति लक्षणेन लक्ष्ये स्वेतरभेदसाधने अंशतः सिद्धसाधनदोषोऽपि । किञ्च, शब्दतदर्थयोः सम्बन्ध-विशेषो व्यञ्जना नाम । स चावश्यं केनचिन्नाम्ना व्यपदेश्य इत्यादि मदूहितलक्षणेनैव पूरयितुं शक्यते ।

श्रीगोस्वामिकृतं लक्षणं त्वननुगमदोषग्रस्तमेवेति कथं समादरार्हं स्यात् ? तृतीयमपि रत्नप्रभालक्षणं यत्तत्पदघटितत्वेनाननुगतमेव ।

**व्यञ्जनाभेदनिरूपणम्**

इयं च वृत्तिर्न शक्तिवृत्तिवत् शब्दमात्रनिष्ठा, अपि तु मतान्तरीयलक्षणा-वदर्थनिष्ठाऽपि इति द्विविधा । तत्राप्याद्या प्रकृतिप्रत्ययपदवाक्यनिष्ठतया चतुर्विधा । यथा "द्योतिका वाचिका वा स्युर्द्वित्वादीनां विभक्तयः" इति सिद्धान्तेन[3] यदा अमादिविभक्तीनामेकत्वादिसंख्याद्योतकत्वम्, तदा प्रकृतेस्तद्वाचकत्वम् । यदा त्वमादीनां तद्वाचकत्वम्, तदा प्रकृतेः (घटादेः) तद्द्योतकत्वम् । पदस्य द्योतकत्वं तु परिभवतीत्यादौ भूधातोः परिभवार्थवाचकत्वम्, परेरुपसर्गस्य तद्द्योतकत्वं प्रसिद्ध-मेव । उक्तं च–

**"उपसर्गेण धात्वर्थो बलादन्यः प्रतीयते ।**
**प्रहाराहारसंहारविहारपरिहारवत्"** ॥ इति[4] ।

---

1. प्र. र., प्र. परि., पृ. ९५ ।
2. वै. सि. ल. म., र. प्र. टी., व्य. निरू., पृ. १३४ ।
3. ल. श. शे., कारकप्र. "अनभिहिते" इति सूत्रम् ।
4. सि. कौ., भ्वादिगणप्र., भूधा. ।

एवमेव "वाह ऊठ्" इत्यत्रोड्ग्रहणं[1] ज्ञापकमन्तरङ्गपरिभाषाया इति तदपि पदनिष्ठमेव व्यञ्जनम् । प्रत्ययोत्तरपदयोश्चेति सम्पूर्णसूत्रं ज्ञापकम्;[2] अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधत इति वाक्यनिष्ठा व्यञ्जना । एवमेव 'अर्कोऽस्तं गतः' इत्यादिवाक्यस्य सन्ध्योपासनं कर्तव्यमित्यादि व्यङ्ग्यार्थव्यञ्जनं लोके प्रसिद्धमेव ।

## प्रकारान्तरेण पुनरेषा द्विविधा

इयमेव शाब्दी व्यञ्जना अभिधामूला लक्षणामूला चेति पुनरपि द्विविधा[3] । तत्राद्या नियन्त्रितान्यार्थविषयकबोधजनिका । यथा–"दुर्गालङ्घितविग्रहो राजत्युमावल्लभः" इत्यत्रोमावल्लभशब्दस्योमानाममहादेवीवल्लभभानुदेवनृपतिरूपेऽर्थे प्रकरणेन नियमिते व्यञ्जनयैव पुनर्गौरीवल्लभरूपोऽर्थो बोध्यते[4] ।

यत्तु नियन्त्रितार्थविषयकबोधजनकत्वमस्या लक्षणमधुना कलाटीकायां तदनुगामिन्यां रत्नप्रभायां च प्राप्यते[5] । तत्तु मुद्रणयन्त्रदोषदुष्टं मन्ये, आदौ अकारस्य मध्येऽन्यशब्दस्य वा मुद्रणात् । अथवा प्राग्रूपशोधयितुर्दोष इति मन्ये । नियन्त्रितार्थस्य त्वभिधयैव बोधात् तदन्यस्यैवानया बोधनात् ।

लक्षणामूला तु 'गङ्गायां घोषः' इत्यादौ । तत्र हि अभिधया गङ्गापदेन प्रवाहविशेषस्य बोधः, लक्षणया तटस्य बोधस्ततो विरतयोः शक्तिलक्षणयोर्व्यञ्जनया तटे शैत्यपावनत्वातिशयस्य बोध इति प्रयोजनवतीषु लक्षणासु सर्वत्रैवमेव प्रयोजनप्रतीतये लक्षणामूला व्यञ्जना समुपास्यते[6] ।

---

1 पा. सू. ६।४।१३२ ।

2. पा. सू. ७।२।९८ ।

3. अनेकार्थस्य शब्दस्य संयोगाद्यैर्नियन्त्रिते ।
एकत्रार्थेऽन्यधीहेतुर्व्यञ्जना साभिधाश्रया ॥
( सा. द. २।१४, पृ. ६२-६३ )

4. वै. सि. ल. म., क. टी., पृ. १६२ ।

5. क., र., प्र., वै. सि. ल. म. टी., पृ. १३४ ।

6. सा. द. २।१५, पृ. ६३ ।
लक्षणोपास्यते यस्य कृते तत्तु प्रयोजनम् ।
यया प्रत्याय्यते सा स्याद् व्यञ्जना लक्षणाश्रया ॥ इति ।

## चेष्टावृत्तिरपि व्यञ्जना वस्तुतः शब्दवृत्तिरेव

मूकादीनां चेष्टयैव व्यवहारदर्शनाच्चेष्टागताऽपीयं व्यञ्जना, तेषां शब्दज्ञाना-भावात् । वस्तुतस्तु तेषामपि जन्मान्तरीयशब्दस्मरणेन तत्रापि शब्दनिष्ठैवैषा नातिरिक्तेत्यपि केषाञ्चिन्मतम् । स्पष्टं चैतत्सर्वं गुरुमञ्जूषादाविति कलाकृतोच्यते[1]।

## अर्थनिष्ठाया व्यञ्जनाया विमर्शः

वक्त्रादिवैलक्षण्यहेतुका या प्रतिभाशालिनामन्यार्थधीस्तद्धेतुव्यापारोऽर्थनिष्ठा व्यञ्जना, शब्दगतव्यञ्जनया तु नास्या गतार्थता ।

**रविजाले विलोक्य श्रीर्नाभिपद्मे पितामहम् ।**
**रसाकुला छादयते दक्षिणं नयनं हरेः ॥**

इत्यादौ हरिपदसान्निध्येन दक्षिणनयनस्य सूर्यात्मकत्वम्, तत्सङ्कोचेन सूर्यास्तत्वम्, तेन पद्मस्य सङ्कोचः, तेन पितामहस्य (ब्रह्मणः) गमनम्, तेनाप्रतिबद्धं रतिविलसितमिति क्रमेण व्यङ्ग्येषु प्रतीयमानेषु तत्तदर्थप्रतीत्युत्तरमेव व्यङ्ग्यप्रतीतिरित्यर्थस्यापि व्यञ्जकत्वं मन्तव्यमेव[2] ।
एतल्लक्षणविषये–

**वक्तृबोद्धव्यकाकूनां वाक्यवाच्यान्यसन्निधेः ।**
**प्रस्तावदेशकालादेर्वैशिष्ट्यात् प्रतिभाजुषाम् ॥**
**योऽर्थस्यान्यार्थधीहेतुर्व्यापारो व्यक्तिरेव सा ॥**

इति काव्यप्रकाशकारिका उद्धृत्य कलाटीकायां बोद्धव्यादीनां सर्वेषां लक्षणमुक्तम्, तत्र[3] अलङ्कारग्रन्थेषु[4] च विस्तरतो वर्णनं द्रष्टव्यम्, अत्र तु अस्याः (अर्थगतव्यञ्जनायाः) अप्रसक्ततया न प्रपञ्चः क्रियते । रचनादिगताया अपि इयमेव स्थितिः । एते सर्वे भेदा लघुमञ्जूषायां सङ्केतिताः सन्ति[5] ।

---

1. वै. सि. ल. म., क. टी., व्य. निरू., पृ. १६३ ।
2. वै. सि. ल. म., क. टी., व्य. निरू., पृ. १६२ ।
3. वै. सि. ल. म., क. टी., व्य. निरू., पृ. १६१ ।
4. सा. द. २।२३-२५ ।
5. वै. सि. ल. म., र. प्र. युता, व्य. नि., पृ. १३३ ।

**शक्त्या लक्षणया वा न गतार्था एषा**

सा चैषा व्यञ्जना शक्तिमूला शक्त्या, लक्षणामूला च लक्षणयैव यदि गतार्था स्यात्, तर्हि स्वतन्त्रा कथमभ्युपेया ? इति चेत्, उच्यते–'राजत्युमावल्लभः' इत्यादौ अप्राकरणिकद्वितीयार्थबोधान्निष्कम्पं प्रवृत्त्यभावेन तस्यास्वादविशेषजनकत्वेन च तत्र वैजात्यमवश्यं वाच्यमिति तस्य बोधस्य कारणविशेषेणैव सिद्धिर्वाच्या स्यादिति व्यञ्जनाऽगत्या सम्माननीया सहृदयैः[1] । अत एव व्यञ्जनामात्रं शक्त्या न गतार्थीकर्तुं शक्यते । किञ्च 'व्यञ्जना सहृदयमात्रसंवेद्या, शक्तिस्तु तदन्यैरपि' इति बोद्धृभेदाद् द्वयोर्भेदः । 'गतोऽस्तमर्कः' इत्यादौ वाच्योऽर्थ एक एव व्यङ्ग्यस्तु अनेक इति प्रतिपाद्यसंख्याभेदः । वाच्यार्थः शब्दोच्चारणमात्रेण प्रतीयते, व्यङ्ग्यस्तूक्तप्रतिभा-नैर्मल्यादिना इति निमित्तभेदः । एवमेव कार्यप्रतीतिकालाश्रयविषयादीनां च भेदाद् भेदः[2] । किञ्च, शक्तेर्ज्ञानं शाब्दे हेतुः, व्यञ्जना तु स्वरूपसती अपि इति महान् भेद इति कथं सा शक्त्या क्रोडीकर्तुं शक्या ? नापि च लक्षणया चरितार्था एषा । तथा हि– यथा गङ्गाशब्दो जलप्रवाहविशेषे सबाध इति तटं लक्षयति । तद्वत् तटेऽपि सबाधः स्यात् तदा शैत्यादिकं लक्षयेत् । तत्तु न सम्भवति, न हि तटो मुख्योऽर्थः, नापि अत्र बाधः, नापि च तटस्य लक्षणीयैः शैत्यादिभिः साक्षात् सम्बन्धः । नापि प्रयोजने लक्ष्ये किञ्चित् प्रयोजनमिति बाधादिकमनपेक्ष्य गङ्गाशब्दस्तटमिव प्रयोजनं प्रतिपादयितुं कथमिव लक्षणया समुत्सहेत ? उक्तं च श्रीमम्मटाचार्येण–

**प्रयोजनेन सहितं लक्षणीयं न विद्यते ।**
**ज्ञानस्य विषयो ह्यन्यः फलमन्यदुदाहृतम्**[3] ॥ इति ।

किञ्च, प्रयोजनस्य लक्ष्यत्वे तीरादेर्लक्ष्यस्य मुख्यार्थत्वं बाधितत्वं च स्यात् । प्रयोजनस्यापि च लक्ष्यतया प्रयोजनान्तरम्, तस्यापि प्रयोजनान्तरमित्यनवस्था स्यादित्यपि दोष उक्तः साहित्यदर्पणकृता[4] ।

**व्यञ्जनाख्यवृत्तेरनङ्गीकारे मतान्तराणि**

श्रीजगदीशतर्कालङ्कार-श्रीहरिनाथभट्टाचार्यप्रभृतयो व्यञ्जनावृत्तिमनङ्गीकुर्वन्तो 'मुखं विकसितस्मितम्' इत्यादौ विकासस्य मुखे बाधाल्लक्षितार्थस्य विस्तृतस्यान्वयबोधो-

---

1. सा. द. २।१४ । द्र.–टीका (रामचरणतर्कवागीशकृता विवृतिः), पृ. ५८ ।
2. सा. द. ५।२, पृ. २५७-५९ ।
3. का. प्र. २। १५-१६ ।
4. सा. द. ५।३, पृ. २६०-६१ ।

त्तरं मुखे कुसुमतुल्यसौरभवत्तायाश्चमत्कृतिरमणीयताया वा बोधो मानसालौकिक-प्रत्यक्षरूपः स्मृतिसन्निकृष्ट एवेति सिद्धान्तयन्ति[1] ।

'गामानय' इत्यादिवाक्यतोऽपि अयं मानस एव बोधोऽस्तु, किं शक्त्यादे-र्वृत्तित्वकल्पनेनेति तु न शङ्क्यम्; वृत्त्योपस्थितपदार्थादतिरिक्तस्यार्थस्य भानं शाब्द-बोधे मा भूदिति तस्य नियन्त्रितविषयकत्वस्यावश्यकतया तत्रोक्तमानसत्वायोगात् ।

एवं व्यञ्जनायाः स्वरूपसत्या हेतुत्वे सर्वस्यैव सर्वदा बोधः स्यात्, न तु सहृदयमात्रस्य । ज्ञातायास्तत्त्वे तु शक्तिग्राहकव्यवहारादिवत् तदग्राहकस्यापि वचनीयता आपतेदित्यादि च वदन्ति[2] ।

मुक्तावलीटीकाकृतस्तु–शक्तिमूलायाः शक्तौ लक्षणामूलाया लक्षणायां द्वयोः क्वचिच्चानुमानेऽन्तर्भावं कृत्वा एनां व्यञ्जनां तिरस्कुर्वन्ति । 'यथा दूरस्था भूधरा रम्याः' इत्यादौ नानार्थस्थले भूधरपदेन नृपतीनामपि बोधः शक्त्यैव ।

एवं 'गङ्गायां घोषः' इत्यादौ शैत्यपावनत्वातिशयविशिष्टस्य तीरस्य लक्षणयैव बोधः । तथा च–

**गच्छ गच्छसि चेत् कान्त पन्थानः सन्तु ते शिवाः ।**
**ममापि जन्म तत्रैव भूयाद् यत्र गतो भवान् ॥**

इत्यत्र कान्तगमनोत्तरकालिककान्ताप्राणवियोगादयोऽर्थशक्तिमूलव्यञ्जनया बोध्यमाना अर्थाः – "एषा मद्गमनोत्तरं प्राणवियोगवती भविष्यति, ममापि जन्मेत्यादिविलक्षण-शब्दप्रयोगवतीत्वात्, या नैवं सा नैवम्, यथा एतच्छब्दभिन्नशब्दप्रयोक्त्री कामिनी इत्यनुमानेनैव बोधनीयाः" इत्युदाहरन्ति[3] ।

व्यक्तिविवेककृतो भवन्तो महिमभट्टा अपि अनुमान एवैनामन्तर्भावयन्ति । तथा हि–"विभावादिप्रतीती रसादिप्रतीतेः साधनमिष्यते । ते (विभावादयः) हि रत्यादीनां भावानां कारणकार्यसहकारिभूतास्ताननुमापयन्त एव रसादीन् निष्पादयन्ति । त एव हि प्रतीयमाना आस्वादपदवीं प्राप्ताः सन्तो रसा उच्यन्ते–इत्यवश्यम्भावी प्रतीति-क्रमः, केवलमाशुभावितयाऽसौ नानुभूयते, यतोऽयमद्याप्यभिव्यक्तिक्रमः" इति[4] ।

---

1. श. श., प्र., पृ. १६६-१७६ ।
2. श. वा. वि., सामा. का., पृ. २-३ ।
3. न्या. सि. मु., किर. टी., शब्दख., पृ. ३२५-२६ ।
4. सा. द., ५ परि., पृ. २७५ ।

प्रस्थानरत्नाकरकृतस्तु–'गङ्गायां घोषः' इत्यादौ तात्पर्यवृत्त्यैव शैत्यपावनत्वादि प्रतीयते । वक्तृगतं तात्पर्यं शब्दे आरोप्य तस्य शब्दवृत्तित्वं निर्वाह्यम् ।व्यञ्जनाया वृत्तित्वे तु अश्लीलस्थल इवात्रापि केशवालुकादेरपि प्रतीतिः स्यात्, तद्वारणाय तात्पर्य-वृत्तेस्तवाप्यावश्यकत्वे तद्धेतुन्यायेन व्यञ्जनावृत्तेर्निष्प्राणत्वमेवेत्यादि उपपादयन्ति[1] ।

अद्वैतवेदान्तिनस्तु अर्थापत्तिप्रमाणेनैव व्यङ्ग्यार्थबोधमुपपाद्य व्यञ्जनावृत्तिमुत्सार-यन्ति[2] ।

## एतानि मतानि निराकृत्य व्यञ्जनावृत्तिस्थापनम्

उक्तानि मतानि निराकर्तुमालोच्यन्ते । तत्र प्रथमतः स्मृतिसहकृतमनसा निर्वाह उक्तः, स च न समीचीनः । तथा हि–स्मृतोऽर्थः शब्देन सम्बद्धोऽसम्बद्धो वा ?, सम्बद्धश्चेत्तर्हि सम्बन्धसामान्येन तद्विशेषेण वा ? नाद्यः, 'निर्विशेषं न सामान्यम्' इति सिद्धान्तविरोधात् । द्वितीयपक्षे तु आगतं ममैव मतम् । अयमेव सम्बन्धविशेषः स्मर्यते व्यञ्जनात्वेन सहृदयैरिति । सम्बद्धत्वपक्षे त्वनियमप्रसङ्गः, यश्च स्वयमपि दूरोत्सारितः ।

किञ्च, न हि शैत्यादिकमर्थं मनसा साक्षात्करोमीत्यनुव्यवसायः कस्यापि सचेत-सोऽनुभवपथमारोहति, अपि तु गङ्गापदाद् व्यञ्जनया जानामीत्येवानुव्यवसायः प्रामाण्यपदवीमधिरोहति ।

एवमेव व्यञ्जना स्वरूपसती ज्ञाता वा बोधहेतुरिति विकल्पोऽपि आपातरम्यः, शब्दस्थले ज्ञायमानाया बोधहेतुत्वस्य सिद्धान्तितत्वात् । तद्ग्राहकं च वक्तृबोद्धव्या-दीनां ज्ञानम् । अन्यत्र स्वरूपसत्या एव तस्यास्तत्त्वेनाङ्गीकारात्, वक्तृबोद्धव्यादीनां तात्पर्यस्य वा ज्ञानं तत्र सहकारीति स्वीकारेण सर्वापत्तेर्निरासात् ।

द्वितीयमते–शक्तिलक्षणाभ्यामस्या गतार्थतापक्षस्तु अनुपदं निराकृत एव ।

अनुमानगतार्थत्वपक्षः परमवशिष्यते । सोऽपि न युक्तिसहः; यतो हि व्याप्तिज्ञानाद्यभावेऽपि साध्यसिद्धावपि वाक्यश्रवणोत्तरं स सोऽर्थः प्रतीयत एव कथङ्कारमनुमानं तत्र पुरस्क्रियेत ?

अत एव तृतीयमते व्यक्तिविवेकीयेऽपि न सम्यक्त्वम्; परमतेन स्वरूपा-सिद्ध्यादिदोषग्रासाच्च ।तथोक्तं श्रीहरिदासभट्टाचार्येण–"काव्यं रसादिमद् विभावादि-मत्त्वादित्यत्र हेतुतावच्छेदकसमवायसम्बन्धेन विभावादिप्रतीतेः सभ्यवृत्तित्वेन काव्यरूपे

---

1. प्र. र., प्र. परि., पृ. ९५ ।
2. सा. द., ५ परि., पृ. २८३ ।

पक्षे तत्सम्बन्धेन वृत्तित्वाभावेन स्वरूपासिद्धिः । पक्षे हेत्वभावेन तत्र हेतुज्ञानाभावे व्याप्तिस्मरणं कुतः ?" इति बहूपप्लवोऽत्र दर्शितो विस्तरतो भट्टाचार्येण[1] साहित्यदर्पणकृता च[2] । किञ्च, व्यञ्जनाजन्यबुद्धौ न बाधनिश्चयः प्रतिबन्धकः,[3] अनुमानजन्यज्ञाने तु स प्रतिबन्धको भवत्येवेति नानुमानगतार्थताऽस्याः ।

तात्पर्यवृत्त्या गतार्थेयमिति तुरीयं मतमपि न रुचिकरं सचेतसाम् । यतो हि यदि साहित्यशास्त्रोक्तां तात्पर्यवृत्तिमत्राभिप्रयन्ति भवन्तस्तर्हि वाक्यार्थरूपस्य पदार्थद्वयसंसर्गस्य बोधनाय सा वृत्तिरङ्गीकृताऽस्ति[4], तस्या अत्र सामर्थ्यमेव नास्ति । अत एवाभिधालक्षणातात्पर्याख्यासु तिसृष्वपि वृत्तिषु विरतासु तुरीया वृत्तिरुपास्यते व्यञ्जना नाम इत्युक्तम्[5] । यदि तु शाब्दबोधे हेतुभूतं तात्पर्यज्ञानमभिप्रेयते, तदाऽस्तु नाम शाब्दहेतुता तस्य, भवदुक्तं नियमनमपि तदीयमस्तु नाम । वृत्तिस्त्वियं स्वीकरणीयैव, शाब्दे पदवृत्तिजन्योपस्थितिविषयस्यैव पदार्थस्य भानाय, अन्यथा शक्तिलक्षणयोरपि कथं नोत्सादः ? उक्तानुव्यवसायविरोधस्तु समक्षं तिष्ठत्येवेति विभाव्यतां भवद्भिः ।

अत एवार्थापत्त्यापि गतार्थत्ववादिनां पञ्चममपि मतं दूरत उत्क्षिप्तम् । व्यतिरेक्यनुमानेनार्थापत्तेरवसानेऽनुमानपक्षीयोक्तदोषगणग्रासाच्चेति निष्कम्पं व्यञ्जनापर्यङ्के समवस्थितमिदं शब्दब्रह्म परितश्चकास्ति ।

**॥ इति शब्दप्रमाणसमीक्षायां द्वितीयं पुष्पम् ॥**

●

1. सा. द., कुसु. टी., परि. ५, पृ. २७६-७७ ।
2. सा. द., कुसु. टी., परि. ५, पृ. २७६-७७ ।
3. वै. सि. ल. म., लक्षणानिरू. ।
4. सा. द., २/२०, पृ. ७० ।
5. सा. द., २/१२-१३, पृ. ५७-५८ ।

# ॥ अथ शब्दसमीक्षायां तृतीयं पुष्पम् ॥

शाब्दबोधेऽन्यान्यपि चत्वारि आकाङ्क्षायोग्यतासन्निधितात्पर्यज्ञानानि कारणानि मतान्तरवदत्रापि सम्मतानि[1] ।

**तत्र प्रथमत आकाङ्क्षानिरूपणम्**

एकस्यार्थस्य स्वान्वययोग्यापरार्थस्य या जिज्ञासा, सैवाकाङ्क्षा । एतज्ज्ञानं शाब्दबोधे हेतुः, अन्वयव्यतिरेकसहचारात् । यद्यपि "अस्यार्थस्यान्वयी अर्थः कः ? इत्येवंरूपैषाकाङ्क्षा पुरुषनिष्ठैव, तथापि समवायसम्बन्धेन स्वविषयेऽर्थ एनां समारोप्योक्तलक्षणस्य[2] सङ्गतिः । एवं च अयमर्थोऽर्थान्तरमाकाङ्क्षति" इत्यादिव्यवहारेणाभिधानापर्यवसानमप्यस्याः स्वरूपमुक्तं श्रीनागेशभट्टेन[3] ।

सोदाहरणमेतल्लक्षणं सङ्केतितं भाष्यकृता–"परस्परव्यपेक्षां सामर्थ्यमेके । का पुनः शब्दयोर्व्यपेक्षा ? न ब्रूमः, शब्दयोरिति, किं तर्हि ? अर्थयोः । इह 'राज्ञः पुरुषः' इत्युक्ते राजा पुरुषमपेक्षते ममायमिति, पुरुषो (अपि) राजानमपेक्षते अहमस्य इति"[4] ।

---

1. (क) अत्राकाङ्क्षा योग्यत्वं सन्निधिश्चेति तत्त्रयम् ।
   वाक्यार्थावगमे सर्वैः कारणत्वेन कल्प्यते ॥ (मानमे., शब्दपरीक्षा, पृ. ४३)

   (ख) "वाक्यजन्ये च ज्ञाने आकाङ्क्षायोग्यतासत्तयस्तात्पर्यज्ञानं चेति चत्वारि कारणानि ।"
   (वे. प., टीकाद्व., पृ. २१० )

   (ग) "आसत्तियोग्यताकाङ्क्षातात्पर्यज्ञानमिष्यते ।
   कारणम्.......................... "।
   (न्या. सि. मु., श. ख., कारि. ८२, पृ. ३३९)

2. "प्रमातृगतां व्यपेक्षामर्थे समारोप्य शब्दाः संस्क्रियन्ते ।" (म. भा., प्र. २/१/१)
3. वै. सि. ल. म., र. प्र. यु., आका. निरू., पृ. ४९५ ।
4. म. भा. २/१/१ ।

अस्यान्वयी अर्थः कः ? इति जिज्ञासयाऽन्वयीभूतेऽर्थे ज्ञाते सति एतदर्थान्विते परार्थे वाक्यस्य शक्तिर्निश्चीयत इति वाक्यनिष्ठायाः शक्तेर्ग्राहकतया वाक्यसमयग्राहकत्वमप्यस्या लक्षणमुक्तं श्रीनागेशभट्टेन[1] ।

ईदृशजिज्ञासोत्थापकं चैकपदार्थेऽपरपदार्थव्यतिरेकप्रयुक्तस्यान्वयबोधाजनकत्वस्य ज्ञानमिति तद्विषये तादृशान्वयबोधाजनकत्वेऽपि 'आकाङ्क्षा' इति व्यवहारः[2] ।

एतज्ज्ञानस्य शाब्दबोधहेतुत्वादेव एकवारमन्वयबोधे जाते तदजनकत्वज्ञानाभावान्न पुनरन्वयबोधः[3] ।

यदि चाकाङ्क्षाज्ञानमव्यवहितपूर्ववृत्तितया हेतुः स्यात्, तर्हि प्रथमत एतस्योत्पत्तिक्षणाव्यवहितोत्तरे स्थितिक्षणे शाब्दबोधे जातेऽपि नियमतो द्वितीयोऽपि शाब्दबोधः सर्वत्र उत्पद्येत, ततोऽव्यवहितपूर्वक्षणेऽस्य कारणस्य वर्तमानत्वात्, अतः कार्यसमकालवृत्तितयैवास्य हेतुता[4] ।

### शाब्दबोधोऽत्र महावाक्यार्थबोध एव

अत्र लक्षणे प्रविष्टः कोऽन्वयबोधः, यः पुनर्नावर्ततं इति चेत्, उच्यते– अन्वयबोधोऽत्राकाङ्क्षितसकलक्रियाकारकविषयको ग्राह्यः । अतः खण्डवाक्यार्थबोधोत्तरं महावाक्यार्थबोधः सम्पद्यते । अत एव च "सुरतक्रीडापिकीनां रवः, कङ्कणक्वाणः प्रेम तनोतु वो नववयोलास्याय वेणुस्वनः" इत्यादौ समाप्तपुनरात्तत्वं दोष उक्त आलङ्कारिकैः[5] । अन्यथा खण्डवाक्यार्थबोधेनैव निराकाङ्क्षत्वे सर्वत्रैतद्दोषबीजभूतस्य तस्य (निराकाङ्क्षत्वस्य) सत्त्वे ईदृशस्थल एवैतद्दोषप्रदर्शनमसङ्गतं स्यात्[6] ।

### अयमर्थोऽर्थान्तरसाकाङ्क्ष इत्यत्र साकाङ्क्षत्वनियामकसम्बन्धनिरूपणं मञ्जूषाकृन्मते

अयमर्थोऽर्थान्तरमाकाङ्क्षतीति व्यवहारे साकाङ्क्षत्वमर्थे केन सम्बन्धेन ? इति जिज्ञासायामुच्यते श्रीनागेशभट्टेन–

---

1. वै. सि. ल. म., र. प्र. युता, आका. निरू., पृ. ४९५ ।
2. तदेव ।
3. तदेव ।
4. तदेव ।
5. तदेव, पृ. ४९९ ।
6. तदेव ।

"उत्थापकता विषयताऽन्यतरसम्बन्धेन तदुभयसम्बन्धेन वा जिज्ञासाविशिष्टोऽर्थः साकाङ्क्ष इति कथ्यते" ।

तत्राद्यमुदाहरणम्–'पश्य मृगो धावति' इति । अत्र ह्युत्थापकतासम्बन्धेन पश्य-पदीयदर्शनरूपेऽर्थे आकाङ्क्षा तिष्ठति । यतो हि पश्येत्युक्ते सति किं पश्य इति कर्माकाङ्क्षायां धावनक्रिया कर्मतयाऽन्वेतीति तत्क्रियारूपकर्माकाङ्क्षोत्थापकता दर्शनेऽस्ति । तादृश्याकाङ्क्षा विषयतासम्बन्धेन धावनक्रियायामस्ति इत्यन्यतरसम्बन्धेनोभयोः साकाङ्क्षत्वं समन्वितम् । धावतिपदोत्तरं विभक्तेरभावेऽप्यत्र क्रियाकर्मभाव-सम्बन्धस्य बोधो वाक्यशक्त्येति न शाब्दिकमते काचनानुपपत्तिः ।

'पचति देवदत्तः' इत्यादौ क्रियाकारकयोर्द्वयोरपि परस्परमाकाङ्क्षाया उत्थापकत्वाद् विषयत्वाच्चैतदुभयसम्बन्धेन साकाङ्क्षत्वाद् द्वितीयोदाहरणत्वं बोध्यम्[1] ।

विषयतासम्बन्धेनार्थे साकाङ्क्षत्वव्यवहारो महाभाष्येऽपि कृतोऽस्ति[2] । तत्र हि "अस्त्यस्मिन्नाकाङ्क्षेत्यतः साकाङ्क्षम्" इत्युक्तम् । तत्र अस्मिन्निति विषयसप्तमीति ध्वनितं श्रीनागोजिभट्टेन उद्द्योतग्रन्थे[3] ।

**न्यायदर्शने आकाङ्क्षायाः स्वरूपम्**

येन पदेन विना यस्य पदस्यान्वयाननुभावकत्वम् (शाब्दबोधाजनकत्वम्), तेन पदेन सह तस्य पदस्य आकाङ्क्षा बोध्या । प्रकृतिप्रत्यययोः समभिव्याहाररूपा इयं भवति । यथा 'घटमानय' इत्यादौ घटनिष्ठकर्मताबोधं प्रति घटपदोत्तराम्वि-भक्तित्वरूपाकाङ्क्षाज्ञानं कारणं भवति । अतश्च घटः कर्मत्वमानयनं कृतिरित्यतो न शाब्दबोधः, उक्ताकाङ्क्षाया अभावात्[4] ।

दिनकराचार्येण तु एकपदावधिकं पदान्तरनिष्ठमव्यहितोत्तरत्वरूपमेतत्स्वरूप-मुक्तम् । तत्रापि 'पदपदं शक्तं पदम्' इति रीत्या प्रकृतिप्रत्ययान्तरपरमेव । न तु सुप्तिङ्न्तरूपम्, 'पचति चैत्रः, चैत्रः पचति' इति वाक्यद्वयादपि शाब्दबोधोदयात् ।

तत्राप्यव्यवधानांश आसत्त्या एव लभ्यः, केवलं प्रत्यये प्रकृत्युत्तरत्वमेवाकाङ्-क्षात्वेन गृह्यते । घटनिष्ठकर्मताविषयकबोधं प्रति घटपदोत्तराम्त्वरूपाकाङ्क्षाया एव ज्ञानं कारणम्, न तु घटः कर्मत्वमित्यानुपूर्वीरूपाया अपीति विशेष उक्तः[5] ।

---

1. वै. सि. ल. म., र. प्र. युता, आका. निरू., पृ. ५०५ ।
2. म. भा. २/२/११४ ।
3. म. भा., उ. ३/२/११४ ।
4. न्या. सि. मु., टीकाद्वयोपेता, कारि. ८४, पृ. ३९०-९२ ।
5. तत्रैव ।

## पूर्वमीमांसादर्शनेऽस्याः स्वरूपम्

'गामानय' इत्यादितः शाब्दप्रमितेरुदयात् 'गौरश्वः पुरुषो हस्ती' इत्यादितोऽनुदयादस्ति शाब्दबोधे आकाङ्क्षाज्ञानं हेतुरिति भट्टपादानामपि निश्चयः[1] । तत्रेयं पदवृत्तिः पदार्थवृत्तिर्वेति अनुपदमेव विचारयिष्यते ।

## उत्तरमीमांसादर्शनेऽस्याः स्वरूपम्

उत्तरमीमांसकास्तु—पदार्थानां परस्परजिज्ञासाविषयत्वयोग्यत्वमाकाङ्क्षात्वेनाभिप्रयन्ति । क्रियाश्रवणे कारकस्य, तस्य श्रवणे क्रियायाः, करणश्रवणे इतिकर्तव्यतायाश्च जिज्ञासाविषयत्वात् । अजिज्ञासोरपि बोधोदयाद् योग्यत्वमुपात्तम् । तदवच्छेदकं च क्रियात्वकारकत्वादिकमिति गौरश्व इत्यादितो नातिप्रसङ्गः । अभेदान्वयबोधे च समानविभक्तिकपदप्रतिपाद्यत्वं तदवच्छेदकमिति तत्त्वमस्यादिषु नाव्याप्तिः[2] ।

## अत्र निष्कर्षः

यथा एकपदार्थस्यापरपदार्थव्यतिरेकप्रयुक्तान्वयबोधाजनकत्वेऽपि गौण आकाङ्क्षापदव्यवहारः, तथैव तादृशान्वयबोधाजनकत्वज्ञानस्य समभिव्याहारनिष्ठकरणताज्ञानमूलकत्वात् सा कारणताऽप्याकाङ्क्षापदव्यवहार्या । एवमेव गौणवृत्त्या तादृशसमभिव्याहारोऽप्याकाङ्क्षात्वेन व्यवहर्तुं शक्यः । अतः स स समभिव्याहारस्तादृशतादृशान्वयबोधजनक इति ज्ञानं शाब्दमतौ हेतुः, तदज्ञानवतामबोधाच्चेत्यादि स्पष्टं लघुमञ्जूषायाम्[3] ।

एवं रीत्या गौणव्यवहारेण पदनिष्ठाकाङ्क्षापक्षो न्यायसम्मतः कथञ्चिद् योजयितुं शक्यः ।

पूर्वमीमांसामत[4] इव उत्तरमीमांसामतेऽपि विषयतासम्बन्धेन पदार्थनिष्ठैवैषा आकाङ्क्षा इति नास्ति शाब्दिकमताद् बहुभेदः । योग्यत्वपर्यवसानकृत एव भेदः । अन्ततो योग्यत्वनिवेशो युक्त एव ।

## योग्यतास्वरूपनिरूपणम्

क्रमप्राप्ताया योग्यतायाः स्वरूपं निरूप्यते ।

---

1. मानमे., शब्दपरि., पृ. ४३ ।
2. वे. प., टीकाद्व., पृ. २१२, आगमप्र. ।
3. ल. म., र. प्र. युता, आका. नि., पृ. ५०३ ।
4. श्लो. वा., वाक्या. २५१-६० ।

## तत्रादौ न्यायदर्शनसम्मता योग्यता

प्राचां नैयायिकानां मत एकपदार्थेऽपरपदार्थसंसर्गो योग्यता, तज्ज्ञानं शाब्दबोधे कारणमिति 'वह्निना सिञ्चति' इत्यादौ सेचने वह्निनिष्ठकरणतानिरूपकत्वरूपयोग्यताया अभावेन तज्ज्ञानाभावान्न शाब्दबोधः । एतज्ज्ञानं च संशयनिश्चयसाधारणं गृह्यते । तज्ज्ञानत्वेन च हेतुताभ्युपेयते । अतो वाक्यार्थस्यापूर्वत्वं न विहन्यते । अन्यथा शाब्दबोधयोग्यताज्ञानयोरैकरूप्येऽपूर्वत्वं (शाब्दबोधात् पूर्वं निश्चयाभावः) कथं स्यादिति ।

नव्यानां मते तु योग्यताज्ञानं न शाब्दबोधे कारणम्, 'वह्निना सिञ्चति' इत्यादौ सेके वह्निकरणकत्वाभावरूपायोग्यतानिश्चयेन प्रतिबन्धान्न शाब्दबोधः । तदभावनिश्चयस्य लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यतज्ज्ञानमात्रे प्रतिबन्धकत्वाच्छाब्दं प्रत्यपि प्रतिबन्धकत्वं सिद्धमेव ।

यत्र यथार्थबाधनिश्चयस्तत्र सर्वथैव शाब्दाभावः । यत्र तु बाधनिश्चयभ्रमस्तत्र यावत्कालं भ्रमस्तावच्छाब्दबोधो विलम्बत इति सर्वथैव योग्यताज्ञानस्य न हेतुत्वम्, न वा तदभावस्य प्रतिबन्धकत्वम् ।

किन्तु प्रतिबन्धकाभावविधया बाधनिश्चयाभावो योग्यता इति सिद्धान्तः[1] ।

## पूर्वमीमांसामतेऽस्याः स्वरूपम्

न्यायदर्शनवदेवास्याः स्वरूपं पूर्वमीमांसायामपि स्वीक्रियते । उक्तं च हि मानमेयोदये–"अग्निना सिञ्चति इत्यादौ अयोग्यानामनन्वयाद् योग्यतापि परिग्राह्या"[2] इति ।

## उत्तरमीमांसायामस्याः स्वरूपम्

तात्पर्यविषयसंसर्गाबाधो योग्यता । इयं च न स्वरूपसती हेतुः । 'अग्निना सिञ्चति' इत्यादौ भ्रमात्मकशाब्दबोधानुदयप्रसङ्गात्, किन्तु ज्ञायमानैव । ज्ञानं चैतस्याः संशयनिश्चयसाधारणमेवेति 'नाग्निना सिञ्च' इत्यादौ प्रमात्मकः शाब्दबोधः । तादृशसंसर्गबाधादिति सिद्धान्तयन्ति वेदान्तिनः[3] ।

## एतद्विषये लघुमञ्जूषायां परिष्कृतं मतान्तरम्

अर्थनिष्ठा योग्यताऽपि शाब्दबोधे कारणम् । सा च तात्पर्यविषयीभूतसंसर्गवृत्तिधर्मे संसर्गतावच्छेदकाख्ये सम्बन्धिनिष्ठात्यन्ताभावप्रतियोगितावच्छेदकत्वाभावः । तेन

---

1. न्या सि. मु., किर. टी. च, श. ख., पृ. ३४६-४८ ।
2. मानमे., कारि. ९६, पृ. ४३ ।
3. वे. प., टीकाद्वययुता, शिखामणिश्च, पृ. २२६ ।

विशिष्टाभावादिकमादाय न दोषः । एतज्ज्ञानं च कारणम् । यथाऽग्निना सिञ्चतीत्यादौ तादृशः संसर्गः सेकस्य स्वनिरूपितकरणत्वरूपः, स च सम्बन्धिनि अग्नौ नास्तीति तादृशकरणत्वं प्रतियोगि, तद्वृत्तिधर्मः संसर्गताऽवच्छेदकः स्वनिरूपितकरणत्वत्वरूपस्तादृशाभावीयप्रतियोगिताऽवच्छेदक एव स जात इति नैवास्ति तत्र योग्यता । अस्ति च घटमानयेत्यादौ सा । तत्र हि आनयनस्य स्वनिरूपितकर्मत्वरूपः संसर्गो घटेऽस्त्येवेति नास्त्युक्तावच्छेदकत्वलक्षणा योग्यता । यद्वा प्रतियोगिताऽवच्छेदकत्वरूपायोग्यत्वनिश्चयो बोधप्रतिबन्धक इति[1] ।

## शाब्दिकानां मते उक्तसकलयोग्यताज्ञानस्य हेतुतानिरासः

उक्तसर्वविधयोग्यताज्ञानस्यान्वयबोधे हेतुतां नाङ्गीकुर्वन्ति शब्दतत्त्वविदः, शब्दजन्यबोधे बाधनिश्चयस्याप्रतिबन्धकत्वात्, तदभावज्ञानस्याकारणत्वाच्च । सत्यपि बाधनिश्चये–"अस्य क्षोणिपतेः परार्द्धपरया लक्ष्यीकृताः संख्यया, "एष वन्ध्यासुतो याति" इत्यादितोऽपि शाब्दबोधदर्शनात् ।

किञ्च योग्यताज्ञानस्य हेतुत्वेऽग्निना सिञ्चतीत्यादितो बोधाभावे तादृशवाक्यश्रवणोत्तरं श्रोतृभिः क्रियमाणो वक्तुरुपहासः कथं सङ्गच्छेत? प्रत्युत एतदर्थकद्रविडभाषाश्रवणोत्तरं पाश्चात्त्यस्येवात्रापि श्रोतुर्मूकता स्यात् । किञ्चैवंवादे प्रतिवादिशब्दस्याबोधकत्वे तस्य खण्डने कथं प्रवृत्तिः स्यात् ?

न चैतादृशेषु नान्वयबोधः, किन्तु पदार्थबोधमात्रमिति वाच्यम् । घटमानयेत्यादियोग्यवाक्येष्वपि तथैव निर्वाहे तत्रापि विशिष्टान्वयबुद्धिविलयापत्तेः ।

ननु अन्वयव्यतिरेकाभ्यां प्रवृत्तिं प्रति विशिष्टज्ञानस्य हेतुतया 'घटमानय' इति वाक्यं श्रुत्वा घटानयने प्रवृत्तिदर्शनात् तत्र प्रवृत्तिमतः पुरुषस्य शाब्दी विशिष्टबुद्धिः कल्प्यते । 'अग्निना सिञ्च' इत्येवंविधवाक्येषु श्रुतेषु अग्निकरणके सेचने प्रवृत्त्यदर्शनान्नेदृशेषु तादृशी बुद्धिरिति कल्प्यत इति चेत्, न, उक्तरीत्या दुःखादिविषयकप्रवृत्तिं प्रत्यपि विशिष्टज्ञानस्य हेतुतया तत्र बाधनिश्चयस्य सत्त्वेऽपि मिथ्याभिशापादिबोधकवाक्यैर्दुःखादिदर्शनाद् योग्यतारहितार्थबोधकवाक्यस्थलेऽपि शाब्दस्य विशिष्टज्ञानस्यावश्यम्भावेनोक्तनियमस्य व्यभिचरितत्वात्[2] ।

एवं च बाधस्य प्रमाकालेऽपि अन्वयबोधोत्पत्त्या नव्यन्यायपूर्वोत्तरमीमांसानां मतानि निरस्तानि । लघुमञ्जूषामतं तु प्रत्याख्येयबुद्ध्या श्रीनागेशेन न्यायमतमेव परिष्कृत्योक्तं न त्वन्यत् ।

---

1. वै. सि. ल. म. (टीकाद्वयोपेता), पृ ५०६ ।
2. वै. सि. ल. म. (टीकाद्वयोपेता), योग्यतानिरू., पृ ५०६-५०७ ।

नन्वेवम्– 'अग्निना सिञ्च' इत्यादितः प्रवृत्तिरपि स्यादिति चेत्, न, बाधज्ञान-काले जायमानज्ञानेऽप्रमात्वसंशयस्य जननेन तच्छून्यज्ञान एव प्रवृत्तिजनकत्वेना-दोषात्[1] ।

**वस्तुतः क्वापि बाध एव नास्ति कुतस्तज्ज्ञानस्य प्रतिबन्धकता?**

शाब्दिकानां मते सर्वत्र बौद्धस्यैव बोधविषयतया तत्र बाध एव न सम्भवति । उक्तं च–"अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि" इति । बाधज्ञानकालेऽपि सत्यां सामग्र्यां ज्ञानं जायत एव । तत्र प्रतिबन्ध्यप्रतिबन्धकभावकल्पनापेक्षया स्वस्वसामग्रीबलेन जातयोर्द्वयोरपि ज्ञानयोर्मध्ये यत्र ज्ञाने सदोषसामग्रीजन्यत्व-ग्रहस्तत्राप्रमात्वग्रह इत्येव कल्पना श्रेयसी । यथा 'गेहे घटोऽस्ति, गेहे घटो नास्ति' इति परस्परं विरुद्धे द्वाभ्यां प्रयुक्ते वाक्ये ।

लटः शतृशानचाविति सूत्रस्थभाष्यादुक्तविषयः प्रामाणिकत्वेन बोधितो मञ्जूषा-कृता[2] ।

**बाधज्ञानेनाप्रामाण्यग्रहजनने दोषाशङ्कानिरासौ**

नन्वेवं गालिदानादिस्थले बाधज्ञानेनाप्रामाण्यज्ञानोत्पत्तौ दुःखादिकं तत्र नोत्पत्तु-मर्हतीति चेत्, तन्न सम्यक्, ततो दुःखाद्यनुत्पत्तावपि व्यञ्जनया जायमानेन तद्दुष्ट-त्वज्ञानेन तदुपपत्तेः । व्यञ्जनाजन्यज्ञाने तु न बाधज्ञानेनाप्रामाण्यग्रहः । दैववशादुप-स्थिततमोगुणवर्धकसामग्र्या तमसः सत्त्वरजसोरभिभवपूर्वकाविर्भावात् प्राथमिके गालिवाक्यजन्यबोधेऽप्यप्रामाण्यज्ञानाभावेन वा तदुपपत्तेः[3] ।

**सम्बन्धरूपयोग्यताज्ञानस्य कथञ्चित् शाब्दहेतुता**

एवं च बाधनिश्चयस्य सर्वथा प्रतिबन्धकत्वाभावे निर्णीते योग्यतासन्देहादिना प्रसक्तो योऽप्रमात्वग्रहः 'जलेन सिञ्चति' इत्यत्र जलं सेकनिरूपितकरणत्ववदिति ज्ञानमप्रमा इत्याकारकः, तदभावविशिष्टो यो बोधः 'जलं सेकनिरूपितकरणत्ववत्' इति ज्ञानं प्रमा इत्याकारकस्तज्जनकत्वं योग्यताज्ञानस्य उक्तबोधे विशेषणीभूतो योऽभावस्तत्प्रतियोगि यदप्रामाण्यज्ञानं तत्प्रतिबन्धकतया मन्तव्यम् । एवं च तत्प्रतिबन्धकतयैव योग्यताज्ञानस्य शाब्दहेतुताऽपि कथञ्चिन्निर्वाह्या[4] ।

1. वै. सि. ल. म., र. प्र., योग्यतानिरू., पृ. ५१३ ।
2. वै. सि. ल. म. (टीकाद्वययुता), पृ. ५१५-१६ ।
3. वै. सि. ल. म. (र. प्र. युता), पृ. ५२० ।
4. वै. सि. ल. म., र. प्र., पृ. ५२०-२१ ।

अग्निना सिञ्चेत्यादितः शाब्दबोधस्तु भवत्येव । परन्तु बाधितत्वनिश्चयेन अप्रमात्वग्रहास्कन्दित एव । अत एवोक्तं वाक्यपदीये ब्रह्मकाण्डे श्रीवृषभदेवेन– "योग्यं हि शब्दं प्रयोक्ता विवक्षाप्रापितसाधुभावेष्वर्थेषु प्रयुङ्क्ते । यथा प्रतिविषयं योग्यमेवेन्द्रियमुपलब्धौ प्रणिधत्ते"[1] इति ।

## गुरुहरिसम्मता विलक्षणयोग्यता

अन्वयप्रयोजकसमभिव्याहृतपदबोध्यकार्यशक्तिमत्त्वं योग्यता । सा च शाब्दे भासते । अत एव 'घटेन जलमाहर' इत्यादौ सच्छिद्रेतरस्यैव जलाहरणशक्तिमत्त्वेन सच्छिद्रेतरत्वप्रकारकोऽपि बोधस्तत्र भवति ।

अस्याश्च शाब्दविषयत्वादेव प्रतिनिधेः श्रौतत्वमुपपद्यते । यथा–खादिरे बध्नातीत्यत्रास्वातन्त्र्यप्रयोजनकबन्धनसमर्थस्य खादिरस्यालाभेऽन्यप्रतिनिधिरुपादीयते । अतस्तत्र तादृशबन्धनसामर्थ्यवत्त्वेन खादिरबोधोऽवश्यं मन्तव्यः । सर्वत्र प्रवृत्तिनिमित्तमस्या योग्यताया अप्युपलक्षणमिति तत्सामानाधिकरण्येनास्या अपि बोधे भानम्[2] ।

उक्तं च हरिणा–

**केषाञ्चित् साहचर्येण जातिः शक्त्युपलक्षणम् ।**
**खादिरादिष्वशक्तेषु जातिः प्रतिनिधीयते ॥**
**अस्वातन्त्र्यफलो बन्धः प्रमाणादौ च शिष्यते ।**
**अतो जात्यभिधानेऽपि शक्तिहीनं न गृह्यते**[3] ॥ इति ।

एवं चोक्तसंसर्गरूपयोग्यतातो विलक्षणैवैषा शक्तिरूपा योग्यता प्रभाकरेण हरिणा चानुसृता ।

अस्या अपि ज्ञानमेव शाब्दं प्रति हेतुः । घटादिपदानां तत्रापि शक्तेरङ्गीकारेण शक्तिज्ञानेनैव जात्यादिवदस्या अप्युपस्थितेः । इयान् विशेषो यत्पूर्वा संसर्गरूपा वाक्यशक्या, इयं तु पदशक्या इति । यत्तु रत्नप्रभाकारेण–यथा घटादिप्रत्यक्षं प्रति रूपादेर्विषयविधया कारणत्वं तथा योग्यताऽपि विषयविधया कारणमिति अस्या योग्यताया विषये सिद्धान्तितम्[4] । तत्तु न रोचते–शाब्दबोधे वृत्तिज्ञानजन्योप-

---

1. वा. प., टीका वृषभदेवकृता-१।१३ ।
2. वै. सि. ल. म. (र. प्र. टीकायुता), पृ. ५२२-२३ ।
3. वा. प. ३।१।३-४ ।
4. वै. सि. ल. म., र. प्र. टी., पृ. ५२२ ।

स्थितिविषयस्यैव पदार्थस्य प्रवेशो भवतीति सिद्धान्तेनास्यां योग्यतायामपि पदानां शक्तिस्वीकारेणैतज्ज्ञानस्य शाब्दात् पूर्वमवश्यम्भावनियमात् ।

**आसत्तिस्वरूपनिरूपणम्**

आसत्तेर्ज्ञानमपि शाब्दबोधे कारणम् । उक्तं च भाष्यकृता–"आनुपूर्व्येण सन्निविष्टानां यथेष्टमभिसम्बन्धः शक्यते कर्तुम्" इति । अत्रोद्द्योतः – "पदान्तरेणाव्यवधानरूपासत्तिरानुपूर्व्यम्, भाष्ये यथेष्टं सम्बंन्धः, इष्टवाक्यार्थबोधजनकत्वरूपः"[1] इति । एवं चान्वयव्यतिरेकाभ्यामुक्ताव्यवधानरूपासत्तेर्ज्ञानं शाब्दे कारणमिति स्फुटमागतम् ।

अत एव 'गिरिर्भुक्तमग्निमान् देवदत्तेन' इत्यत्र गिरिपदाग्निमत्पदयोरासत्तिभ्रमे शाब्दबोधो जायत एवेत्यनुभवः सार्वजनीनः सङ्गच्छते ।

**वस्तुतो नैतज्ज्ञानं शाब्दहेतुः**

वस्तुतस्तु तत्रैव सूत्रे महाभाष्येऽग्रे उक्तम् "अनानुपूर्व्येणापि सन्निविष्टानां यथेष्टमभिसम्बन्धो भवति । तद्यथा–"अनड्वाहमुदहारि ! या शिरसा कुम्भं भगिनि ! साचीनमभिधावन्तमद्राक्षीः, इति तस्य यथेष्टमभिसम्बन्धो भवति । उदहारि भगिनि! या त्वं कुम्भं शिरसा हरसि, अनड्वाहं साचीनमभिधावन्तमद्राक्षीरिति" इति ।

अत्र प्रदीपः – "अनड्वाहमिति । पाठक्रमादार्थक्रमो बलीयानिति यथेष्टमत्राभिसम्बन्धः" इति । अत्रोद्द्योतः – "भाष्यात्तु आसत्त्यभावेऽपि पदार्थोपस्थितौ आकाङ्क्षादिवशाद् व्युत्पत्त्यनुसारेणान्वयबोध इति लभ्यते"[2] इति । एतद्ग्रन्थत्रितयेन स्पष्टमेवास्या आकाङ्क्षाया गतार्थत्वेन शाब्दं प्रति हेतुत्वाभावः प्रतिपाद्यते ।

**आसत्तिविषये श्रीनागोजिभट्टस्य सम्मतिः**

अन्वयबोधे प्रतियोगिनोऽनुयोगिनश्च ये पदार्थास्तेषां तद्बोधकपदानां चाव्यवधानेन प्राथमिकोपस्थितिरासत्तिरिति एतस्याः स्वरूपमुक्तं श्रीनागेशभट्टेन । एवं चास्या ज्ञानरूपत्वेन स्वरूपासत्त्या एव हेतुता । केवलं मन्दमतीनामुपकारायैवास्या हेतुता, तत्रापि अविलम्बेन बोध एव । अनासन्नस्थले तु मन्दानामपि योजनया बोधे विलम्बो भवतीति तत्र न प्रथमोपस्थितिः, अपि तु द्वितीया, इति न तत्रास्या हेतुता ।

---

1. म. भा., प्र. उ. १/१/५७ ।
2. म. भा., प्र. उ. १/१/५७ ।

काव्ये अन्यत्रापि च प्रायेणाविलम्बेन शाब्दबोधस्यैव वक्तुरुद्दिष्टत्वात् । अमन्दस्यासत्त्यभावेऽपि पदार्थोपस्थितौ आकाङ्क्षाज्ञानवतो विलम्बेनैव बोधो भवतीति न तद्बोधेऽस्याः कारणत्वमित्यादि सप्रमाणं लघुमञ्जूषायामुक्तम्[1] ।

## न्यायदर्शने आसत्तिस्वरूपम्

अन्वयप्रतियोग्यनुयोगिपदयोरव्यवधानमासत्तिः । क्वचिद् व्यवहितेऽप्यव्यवधानभ्रमाच्छाब्दबोधानुभवेनास्या ज्ञानं शाब्दबोधे कारणमित्येकं मतम् । वस्तुतस्तु शाब्दबोधात् प्राक् सर्वत्राव्यवधानज्ञानस्य नियमाभावेन यत्पदार्थस्य यत्पदार्थेनान्वयोऽपेक्षितः (तात्पर्यविषयत्वप्रकारकनिश्चियविषयः) तयोः पदयोरव्यवधानमासत्तिस्तज्ज्ञानं कारणम् । तथा च गिरिर्भुक्तमग्निमान् देवदत्तेनेत्यादौ गिरिपदार्थभुक्तपदार्थयोरन्वयस्य तात्पर्यविषयत्वाभावेनासत्त्यभावान्न तयोः शाब्दबोधः । गिरिपदार्थाग्निमत्पदार्थयोरभेदान्वयस्य तात्पर्यविषयत्वे तत्पदयोरव्यवधानभ्रमे च तदर्थयोरभेदान्वयबोधो भवत्येव । आसत्तिभ्रमेण शाब्दभ्रम इति तु न नियमः, अपि तु योग्यताभ्रमेणेत्यादि स्पष्टं न्यायसिद्धान्तमुक्तावल्यां दिनकर्यादौ च[2] ।

## पूर्वमीमांसादर्शनेऽस्याः स्वरूपम्

पूर्वमीमांसकमते पदार्थानां सन्निधिः शाब्दबोधे हेतुतयाऽभ्युपेताऽस्ति । स च शब्दैः सन्निहितत्वेन पदार्थानां बोधनरूपः । अतः कालकृतसन्निहितत्वाभावेन शब्दबोधितत्वाभावेन च द्वेधा सन्निध्यभावोऽत्र मते भवति । तत्र भिन्नकालोच्चरितयोः पदयोर्नान्वयबोधकत्वम् । नापि च गां बधानेत्यत्र दृश्यमानस्याप्यश्वस्य बन्धनक्रियायामन्वयः, तस्य शब्दबोधितत्वाभावात् । अतः शब्दप्रतिपन्नानामेवान्वयनियमः ।

गुरुमते तु बुद्धिकृतैवासत्तिः शाब्दे हेतुर्न तु शब्दकालाभ्यां कृतेति । अत्र मते गां बधानेत्यत्रोक्तापत्तिर्वारयितुमशक्येति भट्टसरणिरेव समीचीनेति स्पष्टं मानमेयोदये[3] ।

## उत्तरमीमांसादर्शनेऽस्याः स्वरूपम्

मानान्तरेणोपस्थितानां पदार्थानामन्वयबोधाभावात् पदजन्याव्यवधानेन या पदार्थोपस्थितिः साऽऽसत्तिः । अश्रुतपदार्थस्थले तत्तत्पदाध्याहार एव युक्त इति द्वारमित्युक्ते पिधेहीति पदस्यैवाध्याहारः कार्यः[4] । ज्ञानरूपतया स्वरूपासत्त्येवेयं हेतुरिति वेदान्तसिद्धान्तः[5] ।

---

1. वै. सि. ल. म. (र. प्र. युता), पृ. ५२६ ।
2. न्या. सि. मु., दि. रा. च, पृ. ३०२-३०३ ।
3. मा. मे. (शाब्दपरीक्षा), पृ. ४३-४४ ।
4. वे. प. (टीकाद्व.), पृ. २२६-२८ ।
5. वे. प. (टीकाद्व.) शिखामणिः, पृ. २४९-५० ।

**अत्र निष्कर्षः**

एतानि सर्वाण्यपि मतानि भाष्यविरुद्धत्वाद् वैयाकरणैरनुपादेयानि । अनानुपूर्व्येणापि सन्निविष्टानां शाब्दबोधोदयेन कारणाभावे कार्यसत्त्वरूपस्य व्यतिरेकव्यभिचारस्य भाष्यकृता दर्शितत्वात्[1] । मन्दबुद्धीनामुपकाराय अस्या हेतुत्वमित्यस्य श्रीनागोजिभट्टेन स्पष्टमुक्तत्वाच्च ।

**शाब्दिकनये तात्पर्यज्ञानस्य शाब्दहेतुत्वं तात्पर्यस्य स्वरूपं च**

क्रमप्राप्तस्य तात्पर्यज्ञानस्यापि शाब्दबोधे हेतुभूतस्य स्वरूपं निरुच्यते । भाष्यकृताऽस्य हेतुताऽनुमोद्यते । तथा हि–

**काममतिदिश्यतां सच्चासच्चाऽपि नेह भारोऽस्ति ।**
**कल्प्यो हि वाक्यशेषो वाक्यं वक्तर्यधीनं हि**[2] ॥ इति ।

अत्र वाक्यस्य वक्तर्यधीनत्वं प्रतिपादयता भगवता स्फुटमेव तात्पर्यज्ञानस्य हेतुताऽभ्युपगताऽस्ति ।

'कल्प्यो हि वाक्यशेषः' इत्यनेन वक्तुस्तात्पर्यमनुमाय तदुपपत्तये यदि वाक्यस्य पदस्य वाऽध्याहारः करणीयः स्यात् तर्हि तदपि कल्पनीयमिति सर्वथा तात्पर्यज्ञानं शाब्दबोधेऽनुरोद्धव्यमेवेति भावः ।

वक्तुरिच्छैवात्रापि[3] दर्शने तात्पर्यपदेन ग्राह्या, उक्तभाष्यस्य तथैव सङ्गतेः । 'वाक्यं वक्तर्यधीनं हि' इत्यत्र वक्तरि इति सप्तम्यन्तेन इदमेव स्वरूपं सूच्यते वक्तरि विद्यमानाया इच्छाया अधीनमित्यर्थः । अन्यथा वक्तुरधीनमित्येव वक्तव्यं स्यात् ।

**उक्तविषये श्रीनागेशभट्टानां संवादः**

श्रीनागेशभट्टेनोच्यते–"यत्तु तत्र तत्र वाक्ये घटमानयेत्यादौ घटकर्मकानयनबोधेच्छया उच्चरितत्वाभावज्ञाने अन्यबोधेच्छयोच्चरितत्वज्ञाने वा तादृशबोधानुदयात् तयोः प्रतिबन्धकत्वकल्पने गौरवेण लाघवात् तादृशबोध इदं पदमेतदर्थबोधेच्छया वक्त्रोच्चरितमित्याकारकस्तात्पर्यग्रहोऽपि हेतुः । नानार्थस्थले पदविषयकोऽपि तात्पर्यग्रहो हेतुः । तद्ग्राहकं च प्रकरणादिकम् । अत एव प्रकरणादिज्ञानाभाव इदं पदमेतदर्थकमेतदर्थकं वेति सन्देहो जायते । मौनिलिखितवाक्यस्थलेऽपि तस्य

---

1. म. भा. १।१।५७ ।
2. म. भा. १।१।५६ ।
3. "वक्तुराकाङ्क्षा तात्पर्यम्" इति । (न्या. सि. मु., श. ख., कारि. ८४)

सूक्ष्ममुच्चारणमस्त्येवेति । तत्राप्यस्ति तदीयं तात्पर्यमिति तदनुमायैव शाब्दबोधोऽ-तश्च न तत्रापि व्यतिरेकव्यभिचारसंशयलेशः"[1] इति ।

## तात्पर्यग्रहस्यान्वयबोधहेतुत्वे न्यायदर्शनस्य संवादः

सैन्धवमानयेत्यादिनानार्थस्थले क्वचिदश्वस्य क्वचिल्लवणस्य वा बोधो वक्त्रि-च्छारूपतात्पर्यग्रहाधीन एव । ननु तात्पर्यग्राहकाणां प्रकरणादीनामेव तत्र हेतुत्वमस्तु कृतं तात्पर्यज्ञानस्य हेतुत्वेनेति चेत्, न, तेषामननुगमात् । तात्पर्यज्ञानजनकत्वेन तदनुगमे तु लाघवात् तात्पर्यज्ञानस्यैव हेतुत्वं स्वीकर्तव्यम् । शुकोच्चरितवाक्येऽपि ईश्वरीयमेव तात्पर्यं कल्प्यम् । विसंवादिवाक्ये शिक्षयितुरेव । इत्थं च वेदेऽपि तात्पर्यज्ञानार्थमीश्वरोऽनुमातव्य इत्यादि सम्मन्यन्ते न्यायदर्शनविदः[2] ।

## उक्तविषयेऽद्वैतवेदान्तस्य संवादः, अत्र तात्पर्यस्वरूपनिर्णयश्च

अद्वैतदर्शनेऽपि तात्पर्यज्ञानस्यान्वयबोधजनकता सिद्धान्तिताऽस्ति । परन्तु न्यायदर्शनवत् तत्प्रतीतीच्छया उच्चरितत्वघटितं तत्स्वरूपं नात्राभ्युपगतम्, अर्थज्ञान-शून्येन पुरुषेणोच्चरिताद् वेदवाक्यादर्थबोधाभावप्रसङ्गात् । ईश्वरीयतात्पर्यज्ञानस्य तत्र हेतुतेत्यपि वक्तुं न युज्यते, ईश्वरानङ्गीकर्तुरपि वेदवाक्यादर्थबोधानुभवात् । अतस्त-त्प्रतीतिजननयोग्यत्वघटितमेव तात्पर्यमभ्युपेयम् । 'गेहे घटः' इति वाक्यं गेहे घट-संसर्गस्य प्रतीतिजननयोग्यम्, न तु पटसंसर्गस्येति तद्वाक्यं घटसंसर्गपरम्, न तु पटसंसर्गपरमिति व्यपदिश्यते[3] ।

वस्तुतस्तु—यद्वाक्यं यत्प्रतीतिजननयोग्यत्वे सति यदन्यप्रतीतीच्छयाऽनुच्चरितं तद् वाक्यं तत्सर्गपरमिति वक्तव्यम् । अन्यथा सैन्धवमानयेत्यादिवाक्यं यदा लवणानयनबोधेच्छयोच्चरितं तदाऽप्यश्वविषयकबोधजनने स्वरूपयोग्यमस्त्येवेति अश्व- विषयकोऽपि बोध आपद्येत । न चोभयबोधेच्छयोच्चरिते तावताऽप्यनिस्तार इति वाच्यम्, तदन्यमात्रप्रतीतीच्छयाऽनुच्चरितत्वस्य विवक्षणेनादोषात् । तत्तु तदन्य-मात्रप्रतीतीच्छयोच्चरितमेव, उभयप्रतीतीच्छयोच्चरितत्वात्[4] । अस्याकारणत्वे तु तात्पर्यनिर्णयफलकवेदान्तविचारस्य नैष्फल्यमेव प्रसज्येत[5] । इदं च तात्पर्यं वेदे मीमांसापरिशोधितन्यायादवधार्यते, लोके तु प्रकरणादिनेति विवेकः[6] ।

---

1. वै. सि. ल. म. (र. प्र.,)पृ. ५३० ।
2. न्या. सि. मु., श. ख., कारि. ८४, पृ. ३१५-१७ ।
3. वे. प. (समणिशिखा), आग. प्र., पृ. २५१ ।
4. वे. प. (मणिशिखा-टी. युता), आग. प्र., पृ. २५२ ।
5. वे. प. (मणिशिखा-टी. युता), आग. प्र., पृ. २५५ ।
6. वे. प. (मणिशिखा-टी. युता), आग. प्र., पृ. २५९ ।

## वस्तुतः शाब्दिकनयेऽस्य नान्वयबोधहेतुता

वक्तुरिच्छा तात्पर्यपदेन कामं गृह्यतां नाम, अस्य ग्रहस्तु शाब्दं प्रति हेतुतया कल्पयितुं नैव युज्यते, व्यतिरेकव्यभिचारदर्शनात् । तथा हि देवताप्रसादेन पूर्वजन्म-संस्कारेण वा मूर्खबालकरचितोत्तमकाव्यात् शुकादिवाक्याद्वा वक्तृतात्पर्याभाव-निश्चयेऽपि शाब्दबोध उदेति । तत्र वक्तुर्बोधाभावेनैव तत्तात्पर्याभावोऽनुमेयः । ईश्व-रीयं तात्पर्यं तु वक्तुमनर्हमेव, तस्य शाब्दबोधात्मकफलानुमेयत्वेन ततः प्राक् तस्य ग्रहीतुमसम्भवात् । ननु तात्पर्यग्रहस्यान्वयबोधेऽहेतुतायां तद्ग्राहकप्रकरणादिनिर्णायक-मीमांसानां का गतिः ? इति चेत्, वेदवाक्यजन्यबोधे तद्गतप्रमात्वनिश्चये वा तासामुपयोगेन चिन्तनीयत्वाभावात् ।

किञ्चास्माद् वाक्यादर्थद्वयविषयको बोधो जायते, तात्पर्यं तु क्व ? इति न जानीम इति सर्वजनानुभवविरोधाद् न तस्य हेतुत्वम् । अत एव 'पय आनय' इत्युक्तेऽप्रकरणज्ञस्य दुग्धं जलं वानेयमिति प्रश्नः सङ्गच्छते, अन्यथा तात्पर्यज्ञानस्य हेतुत्वे तस्मादुभयार्थबोधाभावे तादृशः प्रश्नोऽसङ्गत एव स्यात् ।

संख्यासंज्ञासूत्रीयभाष्यध्वनितोऽयं विषयः स्फुटीकृतो लघुमञ्जूषायां श्रीनागेशेन[1] ।

उक्तसूत्रे भाष्यकृताऽपि "अर्थात् प्रकरणाद्वा लोके कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्ययो भवति । अप्रकरणज्ञमागतं ब्रवीतु–गोपालकमानय कटजकमानयेति, उभयगतिस्तस्य भवति साधीयो वा यष्टिहस्तं गमिष्यति"[2] इत्युक्तम् । अत्र अर्थात् प्रकरणाद्वा इति कथनेन सामर्थ्यस्य प्रकरणस्य वा क्लृप्तनियतपूर्ववर्तिताकत्वेन अनन्यथासिद्धं मुख्यं हेतुत्वं सूचितम् ।

## पूर्वभाष्यविरोधपरिहारः

नन्वेवं तात्पर्यग्रहस्यान्वयबोधेऽन्यथासिद्धत्वे 'वाक्यं वक्तर्यधीनं हि' इति भाष्यस्य का गतिरिति चेत्, उच्यते–वाक्यार्थबोधे प्रमात्वं निश्चेतुं वक्तुस्तात्पर्यस्य ज्ञानमुप-युज्यत एव । अन्यथा 'गेहे सैन्धवमस्ति' इति वाक्यादेकतरविषयकसन्देहो नोत्प-द्येत । तात्पर्यग्रहस्याहेतुत्वपक्ष उक्तवाक्यात् पदार्थोपस्थित्यादिरूपकारणबलेन जायमा-नोभयविषयकबोधस्य प्रतिबन्धकतया सत्त्वात् ।

अन्वयबोधे प्रमात्वनिश्चयेऽस्योपयोगे तु तात्पर्यज्ञानबलेनैकतरविषयकबोधे प्रमात्व-निश्चये सति तदितरविषयकज्ञानेऽप्रमात्वबुद्ध्या तद्विषयकः सन्देह उत्पत्तुमर्हत्येव[3] ।

---

1. वै. सि. ल. म. (र. प्र.), ५३०-३१ ।
2. म. भा. १।१।२२ ।
3. वै. सि. ल. म. (र. प्र.), पृ. ५३४ ।

संख्यासंज्ञासूत्रीयभाष्यानुरोधेनास्य भाष्यस्येदृशमेव तात्पर्यं कल्पयितुमुचितं प्रतीयते, वाक्यार्थबोधे प्रामाण्यनिश्चये सत्येव प्रवृत्तेर्निवृत्तेर्वा लोके दर्शनात् ।

## अत्राहेतुत्वपक्षे मतान्तरम्

न्यायदर्शनेऽपि क्वचिदेव नानार्थादावस्य हेतुता सिद्धान्तिता । शुकादिवाक्ये तु विनैव तात्पर्यज्ञानं बोधः । वेदे तु "अनादिमीमांसापरिशोधिततर्कैरर्थावधारणं कार्यम्" इत्यादि च निर्णीतम्[1] ।

पूर्वमीमांसादर्शने तु क्वचिदपि अस्य हेतुत्वं नाङ्गीकृतम्, अन्यथा 'अग्निना सिञ्च' इत्यादावपि तात्पर्यग्रहाभावेनैवान्वयबोधाभावे सिद्धे तद्वारणाय योग्यताज्ञानादीनां हेतुत्वस्योच्छेदः प्रसज्येत । उक्तं च–"तस्मादन्वयसिद्धौ तात्पर्यं न स्वयं क्वचिद्धेतुः । सामग्र्यन्तरभावे नियमार्थं त्वर्थ्यते पुनस्तदपि" इति । एवं च 'सैन्धवमानय' इत्यादौ बोधद्वयीयसामग्रीसत्त्वे किमश्वविषयको बोधः, अथवा लवणविषयक इति सन्देहोच्छेदाय 'अयं बोधोऽश्वविषयक एव, गमनप्रसङ्गे वक्त्रोच्चारितवाक्यजनितत्वात्' इत्यादिनास्य तात्पर्यज्ञानस्य नियामकतया सार्थक्यमवगन्तव्यम्[2] ।

## अत्र निष्कर्षः

अतश्च परमार्थदृष्ट्या 'तद्धेतोरेव तत्त्वे किं तेन' इति न्यायेन प्रकरणादीनामेव हेतुत्वमभ्युपगम्यान्वयबोधः सम्पादनीयः, उक्तभाष्यानुरोधाच्च[3] ।

अतः सर्वथात्र शाब्दिकसिद्धान्तः शेखरायते ।

## ज्ञानानां क्षणिकत्वे पदार्थज्ञानाकाङ्क्षादिज्ञानानां कथमत्र हेतुत्वसङ्गतिः ?

ननु ज्ञानमात्रस्य (तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वे) तृतीयक्षणे ध्वंस इति न्यायदर्शनसिद्धान्त[4] उक्तानां पदार्थादिज्ञानानां यौगपद्याभावेन[5] कथं शाब्दबोध-

---

1. न्या. सि. मु., कारि. ८४, पृ. ३१७ ।
2. मानमे., शब्दपरि., पृ. ४४ ।
3. म. भा. १।१।२२ ।
4. "अव्याप्यवृत्तिः क्षणिको विशेषणगुण इष्यते" इति । (न्या. सि. मु., का. २७)
5. "योग्यविभवविशेषगुणानां स्वोत्तरवर्तिगुणनाश्यत्वम्" । (न्या. सिं. मु., कारि. २७)

कारणतेति चेत्, उच्यते–एषां ज्ञानानां पदार्थाकाङ्क्षादयो यावन्तो विषयाः, तावतां समूहालम्बनस्मृत्या शाब्दबोध उपपादनीयः । पदार्थाकाङ्क्षायोग्यतादिविषयकात् संस्काराच्च खले कपोतन्यायेन तादृशी स्मृतिरुपपद्यते । उक्तं च–

**वृद्धा युवानः शिशवः कपोताः खले यथामी युगपत् पतन्ति ।**
**तथैव सर्वे युगपत् पदार्थाः परस्परेणान्वयिनो भवन्ति ॥** इति ।

यदा तु क्रमेणैवोद्बोधकसमवधानात् तत्तत्खण्डवाक्यार्थबोधोत्तरं पूर्वपूर्वस्मरणात् तत्संस्काराद्वा महावाक्यार्थबोधः, तदा राजपुरप्रवेशन्यायेन बोधः । एतत्पक्षे हि पदार्थानामवान्तरवाक्यार्थबोधे विशिष्टस्य वैशिष्ट्यमिति रीत्या महावाक्यार्थबोधः[1] । उक्तं च

**यद्यदाकाङ्क्षितं योग्यं सन्निधानं प्रपद्यते ।**
**तेन तेनान्वितः स्वार्थः पदैरेवावगम्यते**[2] ॥ इति ।

शाब्दबोधरूपकार्यस्य सर्वानुभवसिद्धत्वेन तदनुरोधेन स्थूलकाल एतेषां ज्ञानानां साहित्यं स्वीकार्यमित्यपि मतविशेषः[3] ।

**॥ इति शब्दप्रमाणसमीक्षायां तृतीयं पुष्पम् ॥**



1. वै. सि. ल. म., कुञ्जिका. टी. च, पृ. ५२६-२७ ।
2. न्या. सि. मु., शब्दख., पृ. ३०६ ।
3. वै. सि. ल. म., टीकाद्वयोपेता, पृ. ५२६ ।

## ॥ अथ शब्दसमीक्षायां चतुर्थं पुष्पम् ॥

**शब्दस्वरूपविमर्शः**

निरूपितं तावच्छब्दस्य प्रमाकरणत्वम्, तत्र सहकारीणि शक्तिज्ञानाकाङ्क्षाज्ञानादीनि च । इदानीं शब्दस्य स्वरूपं निरूपयितुमुपक्रम्यते । यतो हि उच्चरितप्रध्वंसित्वस्वभावाद् वर्णानां समुदायः कथमपि सेद्धुं नार्हति । तदभावे तद्रूपपदवाक्ययोश्चर्चा व्यर्थैवेति कुत्र इयमर्थनिरूपिता शक्तिस्तिष्ठेदाश्रयमन्तरा ? न चेष्टापत्तिः कर्तुं शक्या, शब्दे उच्चरिते नियमेन शाब्दबोधानुभवात् । अतः शब्दस्य वास्तविकं स्वरूपं किमिति निश्चेयम् । अत्र शाब्दिकानां सिद्धान्तो विविच्यते ।

तत्र भगवान् भाष्यकारः शब्दस्य स्फोटात्मकं ध्वन्यात्मकं द्विविधं स्वरूपं सम्मनुते, तत्र प्रथमं मुख्यं स्वरूपमुच्यते । तथा हि–"येनोच्चारितेन सास्नाविषाणिनां सम्प्रत्ययो भवति स शब्दः" इति भाष्यम्[1] । अत्र प्रदीपः – "वैयाकरणा वर्णव्यतिरिक्तस्य पदस्य वाक्यस्य वा वाचकत्वमिच्छन्ति, वर्णानां प्रत्येकं वाचकत्वे द्वितीयादिवर्णोच्चारणानामानर्थक्यप्रसङ्गात्, आनर्थक्ये तु प्रत्येकमुत्पत्तिपक्षे यौगपद्येनोत्पत्त्यभावात्, अभिव्यक्तिपक्षे तु क्रमेणैवाभिव्यक्त्या समुदायाभावादेकस्मृत्युपारूढानां च वाचकत्वे 'सरो रसः' इत्यादावर्थप्रतिपत्त्यविशेषप्रसङ्गात् तद्व्यतिरिक्तः स्फोटो नादाभिव्यङ्ग्यवाचको विस्तरेण वाक्यपदीये व्यवस्थापितः । उच्चारितेन "प्रकाशितेनेत्यर्थः"[2] इति ।

अत्रोद्द्योतः – "ननु येन क्रमेणानुभूता वर्णाः, तेनैव क्रमेणैकस्मृत्युपारूढानां वाचकत्वेन नार्थप्रतीत्यविशेषप्रसङ्गः, अन्यथा त्वयाऽपि वर्णानां स्फोटव्यञ्जकत्वाभ्युपगमात् कथं पूर्वोक्तदोषनिस्तारस्तवापीत्यत आह–विस्तरेणेति" ।

---

1. म. भा., नवा. १/१/१ ।
2. म. भा., प्र., नवा. १/१/१ ।

स्मरणदर्शनात् । मम तु यथा पटे नानारञ्जकद्रव्याहितो नानावर्णोपरागः क्रमेण, तथा सत्येकस्मिन्नेव तस्मिन्नुच्चारणक्रमेण क्रमवानेव तत्तद्वर्णस्वरूपानुरागः । स च स्थिरः, तस्य च मनसा ग्रहणमिति न दोषः । अथ येनेत्येकवचनेन विषाणिनामिति बहुवचनेन चानेकोच्चारणविषयगौरित्यस्यैकत्वं सूचितम् । भेदप्रत्ययस्त्वौपाधिकः"[1] इति ।

अनेन ग्रन्थत्रितयेनान्यत्र स्थितेन भाष्यादिग्रन्थेन च[2] वैयाकरणानां सिद्धान्तभूतं स्फोटात्मकं शब्दस्य मुख्यं स्वरूपं प्रदर्शितम्। तत्र स्फुट्यते ध्वनिना अभिव्यज्यत इति कर्मव्युत्पत्त्या, स्फुटत्यर्थोऽनेनेति करणव्युत्पत्त्या च घञन्तः स्फोटशब्दो निष्पद्यते । अतश्च ध्वनिव्यङ्ग्यत्वे सत्यर्थविषयकबोधजनकत्वं स्फोटस्य लक्षणं पर्यवसन्नम् । महाभाष्ये येनोच्चारितेनेत्यादिना इदमेवोक्तम् । अत्र लक्षणे विशेषणदलाभावे प्रत्यक्षे अनुमाने चातिप्रसङ्गः । विशेष्यदलाभावे तु केनचित् क्रियमाणेन चुटचुटादिध्वनिना अभिव्यक्ते 'इतोऽपसर्तव्यम्' इत्याद्यर्थविशेषेऽतिप्रसङ्गः स्यात् । यदि च ध्वनिपदेन व्यक्त एव ध्वनिर्गृह्यते, तदापि ध्वनिप्रकाश्ये ध्वनिजन्यश्रावणप्रत्यक्षविषये ध्वनावेवातिप्रसङ्गः स्यात् । लौकिकप्रत्यक्षं प्रति विषयस्य तादात्म्येन हेतुत्वात्, ध्वनिप्रत्यक्षे ध्वनेरपि जनकत्वात् । अतश्च विशेषणविशेष्योभयदलसार्थक्यम् । विशेष्यदले बोधजनकत्वं बोधस्वरूपयोग्यत्वमेव, तेन घटपदे श्रुते कस्यचिदर्थबोधाभावेऽपि न तत्र स्फोटलक्षणस्याव्याप्तिः । इदं च लक्षणं तटस्थमेव, न तु स्वरूपम् । तत्त्वनुपदमेव निरूपयिष्यते ।

'शब्दादर्थं प्रतिपद्यामहे' इत्यनुभवसिद्धस्य अत्रार्थविषयकबोधजनकत्वस्य वृत्त्याश्रयत्वस्य वान्यथानुपपत्त्या एको नित्यो घटादिरूपः स्फोटः कल्प्यते । अन्यथा क्षणिकानां वर्णानां समुदायासम्भवेन न मिलितेभ्यस्तेभ्योऽर्थबोधः । नापि व्यस्तेभ्यः (प्रत्येकात्), अर्थबोधावृत्तिप्रसक्तेः । न च तृतीयः प्रकारोऽस्ति । किञ्च, प्रत्यक्षेणापि स्फोटात्मा नित्यः शब्दोऽभ्युपेयते । तथा हि 'घटः' इत्येकं पदमित्येकपदविषयिणी या प्रत्यक्षात्मिका प्रतीतिः सर्वजनानुभवसिद्धा, सा सति बाधके नापलपितुं शक्या । नापीयं

---

1. म. भा., नवा. १/१/१ ।
2. "एवं तर्हि स्फोटः शब्दः, ध्वनिः शब्दगुणः" । (म. भा., प्र. उ. १/१/६९ ) "अथवा उभयतः स्फोटमात्रं निर्दिश्यते, रश्रुतेर्लश्रुतिर्भवतीति" । (म. भा., प्र. उ. १/१; मा. सू. ४ )

प्रतीतिर्वर्णमात्रालम्बनेति वक्तुं शक्यते । पुष्पेषु सूत्रं विना मालाप्रतीत्यभाववत् परस्परविलक्षणवर्णमालायामभिन्ननिमित्तमन्तरा पदप्रतीत्यभावस्यैव प्रसङ्गात् । तस्मात् पदस्फोटरूपसूत्रेणैव वर्णमाला सम्पद्यते, नान्यथा ।

न च वर्णानां वाचकत्वे यो दोषः स एवेदानीं स्फोटव्यञ्जकत्वपक्षेऽपीति कथं स्फोटतत्त्वं सेद्धुमर्हतीति वाच्यम्, प्रथमो वर्णः स्फोटमस्फुटं व्यनक्ति, द्वितीयः स्फुटम्, तृतीयः स्फुटतरम्, चतुर्थः स्फुटतममित्येवंरीत्या प्रत्येकं व्यञ्जकत्वपक्षे सर्वदोषनिरासात् । उक्तं च श्रीहरिणा–

**प्रत्येकं व्यञ्जका वर्णा भिन्ना वाक्यपदेषु ये ।**
**तेषामत्यन्तभेदेऽपि सङ्कीर्णा इव शक्तयः ॥** इति ।

नादैराहितबीजायामित्यादि च । स्पष्टीकृतं चैतत्सर्वदर्शनसंग्रहे श्रीमाधवाचार्येणापि[1] ।

## स्फोटवादे सूत्रकृतां सम्मतिः

नायं स्फोटवादो भाष्यादिसम्मत एव, अपि तु महामुनिपाणिन्युपज्ञोऽपि । तथा हि–"अर्थवदधातु." इति सूत्रेण[2] अर्थविषयकबोधजनकशब्दमुद्दिश्य प्रातिपदिकसंज्ञाविधानं स्फोटवादमन्तरा अनुपपद्यमानं सत्तं कल्पयति, अन्यथा शब्देऽर्थविषयकबोधजनकत्वरूपा शक्तिः कथं तिष्ठेत् ? ततश्चोद्देश्याप्रसिद्ध्या सूत्रमेव व्यर्थं स्यात् । एवमेव "युष्मदस्मद्भ्यां ङसोऽश्" इति सूत्रेऽशः[3] शित्करणम्–

**सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः ।**
**एकदेशविकारे हि नित्यत्वं नोपपद्यते ॥**

इत्यस्याः परिभाषाया[4] ज्ञापकमिति प्रसिद्धमेव । ततश्चापि शब्दानां नित्यत्वमायातीति स्फोटवादे सर्वथा प्रवेशः । किञ्च "अवङ् स्फोटायनस्य" इति सूत्रे[5] महर्षिस्फोटायनस्मृतिः स्फोटवादं दृढं स्मारयत्येव ।

## वार्त्तिककृन्मतेऽपि स्फोटवादः

"सिद्धे शब्दार्थसम्बन्धे" इति वार्त्तिके[6] शब्दस्य सिद्धत्वं (नित्यत्वं) ब्रुवता श्रीकात्यायनेनापि स्फोटात्मा शब्दः सुष्ठु स्वीकृत एव । अत्र शब्दशब्दः स्फोटरूपेऽर्थ

1. स. द. स., पा. द., पृ. २९९-३०३ ।
2. पा. सू. १/२/४५ ।
3. पा. सू. ६/१/१२३ ।
4. प्रौ. म., हलन्तपु. युष्मद् ।
   म. भा., ७/१/२७ ।
5. पा. सू. ७/१/२७ ।
6. म. भा. १/१, पस्प., पृ. ४७ ।

एव, अन्यथा शब्दस्य नित्यत्वरूपं सिद्धत्वं कथमुक्तं स्यात् ? किञ्च "स्वं रूपम्" इति सूत्रेऽपि–'शब्देनार्थगतेरर्थस्यासम्भवात्तद्वाचिनः संज्ञाप्रतिषेधार्थं स्वरूपवचनम्', "न वा शब्दपूर्वको ह्यर्थे सम्प्रत्ययस्तस्मादर्थनिवृत्तिः" इति वार्त्तिकद्वयं विदधता तेन स्फोटवादः सम्यक् समर्थितः, अन्यथा स्फोटातिरिक्तस्य शब्दस्याभिप्रेतत्वे तत्रार्थबोधकत्वासम्भवेनोक्तवार्त्तिकयोरनुत्थानमेव स्यात् । एवमेव बहुत्र स्फोटतत्त्वमेतैरपि सिद्धान्तितम्[1] ।

**स्फोटतत्त्वसमर्थकानि अन्यानि नानामतानि**

महर्षियास्कस्य स्फोटविषये समीचीना धारणा वर्तते । सोऽपि शब्दपदेनैव स्फोटं व्यपदिशति, शब्दस्य व्यापकत्वं वदन् "व्याप्तिमत्त्वात्तु शब्दस्य"[2] इत्यादिना । न हि स्फोटवादमन्तरा शब्दो व्यापक इति वक्तुं युज्यते ।

एवमेव महर्षिरौदुम्बरायणो वार्ताक्षश्च स्फुटं स्फोटं समर्थयतः । तथा चोच्यते श्रीहरिणा–

**वाक्यस्य बुद्धौ नित्यत्वमर्थयोगं च लौकिकम् ।**
**दृष्ट्वा चतुष्ट्वं नास्तीति वार्ताक्षौदुम्बरायणौ**[3] ॥

यद्यपि वाक्यस्फोटसमर्थकमिदं प्रमाणम्, तथापि स्फोटसमर्थकमस्त्येव । 'ब्राह्मणानां ग्रामोऽपि मनुष्याणां ग्रामः' इत्येवमपि व्यपदिश्यत एव ।

ब्रह्मसूत्रं व्याचक्षाणैर्भाष्यकृद्भिः श्रीशङ्करभगवत्पादैरपि स्फोटविषये सुष्ठु धारणा प्रहिता देवताधिकरणे । तत्र हि वर्णानामुत्पन्नप्रध्वंसित्वेन तेभ्यो देवादीनां सृष्टिरनुपपन्ना स्यात् । किञ्च, पूर्ववदेवार्थावगतिरपि ततो न सम्भवतीत्यादिकं विमृश्य "स्फोटरूपनित्यशब्दात् क्रियाकारकफललक्षणं सर्वं जगदभिधेयभूतं प्रभवति" इत्यर्थकमुक्तम्[4] ।

एवमेव योगसूत्रभाष्यविवरणेऽपि– "यथा शिविकोद्वाहनादि अनेकसाध्यमेकस्यापि वैकल्ये न सम्पद्यते, तथैवार्थस्य प्रतिपादनमप्यनेकसाध्यत्वादन्यतमेन वर्णानामशक्यमिति पदस्यैव व्यञ्जितारो वर्णा इति स्थितम्" इत्युक्तम्[5] । आभ्यां स्फोटवादो दृढं समर्थ्यते ।

---

1. म. भा. १/१/६७ ।
2. नि. १/१/४ ।
3. वा. प. २/३४८ ।
4. ब्र. सू., १। ३। ९। २८ ।
5. यो. सू. भा. वि., पृ. २८-३७ ।

पूर्वमीमांसादर्शने "सत्त्वान्तरे च यौगपद्यात्" इति सूत्रं व्याचक्षाणेन श्लोकवार्त्तिककृता "नानादेशावगम्यत्वाद्युगपत्तुल्यबुद्धिभिः" इत्याद्युक्तम्[1] । तत्रैवाग्रिमे श्लोक उत्तरार्धरूपेण–"अविभुत्वे हि युगपन्नैको नानावगम्यते" इत्युक्तम्[2] । तेनैकस्य युगपदेव नानाधिकरणेषूपलम्भेन वर्णात्मकशब्दस्य विभुत्वं सिद्ध्यत्येव । पुनरग्रे "प्रयुक्तेन विभुत्वेन व्योमवच्चास्य नित्यता" इति कथनेनापि[3] तस्य विभुत्वनित्यत्वे प्रतीयमाने वर्णस्य स्फोटरूपत्वमवगमयत एव । वर्णस्फोटस्वीकारे स्फोटवादोंऽशतः स्वीकृत एव ।

**स्फोटानङ्गीकारे नानामतानि, तेषां निरासश्च**

पूर्वं तावत् पूर्वमीमांसामतमेवालोच्यते । यत्तूक्तं तत्र–

> **नार्थस्य वाचकः स्फोटो वर्णेभ्यो व्यतिरेकतः ।**
> **घटादिवन्न दृष्टेन विरोधो धर्म्यसिद्धितः**[4] ॥ इति ।

अयमाशयः – पदवाक्ययोर्वर्तमाना वर्णाः (ध्वनयः) स्फोटं नाभिव्यञ्जयन्ति, धर्मिणः स्फोटस्यासिद्धत्वादिति तस्यावाचकत्वेनैव दृष्टविरोध इति[5] ।

अत्रोच्यते–"पद्वाक्ययोर्वर्तमाना वर्णा इति कथनेन स्वीकृतमेव स्फोटतत्त्वं भवताऽपि । न हि पदाद् वाक्याद्वाऽन्यः स्फोटोऽस्ति, यो भवता निराकरिष्यते । पदं वाक्यमेव च स्फोट इति धर्मिणोऽसिद्धिरिति हेतुराभासतां गतः । यद्युच्यते– "वर्णव्यतिरिक्तं पदं व्राक्यं वा निराक्रियते" इति, तदापि व्यतिरिक्तमुद्दिश्य तस्य व्यञ्जनप्रतिषेधे व्यतिरिक्तयोः पदवाक्ययोरभ्युपगमः प्राप्त एव । यदि तु परिकल्पितपदवाक्यप्रतिषेधः ? एवमपि व्यञ्जकत्वेनेति हेतुरसिद्धः स्यात् । यतो हि तत्र त्रयो विकल्पाः सन्ति । स्वात्मव्यतिरिक्तस्य पदस्य वाक्यस्य वा व्यञ्जकत्वम्, अव्यतिरिक्तस्य वा, अर्थस्य वेति । तत्राद्यकल्पे स्वतोऽसिद्धिप्रसङ्गः, द्वितीयकल्पे परस्यासिद्धिप्रसङ्गः । प्रदीपादौ व्यतिरिक्तस्यैव व्यञ्जकत्वदर्शनात् । अथ व्यतिरिक्तव्यञ्जकत्वे सिद्धे पदादिस्फोटस्यैव व्यञ्जका भवितुमर्हन्ति, नार्थस्य तृतीयकल्पप्राप्तस्य, अनेकवर्णसाध्यस्यार्थप्रतिपादनस्य वर्णानामन्यतमेन साधयितुमशक्यत्वात्[6] ।

---

1. श्लो. वा., अधि. ६, श्लो. ९ ।
2. श्लो. वा., अधि. ६, श्लो. १० ।
3. श्लो. वा., अधि., ६, श्लो. ३५० ।
4. श्लो. वा., सू. ५, श्लो. १३३ ।
5. श्लो. वा., न्या. र. टी., सू. ५ श्लो. १३३ ।
6. यो. सू., भा. विव., पृ. २८-३७ ।

एवमेवोत्तरमीमांसादर्शनेऽपि पदस्फोटस्य वाक्यस्फोटस्य चानङ्गीकारो दृश्यते । तथा हि–"गौरित्येकः शब्द इति या बुद्धिः, सा वर्णेष्वेकार्थविषयकबोधजनकत्वेनौपाधिकी, वनसेनादिबुद्धिवत् । उपलब्धिक्रमस्योपलभ्यमानवर्णेष्वारोपेण 'राज-जरा' इत्यनयोर्विशेषः सम्पादनीयः । दृष्टस्य वर्णानामर्थबोधकत्वस्य हानिः, अदृष्टस्य स्फोटस्य कल्पनेति गौरवं न सोढव्यम्" इत्यादि[1] ।

अत्रोच्यते–एकत्वबुद्धेरौपाधिकत्वकल्पने स्फोटकल्पनापेक्षया महद् गौरवम्, बुद्धीनामानन्त्यात् । उपलब्धिक्रमस्यारोप इत्यपि न शोभनम् । 'येन क्रमेणानुभूतास्तेनैव क्रमेण स्मृता भविष्यन्ति' इति नियमस्यासिद्धत्वात्, व्युत्क्रमस्यापि दर्शनात् । अत एव नानुभूतिक्रमा वर्णा इति सिद्धान्तः । किञ्च वर्णा मिलिता अर्थबोधकाः, प्रत्येकं वेति विकल्पस्य पूर्वोक्तरीत्या निरासेन अगत्या स्फोटस्य वाचकत्वे सिद्धे नाऽस्ति काचन हानिः, नापि किञ्चिद् गौरवमिति दिक् ।

एवमेव जैनदर्शनोक्तमपि स्फोटप्रतिविधानम् । तथा हि "शब्दार्थोपलब्धिनिमित्तक्षयोपशमप्रतिनियमादविनष्टा एव पूर्ववर्णसंविदस्तत्संस्काराश्चान्त्यवर्णसंस्कारं विदधति । तथाभूतसंस्कारप्रभवस्मृतिसव्यपेक्षो वान्त्यो वर्णः पदार्थप्रतिपत्तिहेतुः । वाक्यार्थप्रतिपत्तावप्ययमेव न्यायोऽङ्गीकर्तव्यः"[2] इत्यादिरीत्या पदवाक्यार्थप्रतिपत्तिं सम्पाद्य स्फोटवादं निराचक्रुर्जैनाचार्याः ।

तदेतन्न रोचते शब्दतत्त्वविद्भ्यः, 'इदमेकं पदम्, इदमेकं वाक्यम्' इत्यादिप्रतीतीनां तदेवेदं पदमित्यादिप्रत्यभिज्ञानां च स्फोटवादमन्तरा कथमप्यनुपपत्तेः प्राक् प्रदर्शितत्वात् ।

एवमेव विसंवादिपक्षीयाणां सर्वासामनुपपत्तीनां श्रीमण्डनमिश्र-श्रीनागोजिभट्टप्रभृतिभिर्विद्वद्भिः कृते स्वस्वस्फोटतत्त्वप्रतिपादके ग्रन्थेऽशेषतः समाहितत्वाद् विस्तरभिया च प्रकृते नाधिकं लिख्यते ।

## स्फोटस्य विभुत्वं नित्यत्वमेकत्वं च

यद्यपि स्फोटस्वरूपसमर्थने पूर्वोत्तरमीमांसाभ्यां वर्णात्मकशब्दानां समर्थितं विभुत्वादिकं प्रदर्शितमेव, तथापि किञ्चिदधिकं वक्तुमुपक्रम्यते, अनुक्तं महाभाष्यादिमतं

---

1. ब्र. सू., शा. भा. १।१।१।२८ ।
2. प्रमेयक. मा., पृ. १३१-१३२ ।

दर्शयितुं च । तत्रादौ पूर्वमीमांसासम्मतं नित्यत्वमेकत्वं च तदीययुक्तिभिः प्रदर्श्यते । "शब्दो नित्यः सत्त्वे सत्यकारणकत्वाद् व्योमवत्" इत्यनुमानेन तत्र नित्यत्वं साध्यते । "न च ताल्वादिव्यापाराणां कारणत्वदर्शनादकारणकत्वमसिद्धमिति वाच्यम्, ताल्वादिव्यापाराणामभिव्यञ्जकत्वस्यैव स्वीकारेणादोषात् । ताल्वादिव्यापारः शब्दकारणं न भवति, व्यापारत्वात्, सम्प्रतिपन्नव्यापारवदित्यकारणकत्वसाधनाच्च । ननु ताल्वादिव्यापारः शब्दकारणं शब्दस्य तदनन्तरभावित्वात्, यो यदनन्तरभावी स तत्कारणकः, कुलालव्यापारानन्तरभाविघटवदिति कारणत्वमपि साध्यमिति चेत्, न, खननरूपव्यापारानन्तरभाविकूपोदकादौ व्यभिचारात् । तत्र हि खननं नोदकस्य कारणम्, अपि त्वभिव्यञ्जकमेवेत्यस्य सर्वसम्मतत्वात् । ताल्वादिव्यापाराणामभिव्यञ्जकत्वेऽभि व्यक्तवर्णस्य विभुत्वात् सर्वैः सर्वत्रोपलम्भप्रसङ्गस्तु नापादयितुं शक्यते, ताल्वादिव्यापारोत्पन्नध्वनिश्रोत्रसंयोगस्यैव अभिव्यञ्जकत्वस्वीकारेण यस्य श्रोत्रे तादृशध्वनिसंयोगरूपोऽभिव्यञ्जकस्तस्यैवोपलम्भ इति नियमेनादोषात् । वाय्वादीनां ध्वनीनां यावद्वेगं गमनोपपत्तेश्च । नन्वेकस्यैव गकारस्य तीव्र-तीव्रतर-मन्द-मन्दतरत्वादिविरुद्धधर्मानुपपत्तेर्भिन्ना एवैते गकारा इति चेत्, उच्यते–अभिव्यञ्जकध्वनिधर्मसमारोपेण भिन्नत्वप्रत्ययः, न तु वास्तवः, एकस्मिन्नेव मुखे मणिदर्पणकृपाणाद्यभिव्यञ्जकभेदेन भिन्नत्वप्रत्ययवत् । यद्यपि ज्वालाया विशीर्यमाणावयवत्वं प्रत्यक्षमिति विषयगतसादृश्यादिधर्मनिबन्धनमेव तत्र ज्वालैकत्वप्रत्यभिज्ञानम्, तथापि इह तादृशस्य कस्यचन हेतोरभावाद् न भ्रममूलकं सोऽयं गकार इति प्रत्यभिज्ञानम् । तस्मादखिललोकैरपि युगपदयमुपलभ्यमानो गकारादिरेक एव[1] ।" विभुत्वं तु प्राग्वदेव ज्ञेयम् ।

### उक्तविषये महाभाष्यसम्मतिः

यद्यपि "वायोरणूनां ज्ञानस्य शब्दत्वापत्तिरिष्यते" इति हरिवचसा "अणुपरिणामः शब्दः" इति जैनदर्शनरीत्या च शब्दस्याणुपरिणामत्वं ज्ञातं भवति, तथापि ध्वनिरूपस्यानित्यस्य शब्दस्य तत्, न तु स्फोटरूपस्य । तस्य तु विभुत्वमेव । उक्तं च महर्षिपतञ्जलिना–"एक इन्द्रोऽनेकस्मिन् क्रतुशते आहूतो युगपत् सर्वत्र भवति"[2] इति । अत्रेन्द्र इति पदमिन्द्रशब्द इत्यर्थकम्[3], आहूत इति च प्रादुर्भूत इत्यर्थकम्[4] । न हि विभुत्वमन्तरा एकस्येन्द्रशब्दस्यानेकत्राभिव्यक्तिः कथमपि सम्भवतीति विभुत्व-

---

1. मा. मे., प्रमेयपरि., पृ. ९२-९४ ।
2. म. भा., १।२।६४ ।
3. म. भा., उ. १।२।६४ ।
4. म. भा., उ. १।२।६४ ।

मेकत्वं च स्पष्टमायातः । नित्यत्वं तु विभुत्वानुयायि पदे पदे कीर्तितमेव, "संग्रहे तावत् कार्यप्रतिद्वन्द्विभावान् मन्यामहे नित्यपर्यायवाचिनो ग्रहणमिति । इहापि तदेवम्" इति[1] । "अनपायोपजनविकारिभिर्वर्णैर्भवितव्यं कूटस्थैरविचालिभिश्च"[2] इत्यादि[3] ।

**उक्तविषये श्रीनागोजिभट्टसम्मतिः**

अयं ध्वनिव्यङ्ग्यो वाचकः शब्दस्तत्तत्प्राणिहृदयदेशाऽवच्छिन्नाकाशदेशस्थः, विराट्पुरुषस्यापि हृदयरूपबाह्याकाशदेशस्थश्च । स चैको लाघवात्, विभुश्च व्यापनात् । तथैकत्र श्वेतद्रव्ये रूपं व्यापकम्, सर्वावयवावच्छेदेन सम्बद्धम्, तथायमप्याकाशदेशस्थस्तथा वक्तुं शक्य इति विभुत्वं स्फुटम्[4] । एवमेव "सोऽयं गकारो यः पूर्वदिने श्रुतः" इति प्रत्यभिज्ञया तावत्कालं स्थिरत्वसिद्धौ नित्यत्वे पर्यवसानमुचितम् । इदानीं 'वर्णा उच्चारिताः' इत्यादिव्यवहाराद् वर्णाश्रयकालस्येदं-शब्देनाभिलप्यमानस्य प्रत्यक्षविषयत्वेऽनुभूयमाने वर्णानां क्षणिकत्वस्यातीन्द्रियत्व-रूपस्य तु सम्भव एव नास्ति ।

अस्मिन् नित्यत्वपक्षेऽव्यवहितोत्तरत्वं च "उत्पत्त्यनवच्छिन्नस्वज्ञानाधिकरण-कालोत्पत्तिकज्ञानविषयत्वम् । यथा–अत्यन्तरागवतः पुरुषस्य कामिनीसाक्षात्कारस्थले ज्ञानधाराकल्पने गौरवादेकत्वम्, तद्वदेतद्विषयेऽपि ज्ञानानां स्थैर्यमेव मन्तव्यम्, लाघवात्"[5] ।

एवमेव पदवाक्यस्फोटयोरपि स्थितिः । एकत्वं चेदमेकजातीयोपाधिविषयकम्, भिन्नोपाधिविषये तु भिन्नत्वमेव । यथा 'घटः' इत्यत्र घकारादिध्वनिचतुष्टयाभिव्यक्तो घटस्फोटः सर्वत्र सर्वेषामेक एव । एवमेव पटस्फोटादीनां व्यवस्था, न तु घटपटादयः सर्वेऽपि स्फोटा एकत्ववन्त एव, उपाधिभेदेन तेषां भिन्नत्वात् । उपाधिराहित्ये मूलावस्थायां पराख्यायां समेषामेकत्वं यच्चकास्ति, तत्तु पारमार्थिकमित्यन्यत् ।

---

1. म. भा. १।१, पस्प., पृ.४९ ।
2. म. भा. १।१।४५ ।
3. म. भा. ७।१।२७ ।
4. ल. म., र. प्र., पृ. १६३ ।
5. ल. म., र. प्र., पृ. १८० ।

## अस्य स्फोटाख्यशब्दस्य द्रव्यत्वं गुणत्वं वा ?

अथ शब्दस्य द्रव्यत्वं गुणत्वं वेति शाब्दिकदृष्ट्या विमृश्यते । तत्रोभयपक्षेऽपि ओमिति ब्रूमहे । तथा हि–"अतत्स्थैश्च गुणैः समासो वाच्यः" इति वार्त्तिके 'नदीघोषः', 'पटहशब्दः' इत्याद्युदाहरता भाष्यकृता शब्दस्य गुणत्वं स्वीकृतमेव[1] । 'आकाशदेशः शब्दः' इत्युक्त्या चाकाशाश्रिततत्वेनापि गुणत्वं सूचितम्[2] । अत्राद्यः पक्षो ध्वनिरूपशब्दविषयकः, नद्यां पटहादौ च तस्यैव सम्भवात् । द्वितीयस्तूभय-विधशब्दविषयक आकाशे द्वयोरपि सम्बन्धादिति विवेकः । मञ्जूषाकृता तु तारत्वादिगुणाश्रयतया शब्दस्य द्रव्यत्वम्, आकाशरूपद्रव्याश्रिततया च गुणत्वमिति स्फुटमेवोभयं प्रतिपादितम्[3] । किञ्च–

**सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते ।**
**आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः ॥**

इत्येतल्लक्षणलक्षितमपि गुणत्वं शब्दे तिष्ठत्येव । ध्वनिरूपस्य तदुपहितस्फोटरूपस्य वा आकाशरूपे सत्त्वे निविशमानत्वात्, ततोऽपगमाच्च, जातिभिन्नत्वात्, आधेय-त्वात्, क्रियाजत्वाभावाच्च[4] ।

'लिङ्गसंख्यान्वितं द्रव्यम्' इति लक्षणलक्षितं द्रव्यत्वमपि वारयितुं न शक्यते । किञ्च "वायोरणूनां ज्ञानस्य शब्दत्वापत्तिरिष्यते" इति श्रीहरिस्मृत्या[5] वायोरणूनां परिणामः शब्द इति पक्षे निश्चप्रचं द्रव्यत्वमेव ध्वनिरूपस्य शब्दस्य । ज्ञानस्य तत्त्वपक्षे तु गुणत्वमपि कथञ्चिद् वक्तुं शक्यते ।

## पूर्वमीमांसकादिसम्मतं शब्दस्य द्रव्यत्वम्

पूर्वमीमांसादर्शने तु ध्वनिरूपस्य वर्णस्फोटरूपस्योभयविधस्यापि शब्दस्य द्रव्यत्वमेव सिद्धान्तितम् । तथा हि–"शब्दो द्रव्यं सत्त्वे सत्यनाश्रितत्वात् कालवत्" इत्यनुमानेन शब्दे द्रव्यत्वं साध्यते । "विमतं द्रव्यं शब्दाश्रयो न भवति, द्रव्यत्वात्

---

1. म. भा. २।२।२८ ।
2. म. भा. १।२, मा. सू. १ ।
3. ल. म., र. प्र., पृ. १८६ ।
4. म. भा. ४।१।४४ ।
5. वा. प. १।१०७ ।

सम्प्रतिपन्नद्रव्यवत्" इत्यनुमानेन निराश्रयत्वसिद्धेश्च । यदि तु शब्दो द्रव्यत्वाभाववान् श्रोत्रग्राह्यत्वात् शब्दत्ववदित्यनुमानेन शब्दे द्रव्यत्वाभावः साध्यते, तर्हि शब्दे ताभ्यामेव हेतुदृष्टान्ताभ्यां गुणत्वाभावस्यापि सुसाध्यत्वात् । तस्माद् द्रव्यत्वं स्थिरम्[1] ।

एवमेवोत्तरमीमांसायामपि व्यवहारे भाट्टनय इति द्रव्यत्वमेव स्थितमिति दिक् ।

### वस्तुतः स्फोटो न द्रव्यम्, नापि गुणः, अपि तु भावात्मैवेति दीक्षितसिद्धान्तः

"इदं सर्वं कार्यभूतस्य ध्वनिरूपस्य सोपाधिकस्य वर्णपदवाक्यरूपस्य स्फोटस्य वा स्वरूपविमर्शने वक्तुं शक्यते । वस्तुतस्तु सर्वकारणानामपि कारणभूतोऽनादिनिधनो विभुः प्रपञ्चात्मकविवर्तोपादानस्वरूपः स्फोटपदाभिधेयः, पदार्थस्तु, न द्रव्यादिरूपः, गुणक्रियादिशून्यत्वात्, अपि तु भावात्मैव केवलं वक्तुं कथञ्चिच्छक्यते" इति निश्चिन्वन्तः शब्दकौस्तुभे शाब्दिकशिरोमणयः श्रीभट्टोजिदीक्षिताः[2] ।

### शब्दब्रह्मणश्चिद्रूपता

पूर्वतन एवायं सिद्धान्तः शब्दान्तरेणोच्यते कञ्चिद् विशेषं प्रतिपादयितुम् । तथा हि–"वागेव विश्वा भुवनानि जज्ञे" इत्येषा श्रुतिर्वाचो भुवनकर्तृत्वं प्रतिपादयति, जज्ञे इत्यस्यात्रान्तर्भावितण्यर्थतया 'जनितवती' इत्यर्थात्, कालस्याविवक्षया 'जनयति' इत्यर्थाद्वा । एवं 'वागेवेदं बुभुजे' इत्येषा श्रुतिर्वाचो भुवनपालकत्वं संहारकत्वं च प्रतिपादयति, 'भुज-पालनाभ्यवहारयोः' इति स्मरणात् ।

एवं च "यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्ति अभिसंविशन्ति" इत्यादिश्रुत्या ब्रह्मणो जगत्कर्तृत्वं पालयितृत्वं संहर्तृत्वं प्रतिपादयन्त्या सहैकवाक्यत्वाय वाक्तत्त्वस्य ब्रह्मरूपता समागता । तस्यां च चिद्रूपता सुतरां निश्चेतुं शक्या, "सच्चिदानन्दं ब्रह्म", "नित्यं विज्ञानमानन्दं ब्रह्म" इत्यादिश्रुतिजाते ब्रह्मणश्चिद्रूपत्वेन सङ्कीर्तनात् । एवं स्थितौ न हि चिद्रूपत्वमेव, अपि तु सद्रूपत्वमानन्दरूपत्वमपि नितराञ्चकास्ति ।

किञ्च, यथा 'घटः सन्, पटः सन्' इत्येवंरूपेण प्रपञ्चमात्रे सद्रूपानुवेधः, 'घटो भाति, पटो भाति' इत्यादिरूपेण चिद्रूपानुवेधः, 'घटः प्रियः' इत्यादिरूपेण आनन्दरूपानुवेधः, तथैव वाचकशब्दरूपानुवेधोऽपि सर्वत्र प्रपञ्च इति सच्चिदानन्दरूपाण्यपेक्ष्य तुरीयं शब्दात्मकं स्वरूपं प्रकाशयमानां "वाग्वै ब्रह्म" इति श्रुतिं स्वमते प्रमाणतया अवलम्बमानाः शाब्दिकप्रवरा वस्तुतः शब्दतत्त्वविद एव ।

---

1. मा. मे., प्रमेयपरि., द्रव्यनि. ।
2. श. कौ., म. भा., पस्प., पृ. १४ ।

समर्थितं चैतद् दर्शनसर्वस्वग्रन्थे श्रीस्वामिशङ्करचैतन्यभारतीभिरपि । तथा हि– "तत्तदर्थविषयकासत्त्वापादका ज्ञानविरोधिचिन्निष्ठतया तत्तदर्थविषयकेच्छाजनकतावच्छेदकज्ञानत्वस्य वृत्तिविशेषावच्छिन्नचिन्निष्ठतया चान्येच्छानधीनेच्छाविषयत्वयोग्यत्वरूपसुखत्वस्यापि कादाचित्कत्वेऽपि तदुपलक्षितव्यक्तेरिव तत्तद्द्रवसम्पृक्तचिन्निष्ठतया वाग्रूपत्वस्य कादाचित्कत्वेऽपि तदुपलक्षितव्यक्तेर्ब्रह्मस्वरूपलक्षणत्वाभ्युपगमे ज्ञानानन्दरूपैव चितिरितिवद् वाक्शक्तिरेव चितिरित्यप्युक्तिर्न दुष्यति"[1] इति ।

महाभाष्यकृताऽपि 'चत्वारि शृङ्गा' इति मन्त्रव्याख्यावसरे "महान् देवः शब्दः, तेन नः साम्यं यथा स्यादित्यध्येयं व्याकरणम्" इत्युक्तम् । अत्र "महान्-परब्रह्मस्वरूपः देवोऽन्तर्यामिरूपः, साम्यं सायुज्यम्"[2] इति व्याख्यातमुद्द्योतकृता ।

अत्र शब्दस्य परब्रह्मरूपत्वकथनेन चिद्रूपता आनन्दरूपता चोक्तप्रायैव । अत एव तेन सायुज्यकथनं सङ्गच्छते । अन्यथा चेतनेनानन्दभिन्नेन सायुज्याभिलाषः कथं स्यात् ?

किञ्च, "तस्य चात्यन्तविचारे ब्रह्मातिरेके मानानुपलम्भेन तत्तदुपाधिभिन्नचित एव बोधकतया तैर्ग्रहात्" इत्युद्द्योतकृदुक्त्या घटादिध्वन्युपहितस्य चैतन्यस्यैव स्फोटपदेन व्यपदेशो लभ्यते । लघुमञ्जूषायां तु 'शक्त्याश्रयः कः' इति निरूपयता श्रीनागेशेनोक्तम्–"मध्यमायां यो नादांशस्तस्यैव स्फोटात्मनो वाचकत्वेनाक्षतिः" इति। तत्र चिदचिन्मिश्रोंऽशो नाद इत्यस्य पूर्वमुक्तत्वान्नानेनोद्द्योतग्रन्थेन विरोधः । अचिदंशस्योपाधिरूपेण चिदंशस्योपाधेयत्वेनात्र सन्निवेशात्[3] ।

अनुपहितचितस्तु पराशब्देन व्यपदेशः । उक्तं च हरिणा–

**अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।**
**विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः**[4] ॥ इति ।

अत्र पूर्वार्द्धेनैवानुपहितस्वरूपवर्णनम्, उत्तरार्द्धेन तूपहितवर्णनम्, कालाख्यशक्त्युपधानेनैव सृष्टिकरणात् ।

---

1. स., अनि., पृ. १६८-१६९ ।
2. म. भा., पस्प., पृ. ३०-३१ ।
3. म. भा., उ., पृ. ३५ ।
4. वा. प. १।१ ।

## महाभाष्योक्तस्य ध्वनिरूपशब्दस्य विमर्शः

महाभाष्ये "अथवा प्रतीतपदार्थको लोके ध्वनिः शब्द इत्युच्यते" इति वाक्येन ध्वनिरूपोऽपि शब्दः सङ्केतितोऽस्ति[1] । अयं स्फोटस्य व्यञ्जक इत्यप्युच्यते । उक्तं च भाष्ये–"ध्वनिः शब्दगुणः"[2] इति । अत्र गुणपदस्य व्यञ्जकत्वेनोपकारक इत्यर्थः प्रतिपादितः प्रदीपे । अयमेव "वैखरी-मध्यमा" इत्युभयशब्दाभ्यां प्रतिपाद्यते । अनयोः किं स्वरूपम् ? कश्च विशेष इति जिज्ञासायामुच्यते–

चतस्रो वाचः शब्दशास्त्रे सम्मानिताः सन्ति । तत्र सर्वप्राणिनां मूलाधारस्था तत्रत्यसंस्कृतपवनेनाभिव्यज्यमाना स्पन्दशून्या शब्दब्रह्मरूपा अनादिनिधना या वाक्, सैव 'परा' इत्युच्यते, अनुपहितचितिरेवेयम्, 'स्वरूपज्योतिरेवान्तः परा वागनपायिनी' इति स्मृतेः ।

ततो नाभिपर्यन्तमागच्छता तेन वायुनाऽभिव्यज्यमाना मनोगोचरीभूता वाक् 'पश्यन्ती' इत्युच्यते । एतदुभयमपि वाग्ब्रह्म योगिनां समाधौ निर्विकल्पकसविकल्पकज्ञानविषय इत्युच्यते । ततो हृदयपर्यन्तमाक्रामता तेन वायुनाऽभिव्यज्यमाना तत्तदर्थवाचकस्फोटाभिव्यञ्जिका स्वमात्रश्रव्या परश्रोत्रेण अग्राह्या सूक्ष्मा जपादौ बुद्धिनिर्ग्राह्या या वाक्, सा 'मध्यमा' इति कथ्यते । ततश्च मुखपर्यन्तमारोहता तेन वायुना मूर्धानमाहत्य परावृत्य च तत्तत्स्थानेष्वभिव्यज्यमाना परश्रोत्रेणापि ग्रहणयोग्या या वाक्, सा 'वैखरी' इत्युदीर्यते । एवं स्वरूपप्रदर्शनेन मध्यमावैखर्योर्विशेष उक्तः[3] ।

अथ स्फोटव्यञ्जकता विचार्यते, किमुभयोरन्यतरस्या वा ? तत्रोभयोर्व्यञ्जकता इति महाभाष्यमतम् । उक्तं हि– "श्रोत्रोपलब्धिर्बुद्धिनिर्ग्राह्यः प्रयोगेणाभिज्वलित आकाशदेशः शब्दः" इति[4] । 'तत्र प्रयोगेण' इति प्रतीके प्रयुज्यत इति प्रयोगो ध्वनिः, तेनाभिव्यक्त इत्यर्थः कृतः प्रदीपकृता । तेन वैखरीध्वनेरेव सङ्केतः, मध्यमायाः प्रयुज्यमानत्वाभावात् । बुद्धिनिर्ग्राह्य इत्यनेन मध्यमाया ग्राहकत्वं (व्यञ्जकत्वं) लभ्यते ।

इयमेव सरणिः श्रीभर्तृहरिकैयटभट्टोजिदीक्षितप्रभृतीनाम् । श्रीकौण्डभट्टेन भूषणसारे वायुसंयोगस्य व्यञ्जकता दर्शिता[5], सा तु ध्वनिना अन्यथासिद्धत्वाद् भाष्यविरुद्धत्वाच्च न सम्मान्यते ।

---

1. म. भा., पस्प., १/१, पृ. १४ ।
2. म. भा., १/१/६९ ।
3. प. ल. म., पृ. १०-११ ।
4. म. भा., पस्प., मा. सू. १ ।
5. भू. सा., स्फो. प्र. ।

एवमेव श्रीनागोजिभट्टेन परमलघुमञ्जूषायां मध्यमाध्वनेरेव व्यञ्जकत्वमुक्तम् । वैखरीनादस्य भेर्यादिनादवन्निरर्थकत्वं चोक्तम् । तत्र च–

**वैखर्या हि कृतो नादः परश्रवणगोचरः ।**
**मध्यमया कृतो नादः स्फोटव्यञ्जक उच्यते**[1] ॥

इति कारिका प्रमाणतया चोक्ता । तदपि वक्तुः कृते चेत्, सत्यमिति ब्रूमः । श्रोतॄणां कृते तु वैखरीध्वनिरेव व्यञ्जकः । उक्तं च श्रीनागेशेनानुपदं तत्रैव ग्रन्थे 'प्रयोगेणाभिज्वलितः' इति भाष्यमुद्धरता–"तस्य हि प्रयोगेण वैखरीरूपेणाभिज्वलितः स्वरूपरूपितः कृत इत्यर्थः" इति[2] ।

उक्तकारिकायां 'परश्रवणगोचरः' इत्यस्य परेषां श्रोतॄणां श्रवणगोचरः सन् स्फोटव्यञ्जक इत्यर्थः, स्फोटव्यञ्जक इत्यस्य वक्तुर्हृदय इति शेषः, कृत इत्यस्य वक्त्रोच्चारित इत्यर्थः । वैखर्य्या इति मध्यमया इति चाभेदे तृतीया प्रकृत्यादित्वात् । एवं च वैखरीरूपो मध्यमारूपश्च नादो ध्वनिरिति विवरणेन सर्वमिष्टं तात्पर्यं सेद्धुमर्हति ।

## आचार्यश्रीहरिसम्मतं वैखरीस्वरूपद्वयम्

तत्र वाक्यपदीये तत्रभवान् श्रीभर्तृहरिर्वैखरीं ध्वनिं द्विधा प्रोवाच–प्राकृतवैकृत-भेदाभ्याम् –

**प्राकृतस्य ध्वनेः कालः शब्दस्येत्युपचर्यते**[3] ।
**शब्दस्योर्ध्वमभिव्यक्तेर्वृत्तिभेदे तु वैकृताः**[4] ॥

महर्षिश्रीव्याडिप्रणीते सङ्ग्रहेऽप्येवमेव श्लोकान्तरेण विभागद्वयं प्रदर्शितम् । तथा हि–

**शब्दस्य ग्रहणे हेतुः प्राकृतो ध्वनिरिष्यते ।**
**स्थितिभेदे निमित्तत्वं वैकृतः प्रतिपद्यते**[5] ॥ इति ।

---

1. प. ल. म., पृ. ११ ।
2. प. ल. म., पृ. १२ ।
3. वा. प. १/७६ ।
4. वा. प. १/७७ ।
5. उद्धृत., वा. प., वृष. टी., १/७६ ।

एवं च स्फोटस्याभिव्यञ्जने प्राकृतो ध्वनिरुपयुज्यते, स्वीयमात्राकालादिना च नित्यमपि स्फोटं परिच्छिनत्ति । स्फोटस्याभिव्यक्त्युत्तरं द्रुतादिवृत्तिभेदे वैकृतो ध्वनिर्निमित्तं भवति । द्रुतमध्यमविलम्बितवृत्तीनां लक्षणानि कृतानि प्रदीपग्रन्थे[1] "तपरस्तत्कालस्य" इति सूत्रीयभाष्यव्याख्यानभूते ।

## वैखरीध्वनिविषये सूत्रकृन्मतम्

वैखरीध्वनिविषये सूत्रकृता महर्षिपाणिनिना शिक्षायामुक्तम्–

**आत्मा बुद्ध्या समेत्यार्थान् मनो युङ्क्ते विवक्षया ।**
**मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ॥**
**सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः ।**
**वर्णान् जनयते** ............................[2] ॥ इति ।

यद्यप्यनयोक्त्या स्वरसतो वायोर्निमित्तकारणता लभ्यते, तत्र च मारुतः पराद्याख्यमन्तःस्थितं शब्दं वर्णत्वेनाभिव्यनक्ति इत्यर्थः स्पष्टमायाति । अस्मिंश्चार्थे वक्ष्यमाणभाष्यमतेन सहैकवाक्यता सम्भवति, तथापि प्राणादिरूपस्य वायोः परिणामभूतोऽयं ध्वनिरित्यपि मतं सूत्रकारीयमिति केचन वदन्ति[3], व्याख्यान्ति चोक्तं शिक्षाग्रन्थं "मारुत एव नाभेरूर्ध्वमुद्यन्मूर्ध्न्यभिहत आत्मानं तत्त्वेन (शब्दत्वेन) अभिव्यनक्ति" इत्येवंरीत्या[4] । अनयोः प्रथममेव मतं शाब्दिकानां सिद्धान्तभूतमित्यनुपदमेव निरूपयिष्यते भाष्यमतनिरूपणप्रसङ्गे ।

## उक्तविषये यजुःप्रातिशाख्यमतम्

वैखरीशब्दो वायोः परिणाम इति यजुःप्रातिशाख्यं मन्यते । तथा हि–"वायुः खात्" इति महर्षिः कात्यायनः सूत्रयति । तस्यायमर्थः –वायुः शब्दस्य कारणम्, स च खाद् आकाशाद् भवतीति ।

ननु वायुः शब्दस्य निमित्तकारणमेवास्तु, न तूपादानमिति कथं तत्परिणामः शब्द इति जिज्ञासायां द्वितीयं सूत्रम्–"शब्दस्तत्" । शब्दस्तदात्मको वाय्वात्मक इत्यर्थः ।

ननु यदि शब्दो वाय्वात्मकः, तदा वायोः प्रायेण सर्वगतत्वात् सदाकालं तत्रोपलब्धिः स्याच्छब्दस्येति चेत्, तत्रोक्तम्–"सङ्करोपेति" तृतीयं सूत्रम् । हृदि

---

1. म. भा., प्र. १/१/६९ ।
2. पा. शि. ६-९ ।
3. ल. म., शक्त्याश्रय., पृ. १५६ ।
4. ल. म., शक्त्याश्रय., पृ. १५६ ।

सम्यक्करणैरुपहितो वायुर्वेणुशङ्खादिभिः शब्दीभवति–इति च तस्यार्थः । अत्र वायुः 'शब्दीभवति' इत्यनेन शब्दस्य वायुपरिणामता सुष्ठु लभ्यते । शब्दीभवनप्रकारोऽपि दर्शितस्तत्रैव–"स संघातादीन् वाक्"[1] इति चतुर्थसूत्रेण ।

तथा हि–"स पूर्वोक्तावस्थापन्नो वायुः संघातादीन् प्राप्य वाग् भवति । संघातः पुरुषप्रयत्नः स आदिर्येषां स्थानादीनां ते संघातादयः, तान् प्राप्य वाग्भवति वर्णो भवति"[2] इत्यर्थः ।

## उपरितनमते योगदर्शनसम्मतिः

योगसूत्राणि अधिकृत्य भाष्यं विदधानैः श्रीव्यासभगवत्पादैरपि "वागिन्द्रियं वर्णेष्वेवार्थवत् "श्रोत्रं च ध्वनिपरिणाममात्रविषयम्" इत्युक्तम् । व्याख्यातृभिश्च "ध्वनिर्नाम वागिन्द्रियादावुदानवायोरभिघाताज्जायमान उदानवायोराकाशस्य परमाणूनां परिणामभेदः, स च वर्णरूपोऽप्यवाचकत्वाद् ध्वनिः"[3] इत्युच्यते ।

## ज्ञानस्य परिणामः शब्द इति भाष्यसिद्धान्तः

भाष्यकारः श्रीपतञ्जलिः "वैखरीध्वनिर्ज्ञानस्य परिणामः" इति सिद्धान्तयाञ्चकार । तथा हि "आख्यातोपयोगे" इति सूत्रं प्रत्याख्यातुमुक्तवान्–"अयमपि योगः शक्योऽवक्तुम्, कथमुपाध्यायादधीते इति ? अपक्रामति तस्मात्तदध्ययनम्, यद्यपक्रामति, किं नात्यन्तायापक्रामति ? सन्ततत्वात् । अथवा ज्योतिर्वज्ज्ञानानि भवन्ति" इति[4] ।

अयमाशयः – उपाध्यायादपक्रामच्छब्दजातमधीयान उपादत्ते इत्यर्थके 'उपाध्यायादधीते' इत्यत्र वाक्येऽपक्रमणजन्यविश्लेषाश्रयत्वादुत्सर्गेण "ध्रुवमपाये" इत्यनेनापादानत्वं संसाध्य शब्दानामपक्रमणं न युक्तम्, यथा फलं वृक्षादपक्रान्तं पुनर्वृक्षे न भवति, एवं शब्देऽपि प्रसङ्ग इत्याशङ्क्योक्तम् – सन्ततत्वादिति । शब्दस्य व्यञ्जका ध्वनय उपाध्यायेनोत्पद्यमाना अपि सादृश्यात्तत्त्वेनाध्यवसीयमानाः श्रोतुः पुनः पुनः श्रोत्रदेशं गच्छन्तो व्यक्तिस्फोटरूपं जातिस्फोटरूपं वा शब्दमभिव्यञ्जयन्तीति भावः । अथवा यथा ज्वालारूपं ज्योतिरविच्छेदेनोत्पद्यमानं सादृश्यात्तत्त्वेनाध्यवसीयमानं सन्ततम्, तथैवोपाध्यायज्ञानानि भिन्नानि भिन्नशब्दरूपतामापद्यमानानि सन्ततानि

---

1. शक्लयजुःप्राति., अ. १, सू. ६-९ ।
2. शुक्लयजुःप्राति., अ. १, सू. ९ ।
3. ल. म., शक्त्याश्रय., टिप्पणी, पृ. १५६ ।
4. म. भा. १/४/२९ ।

इत्युच्यन्त इति भावः । प्रदीपकृताऽप्युक्तम्–"ज्ञानस्य शब्दरूपताऽऽपत्तिरिति दर्शनमत्र भाष्यकारस्य" इति[1] ।

**उक्तमतद्वयस्य विवर्तविपरिणामवादगर्भा समीक्षा**

वायोर्ज्ञानस्य वा परिणामः शब्द इत्यनयोर्मध्ये द्वितीयपक्ष एव शाब्दिकानां सिद्धान्तभूतः । यथोत्तरं मुनीनां प्रामाण्यम्" इति सिद्धान्तात् । "मारुतो वर्णान् जनयते" इति शिक्षायाः स्वारसिकव्याख्यानस्यात्रानुकूलत्वाच्च । यद्यपि पराद्याख्यस्य शब्दस्य ध्वनिरूपः परिणामस्तत्रोक्तः, तथापि विचारे क्रियमाणे द्वयोरैक्यमेव । तस्य शब्दस्य सूक्ष्मत्वाद् ज्ञानरूपत्वाच्च । उक्तं च हरिणा–

**अथेदमान्तरं ज्ञानं सूक्ष्मवागात्मना स्थितम् ।**
**व्यक्तये स्वस्य रूपस्य शब्दत्वेन विवर्तते**[2] ॥ इति ।

अत्रान्तःकरणवृत्तिविशेषरूपं ज्ञानं सूक्ष्मशब्दानुविद्धतया सूक्ष्मशब्दरूपमेव (पश्यन्त्यादिरूपमेव) ग्राह्यम्, तस्यैव स्थूलशब्दरूपतया परिणमनसम्भवात् । 'विवर्तते' इति पदं तु विपरिणमतीत्यर्थकम् ।

**शब्दस्य परिणामोऽयमित्याम्नायविदो विदुः ।**
**छन्दोभ्य एव प्रथममेतद् विश्वं व्यवर्तत**[3] ॥

इत्यनेनाप्यत एवैकवाक्यता सम्पद्यते । पराख्यस्य शब्दब्रह्मणस्तु विवर्तभूतमेव सर्वं जगत् । उक्तं च तदपि–

**अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।**
**विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः**[4] ॥ इति ।

अतात्त्विकान्यथाभावो विवर्तः, तात्त्विकान्यथाभावः परिणामः[5] । आद्यो यथा–रज्जौ सर्पभ्रमे रज्जोः सर्पाकारो विवर्तः, शुक्तिकाया रजतरूपो विवर्तः । द्वितीयो यथा–मृत्तिकाया घटाकारः परिणामः, दुग्धस्य दधिरूपः परिणाम इति । वस्तुतस्तूभयमते परिणामवाद एव सिद्धान्ततया अभ्युपेय इति प्रतिभाति, तत्र च द्वयोर्मतयोः सुतरां समन्वयः । तथा हि– यथा कौशेयकार्पासोभयविधैर्विजातीयतन्तुभिरेकः पटो निर्मीयते तत्र विजातीयोपादानद्वयवदत्रापि वायुः सूक्ष्मशब्दात्मकज्ञानं

1. म. भा., प्र. १/४/२९ ।
2. वा. प. १/११२ ।
3. वा. प. १/१२० ।
4. वा. प. १/१ ।
5. वा. प., ह. वृ. टी. १।१ ।

चेत्युभयविधं विजातीयमुपादानकारणं स्थूले शब्दे नितरां भवितुमर्हति । अत एव "स भूरिति व्याहरत्, ततो भुवमसृजत्" इत्यादिशब्दोपादानकसृष्टिप्रतिपादकश्रुतिभिः "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" इत्याद्यर्थोपादानकसृष्टिबोधकश्रुतीनां मनागपि न विरोधः ।

'वायोः परिणामः' इति कथनेन ध्वनौ गतिमत्ता प्रतिपाद्यते, या चाधुनातने काले ध्वन्याकर्षकयन्त्रद्वारा ध्वनिश्रवणे साक्षादनुभूयते सर्वैः ।

## वैखरीशब्दविषये विसंवादिमतान्तरं तत्समन्वयश्च

वैखरीशब्दोऽत्र प्रकरणे यथा प्राकृतवैकृतभेदेन द्विविधो गृहीतः, तथा व्यक्ताव्यक्त-रूपेणापि द्विविधो ग्राह्यः । व्यक्तो घकारादिवर्णरूपः, अव्यक्तो वीणावेण्वादिध्वनि-रूपः । तत्र स द्विविधोऽपि परमाणुपरिणाम इति जैनदर्शनाचार्याः ।

अयमाशयः – शब्दो द्विविधः – सामान्यरूपो विशेषरूपश्च । सर्वासु शब्दव्यक्तिष्व-नुस्यूतं शब्दत्वं सामान्यरूपम् । शाङ्खशार्ङ्गतीव्रमन्दोदात्तानुदात्तादिविशेषभेदादनेकविधं विशेषरूपम् । तत्र शब्दस्य सामान्यविशेषोभयात्मकत्वं परमाणुपरिणामत्वे (पौद्‌गलिकत्वे) सत्येव सम्भवति । तथा हि– शब्दः पौद्गलिकः, इन्द्रियार्थत्वात्, रूपादिवत् । शब्दः सामान्यविशेषात्मकः पौद्‌गलिकत्वात्, रूपादिवदिति पौद्‌गलिकत्वेन सामान्यविशेषात्मक-त्वं सिद्ध्यति । न चातिनिविडप्रदेशे प्रवेशनिर्गमयोरप्रतिघाताद्धेतोः पौद्‌गलिकत्वाभावः साध्यते, गन्धद्रव्येण व्यभिचारात्, तस्य हेतोरनैकान्तिकत्वात् । कस्तूरिकादिगन्धद्रव्यं हि पिहितद्वारापवरकस्यान्तर्विशति बहिश्च निर्याति, न च पौद्‌गलिकमित्येवमादिशङ्का-समाधानप्रणाल्या पौद्‌गलिकत्वं सिद्धान्तितमिति[1] ।

अत्रोच्यते– यद्यपि "वायोरणूनां ज्ञानस्य शब्दत्वापत्तिरिष्यते" इति हरिस्मृत्या शब्दस्याणविकत्वमपि शब्दशास्त्रे सङ्केतितमीषत्समर्थितं च, तथापि तेऽणवो वायवीया आकाशीयवायवीयतैजसाप्यपार्थिवा अन्यदीया वा इति जिज्ञासायां प्रथमश्चेत् पक्षस्तर्हि मदुक्तमेवागतम्, नान्यत् किञ्चित्, द्वितीयश्चेत् पक्षः सोऽपि पञ्चीकरण-प्रक्रियया कथञ्चिदिष्ट एव, तृतीयस्य तु न कथमप्युपपत्तिः, भूतपञ्चकाति-रिक्तस्येदृशपरमाणुघटितस्यासम्भवात् । तस्मादुक्तपक्षद्वयादतिरिक्तोऽयमाणविकः पक्षो न स्थातुमर्हति, वायवीय एव समावेशात् । हरिणा तु ब्राह्मणवसिष्ठन्यायेन पृथगुक्त इति सर्वमुपपन्नम् ।

---

1. ल. म., शक्त्याश्रय., टिप्प. १५४-५५ ।

न्यायनये तु 'आकाशगुणः शब्दोऽनित्यश्च' इति स्थितम्, तत्तु शाब्दिकेभ्यो न रोचते, उक्तसूत्रभाष्यविरुद्धत्वात्,[1] आकाशदेशः शब्द इत्यस्यैव भाष्ये[2] उल्लेखाच्च, 'सत्त्वे निविशतेऽपैति' इति रीत्या परिभाषितगुणत्वस्यैव वैखरीशब्देऽभ्युपगमाच्च ।

## पुनः प्रकारान्तरेण शब्दभेदकथनम्

'त्रिविधः शब्दः' इति शाब्दिकसिद्धान्त इदानीं यावत् सम्पन्नः । अनुपहितः शब्दः पराशब्दवाच्यः प्रथमः । ध्वन्युपहितः स्फोटपदाभिधेयो द्वितीयः । उपाधिभूतो ध्वनिस्तृतीयः । तत्र प्रथमः अनादिनिधनशब्दब्रह्मेति निरवधिर्नित्यः । द्वितीयस्तु सावधिनित्य इत्यनित्य एव । तृतीयस्तु सुतरामनित्यः, तत्रापि तृतीयक्षणवृत्तिध्वंस-प्रतियोगित्वरूपमनित्यत्वं न, बाह्यप्रयत्नेनेतोऽप्यधिककालं स्थायित्वसम्भवात् । तत्र मूलभूतपराख्यशब्ददृष्ट्या तद्विवर्तभूतस्फोटस्य चिद्रूपविशेष्यांशदृष्ट्या वा शब्दे नित्यत्वव्यवहार इति स्थितम् ।

श्रीमता नागोजिभट्टेन तु परावाचोऽपि यावत्सृष्टिस्थायित्वरूपं नित्यत्वं व्यवहार-नित्यत्वं वा स्वीकृतम्[3], न तु प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वरूपं नित्यत्वम् । तत्तु पश्यन्त्यादिविषयमेव शोभते । पराभिधानाया वाचस्त्वनादिनिधन-त्वेनैव स्मरणं कृतं श्रीहरिप्रभृतिभिः[4] । यद्यपि श्रीहरिणा पराशब्देन व्यवहारोऽस्याः कृते क्वापि वाक्यपदीये न कृतः, तथापि "अत्रातीतविपर्यासः केवलामनुपश्यति"[5] इत्यत्र केवलामित्यनेनास्याः परामर्शस्य कृतप्रायत्वाच्च, "अनादिनिधनं ब्रह्म शब्द-तत्त्वम्" इत्यनेन लक्षणेनास्या एव लक्षितत्वाच्च ।

## स्फोटभेदसमीक्षा

इत्थं शब्दप्रमाणप्रस्तावे स्फोटस्य तद्व्यञ्जकस्य च स्वरूपं निरूप्य वादिनां वैमत्यं चापोह्येदानीं स्फोटभेदनिरूपणमुपक्रम्यते । तत्र च प्रक्रियाकल्पमनुसरद्भिः शाब्दिकै-रष्टौ पक्षाः सप्रमाणमुपस्थाप्यन्ते । ते च–(१) वर्णस्फोटः, (२) पदस्फोटः, (३) वाक्य-स्फोटः (४) अखण्डपदस्फोटः, (५) अखण्डवाक्यस्फोटः । इत्थं पञ्च व्यक्ति-स्फोटाः । जातिपक्षे च (६) वर्णजातिस्फोटः, (७) पदजातिस्फोटः, (८) वाक्य-

---

1. म. भा. १।४।२९ ।
2. म. भा. १।१।१; मा. सू. १, पृ. ९५ ।
3. ल. म., शक्तिनि., पृ. ४१ ।
4. वा. प. १।१ ।
5. वा. प. १।१७ ।

जातिस्फोटश्चेति त्रयो जातिस्फोटाः । तथा हि–किञ्चिद् वर्णव्यत्यासादिना शक्तता-वच्छेदकानुपूर्वीभङ्गस्य प्रतिपदमौत्सर्गिकतया तत्र च केनचित् क्वचित् प्रथमं शक्तिग्रहात् केन कस्य स्मरणमित्यत्र विनिगमनाविरहात् "ऋषभो वृषभो वृषः" इत्यादाविव 'कर्' 'कार्' 'कुर्' 'चकर्' इत्यादीनां प्रयोगसमवायिनां सर्वेषामेव वर्णानां तत्तदानुपूर्व्यवच्छिन्नानां वाचकतेति वर्णस्फोटपक्षः ।

'रामम्, रामेण, रामाय, हरिम्, हरी, हरीन्' इत्यादौ परिनिष्ठिते रूपे कियानंशो द्रव्यादिवाचकः, कियांश्च कर्मत्वादेरित्यस्य विनिगन्तुमशक्यतया 'रामम्' इत्यादिपदमेव वाचकं द्रव्यनिष्ठकर्मत्वादेः, द्रव्याभिन्नकर्मणो वेति पदस्फोटपक्षः । 'दधीदम्, हरेऽव, विष्णोऽव' इत्यादावपि विनिगमनाविरहसाम्याद् वाक्यमेव विशिष्टार्थे शक्तमिति वाक्यस्फोटपक्षः । 'एकः पटः' इतिवदेकं पदमेकं वाक्यं वेत्यबाधितप्रतीत्या वर्णातिरिक्तमेव पदं वाक्यं वा अखण्डं वर्णव्यङ्ग्यम् । इत्थं पञ्चधा व्यक्तिस्फोटा बोध्याः ।

जातिस्फोटवादिनस्तु "घोत्तरटत्वादिकं शक्ततावच्छेदकतया आद्यपक्षत्रयेऽपि यथायथं वाच्यम् । अन्यथा 'सरो रसः' इत्यादावर्थविशेषबोधो न स्यात् । तच्चोपाधिरूपम्, उपाधिश्च परम्परासम्बद्धा जातिरेव । सा च सर्वाधिष्ठान-ब्रह्मस्वरूपात्मिका । तथा च शक्यांश इव शक्तांशेऽपि न्यायसाम्येनाकृत्यधिकरण-रीत्या ब्रह्मतत्त्वमेव तत्तदुपहितं वाच्यं वाचकं च । अविद्या आविद्यकधर्मविशेषो वा जातिरिति पक्षे तु सैव वाचिकाऽस्तु" इत्याहुः[1] ।

## उक्तेषु स्फोटभेदेषु प्रमाणानि

तत्र प्रथमं तावत् वर्णस्फोटे प्रमाणं समीक्ष्यते । शास्त्रीयप्रक्रियानिर्वाहाय कल्पितेषु प्रकृतिप्रत्ययेषु अर्था अपि कल्पिता एव सन्ति । एवञ्च कल्पित-तत्तदर्थवाचकाः प्रकृतिप्रत्यया एव वर्णस्फोटपदेन सङ्केत्यन्ते ।

अत एव "भूवादयो धातवः" इत्यादि सूत्रं सङ्गच्छते । अन्यथा धातुरूपायां प्रकृतौ अर्थवाचकत्वाभावे क्रियावाचिनो भ्वादय इत्युक्तिः कथं सङ्गच्छेत ? किञ्चा-त्रैव सूत्रे भाष्यकृता शङ्कितः 'भाववचनो धातुरिति लक्षणे' "सति प्रत्यये भाव-वचनत्वं भाववचनाच्च प्रत्ययः, इत्येवमन्योन्याश्रयदोषः कथं सङ्गच्छेत"[2] ।

पदवाक्यस्फोटावपि "सर्वे सर्वपदादेशाः" इति भाष्योक्त्या[3] येनोच्चारितेनेति भाष्यप्रतीकमादाय "वैयाकरणा वर्णव्यतिरिक्तस्य पदस्य वाक्यस्य वा वाचक-

---

1. पा. सू. १।३।१ ।
2. म. भा. १।३।१ ।
3. म. भा. ७।१।२७ ।

त्वमिच्छन्ति" इति प्रदीपकारोक्त्या च स्फुटं प्रतिपादितौ स्तः[1] । तत्र वर्णव्यतिरिक्त-स्येति कथनेन यद्यपि तयोरखण्डत्वमेव सिद्ध्यति, तथापि "नित्येषु नामशब्देषु कूटस्थैरविचालिभिर्वर्णैर्भवितव्यम्" इति भाष्योक्त्या[2] सखण्डत्वमपि प्रमीयत एव । जातिव्यक्तिभेदेन पुनरपि इमे भिन्नाः प्रतीयन्ते । अत एव 'अइउण्' इति भाष्यप्रदीपे जातिव्यक्तिस्फोटयोर्बलाबलचिन्तनम्[3], 'अक्षरं न क्षरं विद्यात्' इति भाष्यग्रन्थ-व्याख्याने "तच्च ब्रह्मतत्त्वं परमार्थतो नित्यम्, व्यवहारनित्यतया तु वर्णपदवाक्य-स्फोटानां जातिस्फोटस्य वा" इति प्रतिपादनञ्च[4] श्रीकैयटकृतं सुष्ठु सङ्गतं भवति ।

एवमेव– अर्थवत्सूत्रे[5] स्वं रूपमिति सूत्रे[6] तपरस्तत्कालस्येति सूत्रे[7] च भाष्य-प्रदीपादौ सभेदः स्फोटवादः समीक्षणीयः सहृदयैः शब्दतत्त्वविद्भिः ।

**द्वात्रिंशत्संख्याकाः स्फोटाः**

वस्तुतो भेदानां विमर्शे क्रियमाणे द्वात्रिंशत्संख्याकाः स्फोटाः प्रतीयन्ते । तथा हि– प्रकृतिप्रत्ययस्फोटौ एकवर्णरूपौ द्विविधौ, अनेकवर्णघटितसमुदायरूपौ च द्विविधौ । एतौ पुनः प्रत्येकं सखण्डाखण्डभेदाभ्यां द्विविधाविति चतुर्विधौ । इत्थं व्यक्तिपक्षे मिलिताः सर्वे षड्विधा जाताः । जातिपक्षे पुनश्चत्वार एव । पदवाक्यस्फोटौ च व्यक्तिपक्षे चतुर्विधौ, जातिपक्षे च द्विविधौ । एवं च व्यक्तिपक्षे सङ्कलनया दशसंख्याका इमे सम्पन्नाः, जातिपक्षे तु षट्, सङ्कलिताः षोडश । अन्तरबाह्यभेदाभ्यां पुनर्भेदैर्द्वात्रिंशत्संख्याका ज्ञातव्याः सूक्ष्मदर्शिभिः शब्दशास्त्र-निष्णातैः । लघुमञ्जूषायां यद्यप्यान्तरस्यैव सत्ता सूचिता[8], तथापि घटादिरूप-बाह्यपदार्थवदस्यापि सा सत्ता स्वीकार्या एव । औपचारिकी एव साऽस्तु इत्यन्यत् । एवञ्च भूषणग्रन्थेऽष्टौ[9] स्फोटा इति कथनम् । व्याकरणदर्शनभूमिकायां षोडश स्फोटा इति कथनं च न संख्यावधारणपरम्, अपि तूपलक्षणपरमिति विभाव्यतां

1. म. भा. पस्प., पृ. १२।
2. म. भा. १।१।५५ ।
3. म. भा. १।१ मा. सू. १ ।
4. म. भा. १।२ मा. सू. ७-८ ।
5. म. भा. १।२।४५ ।
6. म. भा. १।१।६७ ।
7. म. भा. १।१।६९ ।
8. ल. म., स्फोटनिरू. ।
9. भू. सा., स्फोटनिरू. ।

सुधीभिः[1] । सूत्रकृता भगवता पाणिनिनापि "जात्याख्यायाम्,[2] सरूपाणाम्[3] " इत्यादिसूत्रेषु जातिव्यक्तिपक्षौ सूचितौ पदार्थमात्रविषये । एवमेव सखण्डाखण्ड-पक्षावपि शास्त्रे बहुत्र[4] निर्दिष्टौ स्तः ।

**वाक्यस्फोटे विशेषतः सूत्रकृत्सम्मतिः**

शब्दशास्त्रस्य प्रधानाचार्यः श्रीपाणिनिः शब्दपदेन वाक्यस्फोटं स्मरन्नाह–"स्वं रूपं शब्दस्य" इति । अत्र स्वशब्द आत्मीयवाची अर्थं वदति, रूपशब्दश्च स्वरूपमित्युभयं बोध्यमर्थाद् अर्थविशिष्टं रूपं शब्दस्य बोध्यमिति सूत्रार्थे सम्पन्ने अर्थविशिष्टरूपस्य शब्दो बोधक इत्यर्थादायाति । अत्र चैतद् विशिष्टनिरूपिता शक्तिः शब्दे आवश्यिकी–इति शक्त्याश्रयत्वानुपपत्त्या शब्दस्य स्फोटरूपता सूत्राभिप्रेतेति लभ्यते । नन्वेतावता वर्णोऽपि शब्दः, पदमपि शब्द एवेति वर्णपदस्फोटयोरेव स्वीकारः स्यात्, न वाक्यस्फोटस्येति कथं समीहितसिद्धिरिति चेत्, न, "वचोऽशब्दसंज्ञायाम्"[5] इत्यनेन शब्दरूपेऽर्थे वाक्यशब्दं कुत्वघटितं व्युत्पादयति भगवान् सूत्रकारः । तेन वाक्यस्यैव मुख्यं शब्दत्वम्, पदस्य वर्णस्य वारोपितं तदिति स्पष्टं सोसूच्यते । किञ्च, आविष्कारार्थकात् शब्दधातोः[6] बाहुलकात् करणे घञ, कर्तरि अचा वा– "शब्द्यते आविष्क्रियते (प्रकाश्यते) स्वार्थो येन स इत्यस्मिन्, शब्दयति प्रकाशयति स्वार्थं यः स इत्यस्मिन्" वा विग्रहे निष्पन्नोऽयं शब्दशब्दः प्रकाशनं प्रकाशकं वार्थं सुतरां वक्ति । तत्रैव 'शब्द्यते ध्वनिना प्रकाश्यते' इति कर्मघञपि तन्त्रेण स्वीक्रियते, तदा पूर्णतः स्फोटपद-तुल्यार्थकता समागतैव । तत्र निराकाङ्क्षार्थप्रतिपत्तिरेव लोकव्यवहारसाधिकेति तादृशार्थप्रतिपत्तिजनकतया वाक्यमेव मुख्यः शब्दः स्फोटो वा इत्यपि ध्येयम् ।

इदं च स्फोटतत्त्वं निरावरणसावरणभेदेन निरुपाधिकसोपाधिकभेदेन वा द्विविधं वक्तुं शक्यते । निरावरणं (निरुपाधिकम्) पराख्यचिच्छक्तिरूपम्, सावरणं पश्यन्ती-मध्यमादिरूपं प्रसिद्धमेवेत्यादि पूर्वत्र चिद्रूपतावर्णने चर्चितमेव ।

---

1. व्या. द. भू., पृ ४८-४९ ।
2. पा., सू. १।२।५८ ।
3. पा. सू. १।२।६४ ।
4. वा. प. १।४६-४८, ५१ ।
5. पा. सू. ७।३।६७ ।
6. सि. कौ., चुरा. ।

**वाक्यलक्षणम्**

ननु स्फोटात्मकवाक्यस्य किं लक्षणम्, यज्ज्ञानेन वाक्यस्यानुगतं स्वरूपं परिचीयेत इति जिज्ञासायामुच्यते–"आख्यातं सविशेषणं वाक्यम्[1]" । अत्राख्यातपदेन क्रियाप्रधानं लक्षणया बोध्यते । तेन 'त्वया शयितव्यम्' इत्यादीनामपि वाक्यत्वं सिद्ध्यति । सविशेषणमित्यस्य साक्षात् परम्परया वा यद् विशेषणं तत्सहितेत्यर्थः । तेन 'नद्यास्तिष्ठति कूले' इत्यादौ नद्यादेरपि एकवाक्यावयवत्वसिद्धिः । सविशेषणत्वेन विभागे साकाङ्क्षत्वं लभ्यते । एतदेव एकोद्देश्यकैकविधेयकत्वरूपैकार्थत्वगर्भमेक-वाक्यत्वलक्षणं ज्ञेयम् । "अर्थैक्यादेकं वाक्यं साकाङ्क्षं चेद् विभागे स्यात्" इति महर्षिजैमिनिवचोऽपि[2] तदनुगुणमेव । किन्तु 'ब्रूहि ब्रूहि' इति वाक्ये एत-ल्लक्षणमव्याप्तम्, विशेषणानुपादाने सविशेषणत्वाभावात् । अतः शास्त्रीयप्रक्रि-योपयोगि वाक्यलक्षणम्–'एकतिङ् वाक्यम्" इत्युक्तं वार्त्तिककृता[3] । एकानुपूर्वीकैक-तिङन्तवदित्यर्थकरणेनोक्तस्थले समन्वयः । 'पचति भवति, पश्य मृगो धावति' इत्यादौ त्वेकानुपूर्वीकैकतिङर्थमुख्यविशेष्यकबोधजनकत्वमित्यर्थेन निर्वाहः ।

"सुप्तिङन्तचयो वाक्यं क्रिया वा कारकान्विता"[4] इत्यमरोक्तं लक्षणमपि भाष्योक्तपूर्वलक्षणवद् लोकोपयोग्येव । तत्रापि वाशब्दश्चेदर्थे । कारकान्वितक्रिया चेद् बोध्येत्यर्थः । एवं च कारकान्वितक्रियाबोधकसुबन्तचय-तिङन्तचय-सुप्तिङन्त-चयानां त्रयाणामपि वाक्यत्वसिद्धिरित्यादि विस्तरेणोक्तं श्रीनागेशभट्टेन[5] ।

**वाक्यार्थस्य प्रतिभामात्रविषयत्वम्, अपूर्वत्वम्, तज्ज्ञानस्यानुभवत्वाभावश्च**

आचार्यश्रीहरिणा वाक्यार्थस्य प्रतिभामात्रविषयत्वमुच्यते । तथा हि–

**विच्छेदग्रहणेऽर्थानां प्रतिभान्यैव जायते ।**
**वाक्यार्थ इति तामाहुः पदार्थैरुपपादिताम्[6] ॥**

इत्यनेन 'देवदत्तादिपदानां पृथगर्थे गृह्यमाणे अन्यैव प्रतिभा जायते, वाक्ये चान्यैवेति तन्मात्रविषय एवार्थो वाक्यार्थः' इति प्रतिपाद्यते । प्रतिभामात्रविषयत्वादयं

---

1. म. भा. २।१।१ ।
2. पू. मी., अ. २, पा. १, अ. १४, सू. ४६ ।
3. म. भा. २।१।१ ।
4. अ. को., १।६।२ ।
5. ल.श. शे., हलन्तपुं., समानवाक्ये इति प्रतीके, पृ. ४१२ ।
6. वा. प. २।१४३ ।

वाक्यार्थः प्रतिभा इत्यप्युच्यते । अत्र मात्रपदेन चक्षुरादिव्यवच्छेदः । प्रत्यक्षस्थले तु अर्थश्चक्षुरादिविषयोऽपि । शाब्दस्थले तु बौद्धस्यैवार्थस्य शक्यतया प्रतिभामात्र-विषयता तद्रूपवाक्यार्थस्य सुष्ठु सङ्गच्छते । प्रतिभा चैषा जन्मान्तरसंस्कारजन्याऽपि । यथा वसन्ततौं कोकिलस्य पञ्चमस्वरविरावो जन्मान्तरसंस्कारजन्य एव[1] । स चायं वाक्यार्थः कीदृश इति जिज्ञासायामुच्यते– पदार्थानां परस्परं विशेष्यविशेषण-भावरूपोऽन्वयविशेष एव वाक्यार्थः । वस्तुतस्तु विभक्तिप्रकृत्यर्थगतविशेषणत्वस्यापि विभक्तिशक्यत्वेन विशेष्यवृत्तिपदार्थान्तरनिष्ठविशेषणतानिरूपितविशेष्यत्वमेव वाक्य-शक्यम्[2] ।

ननु–उक्तान्वयविशेषरूपवाक्यार्थस्य वाक्यघटकपदैरनुपस्थितत्वात् तत्र वाक्यस्य शक्तिग्रहो न सम्भवति, तदुपस्थिते शक्तिग्रहे तु तस्यापूर्वत्वमेव हीयेत, तथा सति च 'वाक्यार्थस्यापूर्वत्वम्' इति सिद्धान्त एव भज्येत इति चेत्, न, वृद्धव्यवहार-दर्शनसहकृतमनसा उपस्थिते तत्र वाक्यस्य शक्तिग्रहसम्भवात् । क्वचिदुपदेशेन क्वचिदाकाङ्क्षाबलेन वा तदैव तद्ग्रहसम्भवाच्च । ततो वाक्यार्थबोधे जाते शास्त्र-कृत्कल्पितान्वयव्यतिरेकाभ्यां तत्तत्पदशक्तौ व्यवस्थितायां वाक्य उक्तान्वयविशेष-निरूपिता शक्तिरर्थापत्त्या पर्यवस्यति[3] ।

यदपि वाक्यशक्तिनये पदैः पदार्थानामिव वाक्येन वाक्यार्थस्यापि स्मृतिरेव स्यात्, न त्वनुभव इति, तदपि न रोचते, पदार्थानामपि पदैः शाब्दबोध एव, न तु स्मरणम्, पदजन्यपदार्थबोधे शाब्दयामि इत्यनुव्यवसायस्यैव अनुभवात् । वस्तुतस्तु वाक्यार्थप्रत्ययो नानुभवरूपोऽपि, स्वर्गनरकादिकं शाब्दबोधविषयीकुर्वतो देवदत्तादेः स्वर्गं नरकं वानुभवामि इत्यनुभवस्यानुदयात् । तस्माच्छाब्दत्वमपि ज्ञानत्वव्याप्यजाति-विशेष एव, न त्वनुभवत्वव्याप्यम् । इयमेव स्थितिरनुमितावर्थापत्तौ च परोक्षप्रमा-स्थले बोध्या । अनुभवत्वं तु प्रत्यक्षत्वसमनियतमेवेति शाब्दिकचक्रचूडामणयः श्रीनागोजिभट्टाः शब्दशास्त्रीयं सिद्धान्तं व्यवस्थापयन्[4] ।

## सखण्डे वाक्यार्थे पदार्थानां सङ्कलनम्

नन्वस्तु वाक्यार्थः प्रतिभामात्रविषयः, अस्तु च बौद्धार्थकल्पे दृष्टिसृष्टिवादे च तदुपपत्तिः, किन्तु पूर्वोक्तसखण्डतापक्षे तदवयवपदार्थाः कियन्तोऽत्र शब्दशास्त्रे सम्मता इति जिज्ञासायामपि किञ्चिदेवोच्यते, प्रमाणसमीक्षाया एव प्रतिज्ञातत्वात् ।

---

1. ल. म., टीकाद्वय., स्फोटभेदनि., पृ. ४१७ ।
2. म. भा., प्र., उ. १।२।४५ ।
3. ल. म., टीकाद्वय., स्फोटभेद., पृ. ४१७-१८ ।
4. ल. म., टीकाद्वय., स्फोटनि., पृ. ४२८-३० ।

प्रमेयसमीक्षाया अपि तद्वत् स्वतन्त्रविषयत्वाच्च । तत्र प्रतिवाक्यं क्रियापदं कारकपदं तद्विशेषणपदं च भवितुमर्हन्ति । तत्र क्रियापदे धातुभागे क्रियात्वक्रियाकारकसंख्या-काला इति पञ्च अर्था भवन्ति[1] । कारकपदे प्रातिपदिकभागेऽपि प्रवृत्ति-निमित्ततदाश्रयलिङ्गसंख्याकारकाणि इति पञ्चार्थाः[2] । शब्दस्य स्वरूपम्,[3] पदार्थ-निष्ठा विषयता[4] चेति पदार्थद्वयं तूक्तयोर्द्वयोरप्यंशयोरन्यत्र प्रत्ययाद्यंशेऽपि च । इत्थं च सङ्कलनया द्वयोरंशयोः सप्त सप्त अर्थाः सम्भवन्ति ।

घटादिपदजन्यबोधे विषयताभाने तु घटादिपदानां घटत्वादिविशिष्टे शक्तिरिति शक्तिग्रहो नियामकः । घटत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्ने शक्तिरिति तदर्थः । अत एवानुव्यवसायोऽपि विषयताविषयकः । सम्बन्धस्य स्वरूपसम्बन्धेनैव भानवद् विषयतानां स्वरूपत एव भानं न कयापि विषयतयेति नानवस्थाप्रसङ्गः[5], किञ्चास्या ज्ञानमात्रे भानमुक्तं श्रीनागेशभट्टेन[6] । "यज्ज्ञानं यच्छब्दविषयकं तत्तच्छब्दजन्यज्ञानविषयतानतिरिक्तविषयताकतया प्रतीयत इति नियमं प्रतिपादयता श्रीदुर्बलाचार्येणापि ज्ञानमात्रे विषयताभानानुरोधेनापि सर्वत्र ज्ञाने शब्दविषय-कत्वमङ्गीकृतम्[7] । शब्दस्तु शाब्दे ज्ञाने तत्तच्छब्दत्वेन प्रविशति[8] । अन्यज्ञाने तु स्वरूपत एवेति विशेषः ।

---

1. ल. श. शे., कारकप्र., द्वियीया का., पृ. ५४९ ।
2. म. भा., प्र. उ., ५।३।७४ ।
3. (क) म. भा. १।१।६८ । (ख) वा. प., १।१२३ ।
4. (क) समर्थसूत्रे (पा. सू. २।१।१) भाष्ये च "जहत्स्वार्थवृत्तिव्युत्पादनावसरे राजपुरुष इत्यादौ वाक्ये राजपदार्थे विद्यमानविशेष्यत्वरूपस्वार्थस्य त्याग इत्युक्तम् । एवं च ऋष्यनुभवसिद्धं विषयताभानं तच्छक्यत्वं च" । (ल. म., बौ., र. प्र., पृ. ३४२)
   (ख) "अत एव व्यक्त्याकृतिजातयस्तु पदार्थः" (न्या. द., २।१।६७) इति सूत्रे न्यायवार्त्तिककृतोक्तम्–"तुशब्दो विशेषणार्थः । किं विशेष्यते ? प्रधानोपसर्जन-भावस्यानियमेन पदार्थत्वम्" इति (ल. म., बौ., र. प्र., पृ. ३४३) । "विशेष्यविशेषण-भावरूपस्य प्रधानोपसर्जनभावस्य पदार्थत्वं वदता न्यायवार्त्तिककृता स्पष्टमेव विषयतायाः पदार्थत्वं शाब्दे भानं चोक्तम्" । (ल. म. बौ, र. प्र. टी., पृ. ३४४)
5. ल. म., टीकाद्वय, बौ., पृ. ३५८ ।
6. ल. म., टीकाद्वय., बौ., पृ. ३६१-६२ ।
7. कु. टी., ल. म., बौ., पृ. ३५४ ।
8. म. भा. १।१।६७ ।

तत्रापि प्रवृत्तिनिमित्तादिवद् घटादिनिष्ठानां गुणादीनामपि सामान्यरूपेण भानं ज्ञानसामान्ये इति पूर्वं प्रत्यक्षसमीक्षायामुक्तमेव प्रमाणसामान्यलक्षणे साकल्यपदार्थं विवृण्वता[1] । इत्थं चानयोर्गुणक्रिययोरपि मेलने नवसंख्याका अर्था ज्ञातव्या द्रव्यवाचिनां घटादिशब्दानाम् । अत एव प्रमाणसामान्यलक्षणे साकल्यपदार्थः सुष्ठु संघटते ।

## क्वचिद् वाक्ये शाब्दबोधप्रकारप्रदर्शनम्

अथोक्तार्थविषयकः शाब्दबोधः क्वचिद् वाक्येऽवश्यं दृष्टान्तनीय इति जिज्ञासायामुच्यते– 'चैत्रः तण्डुलं पचति' इति वाक्यं गृहीत्वा । अत्र पच्धातोर्विक्लित्तौ अधिश्रयणाद्यधःश्रयणान्ते व्यापारे च शक्तिः[2] । तिप्प्रत्ययस्याश्रय एकत्वे वर्तमानकाले च शक्तिः[3] ।

चैत्रपदस्य चैत्रत्वादिविशिष्टे द्रव्ये शक्तिः,[4] सुविभक्तिस्तदर्थानुवादिका[5] । तण्डुलपदस्यापि तण्डुलत्वादिविशिष्टे शक्तिः,[6] अम्प्रत्ययस्य तु एकत्वे कर्मणि च सा[7] । तत्र व्यापारमुख्यविशेष्यकबोधवादिनामस्माकं मते तिङर्थस्याश्रयस्य[8] वृत्तित्वसम्बन्धेन वर्तमानकालस्य च अवच्छेद्यत्वसम्बन्धेन धात्वर्थे व्यापारेऽन्वयः । तिबर्थैकत्वस्य समवायसम्बन्धेनाश्रये,[9] तत्रैव च चैत्रपदार्थस्याभेदेनान्वयः[10] । अम्प्रत्ययार्थे कर्मणि अमर्थैकत्वस्य समवायेन, तण्डुलरूपप्रकृत्यर्थस्य चाभेदेन, कर्मणश्च वृत्तित्वसम्बन्धेन विक्लित्तौ, तस्याश्च अनुकूलत्व (जनकत्व) सम्बन्धेन व्यापारे इति चैत्राभिन्नैकाश्रयविशिष्टो वर्तमानकालविशिष्टः, तण्डुलाभिन्नैकत्वाश्रयकर्मविशिष्टविक्लित्तिविशिष्टश्च व्यापार इति बोध्यम् । वैशिष्ट्यस्य नियामका वृत्तित्वादिसम्बन्धा उक्ता एव ।

---

1. अत्र निबन्धे, प्र. स. ।
2. म. भा. १।३।१ ।
3. पा. सू. ३।४।६९; १।४।२२; ३।२।१२३ ।
4. अनुपदमेवात्र निबन्ध उक्तम् ।
5. पा. सू. २।३।४६ ।
6. अत्र निबन्धे, प्र. स. ।
7. पा. सू. १।४।२२; २।३।२ ।
8. म. भा. १।३।१ ।
9. "समानप्रत्ययोपात्तत्वात्" । (वै. भू. सा., द. टी.)
10. "तिङ्समानाधिकरणे प्रथमा" । (म. भा. २।३।४६)

मीमांसकनयेऽपि भावनामुख्यविशेष्यक एव । परन्तु तन्नये भावना द्विविधा– शाब्दी आर्थी च । सा च तिङर्थ एव । फलमात्रं धात्वर्थ इत्यादिप्रकारभेदो वर्तते । न्यायनये तु प्रथमाप्रकृत्यर्थमुख्यविशेष्यको बोधः । तिङर्थः कृतिः, फलव्यापारौ धात्वर्थौ इत्यादिः प्रकारभेदो भूयानस्ति । प्रकृते विस्तरदोषान्नोपन्यस्यते ।

**वाक्यस्फोटस्य ज्येष्ठत्वम्**

उक्तेषु प्रामाणिकेष्वष्टसु स्फोटेषु वाक्यस्फोट एव शब्दतत्त्वविदां तात्पर्यम्, तत्रापि वाक्यजातिस्फोटे, पूर्वपूर्वोपमर्देनैवोत्तरोत्तरोपन्यासात् । तथा च प्रथम-व्युत्पत्तेर्व्यवहाराधीनतया सम्पूर्णस्य वाक्यस्य विशिष्टेऽर्थे प्राथमिकः शक्तिग्रहः । स एव चैकादेशादिस्थले उक्तरीत्या विनिगमनाविरहेण कैश्चित् पररूपादिस्थले पूर्वलोपाद्यभ्युपगमेन च व्याकरणानां कलहे सति अवयवशक्तेर्दुरुपपादतया प्रमारूपः स्वीकार्यः । उक्तं च हरिणा–

**तत्र यन्मुख्यमेकेषां तत्रैतेषां विपर्ययः** ॥ इति ।
**ब्राह्मणार्थो यथा नास्ति कश्चिद् ब्राह्मणकम्बले ।**
**देवदत्तादयो वाक्ये तथैव स्युरनर्थकाः**[1] ॥ इति च ।

एवं स्थिते निपाता द्योतका विकरणा अनर्थका इत्यादिविचारोऽपि प्रक्रियाश्रित एव । आह च–

**अडादीनां व्यवस्थार्थं पृथक्त्वेन प्रकल्पनम् ।**
**धातूपसर्गयोः शास्त्रे धातुरेव तु तादृशः**[2] ॥ इति ।

तादृशोऽखण्ड इत्यर्थः । एवमेव नामार्थयोरभेदः संसर्गः, प्रत्ययार्थः प्रधानमित्यादिव्युत्पत्तयोऽपि प्रक्रियाश्रया एव । उक्तं च–

**किं गर्भजन्ये किं गर्भः कीदृग् भातीति नो मते ।**
**विचारः फलितः सर्वः प्रकृतिप्रत्ययाश्रयः** ॥ इति ।

आरोपितस्यापि पारमार्थिके उपायता न विरुद्धा, लिपि-स्थूलारुन्धती-शाखा-चन्द्रादीनां लौकिकदृष्टान्तानां पञ्चकोशावतरणादीनां शास्त्रान्तरसिद्धानां तादृशोपायानां सत्त्वात् । उक्तं च–

---

1. वा. प. २।१४ ।
2. वा. प. २।१८० ।

**शास्त्रेषु प्रक्रियाभेदैरविद्यैवोपवर्ण्यते ।**
**समारम्भात्तु भावानामनादिं ब्रह्म शाश्वतम्**[1] ॥ इति ।

तदेवमतिनिष्कर्षे वाक्यस्फोटः सिद्धान्तपथं परममायाति ।

**अत्र न्यायदर्शनपारदृश्वनां श्रीजयन्तभट्टानां समर्थनम्**

न्यायमञ्जर्यां श्रीमता जयन्तभट्टेन वाक्यस्फोटो बहु विमृष्टः । तथा हि–यदि निरवयवः स्फोटात्मा शब्दो भवति, वाक्यमपि शब्द एव तस्य पदात्मका अवयवा मा भूवन् । अवयवकल्पनायां हि यथा वाक्यस्यावयवाः पदानि, पदानामवयवा वर्णाः, एवं वर्णानामप्यवयवैर्भाव्यम्, तदवयवानामप्यवयवैरिति का व्यवस्था स्यात् ? वर्णेषु यद्यवयवकल्पनाविरामः, हन्त ! तर्हि वाक्य एव विरामः क्रियताम् । तथा चाहुः – "वाक्ये पदानामसत्त्वादसत्त्वम्, तदर्थे पदार्थानाम्, निरवयवौ वाक्यवाक्यार्थौ इति इति । वृद्धव्यवहाराद्धि शब्दस्यार्थे व्युत्पद्यन्ते व्युत्पित्सवः, तत्रास्य पदस्य प्रयोग एव न दृश्यते केवलस्य, व्यवहारानङ्गत्वात् । वाक्यं तु प्रयोगार्हमिति तत्रैव व्युत्पत्तिः, तत एवार्थसम्प्रत्ययः । अवयवप्रतिभासस्तु भ्रम एव । अर्थोऽपि नरसिंहाकारः । एवं पदार्थेभ्योऽन्य एव वाक्यार्थः, पानकादिवत् । यथा पानकं शर्करानागकेशर मरिचादिभ्योऽर्थान्तरमेव, यथा च सिन्दूरहरिताललाक्षादिभ्योऽर्थान्तरमेव चित्रम्, यथा वा षड्जर्षभगान्धारधैवतादिभ्योऽर्थान्तरमेव ग्रामरागः । तथा पदेभ्यो वाक्यम्, पदार्थेभ्यो वाक्यार्थोऽतिरिच्यत एव[2] ।

किञ्च, पदानां काल्पनिकत्वे बहवो युक्तयो दर्शिताः । तथा हि–नामाख्यातयोः साधारणवर्णदर्शनान्न नियतं तेषां रूपमिति काल्पनिकमेव । यथा–"काले नदन्ति नागाः" इत्यत्र हि कीदृशः पदविभागः कार्यः ? अर्थद्वयप्रसक्तेः । "किं कालेन कृष्णेन दन्तिना हस्तिना अगास्त्वम्" इत्येवमेतानि पदानि व्यवस्थाप्यन्ताम् ? अथ "काले समये नदन्ति शब्दायन्ते नागाः करिणः फणिनो वा" इति। किञ्च, दध्यत्र मध्वत्रेत्यादौ दधिमधुपदयोरिकारोकारयोरदर्शनेऽपि तदर्थबोधो भवति इत्येवमादिभिः पदपदार्थयोः काल्पनिकता स्फुटिता एव । सत्यं वाक्यमेव सत्यस्य वाक्यार्थस्य वाचक इति सिद्ध्यतीति दिक्[3] । अत्रोच्यते– इमाः सर्वा युक्तयो यद्यपि मञ्जरीकृता

1. वा. प. ३।१४।७८ ।
2. न्या. म., प्र. भा., पृ. ३४१ ।
3. न्या. म., प्र. भा., पृ. ३४१-३४२ ।

पूर्वपक्षतया प्रोक्ताः, तथापि अस्माकमनुगुणा इति प्रतिपदं गृहीताः । विपरीताश्च सर्वा अस्मदूहितपूर्वयुक्तिभिः खण्डितप्राया एवेति नेह प्रतन्यन्त इति ।

**शब्दप्रमाणस्य प्रमाणान्तरापेक्षया बलाबलविचारः**

निरूपितं तावत् स्फोटप्रमाणस्य स्वरूपं तद्भेदानां च । अथेदं विचार्यते– यदेकस्मिन्नेव घटादिविषये प्रत्यक्षस्य शाब्दस्य च सामग्री युगपदुपस्थिता स्यात् तत्र का प्रमा उत्पद्येत इति ।

तत्र प्रत्यासत्त्या लाघवाच्च प्रत्यक्षप्रमैव भविष्यतीति ब्रूमहे । यदा तु घटविषयकप्रत्यक्षसामग्रीकाले पटोऽस्तीति वाक्यजन्यविभिन्नविषयकशाब्दबोधसामग्री उपस्थिता, तदा का प्रमा भवेदिति विमर्शे तु शाब्दी एवेति निश्चिनुमः । उपपत्तिप्रकारस्तु एतद्विषयविवेचनेऽनुपदमेवोच्यते ।

एवं च तद्विषयकप्रत्यक्षं प्रति विभिन्नविषयकशाब्दसामग्री प्रतिबन्धिका इति प्रतिबन्ध्यप्रतिबन्धकभावः सम्पद्यते–इति प्रथमा कक्ष्या । तत्रापि प्रत्यक्षं मे जायता-मिति प्रत्यक्षेच्छाया उत्तेजकतया प्रत्यक्षेच्छाविरहविशिष्टा सती सा सामग्री प्रतिबन्धिका– इति द्वितीया कक्ष्या । तत्रापि घटप्रत्यक्षे कार्ये पटप्रत्यक्षं मे जायतामिति पटप्रत्यक्षेच्छा न उत्तेजिकेति प्रातिस्विकरूपेण तत्तद्विषयप्रवेशेन प्रतिबन्ध्यप्रतिबन्धकभावोऽनिर्वाच्यः । यथा– घटविषयकप्रत्यक्षं प्रति घटविषयक-प्रत्यक्षेच्छाविरहविशिष्टा या घटेतरपटादिविषयकशाब्दसामग्री सा प्रतिबन्धिका–इति तृतीया कक्ष्या सम्पद्यते । ध्वनितं चैतद् व्युत्पत्तिवादे श्रीगदाधरभट्टाचार्येण[1] ।

अनुमितिशाब्दसामग्र्योर्यौगपद्ये तु समानविषयकस्थले शाब्दसामग्र्या विभिन्न-विषयकस्थलेऽनुमितिसामग्र्याः प्राबल्यमिति निष्कर्षः । तथा हि–

बुभुत्सिते ह्येकस्मिन्नर्थे विजातीयानुभवसामग्र्योः सन्निपाते यदि कोऽप्यनुभवो जायमानः सन् अर्थबुभुत्सां शमयन्निष्टं सम्पादयेत्, तदा यत्सामग्र्या लघुत्वम्, तस्यैवानुभवस्य सामग्र्याः प्राबल्यम् । विभिन्नेऽर्थे च तादृशसामग्र्योः सन्निपाते यद्येक एवानुभव इष्टः, तदा गुरुसामग्रीसम्पाद्य एव पूर्वं भवतु–इति तत्सामग्र्या एव प्राबल्यम्, अन्यथा लघुसामग्रीसम्पादनमपेक्ष्य पुनस्तत्सम्पादने गौरवं ध्रुवं स्यात् । योग्यविभुविशेषगुणानां युगपदवस्थानासम्भवेनैककाले द्वयोरुत्पत्तिस्तु नैव सम्भवति । तथा चान्वयव्यतिरेकसहचारव्याप्तिग्रहाद्यपेक्षमाणानुमितिसामग्रीतः शाब्दसामग्र्या

---

1. व्यु. जया., पृ. १३७-३८ ।

लघुभूतायाः समाने विषये प्राबल्यम् । प्रत्यक्षसामग्र्या लघुभूतायाः समानविषयिकायामनुमितौ शाब्दबुद्धौ च प्राबल्यम् । विभिन्नविषयके शाब्दबोधे चानुमितिसामग्र्यास्तादृशे प्रत्यक्षे च शाब्दसामग्र्याः प्राबल्यं (प्रतिबन्धकत्वं) क्लृप्तम् । स्फुटश्चायं प्रकारो व्युत्पत्तिवादीये सर्वतन्त्रापरतन्त्रमिथिलामण्डलमण्डनश्रीधर्मदत्त-(बच्चा झा) सूरिविरचिते गूढार्थतत्त्वालोके[1] ।

**वस्तुतस्तु ज्ञानानां यौगपद्यमपि**

वस्तुतस्तु शाब्दिकनये एतयोः सामग्र्योर्न बलाबलविचारः कार्यः, किन्तु ताभ्यां ज्ञानद्वयस्य युगपदप्युत्पत्तिः सम्भवति । दीर्घशष्कुलीभक्षणेऽपि शष्कुल्याः चाक्षुषरासनस्पार्शनघ्राणजानि प्रत्यक्षाणि युगपदपि कर्तुं शक्यानि पातञ्जलमतेऽन्तःकरणस्य व्यापकत्वात् । न चैवं "वैयाकरणानां शाकटायनो रथमार्गे आसीनः शकटसार्थं नोपलेभे" इति भाष्यविरोध इति वाच्यम् । अन्तःकरणस्य व्यापकत्वेऽपि तत्परिणामविशेषस्य मनसो मध्यमपरिमाणतया सङ्कोचविकासशालितया च कदाचिदेव ज्ञानयौगपद्यं न सर्वदा इति स्वीकारेणादोषात्[2] ।

लघुशब्देन्दुशेखरमधिकृत्य जगन्मान्यपाण्डित्यातिशयपाणिन्यवतारभूतास्मद्गुरुवरश्रीत्रिपाठिचरणानां परमगुरुवरशारदावतारश्रीबालशास्त्रिचरणानां चाशयं प्रकाशयन्त्यां वरवर्णिन्यां[3] टीकायामप्यस्य प्रतिबन्ध्यप्रतिबन्धकभावस्य निराकरणं समीचीनयुक्तिभिः कृतमित्यलं बहुविस्तरेण ।

**॥ इति शब्दसमीक्षायां चतुर्थं पुष्पम् ॥**

●

1. गूढा., व्यु., प्रथमाकार., पृ. ८३ ।
2. म. भा., उ. ३।२।११५ ।
3. ल. श. शे., वर. टीका, "षष्ठी शेषे" इति सूत्रे, पृ. ७४५-४६ ।

# ॥ अथार्थापत्तिसमीक्षायां प्रथमं पुष्पम् ॥

पूर्वप्रकरणे प्रमाणभूतशब्दस्य स्फोटरूपताऽभ्युपगता । तत्र स्फोटकल्पनायां शक्त्याश्रयत्वान्यथानुपपत्तिर्या मानत्वेनोपदर्शिता, सैव तु अर्थापत्तिः । किञ्च, व्याकरणशास्त्रे यत्र यत्रोच्यते, व्यर्थीभूयेदं पदं सूत्रं वा एतज्ज्ञापयति, तत्र तत्र प्रायस्तज्ज्ञापनमर्थापत्तिरूपा प्रमा, ज्ञापकं त्वर्थापत्तिरूपं प्रमाणम् । किञ्चात्र शास्त्रे क्वचिदप्यस्याः प्रतिषेधो न कृतः, अपि तु बहुत्र समादर एव विहित इति शब्द-प्रमाणसमीक्षानन्तरमुपोद्घातसङ्गत्या अर्थापत्तिसमीक्षां कर्तुं प्रयत्यते ।

**अर्थापत्तिप्रमाणलक्षणम्**

तत्रादावस्य प्रमाणस्य लक्षणमेव समीक्ष्यते, तथा सत्येवैतद्विषये उक्तं वक्ष्यमाणं च सङ्गतं भवितुमर्हति ।तत्र–उपपाद्यज्ञानेनोपपादककल्पनमर्थापत्तिरूपप्रमाया लक्षणम् । तत्करणं चोपपाद्यज्ञानमिति "उपपाद्यज्ञानत्वम्" अर्थापत्तिप्रमाणस्य लक्षणम् । केनचिद् विना यदनुपपन्नं तत्तत्रोपपाद्यम् । यस्याभावे कस्यचिदनुपपत्तिस्तत्तत्रोपपादकम् । 'यदा रात्रिभोजनेन विना दिवा भुञ्जानस्य पीनत्वमनुपपन्नम्' इति तादृशपीन-त्वमुपपाद्यम्, रात्रिभोजनं च तदुपपादकम् । रात्रिभोजनकल्पनारूपायां प्रमायामर्थ-स्यापत्तिः कल्पना इति षष्ठीतत्पुरुषेणार्थापत्तिशब्दो वर्तते । तत्कल्पनाकरणे पीन-त्वादिज्ञानेऽर्थस्यापत्तिः कल्पना यस्मादिति बहुव्रीहिसमासेन वर्तत इति फलकरणयोः (प्रमाप्रमाणयोः) उभयोस्तत्पदप्रयोग आञ्जस्येन सङ्गच्छते । सङ्केतितं चैतल्लक्षणमु-दाहरणं च "अदर्शनं लोपः" इति सूत्रभाष्ये प्रदीपं विवृण्वता श्रीनागोजिभट्टेन– "किञ्चानुपपद्यमानेन स्वोपपादकमाक्षिप्यते, यथा पीनत्वेन रात्रिभोजनम्"[1] इति । वेदान्तदर्शनानुमोदितमप्येतत्सर्वम्[2] ।

---

1. म. भा., प्र., उ., १।१।५९ ।
2. वे. प., अर्था. परि. ।

### अर्थापत्तिप्रमाणे व्यापारसमीक्षा

अत्र प्रमाणे यद्यपि व्याकरणदर्शने व्यापारस्य सङ्केतो मनागपि न कृतः, तथापि अनुमितिप्रमायां यथा व्याप्त्यनुभवाहितो व्याप्तिसंस्कार एवोद्‌बुद्धः सन् व्याप्तिज्ञान-रूपानुमानस्य व्यापारतया स्वीक्रियते वेदान्तिभिः, तथैवात्राप्युपपाद्यज्ञानजन्य उद्‌बुद्ध-संस्कार एव व्यापारतया स्वीकरणीयः । उपपाद्यपीनत्वाद्यनुभवाहिते तत्संस्कारे उद्‌बुद्धे सत्येवोपपादकस्य रात्रिभोजनादेः कल्पनासम्भवात् । यत्र च पीनत्वादि-स्मरणात्तत्कल्पना, तत्रापि संस्कारस्यैव व्यापारत्वम् । न हि स्मृतेः संस्कारनाशकत्व-नियमः, स्मृतिधाराया अप्यनुभवसिद्धत्वात् । एवं च तत्संस्कारस्य व्यापारत्वम्, तदुद्बोधस्य तु कारणतावच्छेदकत्वमित्येव पन्था रमणीयः, वेदान्तदर्शनसम्मतश्च[1] ।

### उक्तप्रमाणे सूत्रकारसम्मतिः

"उपात् प्रतियत्नवैकृतवाक्याध्याहारेषु च" इति सूत्रे[2] वाक्याध्याहारपदं गृहीत-वता सूत्रकृता श्रीपाणिनिना स्फुटमेवास्य प्रमाणस्याभ्युपगमः कृतोऽस्ति । तत्र हि वाक्याध्याहारो नाम आकाङ्क्षितैकदेशपूरणम् । तत्र येनाकाङ्क्षितैकदेशेन विना यदनुपपन्नं तदुपपाद्यम्, तज्ज्ञानेन तादृशैकदेशकल्पनमेव तत्पूरणम्, तदेव चार्थापत्तिः । यथा –"आदिरन्त्येन सहेता" इत्येतत्सूत्रात्मकं वाक्यमवयवत्वेन बोधकाद्यन्तशब्द–घटितमिति समुदायत्वेन बोधकैकदेशभूतशब्दं नित्यमाकाङ्क्षति, तं विना अनुपपद्यमानत्वादिति तादृशैकदेशभूतपदकल्पनमेवार्थापत्तेः फलम् । अत एव समुदायस्य संज्ञा इति वाक्यार्थलाभ उक्तसूत्रस्य[3] ।

### उक्तप्रमाणे महाभाष्यकारसम्मतिः

भाष्यकृत्पतञ्जलिरपि बहुत्रास्य प्रमाणस्य सङ्केतं कुर्वन् प्रमाणमेतत् सुष्ठु सम्मन्यते, यथा–"अचः परस्मिन्." इति सूत्रे 'कल्प्यो हि वाक्यशेषो वाक्यं वक्तर्यधीनं हि' इति ब्रुवाणो वाक्यशेषकल्पनं सूत्रकारवत् प्रतिपादयत्येव । तथा हि–"अथवा वतिनिर्देशोऽयम् । कामचारश्च वतिनिर्देशे वाक्यशेषं समर्थयितुम् । तद्यथा–"उशीनरवन्मद्रेषु यवाः सन्ति, न सन्ति इति । मातृवदस्याः कलाः सन्ति, न सन्ति इति । एवमिहापि स्थानिवद् भवति, स्थानिवन्न भवति–इति वाक्यशेषं

---

1. टी., म. प्र., शि. म., वे. प., अर्था. परि., पृ. २७० ।
2. पा. सू. ६।१।१३९ ।
3. प्रौ. म., श. र., संज्ञाप्रक. ।

समर्थयिष्यामहे" इत्यवादीद् भगवान् भाष्यकारः । तत्र–यद्यपि 'काममतिदिश्यताम्' इति पूर्वोक्त्या 'सन्ति न सन्ति' इत्युत्तरोक्त्या चोपपाद्योपपादकभावमन्तरैव वाक्य-शेषोऽत्र कल्प्यत इत्येव आपाततः प्रतीयते । ततश्च नास्त्येतदर्थापत्तेरुदाहरण-मित्यायाति । तथापि–"येनोपमाने यवानां सत्ताऽवगता, स सन्तीति वाक्यशेषं कल्पयति । असत्ताऽवगतौ न सन्तीति । एवमस्यापि लक्षणस्य प्रतिलक्ष्यं भेदात् क्वचिद् भावोऽतिदिश्यते, क्वचिदभावः" इति प्रदीपग्रन्थेनार्थापत्तेः सुदृढमुदाहरण-मिदं प्रतीयते[1] ।

अयं भावः – य उशीनरे यवाः सन्तीति ज्ञानवान् स उपमेये मद्रे यवाः 'सन्ति' इत्येव कल्पयति । तस्य कृते सन्तीत्येतद् विना वाक्यस्यानुपपद्यमानत्वात् । यश्चोपमाने यवानां सत्तां नावगतवान्, तत्कृते तु 'न सन्ति' इत्यध्याहार आवश्यकः । तदध्या-हारमन्तरा तत्कृते तस्य वाक्यस्यानुपपद्यमानत्वात् ।

एवमेव प्रतिलक्ष्यं लक्षणोपप्लवे यस्मिन् लक्ष्ये 'भवति' इत्येतदध्याहारमन्तरा सूत्रं नोपपद्यते, तत्र तस्यैवाध्याहारः (कल्पना) । यथा 'पट्व्या मृद्व्या' इत्यादौ स्थानिनि सति यणादेशो भवति तथा आदेशेऽपि भवति । 'वाय्वोः' इत्यत्र स्थानिनि यलोपो न भवति, एवमादेशेऽपि न भवति इति तत्र 'न भवति' इत्येतदध्याहारं विनानुपपन्नं सूत्रं तस्य कल्पनं कारयति–इत्येवमन्तर्विमर्शेऽर्थापत्तिरत्र तिष्ठत्येव ।

एवम् "बहुगणवतुडति संख्या" इति सूत्रे भाष्यम्–"अर्थात् प्रकरणाद्वा लोके कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्ययो भवति, अर्थो वाऽस्यैवंसंज्ञकेन भवति" इति । अत्र प्रदीपः – "अर्थः सामर्थ्यम् । यथा 'गोपालकमानय माणवकमध्यापयिष्यति' इति यष्टिहस्तस्याध्यापनासम्भवात् संज्ञिनो ग्रहणम्" इति ।

अत्रोद्द्योतः–"अर्थः सामर्थ्यम्, तदेव दर्शयति–अर्थो वास्येति । अस्य वाक्यस्यार्थोऽध्यापनादिरूपं प्रयोजनमेवंसंज्ञकेन भवति, तत्रास्यैव सामर्थ्यमित्यर्थः"[2] इति ।

अत्राध्यापनरूपं प्रयोजनमनुपपन्नं सत् स्वोपपादकं गोपालकसंज्ञकं कञ्चन विद्वांसं ग्राहयति–इत्यर्थापत्तेः स्फुटं स्वरूपं चित्रितमस्ति–इति ग्रन्थत्रितयालोकनेन प्रतीयते ।

---

1. म. भा. प्र. १।१।५६ ।
2. म. भा., प्र. उ. १।१।२२ ।

"अनभिहिते" इति सूत्रेऽपि भाष्यम्–"अर्थतो व्यवस्था भविष्यति"[1] इति । ततोऽपि एतत् प्रमाणं सम्मान्यते ।

"परश्च" इति सूत्रेऽपि भाष्यम्–'प्रत्ययविधानानुपपत्तिस्तु तस्मात्तत्र पञ्चमी-निर्देशात् सिद्धम्"[2] इति । तत्र पञ्चमीनिर्देशं विना प्रत्ययविधानमनुपपन्नं सत् तमाक्षेप्स्यति–इति भावः । "ठस्येकः" इति सूत्रेऽपि–"अर्थाद् विभक्तिविपरिणामो भविष्यति । तद्यथा–'उच्चानि देवदत्तस्य गृहाणि, आमन्त्रयस्वैनम् । देवदत्तमिति गम्यते" इति वदता भाष्यकारेणास्य प्रमाणस्य सुष्ठु समर्थनं कृतम्[3] ।

"नमुने" इति सूत्रे तु प्ररोचकाख्यानेनार्थापत्तेः स्वरूपं चित्रितम् । यथा हि–"अथवा वृद्धकुमारीवाक्यवदिदं वाक्यं द्रष्टव्यम् । तद्यथा वृद्धकुमारी इन्द्रेणोक्ता वरं वृणीष्वेति । सा वरमवृणीत–'पुत्रा मे बहुक्षीरघृतमोदनं कांस्यपात्र्यां भुञ्जीरन्' इति । न च तावदस्याः पतिर्भवति, कुतः पुत्राः कुतो वा गावः, कुतो वा धान्यम् ? तत्रानया एकेन वाक्येन पतिः, पुत्राः, गावो धान्यमिति सर्वं सङ्गृहीतं भवति । एवमिहापि नेऽसिद्धत्वप्रतिषेधं ब्रुवता नाभावोऽपि संगृहीतो भवति" – इत्युक्तम् ।

अत्र प्रदीपः – "अथवेति । अशब्दार्थस्यापि नान्तरीयकत्वादुपादानं दृश्यते, यथा 'अग्निरानीयताम्' इत्युक्ते अचोदितमपि पात्रानयनमग्न्यानयनेऽन्तर्भवति । एवमिहापि नेपरतः प्राप्तं कार्यं प्रति मुभावस्य सिद्धत्वं ब्रुवताऽर्थान्नेऽपि कर्तव्ये सिद्धत्वमाश्रितम्" इति ।

अत्रोद्द्योतः – "नान्तरीयकत्वादिति । पूर्वमनुमानादर्थान्तरसङ्ग्रहः, इदानीं तु नान्तरीयकत्वादिति भेदः"[4] इति ।

अत्र प्रदीपोद्द्योतयोर्नान्तरीयकपदमविनाभूतरूपोपपाद्यपरमेव लक्षणया पुनरुप-पाद्यज्ञानपरम् । अतश्च नेपरतः प्राप्तं कार्यं प्रति मुभावस्य सिद्धत्वमत्रोपपाद्यम्, तज्ज्ञानं प्रमाणम् । नाभावेऽपि कर्त्तव्ये मुभावस्य सिद्धत्वमुपपादकं तत्कल्पन-मत्रार्थापत्तिः प्रमा ।

---

1. म. भा. २।३।१ ।
2. म. भा. ३।१।२ ।
3. म. भा. ७।३।५१ ।
4. म. भा., प्र. उ. ८।२।३ ।

न च प्रमाणान्तरलब्धस्यास्यार्थस्य शाब्दबोधे कथं प्रवेश इति वाच्यम् । आदिरन्त्येनेत्यादाविव शब्दाध्याहारस्यैवात्र व्याकरणशास्त्रे स्वीकृतत्वेन दोषाभावात् । वाक्याध्याहारवादिना सूत्रकृता[1], वाक्यशेषकल्पनावादिना भाष्यकृता[2] चास्य पक्षस्यैव सम्मतत्वाच्च ।

**साक्षादर्थापत्तिशब्देनात्र शास्त्रे सम्मतिः**

किं बहुना, महामहोपाध्यायश्रीकैयटनागेशाभ्यां त्वर्थापत्तिशब्देनैवास्य प्रमाणस्य समर्थनं कृतम् । यथा–"युवा खलति." इति सूत्रे भाष्यम्–"अयुक्तोऽयं निर्देशः । समानाधिकरणेनेति वर्तते । कः प्रसङ्गो यद् व्यधिकरणानां समासः स्यात् ? एवं तर्हि ज्ञापयत्याचार्यः – यथाजातीयकमुत्तरपदं तथाजातीयकेन पूर्वपदेन समासो भवति" इति ।

अत्र प्रदीपः – "अयुक्त इति । पुंल्लिङ्गस्य स्त्रीलिङ्गेन सामानाधिकरण्यं नोपपद्यत इत्यर्थापत्त्या परिभाषा ज्ञाप्यते । तेन 'युवतिर्जरती' इति स्त्रीलिङ्गयोः समासः"[3] इति ।

अत्र कैयटेन स्फुटमेतत्पदेनैतत्प्रमाणं समर्थितम् । यथा च–"नित्येषु शब्देष्वागमविधानानुपपत्त्या अर्थापत्तिमूलकवाक्यान्तरकल्पनेनेड्रहितबुद्धिप्रसङ्गे सेड्बुद्धिः कर्तव्येति" इति परिभाषेन्दुशेखरः[1] । अनयोक्त्या श्रीनागेशस्यापि स्पष्टं समर्थनं पश्यन्तु ।

**अर्थापत्तिभेदसमीक्षा**

अथ कतिधा इयमर्थापत्तिरिति विमृश्यते । तत्र दृष्टार्थापत्तिश्रुतार्थापत्तिभेदत इयं द्विविधा उक्ता पूर्वोत्तरमीमांसादर्शनयोः । तथा हि–"अर्थापत्तिरपि यत्र दृष्टः श्रुतो वार्थोऽन्यथा नोपपद्यते–इत्यर्थकल्पना"[5] इति शबरस्वामी । वार्त्तिककृताऽपीयं द्विविधाऽनुमोदिता । दृष्टार्थापत्तिश्च पुनः पञ्चविधा प्रोक्ता । तथा च–

**प्रमाणषट्कविज्ञातो यत्रार्थो नान्यथा भवेत् ।**
**अदृष्टं कल्पयेदन्यं सार्थापत्तिरुदाहृता ॥**

---

1. पा. सू. ६।१।१३९ ।
2. म. भा. १।१।५६ ।
3. म. भा., प्र. २।१।६६ ।
4. प. शे., १ प्रक., परि. ११ ।
5. शा. भा. १।१।५ ।

**पीनो दिवा न भुङ्क्ते चेत्येवमादिवचः श्रुतौ ।**
**रात्रिभोजनविज्ञानं श्रुतार्थापत्तिरुच्यते[1] ॥ इति ।**

अत्रोत्तरश्लोके श्रुतार्थापत्तेर्निर्देशात् पूर्वश्लोके दृष्टार्थापत्तिर्ग्राह्या । तत्र यद्यपि प्रमाणषट्कविज्ञातोऽर्थो दृष्टोऽर्थ इति भवति । तथाप्युत्तरत्राऽऽगमप्रमितस्य श्रुतस्य कथनादागमातिरिक्तप्रमाणपञ्चकविज्ञातस्यैव दृष्टपदेन ग्रहणं बोध्यम् ।

उत्तरमीमांसायामपीयं द्विविधा सोदाहरणं विविक्ताऽस्ति । तथा हि–चक्षुरादिना ज्ञातो (दृष्टः) योऽर्थस्तेनापत्तिरुपपादककल्पनं दृष्टार्थापत्तिः, यथा–"इदं रजतमिति पुरोवर्तिप्रतिपन्नरजतनिष्ठो यो नेदं रजतमिति निषिध्यमानत्वरूपोऽर्थः सोऽनुपपद्यमानोऽस्ति रजतमिथ्यात्वकल्पनमन्तरा" इति, तेन स्वोपपादकं मिथ्यात्वस्य कल्पनं क्रियते । एवमेव श्रुतवाक्यार्थानुपपत्त्या उपपादककल्पनं श्रुतार्थापत्तिः' यथा–"शतवर्षजीविदेवदत्तो गृहे नास्ति" इति वाक्यश्रवणोत्तरं जीविनो देवदत्तस्य गृहासत्त्वं बहिःसत्त्वं विनानुपपन्नं सत्तत् कल्पयति ।

'पीनोऽयं देवदत्तो दिवा न भुङ्क्ते' इत्यत्र तु यद्येतद्वाक्यश्रवणोत्तरं दिवा अभुञ्जानस्य पीनत्वमनुपपन्नं ज्ञात्वा रात्रिभोजनं कल्प्यते, तदा श्रुतार्थाऽऽपत्तिः । यदि शब्देतरप्रमाणेन दृष्टस्य ज्ञातस्य तादृशपीनत्वरूपार्थस्यानुपपत्त्या रात्रिभोजनं कल्प्यते, तदा दृष्टार्थापत्तिरिति विवेकः[2] ।

## दृष्टार्थापत्तिस्त्रिविधा

यद्यपि पूर्वमीमांसायां दृष्टार्थाऽऽपत्तेः पञ्चविधत्वमुक्तम् । तन्मते शब्दातिरिक्तानां प्रत्यक्षानुमानोपमानार्थापत्त्यनुपलब्धिरूपाणां पञ्चानां प्रमाणानां सत्त्वात् । व्याकरणदर्शने तु उपमानानुपलब्ध्योः प्रमाणत्वस्य निराकृतत्वात् त्रिविधात्वमेवार्थापत्तेः सिद्धान्तितम् । तत्र प्रत्यक्षपूर्विका अर्थापत्तिर्यथा–जीविनो देवदत्तस्य गृहासत्त्वं प्रत्यक्षप्रमाणेनावगत्य बहिःसत्त्वस्य कल्पनम् । यद्यपीदं श्रुतार्थापत्तेरुदाहरणतयाऽनुपदमेवोक्तम्, तथापि वाक्यश्रवणोत्तरं शब्दप्रमाणेन गृहासत्त्वज्ञानदशायां तदिति न तद्विरोधः ।

अनुमानपूर्विका यथा–देशान्तरप्राप्तिलक्षणेनानुमानेनावगतस्य आदित्यगमनस्यानुपपत्त्या ईश्वरेच्छादिरूपकारणकल्पनम् । अर्थापत्तिपूर्विका तृतीया, यथा–"टिड्ढा-

---

1. श्लो. वा. ५।५१ ।
2. वे. प., म. प्र. च, अर्था. परि. ।

णञ्." इति सूत्रेऽनुपसर्जनाधिकारो व्यर्थीभूय तदन्तविधिं कल्पयति । कल्पितेऽपि तस्मिन्ननुपसर्जनं यदि प्रधानीभूतस्य तस्य तदन्तस्यैव विशेषणं स्यात्, तदा पुनरप्यनुपपन्नमेव । 'बहुकुरुचरा' इत्यत्र तदन्तस्यानुपसर्जनतया पुनरपि ङीबापत्त्या तस्य व्यावर्त्यत्वाभावात् । अस्मिन्नेवावसरे यावता विनाऽनुपपन्नं तावत्सर्वं ज्ञाप्यमिति नियम उच्यते शाब्दिकैः, स त्वर्थापत्तिपूर्वकार्थापत्तेरेवाकारः । एवं चानुपसर्जनाधिकारः पुनरनुपपन्नः सन् "श्रुताऽनुमितयोः श्रुतसम्बन्धो बलवान्" इति नियमं कल्पयति । स्वस्य च श्रुतविशेषणत्वं संघटयति[1] । यद्यप्यर्थापत्त्याऽवगतस्तदन्तविधिः प्रकृते नानुपपन्नः, अपि तु सोऽधिकार एवेत्युच्यते, तथापि तदन्तविशेषणतापन्नस्यास्यानुपपत्तौ विशिष्टस्य तदन्तस्याप्यनुपपत्तिरेव । यतो हि–बहुकुरुचरेति प्रयोगे ङीपं व्यावर्तयितुमनेन तदन्तविधिर्ज्ञापितः । तत्कार्यं त्विदानीमप्येतद्विशिष्टे तदन्ते स्वीकृतेऽपि नोपपन्नमिति हृदयम् । अत्र प्रथमा अर्थापत्तिः श्रुतार्थापत्तिः, वाक्यश्रुतौ सत्यां तस्याः प्रवृत्तेः । द्वितीया तूक्ता दृष्टार्थापत्तिरिति विवेकः ।

### श्रुतार्थापत्तिर्द्विविधा

अभिधानानुपपत्तिरभिहितानुपपत्तिश्चेत्येवं श्रुतार्थापत्तिर्द्विविधा । यत्र वाक्यैकदेशश्रवणे सत्यन्वयाभिधानानुपपत्त्यान्वयाभिधानोपयोगि पदान्तरं कल्प्यते, तत्राद्या[2] । यथा–'द्वारमित्युक्ते पिधेहि' इति पदान्तरकल्पनम् । यथा च–"अचः परस्मिन्." इति सूत्रे भाष्ये वाक्यशेषकल्पनम्[3] । "आदिरन्त्येन सहेता" इत्यादौ समुदायादिपदान्तरकल्पनम्[4] ।

अभिहितानुपपत्तिस्तु–यत्र वाक्यावगतोऽर्थोऽनुपपन्नतया ज्ञातः सन्नर्थान्तरं कल्पयति, तत्र बोध्या । यथा–'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यत्र स्वर्गसाधनत्वस्य क्षणिकयागगततया अवगतस्यानुपपत्त्या मध्यवर्त्यपूर्वं कल्प्यते[5] । "नमुने" इति सूत्रीयमुक्तं भाष्यं वृद्धकुमारीवाक्यवदिदमित्यादि दृष्टान्तरूपं दार्ष्टान्तिकरूपं चोभयमप्यस्या एवोदाहरणम्[6] । शब्दकौस्तुभे श्रीभट्टोजिदीक्षितेनापि प्रतिपदमस्याः सङ्केतः कृतोऽस्ति । तत्र हि–केवलविधानेऽपि "यदिह परिनिष्ठितं तत्साधु" इति

---

1. ल. श. शे., स्त्रीप्रत्ययप्र., अनु. ।
2. वे. प., अर्था. परि. ।
3. म. भा. १।१।५६ ।
4. म. भा. १।१।७० ।
5. वे. प., अर्था. परि. ।
6. म. भा. ८।२।३ ।

श्रुतार्थापतिं प्रकल्प्य "वाक्यात् साधुत्वसिद्धेश्च"[1] इत्युक्तम् । इयमभिहितानुपपत्तिरेव तत्तत्सूत्रात्मकवाक्यैः साधुत्वरहितवृद्ध्यादिविधाने ज्ञातस्य तदर्थस्यानुपपन्नतया साधुत्व-कल्पना । अन्यथा साध्वनुशासनभङ्गप्रसङ्गः स्यात् ।

"ईदूदेत्." इति सूत्रेऽपि शब्दकौस्तुभेऽस्याः स्फुटतया सङ्केतो लभ्यते । तत्र हि–"यत्तूक्तं प्लुतः प्रकृत्या इत्येतदेव ज्ञापकम् इति, तन्न, प्लुतशब्देन स्थानिनो लक्षणया सर्वसामञ्जस्यात् । न चैवं लक्षणैव दोष इति वाच्यम् । श्रुतार्थापत्ति-मूलकवाक्यान्तरकल्पनापेक्षया लक्षणाया एवाभ्यर्हितत्वात्"[2] इत्युक्तम् ।

अत्र "प्लुतः प्रकृत्या स्यादचि" इति वाक्यार्थोऽवगतः सन्ननुपपन्न एव, प्लुतरूप-स्योद्देश्यस्यासिद्धत्वादिति तस्य सिद्धत्वं कल्पयतीति श्रुतार्थापत्तिः स्फुटा । एवमेव सर्वेषां ज्ञापकानामर्थापत्तित्वं बोध्यम् । प्रकृते लक्षणया निर्वाहे प्रमाणान्तरानपेक्षत्व-रूपं लाघवमिति लक्षणासचिवेन शब्दप्रमाणेनैव निर्वाह इति भावः । व्याकरणशास्त्रे शब्दस्य नित्यत्व-विभुत्वादिविशिष्टस्फोटरूपत्वकल्पनाऽपि एतदर्थापत्तिप्रसूतैव । तत्क-ल्पनामन्तरा कोऽपि वाक्यार्थोऽवगतो न भवेत् । 'भवति चावगत' इति वाक्य-जन्यावगतिरेवानुपपन्ना सती शक्त्याश्रयीभूतं तादृशं स्फोटतत्त्वं कल्पयति । तादृश्या अवगतेरनुपपन्नत्वेऽवगतिविशिष्टोऽर्थोऽप्यनुपपन्न एवेति लक्षणसमन्वयः स्फुटः । अर्थबोधरूपकार्यस्यानुमानादिनावगतस्यानुपपन्नत्वज्ञानेन तादृशस्फोटकल्पने तु दृष्टार्था-पत्तिरेवेति सिद्धान्तः ।

आचार्यश्रीहरिणाऽपि बहुत्रास्याः सङ्केतः कृतः । यथा–

**यथैवात्यन्तसंसृष्टस्त्यक्तुमर्थो न शक्यते ।**
**तथा शब्दोऽपि सम्बन्धी प्रविवेक्तुं न शक्यते**[3] ॥ इति ।

टीकाकृताऽपि–"विवक्षितार्थेन सहाविवक्षितस्याप्यर्थस्य नान्तरीयकस्य प्रतीतिः" इत्युच्यते । स्फुटमनेन श्रुतार्थापत्तिः समर्थिता ।

### अर्थापत्तेः प्रामाण्ये आक्षेपः

न्यायदर्शनविदस्त्वर्थापत्तिप्रमाणं व्यतिरेकव्याप्तिज्ञानेनानुमानेन गतार्थयन्ति । तथा हि–"पीनो देवदत्तो दिवा न भुङ्क्ते" इत्यादौ पीनत्वस्य भोजनव्याप्यत्वावगमाद् भोजनसिद्धौ दिवाभोजनबाधे रात्रिभोजनं सिद्ध्यति ।

---

1. श. कौ. १।१।१ ।
2. श. कौ. १।१।११ ।
3. वा. प. २।३०२ ।

अयं भावः – इदमनेन विनानुपपन्नमिति ज्ञानमर्थापत्तौ करणम् । तत्र तेन विनाऽनुपपन्नत्वं च तदभावव्यापकाभावप्रतियोगित्वरूपम्, तदेव च व्यतिरेकव्याप्तिः । प्रकृते च दिवाभोजनरात्रिभोजनान्यतराभावव्यापकीभूताभावप्रतियोगिपीनत्वमिति व्यतिरेकव्याप्तिज्ञानात् परामर्शद्वारा दिवाभोजनरात्रिभोजनान्यतरानुमितौ शब्दतः प्रत्यक्षतो वा दिवाभोजनबाधे सति रात्रिभोजनं विधेयतया विषयो भवति । अथवा 'पीनो देवदत्तो रात्रिभोजी, दिवाऽभुञ्जानत्वे सति पीनत्वात्' इत्येवं दिवाभोजन-बाधमन्तरैवानुमानेऽन्तर्भावः सम्भवति । व्यतिरेकव्याप्तिदर्शनं च मासोपवासिनि तापसादौ कर्तव्यमिति[1] ।

### उक्ताक्षेपनिरासे वेदान्तदर्शनम्

न्यायनयज्ञैः कृतमर्थापत्तिप्रत्याख्यानं वैदान्तिकैर्न सह्यते । तथा हि–अन्वय-व्याप्त्यज्ञानेनान्वयिनि नास्य अन्तर्भावः । व्यतिरेकिणस्त्वनुमानत्वमेव नास्मन्मते सम्भवति । अत एवार्थापत्तिस्थलेऽनुमिनोमि इति नानुव्यवसायः, किन्तु अनेनेदं कल्पयामि इत्यादि-नानायुक्तिभिरस्याः समर्थनं कृतम्[2] ।

### उक्ताक्षेपनिरासे पूर्वमीमांसादर्शनम्

पूर्वमीमांसादर्शने प्रमाणद्वयविरोधोऽनुपपत्तिस्तज्ज्ञानं करणम्, तत्करणकमर्था-पत्तिज्ञानम् । यथा–गणितागममूलेनानुमानेन देवदत्तो गृहे बहिर्वा क्वचिज्जीवति इति साधारण्येनावगम्यते । तस्य गृहे नास्ति इति विरोधे सति अविरोधाय बहिरस्ति इति कल्प्यते । तदेतदनुमानेनान्यथयितुं न शक्यते । यतो हि–देवदत्तो बहिरस्ति, जीवित्वे सति गृहे सत्त्वात् । यो जीवन् यत्र नास्ति, स ततोऽन्यत्रास्ति, यथा अहमित्येवानु-मानं भवद्भिः प्रयोक्तुं शक्यते । तच्च स्वरूपासिद्धम् । जीवनमात्रस्य निर्विशेषस्य निरूपयितुमशक्यत्वात् । बहिर्भावग्रहणात् पूर्वं जीवनगृहाभावयोः समुच्चित्य ज्ञान-स्यासम्भवात् । अतो जीवनविशिष्टगृहाभावरूपलिङ्गस्याप्रतिपत्तौ स्वरूपाज्ञाना-सिद्धोऽयं हेतुरिति नानुमानगतार्थेयमर्थापत्तिरिति सिद्धान्तितम्[3] ।

### उक्तविषये व्याकरणशास्त्रस्य सम्मतिः

न्यायविद्याविशारदैः क्रियमाणमर्थापत्तेः प्रत्याख्यानं व्याकरणशास्त्ररहस्यज्ञैरपि न सोढुं शक्यते, सूत्रभाष्यकृदादिभिर्बहुत्रास्या आश्रयणस्योक्तत्वात् । व्यतिरेक्यनुमानस्य

---

1. न्या. सि. मु., किर. टी. च, कारि. १४४ ।
2. वे. प., अर्था. परि. ।
3. मा. मे., अर्था. १।३।९ ।

प्रतिपदं कुत्राप्यनुक्तत्वाच्च । वर्णा अर्थवन्तो वर्णत्वादित्यत्र एकवर्णरूपधात्वादीनां दृष्टान्तत्वस्य भाष्यकृता स्वयमेवोक्तत्वेन[1] न तत्र केवलव्यतिरेकित्वम् ।

"विमताः संज्ञा नानासंज्ञिविषयाः प्रयोजनराहित्ये सति नानासंज्ञात्वात्" इत्यूकालोऽजिति सूत्रभाष्ये उद्द्योताभ्यूहितेऽनुमानप्रयोगेऽपि[2] एकवचनद्विवचनबहुवचनरूपाः संज्ञा अन्वयिदृष्टान्ततया योजयितुं शक्याः, तासां प्रयोजनराहित्ये सति नानासंज्ञात्वात्, नानासंज्ञिविषयत्वाच्च । इदं च सामान्यतो व्याप्तौ । विशेषतो व्याप्तौ तु केवलव्यतिरेकित्वमपीत्यन्यत् ।

किं वा पक्षतावच्छेदकावच्छेदेनानुमितिस्थलेऽपि पक्षैकदेशस्य दृष्टान्तता प्रसिद्धैवेति तादृशस्थलेऽपि न केवलव्यतिरेकित्वं वक्तुं शक्यम् ।

किं वा तिष्ठतु नाम तदपि, तावताऽपि "अर्थाच्चात्र व्यवस्था भविष्यति, सामर्थ्याच्चैतत्सिद्धम्" इत्याद्यर्थकस्य वाक्यस्य पदे पदे भाष्यकृता सङ्कीर्तनात्, अर्थापत्त्यनुव्यवसाये तस्य पर्यवसानाच्च स्वतन्त्रं प्रमाणमर्थापत्तिनामधेयमभ्युपेतव्यमेव शाब्दिकैः।

स्वीकृतं च[3] श्रीमता रघुनाथशिरोमणिना अस्याः स्वतन्त्रं प्रमाणत्वम् 'व्यतिरेक्यनुमानसत्त्वेऽप्यर्थादापादयामि' इत्यनुव्यवसायबलेनैवेति दिक् ।

## श्रीपुरुषोत्तमदेवभैरवमिश्रयोरत्र प्रौढिवादिता

यत्तु ज्ञापकसमुच्चये ग्रन्थे श्रीपुरुषोत्तमदेवेनोक्तम्–"ज्ञापकस्य साक्षात्प्रमाणता नास्ति । तथा हि–ज्ञापकं नाम न प्रत्यक्षादिवद् वस्तुबलप्रवृत्तं प्रमाणम्, किं तर्हि स्तवनार्थमात्रमिष्टं विषयं सूचयति । अतो ज्ञापकं न साक्षात्प्रमाणम्, किं तर्हि इष्टसूचकमात्रम्" इति[4] ।

यच्च परिभाषेन्दुशेखरटीकायां भैरव्यां प्रथमपङ्क्तिव्याख्यानावसरे "ज्ञापकन्यायसिद्धानि" इति प्रतीके "ज्ञापकमनुमानरूपम्" इत्युक्तं श्रीभैरवमिश्रेण । तथा च यदागमपरिभाषाव्याख्यावसरे "अर्थापत्तिमूलकवाक्यान्तरकल्पनेन" इति मूलवाक्यव्याख्याने "मतान्तररीत्या अर्थापत्तिकथनम्"[5] इत्युक्तम् । तदेतदाचार्यद्वयस्य प्रौढि-

---

1. म. भा. १।१; मा. सू. ५ ।
2. म. भा. १।२।२७ ।
3. चि. म., दी., अर्था. ।
4. ज्ञापकसमु., पृ. ५७ ।
5. प. शे., १ प्र., परि. ११, भै. टी. ।

वोदित्वमात्रम्, पूर्वोक्तविमर्शेनास्याः स्वतन्त्रप्रमाणत्वव्यवस्थापनात् । किञ्च, ज्ञापकं न साक्षात्प्रमाणम्, अपि त्विष्टसूचकमात्रमिति सिद्धान्तयन् श्रीपुरुषोत्तमदेवः प्रष्टव्यः, किंसूचकशब्दस्य व्यञ्जक इत्यर्थः, अनुमापक इति वा ? उभयथापि स्वतन्त्रं प्रामाण्यमागतमेव । आद्यपक्षे शब्दप्रमाणता, द्वितीये त्वनुमानता इति । एवमपि नास्माकं किञ्चिद् विकृतम्, ज्ञापकस्य कदाचिच्छब्दरूपत्वे कदाचिच्चानुमानरूपत्वे स्वीकृतेऽपि कदाचिदर्थापत्तिरूपत्वस्यापि सम्भवात् । न हि घटादयः प्रत्यक्षेणैव ज्ञातव्याः, नानुमानादिना इति राज्ञामाज्ञा, अपि तु ज्ञानस्य सामग्रीतन्त्रत्वाद् यज्ज्ञानस्य यदा सामग्री तज्ज्ञानं तदा भवत्येवेति सिद्धान्तात् ।

एवं च ज्ञापकस्थले यदानुपपत्तिमूलककल्पना, तदार्थापत्तिरेव सा न केनापि वारयितुं शक्या । अनुमानेऽन्तर्भावयता श्रीभैरवमिश्रेण न्यायनयवासनादार्ढ्यं सूचितमिति सहृदयाः स्वयं विभावयन्तु ।

**अस्य प्रमाणस्य प्रमाणान्तरापेक्षया बलाबलविचारः**

ज्ञानानां यौगपद्यमपीति कल्पे तु बलाबलचिन्ता निरर्थिकैव । अन्यकल्पे तु शब्दप्रमाणसमीक्षावसरे कृता या बलाबलचिन्ता सैवात्रापि पर्याप्ता इत्यधिकं नेह प्रतन्यते ।

**॥ इत्यर्थापत्तिसमीक्षायां प्रथमं पुष्पम् ॥**



# ॥ अथ प्रत्याख्येयसमीक्षायां प्रथमं पुष्पम् ॥

अत्र पाणिनीये व्याकरणे प्रत्यक्षानुमानशब्दार्थापत्तिरूपाणि चत्वारि प्रमाणानि पदार्थप्रमितिकरणतया सप्रमाणं व्यवस्थाप्य प्रत्याख्येयान्यप्युपमानादीनि प्रमाणानि समीक्षितुमुपक्रम्यन्ते, यत्तेषां प्रत्याख्यानं सिद्धान्ति एकदेशि वा इति । तत्रादावुपमानं विमृश्यते ।

**उपमानसमीक्षा**

तत्र मीमांसादर्शने उपमानस्वरूपमित्थमुक्तम्–"उपमानमपि सादृश्यमसन्निकृष्टेऽर्थे बुद्धिमुत्पादयति । यथा गवयदर्शनं गोस्मरणस्य । पूर्वदृष्टे स्मर्य्यमाणार्थे दृश्यमानार्थसादृश्यज्ञानमुपमानम्, यासौ अस्माभिर्नगरे दृष्टा गौः, साऽनेन गवयेन सदृशी"[1] इति ।

अयं भावः – गोसादृश्यविशिष्टगवयदर्शनस्यैव करणत्वमुपमानप्रमाणे । तेन स्मर्य्यमाणायां गवि यद् गवयप्रतियोगिकसादृश्यज्ञानं तदेवोपमानफलमिति ।

वेदान्तदर्शनेऽपीदमेव शब्दान्तरेणोक्तम्–"तत्रान्वयव्यतिरेकाभ्यां गवयनिष्ठगोसादृश्यज्ञानं करणम् । गोनिष्ठगवयसादृश्यज्ञानं फलम्"[2] इति ।

न्यायदर्शने त्वन्यदुपमानस्वरूपमुक्तम् । तथा हि–"यत्रारण्यकेन केनचित् कस्मैचिद् ग्रामीणायोक्तम्–गोसदृशो गवयपदवाच्य इति । पश्चाच्च ग्रामीणेन क्वचिदरण्ये गवयो दृष्टः, तत्र यद् गोसादृश्यदर्शनं जातं तदुपमितिकरणम् । तदनु गोसदृशो गवयपदवाच्य इत्यतिदेशवाक्यार्थस्मरणं यज्जायते तदेव व्यापारः । ततश्च 'गवयो गवयपदवाच्यः' इति ज्ञानमुपमितिः । गवयत्वावच्छिन्ने सकलगवये गवयपदस्य या शक्तिस्तज्ज्ञानमेवोपमितिः"[3] इति ।

**अत्र महाभाष्यकारमतम्**

महाभाष्यकृता उपमानस्य प्रामाण्यं नाभ्युपेयते । तथा हि 'मानं हि नाम अनिर्ज्ञातार्थमुपादीयते' अनिर्ज्ञातमर्थं ज्ञास्यामि इति । उप समीपे यन्नात्यन्ताय मिमीते तदुपमानम्, गौरिव गवय इति । गौर्निर्ज्ञातो गवयोऽनिर्ज्ञातः" इति भाष्यम् । अत्रो-

---

1. शा. दी., उप. परि., १ पा., सू. अ. ५ ।
2. वे. प., उप. परि. ।
3. न्या. सि. मु., कारि. ७९-८० ।

द्द्योतः –"मानं हीति । अनिर्ज्ञातार्थस्य साकल्येन ज्ञापकत्वं हि तत्त्वम् । यथा प्रस्थादि अज्ञातस्य परिमाणरूपार्थस्य साकल्येन ज्ञापकम्, न तथोपमानम् । गौर्हि गवयं कतिभिश्चिद्धर्मैरेव ज्ञापयति न साकल्येन"[1] इति ।

एवं च स्फुटमेवास्य सयुक्ति प्रत्याख्यानं लभ्यते भाष्यात्तद्व्याख्याग्रन्थाच्च ।

**अत्र श्रीभर्तृहरिमतम्**

उक्तभाष्यानुगुणं वाक्यपदीयमतमप्युपस्थाप्यते–

**अनिर्ज्ञातस्य निर्ज्ञानं येन तन्मानमुच्यते ।**
**प्रस्थादिकेन मेयात्मा साकल्येनाभिधीयते ॥**
**अनिर्ज्ञातं प्रसिद्धेन येन तद्धर्म गम्यते ।**
**साकल्येनापरिज्ञानादुपमानं तदुच्यते** ॥ इति ।

अत्र हेलाराजः–"प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम्" । तथा हि–अप्रसिद्धमनिर्ज्ञातं गवयादि प्रसिद्धेन गवा सादृश्यतस्तद्धर्म तस्येव धर्मो यस्य तदिवेति परिच्छिद्यते । सादृश्यमात्रेण परिच्छेदो नारोहपरिणाहसाकल्येन विशिष्टात्मनापि । अत एव सादृश्यं प्रत्यक्षेण स्फुटमत्रावधार्यत इति तदपेक्षोपमानस्येति नेदं मानम्, अपि तु तस्य समीपम्, किञ्चिद्रूपतया परिच्छेदात्"[2] इति ।

**उपमानमनुमानगतार्थमिति हेलाराजः**

उपरितनश्लोकव्याख्यावसरे श्रीहेलाराजेनोपमानस्यानुमानगतार्थताऽपि स्पष्टमुक्ता[3] । अनुमानाकारश्चेत्थं बोध्यः–"अयं पुरोवर्तिमांसपिण्डो गवयपदवाच्यः, गोसादृश्यात् । यत्र यत्र गोसादृश्यं तत्र तत्र गवयपदवाच्यत्वम्, यथा गवयान्तरे । यश्च न गवयपदवाच्यः, स च न गोसादृश्यवान् , यथा महिषादिः । एवमेकस्यां पुरोवर्तिव्यक्तौ शक्तिग्रहे वृत्ते सर्वे गवया गवयपदवाच्याः, गवयत्वजातिमत्वात्" इत्यनुमानेन सामान्यतः शक्तिग्रहो भविष्यति । ननु गोसादृश्यरूपो हेतुर्न ज्ञातः पक्ष इति चेत्, न, प्रत्यक्षेण तद्ग्रहस्यानुपदमेवोक्तत्वात् ।

---

1. म. भा., उ. २।१।५५ ।
2. वा. प., हेला. टी. ३।१४ ।३५९-६० ।
3. वा. प., हेला. टी. ३।१४।३५९-६० ।

## वैशेषिकदर्शनेऽप्यनुमानगतार्थता

उपमानस्यानुमानगतार्थता वैशेषिकाचार्यैरपि स्वीक्रियते । तथा हि–"गवयपदं गवयत्वप्रवृत्तिनिमित्तकम्, असति वृत्त्यन्तरे वृद्धैस्तत्र प्रयुज्यमानत्वात् । असति च वृत्त्यन्तरे वृद्धैर्यत्र यत्प्रयुज्यते, तत्र तत् तत्प्रवृत्तिनिमित्तकम्, यथा गोपदं गोत्वप्रवृत्तिनिमित्तकम्, इत्यादिरूपमप्यनुमानं तद्गतार्थताप्रयोजकम्"[1] ।

## उपमानस्य प्रत्यक्षादिगतार्थता इत्यत्र सांख्यदर्शनम्

सांख्याचार्यैरप्युपमानस्य स्वतन्त्रं प्रामाण्यं न समर्थ्यते, अपि तु क्वचिदागमे, क्वचिदनुमाने, क्वचित् प्रत्यक्षे चान्तर्भावः । यथा—कीदृशो गवयः? इति प्रश्ने यथा गौस्तथा गवय इति उत्तरवाक्यमुपमानं चेत्, तर्हि तद् आगमप्रमाणमेव तज्जन्यो बोधः शाब्दबोध एव । योऽपि अयं गवयशब्दो गोसदृशस्य वाचक इति प्रत्ययः, सोऽपि अनुमानजन्योऽनुमितिरूप एव । यो हि शब्दो यत्र वृद्धैः प्रयुज्यते, सोऽसति वृत्त्यन्तरे तस्य वाचकः, यथा गोशब्दो गोत्वस्य, प्रयुज्यते चैष गवयशब्दो गोसदृशे इति तस्यैव वाचक इति ।

यत्तु गवयस्य चक्षुःसन्निकृष्टस्य गोसादृश्यज्ञानं तत्प्रत्यक्षमेव । अत एव स्मर्यमाणायां गवि गवयसादृश्यज्ञानं प्रत्यक्षमेव । न ह्यन्यद् गवि सादृश्यमन्यच्च गवये । भूयोऽवयवसामान्ययोगो हि जात्यन्तरवर्ती जात्यन्तरे सादृश्यमुच्यते, सामान्ययोगश्चैकः, स चेद् गवये प्रत्यक्षो गव्यपि प्रत्यक्ष एव[2] ।

## उपमानस्य प्रत्यभिज्ञायामन्तर्भाव इति जैनदर्शनम्

श्रीप्रभाचन्द्राचार्येण तु उपमानस्य प्रत्यभिज्ञायामन्तर्भावः सम्पादितः । तथा हि– यथैव ह्येकदा घटमुपलब्धवतः पुनस्तस्यैव दर्शने 'स एवायं घटः' इति प्रतिपत्तिः प्रत्यभिज्ञा, तथा गोसदृशो गवय इति सङ्केतकाले गोसदृशगवयाभिधानयोर्वाच्यवाचकभावसम्बन्धं प्रतिपद्य पुनर्गवयदर्शनात्तत्प्रतिपत्तिः प्रत्यभिज्ञा किं नेष्यते ?"[3] इति ।

## उपमानस्य प्रमाणत्वे श्रीनागेशभट्टः

यत्तु श्रीनागेशभट्टेन लघुमञ्जूषायामुपमानस्य प्रामाण्यं समर्थितम् । तथा हि–"अत एवाज्ञातार्थकिष्विदमेकं पदमिति ज्ञातेषु नलचैत्रगवयादिपदेषु श्रुतेषु 'क एतदर्थः'

---

1. न्या. सि. मु., कारि. १४०-४१ ।
2. सा.त. कौ., कारि. ५, पृ. ८४-८६ ।
3. प्रमेयक., ३ प्र., पृ. १०० ।

इति प्रश्ने उपमानतल्लक्षणकथनादिना प्रतिवचनं च दृश्यते । अत एव सादृश्याद्युपायेन शक्तिबोधकतया उपमानस्य, प्रसिद्धपदसामानाधिकरण्यात्तद्बोधकतया कोशस्य च प्रामाण्यं व्युत्पादयन्ति"[1] इत्युक्तम् । तत्तु–उक्तभाष्यादिग्रन्थविरोधात्, उक्तस्वीयोद्द्योतग्रन्थविरोधात् प्रमाणसामान्यलक्षणस्यासमन्वयाच्चानुमानविधयैव बोध्यमित्युपमानस्य स्वतन्त्रं प्रामाण्यमसम्मतमेव पाणिनीये तन्त्र इति दिक् ।

## अनुपलब्धिप्रमाणसमीक्षा

"तस्य भावस्त्वतलौ" इति सूत्रभाष्यव्याख्यानतोऽनुपलब्धेरपि प्रमाणत्वमायाति । तथा हि–"अनन्यच्छब्दादिभ्यो द्रव्यम्, न ह्यन्यदुपलभ्यते । पशोः खल्वपि विशसितस्य पर्णशते न्यस्तस्य नान्यच्छब्दादिभ्य उपलभ्यते" इति भाष्यम् । अत्र प्रदीपः –"पशोः खल्वपीति । उपलब्धिलक्षणप्राप्तस्य द्रव्यस्यानुपलम्भादसत्त्वनिश्चयो युक्त इति भावः" इति । "अत्रोद्द्योतः – अनुपलब्धिप्रमाणमेव द्रढयति–तद्व्याचष्टे उपलब्धीति । एवं च विविक्ततया ग्रहणाभावादसत्त्वनिश्चय इत्यर्थः । उपलब्धिलक्षणं प्रमाणमेव सत्त्वनिश्चायकम् । उपलब्धिलक्षणात् प्रमाणात् प्राप्तस्य प्राप्तसत्त्वनिश्चययोग्यस्यानुपलम्भादसत्त्वनिश्चय इत्यर्थः"[2] इति ।

अत्रोद्द्योतकृतानुपलब्धेः प्रमाणतया स्फुटं समर्थनं क्रियते–प्राप्तसत्त्वनिश्चययोग्यस्येत्यनेन तर्कितप्रतियोगिसत्त्वप्रसञ्जितप्रतियोगिकत्वरूपा योग्यताऽप्यनुपलब्धौ विशेषणमिति सूच्यते । एवं चोपलब्धिलक्षणात् प्राप्तस्येत्यत्रोपलब्धिपदं करणक्तिनन्तं योगरूढ्या प्रत्यक्षपरमेव । तस्यैव प्रकृतोपयोगात् ।

अथ च यस्याभावो गृह्यते, तस्य यः प्रतियोगी तस्य सत्त्वेनाधिकरणे तर्कितेन प्रसञ्जितमापादनयोग्यं यत्प्रतियोग्युपलब्धिस्वरूपं यस्यानुपलम्भस्य तत्त्वं तदनुपलब्धियोग्यत्वम् । तथा हि–स्फीतालोकवति भूतले यदि घटः स्यात्तदोपलभ्येतेत्यापादनसम्भवात्तादृशभूतले घटाभावोऽनुपलब्धिगम्यः । अन्यत्राप्यस्याः प्रमाणतया सङ्केतः कृत उद्द्योतकृता[3] ।

## अनुपलब्धेर्लक्षणम्

अस्या लक्षणमुक्तं वेदान्तदर्शने–ज्ञानकरणाजन्याभावानुभवासाधारणकारणत्वमिति । अनुमानादिजन्यातीन्द्रियाभावानुभवहेतावनुमानादावतिप्रसङ्गाभावायाजन्यान्त-

---

1. ल. म., र. प्र., बौ. नि., पृ. ३२२-२३ ।
2. म. भा., प्र. उ. ५।१।११९।
3. म. भा., उ. ३।२।१२३।

पदम् । अदृष्टादावतिप्रसङ्गभङ्गायासाधारणेति पदम् । अभावस्मृत्यसाधारणहेतु-संस्कारेऽतिप्रसक्तिनिरासायानुभवपदम् । धर्माद्यनुपलब्धिसत्त्वेऽपि तदभावस्यानिश्चयेन योग्यानुपलब्धेरेवाभावग्राहकत्वेन अभावानुमित्यादिस्थलेऽनुपलब्ध्या नाभावग्रहः । तत्र योग्यस्य प्रतियोगिनोऽनुपलब्धिरिति न समासः, स्तम्भे पिशाचादिभेदस्या- प्रत्यक्ष-त्वापत्तेः । योग्येऽधिकरणे प्रतियोग्यनुपलब्धिरित्यपि न, आत्मनि धर्माद्यभावस्य प्रत्यक्षत्वापत्तेः; किन्तु योग्या चासौ अनुपलब्धिश्चेति कर्मधारयः । योग्यता त्वनुपदं लिखितैव[1] ।

## अनुपलब्धिविषये पूर्वमीमांसामतम्

पूर्वमीमांसादर्शनेऽपि योग्यानुपलम्भः स्वतन्त्रं प्रमाणं स्वीक्रियते । तत्र च योग्यत्वं ज्ञायमानं सदेव तत्र प्रविष्टम्, न तु सत्तामात्रेण, योग्यानुपलम्भश्च स्वरूपसन्नेवा-भावप्रमितौ हेतुरिति नानवस्थाऽऽपत्तिः । न हीदं प्रमाणं प्रत्यक्षरूपं भवितुमर्हति । योऽहनि प्रातःकाले गृहेऽवस्थितो मध्याह्नसमये पृच्छ्यते, किमस्मिन् गृहे प्रातःकाले माथुरः कश्चित् पुरुषः शुक्लवासा दीर्घतमो लोहितवर्णः समागतः ? इति, स तदानीमेव योग्यस्मरणानुदयात् तस्याभावं प्रातःकालिकमवधारयति, इन्द्रियव्यापार-मन्तरैव । न च प्रातरवगतोऽभावस्तदानीं स्मर्यत इति वाच्यम्, प्रतियोगिनो माथुरस्य तदानीं कथमपि बुद्धावनारोहात् । अबुद्धिस्थे च प्रतियोगिनि भावे तदभावज्ञानासम्भवात् । एवं च यत्रापीदानीमेवानुपरतेन्द्रियव्यापारेणैव सन्निहितदेश-कालवर्त्यभावः प्रतीयते, तत्रापि योग्यज्ञानानुदयस्य क्लृप्तसामर्थ्यस्य कारणत्वसम्भवा-न्नेन्द्रियस्य कारणत्वं कल्पयितुं शक्यमिति न प्रत्यक्षेऽन्तर्भावो नाप्यनुमाने, अज्ञातेन तेनाभावेन सह कस्यचिल्लिङ्गस्य सम्बन्धग्रहणासम्भवात्[2] ।

## अनुपलब्धिप्रामाण्यप्रत्याख्याने बौद्धमतम्

अनुपलब्धेः स्वतन्त्रं प्रामाण्यं निराकुर्वन् सौगताचार्यो ब्रवीति–दृश्यं सद् यद् यत्र नोपलभ्यते, तत्तत्र नास्ति, यथा बुद्धिसत्त्वे पुरुषः । अतोऽनुपलब्धिसमाख्या प्रत्यक्षाद्यनुत्पत्तिरभावस्य लिङ्गम् । यदा वीतहेतुरयम् । दृश्यस्य सत्ता दर्शनव्याप्ता, तद् व्यापकं दर्शनं निवर्तमानं व्याप्यां दृश्यसत्तां निवर्तयति–इत्यनुमानरूपैव अनुपलब्धिर्न स्वतन्त्रं मानम्[3] ।

---

1. वे. प., अनु. परि. ।
2. शा. दी.; १ पा., सू. अ.५, पृ. ३३८-४० ।
3. न्या. र., उद्धृतम्, शा. दी., १ पा., सू. अ. ५, पृ. ३४१

## अस्य प्रत्याख्यानस्य मीमांसापद्धत्या प्रत्याख्यानम्

सपक्षे व्याप्तिग्रहे जाते यदा पक्षे लिङ्गज्ञानं भवति, तदाऽनुमितिर्जायते । प्रकृतेऽपि ज्ञाननिवृत्तिदृश्यनिवृत्त्योर्व्याप्यव्यापकयोः सपक्षेष्ववगतयोर्व्याप्तिं निश्चित्य पक्षे च लिङ्गभूतां दर्शननिवृत्तिं केनचिदनुमानभिन्नेन प्रमाणेनावगत्य दृश्यनिवृत्तिरनुमेया । अन्यथा तयोर्ज्ञानस्यानुमानाधीनत्वेऽनवस्था प्रसज्येत । तत्परिहारायानुमानभिन्नयाऽनुपलब्ध्यैव लिङ्गभूतदर्शननिवृत्तिमवगम्य विषयनिवृत्तिरनुमातव्येत्यनुपलब्धिः स्वतन्त्रं प्रमाणमस्त्येवेति हृदयं मीमांसाचार्याणाम्[1] ।

## पूर्वोक्तमीमांसकमतनिरासे श्रीजयन्तभट्टः

अनुपलब्धेः प्रामाण्यसमर्थनेऽनुपदमेव मीमांसकैर्या युक्तिर्दर्शिता, तस्या निरासे श्रीजयन्तभट्टेनोक्तम् – "वस्त्वन्तरविविक्तगौरमूलकस्वरूपग्रहणसमय एव तत्रासन्निहितसकलपदार्थाभावस्य ग्रहणं मेचकबुद्ध्या । इदानीं तद्गतगर्गाभावस्य स्मरणम्, न तस्य परोक्षस्यानुभवः । तथा हि–तदानीं गर्गस्तत्र नासीदित्येवमसौ स्मृत्वा सत्यवादी स्मरति, इदानीं त्वस्तित्वनास्तित्वे प्रति संशेत एवासौ, गर्गस्य कुतश्चिदागतस्य तत्रास्तित्वसम्भवात्"[2] इत्यादि द्रष्टव्यम् ।

## अनुपलब्धिप्रमाणनिरासे श्रीजन्तभट्टः

न्यायदर्शनरहस्यज्ञश्रीजयन्तभट्टमतेऽनुपलब्धिः पृथक् प्रमाणं नास्त्येव । तथा हि– 'इह कुण्डे दधि' इति ज्ञानवद् 'इह भूतले घटो नास्ति' इत्यपि ज्ञानमेकमेव । अन्यथा भूतलांशे प्रत्यक्षं घटो नास्तीत्यंशेऽनुपलब्धिप्रमाणमिति ज्ञानद्वयस्य प्रसङ्गः, स चानुभवविरुद्धः । पर्वतेऽग्निरिति युक्तं परोक्षज्ञानम् । धूमज्ञानोत्तरं व्याप्तिस्मृत्यादिबुद्ध्यन्तरव्यवधानसम्भवात् । इह तु भूप्रदेशवद् घटनास्तितावगतिरविच्छेदेनैवानुभूयते । तत्र हि व्यापृताक्षोऽपि पर्वतवर्तिनमग्निमवलोकयितुं नोत्सहते, इह तु अपरिम्लाननयनव्यापार एव घटाभावं पश्यति–इति अभावज्ञानमैन्द्रियकमेव, तद्भावभावित्वविधानात्" इत्यादि बहूक्तं न्यायमञ्जर्य्याम्[3] ।

---

1. शा. दी., प्र. टी. च, १ पा., सू. अ. ५, पृ. ३४१-४२ ।
2. न्या. म., प्रमाणप्र., पृ. ५० ।
3. न्या. म., प्रमाणप्र., पृ. ४८ ।

## अभावेन सहेन्द्रियस्य कः सम्बन्धः ?

ननु भूतलेन सह चक्षुषः संयोगः सम्बन्धः, न तथाभावेन सह कश्चन सम्बन्ध इत्यसम्बद्धस्य ज्ञाने सर्वस्याप्यभावस्य प्रत्यक्षं स्यादिति चेत्, उच्यते–"अभावज्ञानं ह्यभावाश्रयग्रहणसापेक्षं भवतीति नियमः । आश्रयस्य च सन्निहितस्यैव (सन्निकृष्ट-स्यैव) प्रत्यक्षविषयत्वान्नातिप्रसङ्गः । अथवा संयुक्तविशेषणभावाख्यसन्निकर्षोपकृतं चक्षुरभावं ग्रहीष्यति । यथा समवायप्रत्यक्षत्ववादिनां पक्षे समवायम्"[1] इति ।

## उक्तसन्निकर्षस्य चक्षुषा रसाद्यभावज्ञानेऽतिप्रसङ्गनिरासः

ननूक्तसन्निकर्षोपकृतं चक्षू रसाद्यभावमपि गृह्णीयादिति चेत्, उच्यते–षट्प्रकारा सन्निकर्षानुगामिनी योग्यता चक्षुरादिष्वभ्युपगम्यते । तत्रापि न योग्यतामात्रे विश्रम्य स्थातव्यम् । यत्र योग्यता तत्र सन्निकर्षोऽप्यस्ति, न तु यत्र सन्निकर्षस्तत्रावश्यं योग्यतेति रसाद्यभावे सत्यपि सन्निकर्षे योग्यताया अभावाद् न तस्य चक्षुषा ग्रहणम् । चक्षुषा रसग्रहणवारणेऽपीयमेव योग्यता हेतुरिति दिक्[2] ।

## अनुपलब्धेः स्वतन्त्रं प्रामाण्यं नास्तीत्यत्र शाब्दिकसिद्धान्तः

यद्यपि "तस्य भावस्त्वतलौ" इति सूत्रीयभाष्योद्द्योतपर्यालोचनयाऽनुपलब्धेः कथञ्चित् स्वतन्त्रं प्रमाणत्वमायाति, पूर्वोत्तरमीमांसाभ्यामनुमोदितं च तत् प्रचुरयुक्त्यादिप्रदर्शनेन, तथापि 'स्त्रियाम्" इत्यादिसूत्रीयभाष्यादिपर्यालोचनेन प्रत्यक्षगतार्थतैवास्या लभ्यते । न पृथक् प्रामाण्यम् । सा च गतार्थता न्यायदर्शनसरण्या किञ्चिद् दर्शिता । अथ तादृशं भाष्यादि प्रदर्श्यते । तथा हि– "अन्योऽन्यसंश्रयं त्वेतत्' अन्योऽन्यसंश्रयं त्वेतद् भवति । स्त्रीत्वकृतः शब्दः शब्दकृतं च स्त्रीत्वम् । तदितरेतराश्रयं भवति । इतरेतराश्रयाणि च न प्रकल्पन्ते । 'प्रत्यक्षेण विरुध्यते' प्रत्यक्षेण खल्वपि स विरुध्यते, य आह खट्वावृक्षयोः सल्लिङ्गं नोपलभ्यत इति । तत्र स्वेन्द्रियविरोधः कृतो भवति । न च नाम स्वेन्द्रियविरोधिना भवितव्यम्" इति भाष्यम् । अत्र प्रदीपः – "आदित्यगतिवत् सन्नेति । तद्दूषयति–प्रत्यक्षेणेति । लिङ्गस्वरूपविविक्त-खट्वादिवस्तुविषयेण प्रत्यक्षेण लिङ्गाभावनिश्चयकारिणा विरुध्यत एतदित्यर्थः । इन्द्रियदौर्बल्यमनुपलब्धिकारणं प्रमाणान्तरावसितवस्तुविषयमेवाभिधातुं शक्यत इति ।

---

1. न्या. म., प्रमाणप्र., पृ. ४९ ।
2. तदेव ।

अत्रोद्द्योतः — 'भाष्ये स्वेन्द्रियविरोधः – स्वेन्द्रियजन्यप्रत्यक्षविरोधः । अनुमानेन च स्वेन्द्रियजप्रत्यक्षविरोधिना न भवितव्यमित्यर्थः" इति[1] ।

अयमाशयः – खट्वावृक्षयोः सदपि लिङ्गं प्रत्यक्षेण नोपलभ्यते । यथा आदित्यगतिः सती अपि प्रत्यक्षेण नोपलभ्यते, अपि त्वनुमानेन तद्वत् । एवं च प्रत्यक्षेण लिङ्गाभाव एवोपलभ्यते, न चानुमानेन लिङ्गोपलब्धिर्भवत्विति वाच्यम्, अनुमानस्यानन्यथासिद्धस्वरूपबलवत्त्वाभावेन प्रत्यक्षप्रमाणतो बाधितत्वात् । एवं च स्पष्टमेवानुपलब्धैः पृथक् प्रामाण्यं निरस्तम् ।

**उक्तभाष्यद्वयीयविरोधपरिहारः**

ननु तस्य भाव इति सूत्रीयभाष्यस्येदानीं का गतिरिति चेत्, उच्यते–तत्सूत्रे नहि भाष्यकृता स्फुटमस्याः प्रामाण्यं समर्थितमपि तूद्द्योतकृता अस्याः प्रमाणतया स्मरणं कृतम् । अत्र तु प्रत्यक्षेण संल्लिङ्गं नोपलभ्यत इत्युक्त्या अभावस्य प्रत्यक्षग्राह्यत्वं सुस्पष्टमुक्तम् । प्रत्यक्षापेक्षया अनुमानस्य दौर्बल्यं चात्र ध्वनितम् । अस्यां स्थितौ तस्य भाव इति सूत्रभाष्ये–"प्रत्यक्षसहकारितयैवास्याः प्रमाणत्वव्यवहारो गौणः" इति नीत्या उद्द्योतग्रन्थो योजनीयः । क्लृप्तेन प्रत्यक्षप्रमाणेन निर्वाहेऽक्लृप्तस्यानुपलब्धिप्रमाणस्य कल्पनाया अन्याय्यत्वात् । तत्पक्षे भाष्यान्तरसंवादाभावाच्च ।

**प्रत्यक्षसहकारिण्या अस्या योग्यताविषये कश्चन विशेषः**

सा चेयमनुपलब्धिर्न सामान्येन सहकारिणी, अपि तु दृश्यस्य दर्शनयोग्यस्य याऽनुपलब्धिः सा । इदमेव प्राप्तसत्त्वनिश्चययोग्यस्येत्युक्त्या बोधितमुद्द्योतकृता[2] । एवं च शशशृङ्गं गुरुत्वादिकं धर्मादिकं च यदयोग्यं तदभावो न प्रत्यक्षगम्यः । एवमेव प्रतियोगिनो योग्यतावदधिकरणस्यापि योग्यता ग्राह्या । अत एवान्योन्याभावप्रत्यक्षे स्तम्भे पिशाचादिभेदस्य चक्षुषा प्रत्यक्षं भवत्येव । एवं चात्यन्ताभावप्रत्यक्षे प्रतियोगिनो योग्यता भेदप्रत्यक्षेऽधिकरणस्य योग्यताऽपेक्ष्यते–इति न्यायसरणिः[3] शाब्दिकैरपि समादर्तव्या ।

**अभावस्यानुमेयत्वादिकम्**

क्वचिदभावोऽनुमेयोऽपि भवति । यथा सन्तमसे सलिलधारा विसरसिक्तसस्यमूलमभिवर्षति देवे घनपवनसंयोगाभावोऽनुमीयते । यथा वाऽर्थापत्तौ जीवतः चैत्रस्य

---

1. म. भा., प्र. उ. ४/१/३ ।
2. म. भा., प्र. उ. ५/१/११९ ।
3. न्या. सि. मु, कारि. ६२ ।

गृहसत्त्वेन बहिरसत्त्वकल्पनम् । एवं क्वचिदागमेनाप्यभावज्ञानं यथा अध्वगानां चौरादि नास्तिताज्ञानमाप्तवाक्यतो भवति[1] ।

**अनुपलब्धिविषये यथा यक्षस्तथा बलिरिति दृष्टान्तनिरासः**

यच्चोच्यते—अनुरूपेण प्रमाणेन प्रमेयं प्रमीयते, प्रमेयत्वाद् भावात्मकप्रमेयवदिति । तदपि न शोभनम्, अभावस्यापि क्वचिद् भावात्मकप्रमेयसाधनत्वेन दृष्टत्वात् । यथा वृष्ट्यभावज्ञानेन वाय्वभ्रसंयोगस्य भावस्यानुमितिः, यथा वा प्रागभावप्रति-बन्धकाभावाभ्यां कार्यजातमिति[2] ।

एवं चानुपलब्धिर्न प्रमाणम्, अपि तु प्रमाणसहकारिण्येवेत्येव शाब्दिकानां राद्धान्त इति दिक् ।

**॥ इति प्रत्याख्येयसमीक्षायां प्रथमं पुष्पम् ॥**

●

1. न्या. म., प्रमाणप्र., पृ. ५१ ।
2. तदेव ।

## ।। अथ प्रत्याख्येयसमीक्षायां द्वितीयं पुष्पम् ।।

**प्रत्यभिज्ञानस्य प्रामाण्यसमीक्षा, तत्र न्यायादिधारणाः**

सोऽयं देवदत्त इति ज्ञानं प्रत्यभिज्ञापदेनोच्यते । तत्रैकमेवेदं ज्ञानम्, तच्चेदमंशे चक्षुःसंयोगे, तत्तांशे ज्ञानलक्षणसन्निकर्षे च सति प्रत्यक्षमेव लौकिकालौकिकोभयविध-सन्निकर्षेण जायमानं सुरभिचन्दनमिति ज्ञानवत् । [1]सामग्र्यन्तरे तु ज्ञानान्तरमेवेति न्यायशास्त्रविदा धारणा ।तत्तांशे स्मरणम्, इदमंशे प्रत्यक्षमिति ज्ञानद्वयमेवाज्ञातभेदक-मिति प्रत्यभिज्ञानस्थले प्राभाकराणां धारणा[2] ।

यदा तु शब्दवाच्यत्वमतन्त्रीकृत्य पूर्वापररूपयोरैक्याऽवगम एव तात्पर्यं तदा "स एवाऽयम्" इति प्रत्यभिज्ञा स्पष्टा भवति । सा च संस्कारसहितेनेन्द्रियेणैकज्ञानत्वेन जन्यते । तत्र स इति भानजननशक्तिः संस्कारकृता, अयमिति भानजनन-शक्तिरिन्द्रियकृता इति प्रत्यक्षसामग्र्यां सत्यां प्रत्यक्ष एवास्याः प्रवेश इति पूर्वमीमांसकानां धारणा[3] ।

**उक्तविषये शाब्दिकधारणा**

उपरितनन्यायादिधारणया लोकव्यवहारेण च एकधर्मिणि तत्तेदन्त्वोभयोल्लेखिनी प्रतीतिः प्रत्यभिज्ञानं प्रत्यभिज्ञा वा उच्यते । सा च नहि प्रत्यक्षात्मिकैव, अपि तु शाब्दादिरूपाऽपि । "यदा तु शब्दवाच्यत्वमतन्त्रीकृत्य" इति उक्तमीमांसा-वाक्यमप्यत्रानुकूल्यं बोधयति । शाब्दिकाचार्यैरपि अस्य स्वतन्त्रप्रमाणत्वं नाभ्युपेयते, मुनित्रयानुक्तत्वात् ।

यद्यपि "तदेवेदं कार्षापणं यन्मथुरायां दृष्टम्" इत्यादिरूपेण भाष्यकृताऽस्या व्यवहारः कृतः । तथापि स नास्य स्वतन्त्रप्रमाणत्वतात्पर्येण, अपि तु शाब्दप्रमा–सामग्रीकाले एकधर्मावच्छिन्नविशेष्यताका तत्तेदन्त्वोभयधर्मावच्छिन्नप्रकारताका शाब्दी प्रमैव सा । प्रत्यक्षसामग्रीकाले प्रत्यक्षप्रमैव सा, इत्यादितात्पर्येण । अन्यथा स्वतन्त्र-

---

1. न्या. सि. मु., कारि. ६५ ।
2. शां. भा. भाम., अध्यासभा., पृ. १३८ ।
3. मा. मे., प्रत्य. परि. ।

प्रमाणत्वस्य कश्चन सङ्केतोऽवश्यं कृतः स्यात् । न च "सर्ववेदपारिषदं हीदं व्याकरणम्" इति तदुक्त्या अस्याः प्रामाण्यमभ्युपगन्तव्यमिति वाच्यम् । वैदिकदर्शनेषु कुत्राप्यस्याः पृथक् प्रामाण्यानङ्गीकारात् ।

"प्रत्यक्षप्रत्यभिज्ञानाद् वर्णैकत्वं प्रतिष्ठितम्" इति कारिकया प्रत्यभिज्ञानं प्रत्यक्षविशेष इति श्रीहरिः सूचयति । प्रत्यक्षप्रत्यभिज्ञाभ्यामित्यनुक्त्वा एकवचनान्तकरणेन कर्मधारयस्यैव प्रतीतेः[1] ।

यद्यपि पुण्यपत्तनविद्यापीठतः प्रकाशिते वाक्यपदीये श्लोकोऽयं नोपलभ्यते, तथापि लघुमञ्जूषायाः कलाटीकायामस्य श्लोकस्य हरिसम्बन्धित्वे सङ्केतः प्राप्यते[2] ।

प्रदीपकृता श्रीकैयटेनाप्यस्या बहुत्रोल्लेखः कृतः । यथा–"स एवायमित्यभिन्नप्रत्ययनिमित्ता डित्त्थत्वादिका जातिर्वाच्या"[3] इति ।

यथा च–"गोपिण्डो हि बाल्याद्यवस्थाभेदात् क्रयविक्रयादिषु मूल्यादिभेदाद् भेदेन व्यवह्रियते । स एवायमिति प्रत्यभिज्ञानादभेदेनापि । अवस्थाभेदेष्वपि स एवायमिति प्रत्यभिज्ञानिमित्तं देवदत्तत्वादिकं सामान्यमतीत्याकृतिमत इत्युक्तम्" इति[4] ।

अत्रोद्द्योतकृता श्रीनागेशेन–'प्रत्यभिज्ञानिमित्तम्=प्रत्यभिज्ञाप्रमाणकमित्यर्थः' इति व्याख्यातम् । तत्रापि प्रत्यभिज्ञा न किञ्चित्स्वतन्त्रं मानम्, अपि त्वनुमानविधया अर्थापत्तिविधया वा मानम्, अयं पुरोवर्तिपिण्डो देवदत्तत्वरूपैकधर्मवान् सोऽयमिति प्रत्यभिज्ञाविशेष्यत्वात् । विशेष्यत्वसम्बन्धेन प्रत्यभिज्ञावत्त्वाद् वा इत्यनुमाने, तादृशप्रत्यभिज्ञान्यथानुपपत्त्या अर्थापत्तौ वा तात्पर्यात् । लक्ष्यते चान्यत्राप्येषा शैली । यथा शब्दरत्नकृता "प्राणिकर्मकभक्षणे प्रापकप्रमाणं रागः" इत्युक्तम्[5] । तत्रापि रागस्येच्छाविशेषस्यानुमानविधयैव प्रामाण्यं न तु स्वतन्त्रम् ।

---

1. "प्रत्यक्षप्रत्यभिज्ञानात्–सोऽयं ककार इति प्रतीतेः" । (कु. टी., ल. म., शक्त्याश्रय., पृ. २१४ )
2. "तत्र हरिसम्मतिमाह–प्रत्यक्षेति"। (कलाटी., ल. म., पृ. २१५ )
3. म. भा., नवा. १।१।१, पृ. ४५ ।
4. म. भा., नवा. १।१।१, पृ. १६८ ।
5. प्रौ. म. श. र., ह. पु., "नलोपः सुप्स्वर." सूत्रम् ।

"तस्य भावस्त्वतलौ" इत्यत्र भाष्यं विवृण्वता प्रदीपकृता "तदेवेदमामलकम्" इत्यभिन्नाकारा बुद्धिः प्रत्यभिज्ञा, सा तु द्विविधा– द्रव्यविषया जातिविषया चेत्याद्युक्तम्[1] ।

षष्ठाध्याये भाष्येऽपि प्रदीपकृता सादृश्यनिबन्धनतत्त्वनिबन्धनभेदाभ्यां द्विविधेयं प्रत्यभिज्ञेत्युक्तम्[2] । उद्‌द्योतकृता च–"सैवेयं ज्वाला, तदेवेदं रजतम्" इति चोदाहरणे दत्ते ।

एवमेव भूयान् प्रपञ्चोऽस्याः शब्दशास्त्र उपलभ्यते ।

## प्रत्यभिज्ञायाः प्रत्यक्षेऽन्तर्भावसमीक्षा

अस्तु तावत् क्वचिदनुमाने, क्वचिच्छब्दादौ चान्तर्भावोऽस्याः । किन्तु प्रत्यक्षे चेत् प्रवेशः, स कथम् ? इति जिज्ञासायामुच्यते–संस्कारेन्द्रियसन्निकर्षाभ्यां यथा मीमांसकैः स्वीकृतं प्रत्यक्षम्, तथैवास्माभिरपि स्वीकर्तव्यम् । संस्कारस्य तत्तांशे सहकारित्वे मानं च तदेवेदं कार्षापणमित्यादि भाष्यमेव प्रत्यक्षपक्षे भविष्यति । प्रत्यक्षप्रत्यभिज्ञानादिति हरिवचनादिकं वा । वस्तुतस्तु तत्तेदन्तोभयाकारा उभयी अन्तःकरणवृत्तिर्भविष्यति । तत्र चितः प्रतिफलनं प्रत्यक्षम्, संस्कारस्येन्द्रियसंयोग-सन्निकर्षस्य च वृत्तौ हेतुत्वं भविष्यति–इति सर्वं सुस्थम् । यत्तु लघुमञ्जूषाकृता संस्कारचक्षुःसन्निकर्षाभ्यां ज्ञानान्तरमेव जायत इति न स्मृतित्वानुभवत्वयोः सङ्कर इति समर्थितम्,[3] तस्य तु ज्ञानलक्षणसन्निकर्षनिरासे तात्पर्यम्, न तु संस्कारस्य प्रत्यासत्तित्वनिरासे । यच्च स्मृतिप्रत्यक्षविलक्षणमिदं ज्ञानमिति तात्पर्यम्, तत्तु हरि-विरोधात्[4] स्वोक्तिविरोधाच्चानादरणीयतामर्हति । अतश्च परोक्षत्वापरोक्षत्वोभय-धर्मविशिष्टमेकं प्रत्यक्षविशेषात्मकमिदं ज्ञानं प्रमात्वाप्रमात्वविरोध्युभयधर्मविशिष्ट-ज्ञानवदिति निष्कर्षः[5] । ज्ञानान्तरपदेनेदमेव मञ्जूषाकृतोऽभिप्रेतमिति प्रतीयते । अन्यथा–शाब्दत्वं ज्ञानत्वव्याप्यजातिविशेष एव,[6] नानुभवत्वव्याप्यमितिवदत्रापि किञ्चित् स्पष्टं वदेत्, न च वदति । किन्तु स्मृतित्वानुभवत्वयोः साङ्कर्यमात्राद् बिभेति ।

---

1. म. भा., प्र. ५।१।११९ ।
2. म. भा., प्र. उ. ६।३।३४।
3. ल. म., बौद्धा., टीकाद्वययुता, पृ. २५५ ।
4. म. भा., नवा. १।१, पृ. ११ ।
5. सि. टी., वे. प., प्रत्य. परि., पृ. ११७ ।
6. ल. म., स्फोटनिरू., र. प्र. टी., पृ. ४१४ ।

## जैनदर्शने प्रत्यभिज्ञा स्वतन्त्रं प्रमाणम्

जैनदर्शननिष्णाताः श्रीप्रभाचन्द्रादयः प्रत्यभिज्ञायाः पृथक् प्रामाण्यमभिप्रयन्ति । तथा हि–न खलु प्रत्यक्षं तद्बाधकम्, तस्य तद्विषये प्रवृत्त्यसम्भवात् । यद्धि यद्विषये न प्रवर्तते, न तत् तस्य साधकं बाधकं वा, यथा रूपज्ञानस्य रसज्ञानम् । न प्रवर्तते च प्रत्यभिज्ञाविषये प्रत्यक्षमिति । नाप्यनुमानं तद्बाधकम्, प्रत्यभिज्ञाविषये तस्याप्य-प्रवृत्तेः ? ततः प्रत्यभिज्ञानमपि परोक्षं प्रमाणं सकलबाधकराहित्यात्, प्रत्यक्षादिवत्" इत्यादि[1] ।

## उक्तविषये शब्दशास्त्राभिप्रायः

प्रत्यभिज्ञानं स्वतन्त्रं प्रमाणमिति साधयद्भिर्जैनदर्शनाचार्यैर्यत् कारणमुपन्यस्तम्, "तद्विषये प्रत्यक्षादीनामप्रवृत्तिरूपम्" इति तद्विषये प्रागेवोक्तं मया "ज्ञानस्य सामग्रीतन्त्रत्वम्" इति । यद्यस्ति प्रत्यक्षसामग्री, तदा ब्रह्मणाऽपि प्रत्यक्षस्य निवारण-मशक्यमेव । न च तत्तांशे संस्कारस्य यत् सन्निकर्षत्वं तत्तु अदृष्टचरमिति वाच्यम् । अनुमित्यादिस्थले वेदान्तिभिस्तस्य व्यापारविधया हेतुत्वकल्पनमिवात्र सन्निकर्षविधया हेतुत्वकल्पने बाधकाभावात् । अदृष्टस्य कारणस्य फलबलकल्प्यत्वेन सोऽयमिति ज्ञानस्य चाक्षुषयामीत्यनुव्यवसायगोचरत्वदशायां साक्षिभास्यत्वदशायां वा संस्कार-स्यापि तत्ताविषयके प्रत्यक्षे कारणतया अवश्यं कल्पनीयत्वात् ।

एवमनुमितिसामग्र्यां त्वनुमानस्यापि प्रत्यभिज्ञाविषये प्रवृत्त्यवश्यंभावाच्चेति लाघ-वात् क्लृप्तसामग्र्या निर्वाहे सामग्र्यन्तरकल्पनाया अप्रामाणिकत्वादिति शम्[2] ।

## अभ्यासस्यादृष्टस्य प्रतिभायाश्च प्रामाण्ये श्रीहरिसम्मतिः

आचार्यश्रीहरिणा अभ्यासोऽपि प्रमाणमिति सूच्यते । तथा हि–

**परेषामसमाख्येयमभ्यासादेव जायते ।**
**मणिरूप्यादिविज्ञानं तद्विदां नानुमानिकम् ॥**

अत्रासमाख्येयत्वकथनेन शब्दागोचरत्वम्, अभ्यासादेव इत्येवकारेण प्रत्यक्षादि-व्यवच्छेदः, नानुमानिकमित्यनेनानुमानं व्यावृत्तमित्यभ्यासस्यापि पृथक् प्रामाण्यमस्तीति ध्वन्यते ।

अयं भावः – अयं मणिरिदं रत्नं सत्यं वा असत्यं वेति निश्चेतुं रत्नपरीक्षका-स्त्रिचतुरादिवारं हस्ते गृहीत्वा चक्षुषा पश्यन् तस्य याथातथ्यं परीक्षन्ते । तस्यां च परीक्षायां न चक्षुरादिप्रमाणं प्रभवति । अन्येषामप्यनभ्यासवतां चक्षुरादिसत्त्वेऽपि तज्ज्ञानासम्भवात् ।

---

1. प्रमेयक., पृ. ९७-९९ ।
2. वा. प. १।३५।

नाऽप्यनुमानशब्दाद्यपि तत्र व्यवहर्तुं शक्यम्, अन्वयव्यभिचारात् । यद्यपि रत्न-परीक्षकरूपस्याप्तस्य 'अयं सत्यो मणिः' इति वाक्येनास्माभिरपि मणेः सत्यत्वं परिचेतुं शक्यत इति कथमुच्यते नास्ति शब्दस्य प्रवृत्तिस्तद्विषय इति । तत्रोच्यते–रात्निकस्य वाक्यमपि तदभ्यासाधीनमेवेति परतन्त्रमेव, न स्वतन्त्रम्, यथा शक्ति-ग्रहादिपूर्वकमन्यद् वाक्यं शाब्दीं प्रमां जनयति, न तथा अत्रेति सर्वथा अभ्यास एव शरणीकरणीय इत्यस्ति तस्य स्वतन्त्रं प्रमाणत्वमिति हृदयम् ।

एवमेव अदृष्टमपि पृथक् प्रमाणमिति निर्दिशति श्रीहरिः –

**प्रत्यक्षमनुमानं च व्यतिक्रम्य व्यवस्थिताः ।**
**रक्षःपितृपिशाचानां कर्मजा एव सिद्धयः**[1] ॥ इत्यनेन ।

तथा हि–प्रत्यक्षाऽनुमानागमाभ्यासातिरिक्तां पञ्चमीं प्रतिपत्तिं सङ्के-तयन्नाचार्यश्रीहरिः कारिकामारचयति–प्रत्यक्षमिति ।

अयमर्थः – रक्षःपितृपिशाचानां याः खलु सिद्धयो व्यवहितविप्रकृष्टातीतादि-विज्ञानानि, ताः प्रत्यक्षमनुमानं च व्यतिक्रम्य व्यवस्थिताः, तदजन्यत्वात् । उपलक्षणं चैतदागमाभ्यासयोरपि । अतस्तेषां ताः सिद्धयः कर्मजा एव, स्वकृतसुकृतदुष्कृता-न्यतरकर्मजन्या एवेत्यदृष्टमपि पञ्चमं प्रमाणं सिद्धम् ।

एवमेव प्रतिभाऽपि प्रमाणं श्रीहरिमते । तथा हि–

**विच्छेदग्रहणेऽर्थानां प्रतिभाऽन्यैव जायते ।**
**वाक्यार्थ इति तामाहुः पदार्थैरुपपादिताम् ॥**
**प्रमाणत्वेन तां लोकः सर्वः समनुपश्यति ।**
**समारम्भाः प्रतीयन्ते तिरश्चामपि तद्वशात्**[2] ॥

सर्वोऽपि लोकव्यवहारो ज्ञानाधीनः, तच्च ज्ञानं प्रतिभाधीनमिति प्रतिभाया (बुद्धिविशेषस्य) अपि प्रामाण्यमभ्युपेयमिति भावः ।

**एतस्यापि प्रमाणत्रिकस्य क्लृप्तप्रमाणेष्वेवान्तर्भावः**

वस्तुतस्त्वस्मदाद्यज्ञलोकानां स्फुटं बोधनायाचार्यः प्रमाणत्वेन सङ्कीर्तयति–अभ्या-सादीनीति । अन्यथा तु क्लृप्तेषु प्रत्यक्षादिष्वेवैतेषामपि समावेशो भवितुमर्हति । तथा

---

1. वा. प. १।३६ ।
2. वा. प. २।१४३,१४७ ।

हि–अभावप्रत्यक्षे यथा योग्यानुपलब्धेः सहकारित्वम्, तथैव रत्नादिचाक्षुषेऽभ्यासस्येति न तस्य स्वतन्त्रं प्रमाणत्वम्, अत एव बहवो रात्निकाश्चक्षुषैव दृष्ट्वा परीक्षन्ते, न हस्तादिसंयोगमपि कुर्वन्ति ।

एवम्–अदृष्टस्यापि न पृथक् प्रमाणत्वम्, अपि तु प्रत्यक्षप्रमाणसमीक्षायां योगजसन्निकर्षस्य या स्थितिः सूक्ष्मदर्शनजनकत्वादिरूपा, सैवात्रापि मन्तव्या इति प्रत्यक्ष एवेदमपि समाविशति ।

एवमेव प्रतिभाख्यं तृतीयमपि प्रमाणं न स्वातन्त्र्येण स्वीकार्यम् । आम्नायविज्ञातृणामृषीणामतीतानागतवर्तमानेषु अतीन्द्रियेष्वर्थेषु धर्मादिषु ग्रन्थोपनिबद्धेषु वा लिङ्गाद्यनपेक्षादात्ममनसोः संयोगाद् धर्मविशेषाच्च प्रातिभं ज्ञानं यदुत्पद्यते, तदार्षमिति । तच्च कदाचिल्लौकिकानामपि भवति, यथा–"कन्यका ब्रवीति श्वो मे भ्राता आगन्ता इति हृदयं मे कथयति" इति । शाब्दिकानां नय इदं मानसं प्रत्यक्षमेव, योगादिसहकृते मनसि अतिशयाधानेन तदुत्पत्तेः ।

वैशेषिकैरुच्यते–अयं धर्मोऽयं चाधर्म इति ज्ञानम् ऋषीणां प्रतिभागम्यमिति । तदपि न सम्यक्, प्रातिभस्य प्रामाण्यासम्भवात्, धर्मस्य चोदनैकगम्यत्वाच्चेति सर्वं स्पष्टं शास्त्रदीपिकायाम्[1] । शाब्दिकैरप्येतत् सर्वं मन्तव्यमेव, लाघवात्, एतत्प्रमाणत्रिकस्य मुनित्रयानुक्तत्वाच्च ।

**लोकस्य कोशस्य चेष्टायाश्चापि पृथक् प्रामाण्यनिरासः**

यत्तु महाभाष्ये तत्र तत्रोक्तं 'लोकतः', 'लोक एषु प्रमाणम्' इत्यादि । ततोऽपि न भ्रमितव्यम्, यल्लोकस्य पृथक् प्रामाण्यमिति । अपि तु प्रत्यक्षानुमानशब्देष्वेव यथासम्भवमन्तर्भवितुमर्हति । स्फुटमुक्तं चैतच्छास्त्रदीपिकायाम्[2] ।

यदपि कोशस्यापि पृथक् प्रामाण्यमुच्यते कैश्चित् । उक्तं च श्रीनागोजिभट्टेन लघुमञ्जूषायाम्– "प्रसिद्धपदसामानाधिकरण्यात् तद्बोधकतया च कोशस्य प्रामाण्यं व्युत्पादयन्ति"[3] इति । तद्बोधकतया इत्यत्र तत्पदेन शक्तेः परामर्शः । तदपि न

---

1. शा. दी., १, पा., सू. अ. ५, पृ. १४४ ।
2. शा. दी., १पा., सू. अ. ५, पृ. ३४४ ।
3. ल. म., र. प्र. टी., बौद्धा., पृ. ३२२ ।

रोचते गौरवात्, अनुमाने शब्दे वाऽन्तर्भावात् । तथा हि–"इदं पदं किञ्चिदर्थनिरूपितशक्तिमत्, पदत्वात्" इति पदत्वहेतुकानुमानेनोक्तशक्तिग्रहे जातेऽर्थत्वेनार्थोपस्थितौ सत्यां पशुपतिपदार्थाभिन्नः शिवपदार्थ इति सामानाधिकरण्येन निर्देशात् समानार्थत्वज्ञाने निष्पन्ने वृद्धव्यवहारतः क्वचित् प्रसिद्धपदे विशेषरूपेण गृहीतशक्तिकस्य पुंसः "पशुपतिपदं शिवत्वावच्छिन्ने शक्तम्, शक्तिसम्बन्धेनैकार्थविशिष्टत्वात्" इत्यनुमानद्वारा शक्तिबोधकतया कोशस्य प्रामाण्यम्[1] । कोशस्य शब्दप्रमाणेऽन्तर्वेशः स्फुट एव । यथा "षडमी ऋतवः पुंसि" इत्यादिस्थले।

यच्चापि कैश्चिच्चेष्टाया अपि स्वतन्त्रं प्रामाण्यमिष्यते, हस्तमुखादिचेष्टयापि बोधदर्शनात्, प्रत्यक्षाद्यनन्तर्भावाच्च । तदपि न युक्तम्, अनुमानेऽन्तर्भावयितुं शक्यत्वात् । तथा हि–'अयं देवदत्त ईदृशबोधोऽस्य भवतु' इति तात्पर्यवान् ईदृशचेष्टावत्त्वाद् यन्नैवं तन्नैवम् । यथा हरदत्त इति चेष्टालिङ्गकेनानुमानेन निर्वाहः सुकरः ।

उक्तं च भाष्यकृता–"इहेङ्गितेन चेष्टितेन निमिषितेन महता वा सूत्रप्रबन्धेनाचार्याणामभिप्रायो गम्यते"[2] इति । 'एते पक्षे आचार्ये तदभिप्रायगमकाः' इत्युक्त्या उद्द्योतकारोऽनुमानपरतया भाष्यं योजयति ।

**सम्भवस्य न स्वतन्त्रं प्रामाण्यम्**

समुदायेन समुदायिनोऽवगमः सम्भवप्रमेत्युच्यते, तदर्थं सम्भवोऽपि प्रमाणतयोच्यते कैश्चिद् विद्वद्भिः ।

अयमाशयः – खारीद्रोणादयः परिमाणविशेषाः । खार्य्याख्ये महति परिमाणेऽल्पपरिमाणभूता द्रोणादयोऽन्तः सम्भवन्तीत्येवंविधो यो बोधः स सम्भवप्रमा । अनेन हि सम्भवप्रमाणेन खारीज्ञानेन यद् द्रोणादिज्ञानं तदेव सम्भवप्रमा इति ।

तदेतदपरे शाब्दिकप्रभृतयो दर्शनतत्त्वविदो न सहन्ते, अनुमानेन क्लृप्तेन प्रमाणेन गतार्थत्वात् । तथा हि–खारीत्वं द्रोणाद्यविनाभूतं प्रतीतं खार्य्यां द्रोणादिसत्त्वमवगमयति । 'खारी द्रोणप्रस्थाढकादिघटिता खारीत्वात्' इत्यनुमानेन सा प्रमितिः सम्पादनीया, न तु सम्भवो नाम पृथक् प्रमाणं किञ्चित्[3] । अत एव महाभाष्यकृदादयः केऽपि आचार्या नैनं प्रमाणत्वेन व्यवहरन्ति ।

---

1. ल. म., र. प्र. टी., बौद्धा., पृ. ३२२ ।
2. म. भा. ६/१/३७, पृ. ५६८ ।
3. सां. त. कौ., का. ४, पृ. ९३-९४ ।

**ऐतिह्यमपि न स्वतन्त्रं प्रमाणम्**

यदप्यनिर्दिष्टप्रवक्तृकं प्रवादपारम्पर्यमात्रम् 'इति होचुर्वृद्धाः' इत्यैतिह्यमपि प्रमाणान्तरम् । यथा 'इह वटे यक्षः प्रतिवसति' इति । अत्र हि वटे यक्षनिवासप्रमा ऐतिह्यप्रमाणजन्येति । तदपि न युक्तिसहम्, अनिर्दिष्टप्रवक्तृकत्वेन सांशयिकत्वात्, अनिश्चितोच्चारयितृत्वेन सन्दिग्धत्वात्, ऐतिह्यस्य निर्णायकत्वाभावादिति यावत्[1] । यत्र तूपदेष्टुराप्तत्वनिश्चयः, तत्र शब्दप्रमाण एवान्तर्भावः, अन्यत्र तु तज्जन्यः शाब्दो भ्रम एव । उक्तं च प्रशस्तपादभाष्येऽपि–"ऐतिह्यमवितथमाप्तोपदेश एव"[2] इति । अवितथमाप्तोक्तिमूलकतया यथार्थभूतमिति। एवं चैतदपि शब्दप्रमाणातिरिक्ततया सूत्र-भाष्याद्यनुक्तमिति न स्वतन्त्रं मानमिति सिद्धानि प्रत्यक्षानुमानशब्दार्थापत्तिरूपाणि चत्वारि प्रमाणानि पाणिनीयव्याकरणे प्रमासाधनानि ।

**॥ इति प्रत्याख्येयसमीक्षायां द्वितीयं पुष्पम् ॥**



---

1. सां. त. कौ., टीका च, कारि. ५, पृ. ९४ ।
2. प्रशस्त. भा., अनु. नि., पृ. २३० ।

# ॥ अथ प्रमेयसमीक्षायां प्रथमं पुष्पम् ॥

एतद्व्याकरणे प्रतिपाद्यानि प्रमेयाणि अष्टौ सन्ति, यान्यधिकृत्य उक्तानि चतुर्विधप्रमाणानि प्रवर्तन्ते ।

आह तत्रभवान् श्रीहरिः –

**अपोद्धारपदार्था ये ये चार्थाः स्थितलक्षणाः ।**
**अन्वाख्येयाश्च ये शब्दा ये चापि प्रतिपादकाः ॥**
**कार्यकारणभावेन योग्यभावेन च स्थिताः ।**
**धर्मे च प्रत्यये चाङ्गं सम्बन्धाः साध्वसाधुषु ॥**
**ते लिङ्गैश्च स्वशब्दैश्च शास्त्रेऽस्मिन्नुपवर्णिताः ।**
**स्मृत्यर्थमनुगम्यन्ते केचिदेव यथागमम्**[1] ॥ इति ।

अपोद्ध्रियन्ते ये तेऽपोद्धारास्ते च ते पदार्थाश्चेति कर्मधारयः । अपोद्धारेण विभागेन कल्पिता वा पदार्था इति मध्यमपदलोपिसमासो वा, अपोद्धारपदानामर्था इति षष्ठीतत्पुरुषो वा । (१) अपोद्धारपदार्थः प्रकृतिप्रत्ययान्तरस्यार्थो यथा–घटादिः । (२) स्थितलक्षणोऽर्थो यथा 'नमस्यति, मुण्डयति' इत्यादिरूपो वाक्यार्थः, पचतीत्यादिः पदार्थो वा, अन्वाख्येय-प्रतिपादकभेदाभ्यां शब्दावपि द्विविधौ । (३) तत्राद्यः पदरूपो वाक्यरूपो वा, (४) द्वितीयः प्रकृतिप्रत्ययान्यतररूपः, 'घटस्, पच् अति' इत्येवंरूपः । (५) कार्यकारणभावरूपः । (६) योग्यतारूपः – इत्येवं सम्बन्धोऽपि द्विविधः । (७) साधुशब्दानां प्रयोगेण धर्मोत्पत्तिः, (८) सर्वविधशब्दानां प्रयोगेऽर्थबोधः – इत्येवं फलमपि द्विविधम् ।

अत्र कार्यकारणभावसम्बन्धे किं कार्यम् ? किं कारणम्? इति जिज्ञासाया-मुच्यते–श्रोतृबुद्ध्युपारूढस्यार्थस्य शब्दः कारणम् । अन्यस्माद् वक्तृबुद्धिनिवेशिनः, अर्थात् कारणभूतात् शब्दः श्रोत्रविषयतामनुगतः प्रतीयत इत्यर्थस्यापि शब्दं प्रति

---

1. वा. प. १।२४-२६ ।

कारणता । एवं चोभयत्र कार्यकारणभावसंघटनात् शब्दार्थयोरभेदेनाध्यासलक्षणोऽपि सम्बन्धः प्रतिपन्नो भवति । इदमप्युक्तं श्रीहरिणा–

**शब्दः कारणमर्थस्य स हि तेनोपजन्यते ।**
**तथा च बुद्धिविषयादर्थाच्छब्दः प्रतीयते**[1] ॥ इति ।

तत्र स्थितलक्षणरूपो वाक्यार्थः किञ्चिद्रूपेण पूर्वं प्रदर्शित एव । पदार्थोऽपि प्रकृतिप्रत्ययान्यतरार्थरूपेऽपोद्धारपदार्थे प्रदर्शिते सति प्रदर्शितो भविष्यति । तत्र मुख्यरूपेण प्रकृतिर्द्विविधा वर्तते – प्रातिपदिकानि धातवश्च । प्रातिपदिकेभ्यः सुप उत्पद्यन्ते, धातुभ्यश्च तिङः । ततश्च पदत्वं सम्पद्यते–पुनश्च प्रातिपदिकेभ्य–स्तद्धितसंज्ञकाः, धातुभ्यश्च कृत्संज्ञका अपि प्रत्यया भवन्ति । ततश्च तदन्तानां प्रातिपदिकसंज्ञया स्वाद्युत्पत्तौ भवति पदत्वम् ।

**आदौ प्रातिपदिकरूपप्रकृत्यर्थविमर्शः**

तत्रादौ प्रातिपदिकार्थविषये पञ्च त्रिकाणि प्रदर्श्यन्ते । तथा हि–

१. प्रवृत्तिनिमित्तं जात्यादिरूपं तदाश्रयो द्रव्यादिः, तत्सम्बन्धः समवायः, स्वमते तादात्म्यमित्यर्थानामेकं त्रिकम् ।

२. लिङ्गं पुंस्त्वादि, तद्वृत्तिधर्मः पुंस्त्वत्वादिः, तत्सम्बन्धः स्वरूपाख्य इत्यर्थानां द्वितीयं त्रिकम् ।

३. संख्या एकत्वादिः, तद्धर्म एकत्वत्वादिः, तत्सम्बन्धः समवायस्तादात्म्यं वा इति तृतीयं त्रिकम् ।

४. कारकं कर्मादि, तद्वृत्तिधर्मः कर्मत्वादिः, तत्सम्बन्धः स्वरूपमिति चतुर्थं त्रिकम् ।

५. शब्दस्य स्वरूपम्, तद्वृत्तिधर्मः शब्दत्वव्याप्यो घटशब्दत्वादिः । तत्सम्बन्ध-स्तादात्म्यमिति पञ्चमं त्रिकम् ।

एते सङ्कलिताः पञ्चदशसंख्याकाः समपद्यन्त । एतेषां प्रकारता-विशेष्यता-संसर्गतारूपा विषयता अपि पञ्चदशसंख्याका एव । समेषां मेलनेन त्रिंशत्संख्याका अर्थाः सम्पन्नाः । बाह्यबौद्धभेदाभ्यां पुनरेते षष्टिसंख्याका भवन्ति । सावयवे द्रव्य-रूपे प्रातिपदिकार्थे ऽवयवाः, तत्संयोगरूपाऽऽकृतिः, गुणः, क्रिया चेत्येते चत्वारोऽर्था अधिका भासन्ते, निरवयवे तु गुणक्रिये एव । एतेषां धर्मा विषयताश्चापि भासेरन् । अतश्चैतदंशे इयत्ता कर्तुं न शक्यते ।

---

1. वा. प. ३।३।३२ ।

यत्तु सकलावयवगुणक्रियादीनां बोधे "न हि गौरित्युक्ते विशेषः प्रख्यायते–शुक्ला नीला कपिला कपोतिकेति" इति भाष्यं[1] विरुद्धं स्यादिति शङ्क्यते । तत् त्वविचारितरमणीयम् । सकलान्तर्गततया शुक्लनीलादीनां युगपद् बोधेऽपि 'शुक्ला गौः' इति बोद्धुं कथं शक्येत ? तस्य 'शुक्लैव न तु नीलादिः' इति विशेषबोधे तात्पर्यात् । गौरित्यनेन तु शुक्लनीलाद्यन्यतमाया बोधेन सामान्यविषयकबोधस्यैव सिद्धान्तितत्वात् ।

यदि तु गुणसमुदायस्य द्रव्यत्वेऽप्यनुद्भूतावयवभेदघटितसमुदायस्यैव वाच्यत्वेन तदभिन्नानामवयवभूतानां रूपरसगन्धादीनां तत्तद्रूपेण रूपत्वरसत्वादिना गोशब्दाद्य-वाच्यत्वान्न तेन रूपेण तेषां शब्दविषयता । अत एव च "आकृतिर्नाम सा" इति भाष्यग्रन्थस्य[2] गुणक्रियाकृतीनां गोशब्दत्वाशङ्कानिवृत्तिपरस्याञ्जस्येनानुकूल्यमिति विभाव्यते।

तदा तु प्राचीनतार्किकसम्मतस्याकृतिवाच्यत्वपक्षस्य नव्यतार्किकैस्त्याग इवात्रापि दर्शने गुणादिवाच्यत्वपक्षस्य त्यागे 'न हि गौरित्युक्ते विशेष प्रख्यायते' इति भाष्यं सर्वथा अनुकूलं भवन्मनागपि विरोधं नाचरति ।

प्रथमः पक्षस्तु उद्भूतावयवभेदघटितसमुदायाभिप्रायेण सङ्गमनीयः । स्फुट-मुक्तश्चायं पक्षो वाक्यपदीये पुण्यराजीयव्याख्यायाम्,[3] अम्बाकर्त्र्यां च[4] ।

## जात्यादिरूपप्रवृत्तिनिमित्तसमीक्षा

घटादयः शब्दा घटत्वादिरूपां जातिमेव निमित्तीकृत्य स्वार्थबोधेन समर्था अनुभूयन्ते । यतो हि–घटपदस्य घटरूपोऽर्थ इति सकृद्बोधितो बालो घटपदेन कालान्तरे घटान्तरं बुध्यते । अतो ज्ञायते यदनेन कश्चनैकः सामान्यो धर्मो घटेऽवश्यं गृहीतः, यं दृष्ट्वा अन्यस्मिन्नपि घटेऽयं घट इति व्यवहरति । घटादि-शब्दैर्द्रव्यमात्रस्याभिधाने तु सकलघटादिद्रव्यस्य बोधो न स्यात्, प्रत्येकं घटादिद्रव्यस्य भिन्नत्वात्, तदेकत्वकरस्य सामान्यधर्मस्य घटत्वादेरनभिधानाच्च । अस्यां स्थितौ महदनिष्टं प्रसज्येत । यदुक्तं भाष्यकृता–"द्रव्याभिधाने आकृत्यसम्प्रत्ययः । द्रव्याभिधाने सत्याकृतेरसम्प्रत्ययः स्यात् । तत्र को दोषस्तत्रासर्वद्रव्यगतिः ।

---

1. म. भा. १/२/६४ ।
2. म. भा., पस्पशा. १/१, पृ. १२ ।
3. वा. प., पुण्य. २/१६२ ।
4. वा. प., अम्बा. २/१६२ ।

तत्रासर्वद्रव्यगतिः प्राप्नोति । असर्वद्रव्यगतौ को दोषः ? 'गौरनुवन्ध्योऽजोऽग्नीषोमीयः' इति । एकः शास्त्रोक्तं कुर्वीत, अपरोऽशास्त्रोक्तम्, अशास्त्रोक्ते च क्रियमाणे विगुणं कर्म भवति, विगुणे च कर्मणि फलानवाप्तिः"[1] इति ।

किञ्च, देशकालावस्थाभेदाद् भिन्नेष्वपि घटेषु 'घटोऽयं घटोऽयम्' इत्याकारया अबाधितप्रतीत्याऽपि घटत्वादि-सामान्यधर्मस्य सद्भावोऽनुमीयते । अनुमानप्रयोगश्चेत्थम्–"विमतप्रत्ययो जातिविषयको देशादिभेदेऽप्यबाधितैकाकारप्रत्ययत्वात्, सम्मतवत्"[2] इति ।

एवमेव 'नीलं पुष्पम्' इत्यादौ नीलादिशब्दा नीलत्वादिगुणम्, पाचकादिशब्दा विक्लित्त्यनुकूलक्रियाम्, राजपुरुषादयः शब्दाः स्वस्वामिभावसम्बन्धम्, आकाशादिशब्दा आकाशत्वादिरूपमखण्डोपाधिं प्रवृत्तिनिमित्तीकृत्य प्रवर्तन्ते । तत्र गुणादीनां स्वरूपमनुपदमेव वक्ष्यते । पूर्वं जातेः स्वरूपं निरूप्यते ।

### जातिलक्षणसमीक्षा

"यत्तर्हि तद्भिन्नेष्वभिन्नम्, छिन्नेष्वच्छिन्नं सामान्यभूतं स शब्दः" इति भाष्योक्त्या नित्यत्वे सत्येकत्वे सत्यनेकसमवेतत्वमिति जातिलक्षणं ध्वनितं भवति । स्पष्टीकृतं चेदं तत्रैव प्रदीपे उद्द्योते च[3]। न्यायदर्शनेऽपीदमेवैकत्वपदरहितं लक्षणं समादृतमस्ति[4] ।

### जातिभेदसमीक्षा

इयं च जातिश्चतुर्विधोक्ता शब्दशास्त्रे । एका आकृतिग्रहणा इत्युक्ताऽस्ति । इयं तत्तदाकारविशेषैरभिव्यज्यते, यथा मनुष्यत्व-वृक्षत्व-गोत्व-घटत्वादयः । अपरा तु असर्वलिङ्गा सती एकस्यां व्यक्तौ उपदेशाद् व्यक्त्यन्तर उपदेशं विनाऽपि सुग्रहा, यथा ब्राह्मणत्व-क्षत्रियत्वादयः । न ह्याकृत्या आसां ग्रहणं सुशकम् । तदुक्तं भाष्यकृता–

**आकृतिग्रहणा जातिर्लिङ्गानां च न सर्वभाक् ।**
**सकृदाख्यातनिर्ग्राह्या गोत्रं च चरणैः सह**[5] ॥ इति ।

---

1. म. भा. १/२/६४ ।
2. म. भा., प्र. उ. १/२/६४ ।
3. म. भा., प्र. उ., पस्पशा., १/१/१ पृ. १०-११ ।
4. न्या. सि. मु., प्र. ख., का. ८ ।
5. म. भा. ४/१/६३ ।

गोत्रमित्यनेनापत्यप्रत्ययान्तः चरणपदेन शाखाध्येतृवाची गृह्यते । अनयोरपि जातिकार्यभाक्त्वमातिदेशिकमस्तीति तृतीया । चतुर्थी तु यावद्द्रव्यभाविनी जातिः, यथा गोत्वादिः, न तु कुमारत्वयुवत्वादिः । आकृतिग्रहणा इति प्रथमलक्षणेन तु कुमारत्वादीनामपि ग्रहणं भवतीति विशेषः । चतुर्थ्या अपि स्वरूपमुक्तं भाष्ये–

**प्रादुर्भावविनाशाभ्यां सत्त्वस्य युगपद्गुणैः ।**
**असर्वलिङ्गां बह्वर्थां तां जातिं कवयो विदुः**[1] ॥ इति ।

सत्त्वस्य द्रव्यस्य गुणैर्युगपद्गुणैः सह प्रादुर्भावविनाशाभ्यां द्रव्यस्य प्रादुर्भाव–मारभ्य विनाशं यावद् द्रव्येण सम्बध्यते, सा बह्वर्था अनेकाश्रयव्यापिनी जातिरित्यर्थः ।

**जातिविषये केचन विशेषाः**

परनये जातेर्वास्तविकं नित्यत्वम्, प्रलयेऽपि स्वसमवायिन आरम्भकपरमाणुषु काले वा तस्या वर्तमानत्वात् । शाब्दिकदर्शने तु शब्दब्रह्मणोऽतिरिक्तस्य सर्वस्य प्रपञ्चस्यानित्यत्वमेवेति यावत्सृष्टिस्थायित्वरूपमेव जातेर्नित्यत्वं मन्यते । प्रलये सर्व-व्यवहाराणां विलयेन नास्ति किमपि प्रयोजनं जातेः । आकाश-काल-समवाया-दीनामप्यौपाधिकभेदेन भिन्नत्वे आकाशत्वादिधर्मा अपि जातिरूपा एव स्वीकृता अत्र दर्शने । उक्तञ्च हरिणा–

**संयोगे द्रव्यभेदेन देशे च परिकल्पिते ।**
**तेषु देशेषु सामान्यमाकाशस्यापि विद्यते**[2] ॥ इति ।

अत्राकाशेत्युपलक्षणं पदार्थान्तरस्यापि । तथा हि–

**अर्थजात्यभिधानेऽपि सर्वे जात्यभिधायिनः ।**
**व्यापारलक्षणा यस्मात् पदार्थाः समवस्थिताः**[3] ॥ इति ।

एवं च सामान्येऽपि सामान्यं वर्ततां नाम, का क्षतिः ? 'निःसामान्यानि सामान्यानि' इति सिद्धान्तस्तु नास्माकम्, अपि तु दार्शनिकविशेषाणामेव[4] । अत एव च–'अक्षा भज्यन्तां भुज्यन्तां दीव्यन्ताम्' इत्यत्राक्षगतेऽक्षत्वत्रितयएका अक्षत्वत्वनामिका

1. म. भा. ४।१।६३ ।
2. वा. प. ३।१।१५ ।
3. वा. प. ३।१।११ ।
4. म. भा., प्र. १।१।६४ ।

जातिः स्वीक्रियते । जातिपक्षेण च "सरूपाणाम्." इति सूत्रप्रत्याख्यानमपि सङ्गच्छते[1] । एवञ्च शब्दानां प्रवृत्तिनिमित्तं जातिर्वा स्यात्, उपाधिर्वा स्यान्नास्ति कोऽप्याग्रहोऽस्माकं शाब्दिकानाम्[2] । किञ्च, "शक्यत्व इव शक्तत्वे जातेर्लाघवमीक्ष्यताम्" इत्युक्त्या[3] वाक्यवाक्यार्थयोरपि जातिः सुस्पष्टं स्वीकृताऽस्ति । "जात्याख्यायामेकस्मिन्." इति सूत्रे भगवता पाणिनिनाऽयं जातिपक्षः सुष्ठु समर्थितः[4] ।

## द्रव्यलक्षणसमीक्षा

**स्वार्थमभिधाय शब्दो निरपेक्षो द्रव्यमाह समवेतम् ।**
**समवेतस्य च वचने लिङ्गं वचनं विभक्तिं च[5] ॥**

इति भाष्यसिद्धान्तेन जातिस्वरूपं संक्षिप्तमभिधाय तदाश्रयतया द्रव्यस्य स्वरूपमभिधीयते—तत्र "गुणसमुदायो द्रव्यम्"[6]इत्यादिभाष्य पर्यालोचनया "अयुतसिद्धावयवविशेषानुगतसामान्यविशेषगुणसमूहो द्रव्यम्"[7] इति पर्यवस्यति । "अयुतसिद्धावयवविशेषानुगतः समूहो द्रव्यम्"[8] इति योगदर्शनमप्येतल्लक्षणं संवदते । अत्र लक्षणे गुणपदेनावयवा गृह्यन्ते धर्माश्च । अत एव व्रीहिषु प्रोक्षणजन्यसंस्कारस्यावयवत्वादिना व्यवहारः सङ्गच्छते[9] । अत्रायुतसिद्धावयवविशेषानुगत इत्युक्त्या वनादीनामतिरिक्तद्रव्यत्वं निरस्तम् ।

## द्रव्यभेदसमीक्षा

इदं द्रव्यं द्विविधं मन्यते व्याकरणशास्त्रे—पारमार्थिकम्, लौकिकं (व्यावहारिकं) चेति । तत्राद्यं तावन्निरूपितं पूर्वग्रन्थेन । साम्प्रतं तु द्वितीयं निरूप्यते ।

**वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते ।**
**द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन विवक्षितः[10] ॥**

---

1. म. भा. १।१।६४ ।
2. वै. भू. सा., का. ४८ ।
3. वै. भू. सा., का. ७१ ।
4. पा. सू. १।२।५८ ।
5. म. भा. ५।३।७४ ।
6. म. भा. ४।१।३, ५।१।११९ ।
7. वै. सि. ल. म., बौ. निरू. पृ. ३४७ ।
8. यो. द. भा. ३।४४ ।
9. वे. सू. १।१।४ ।
10. वा. प. ३।४।३ ।

इत्यनया कारिकया श्रीहरिर्व्यावहारिकं द्रव्यमुदटङ्कयत् । तथा हि–इदं तदिति सर्वनामपरामर्शयोग्यं द्रव्यम् । इदमिति प्रत्यक्षार्थपरामर्शकम्, तदिति प्रमाणान्तरावगतपरोक्षार्थाभिधायकम् । अतश्च प्रत्यक्षपरोक्षार्थपरामर्शेन वस्तुमात्रवाचकत्वं सर्वनाम्नामुक्तं भवति । एवं चैतल्लक्षणं द्रव्यमात्रस्येत्यपि बोध्यम् । द्वितीयं लक्षणमुच्यते–भेद्यत्वेन विवक्षित इति ।

अयं भावः – सामान्यादिभिर्धर्मैर्भेद्यत्वेन अवच्छेद्यत्वेन यदभिप्रेयते, तदपि द्रव्यम् । एवं च जात्यादिरपि विशेष्यत्वेन विवक्षायां द्रव्यमेव । अतश्च 'इदं सामान्यम्, इदं रूपम्, अयं पाकः' इत्यादिषु सामान्यस्य, गुणस्य क्रियायाश्च द्रव्यत्वमेव । लिङ्गसंख्यान्वयित्वमपि लक्षणमेतत्परमेव । शास्त्र एवैतदुपयुज्यत इति व्यावहारिकमित्युच्यते ।

## द्रव्यविषये केचन विशेषाः

पाणिनीयदर्शने "अधिकरणैतावत्त्वे च"[1] इत्यादिसूत्रेषु अधिकरणशब्देन द्रव्यस्य बोधो भवति । "आधारोऽधिकरणम्"[2] इत्यत्राधारेऽर्थे सङ्केतितोऽधिकरणशब्दः "सप्तम्यधिकरणे च"[3] इत्यादौ व्यवह्रियते । एवं चार्थद्वयेऽधिकरणशब्दोऽत्र शास्त्रे वर्तते । "द्रव्यं च भव्ये"[4] इति सूत्रेण भव्यार्थे द्रव्यशब्दः साध्यते ।

"किमेत्तिङव्ययघादाम्बद्रव्यप्रकर्षे" इति सूत्रे प्रयुक्तो द्रव्यशब्दो न हि लौकिकद्रव्यपरः, अपि तु व्यावहारिकपर एव । स्पष्टमुक्तमेतद् श्रीहेलाराजेन वाक्यपदीयटीकायाम्[5] । द्रव्यस्य प्रातिपदिकार्थत्वे मानं तु–"उभयथा ह्याचार्येण सूत्राणि पठितानि" । आकृतिं पदार्थं मत्वा "जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम" इत्युच्यते । द्रव्यं पदार्थं मत्वा "सरूपाणाम् इत्येकशेष आरभ्यते" इति भाष्यमेव[6] ।

---

1. पा. सू. २।४।१५ ।
2. पा. सू. १।४।४५ ।
3. पा. सू. २।३।३६ ।
4. पा. सू. ५।३।१०४ ।
5. "तथा ह्यस्मिन् द्रव्यलक्षणे रूपादीनामपि द्रव्यत्वात्, अद्रव्यप्रकर्षे इत्यामुप्रत्ययाभावः, समयातरं शीतम्, उपांशुतरः शब्दः, उच्चैस्तरो ध्वनिः" इति । (वा. प., हे. टी., का. ३, द्र. समु., श्लो. ३)
6. म. भा. पस्प., १।१ ।

किञ्च वाक्यपदीये–

**पदार्थानामपोद्धारे जातिर्वा द्रव्यमेव वा ।**
**पदार्थौ सर्वशब्दानां नित्यावेवोपवर्णितौ[1] ॥**

इत्यनया कारिकयाऽपि उक्तः पक्षः स्फुटं समर्थ्यते । किञ्च–"न ह्याकृतिपदार्थस्य द्रव्यं न पदार्थः" इति भाष्योक्त्या[2] विशिष्टस्य वाच्यताऽभ्युपेयते शब्दशास्त्रज्ञैः ।

**द्रव्यभेदाः पृथिव्यादयः**

पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनस्तमांसि दश द्रव्याणि शाब्दिकनयेऽभ्युपेयन्ते । तथा हि "पृथिव्या ञाञौ, सर्वभूमिपृथिवीभ्यामणञौ" इत्यादिसूत्रेषु पृथिव्याः सङ्केतः प्राप्यते । "ऋक्पूरब्धूः" इत्यत्र अपां कथनम्, "अग्नेर्ढक्" इत्यादौ अग्नेः तेजसः सङ्कीर्तनम्, "वाय्वृतुपित्रुषसो यत्" इति सूत्रे वायोरुल्लेखः, अर्धर्चादिगणे आकाशस्य, "नभोऽङ्गिरोमनुषां वत्युपसंख्यानम्" इत्यत्र च वार्त्तिके नभसः सङ्केतः । "दिगादिभ्यो यत्" इत्यत्र दिशः, "कालाट्ठञ्" इत्यादौ कालस्य, "आत्मन्विश्वजनभोगोत्तरपदात्खः" इत्यत्र आत्मनः, "मनसः संज्ञायाम्" इत्यत्र मनसः, "अपे क्लेशतमसोः" इत्यत्र तमसश्च सङ्केतोऽस्ति । अत एषां दशानां द्रव्याणां प्रामाणिकत्वमस्मन्मते । तत्र पृथिवीजलतेजसां चाक्षुषं त्वाचनं च प्रत्यक्षं मन्तव्यम् । वायोः स्पार्शनमेव रूपाभावान्न चाक्षुषम् । आकाशं तु नेन्द्रियग्राह्यमिति शब्दगुणितया तस्यानुमित्यादिविषयता, कालस्यापि चाक्षुषादिविषयता इदानीं घटस्तदानीं घट इत्यादिव्यवहारबलात् । स्पष्टं चेदं भूवादिसूत्रे भाष्यप्रदीपे । मीमांसानयेऽप्ययं प्रत्यक्षविषयो भवति ।

दिक् तु पृथिव्यादिवत्, नावयवारब्धं द्रव्यम्, अपि तु व्यवहारसिद्ध्यर्थं कल्पितमेव । अन्यथा सन्ध्योपासनादीनां वैदिककर्मणां प्राच्यभिमुखत्वेनाधिकारिणमुद्दिश्य विधानं कथं सङ्गच्छेत? एवं दिशामनुमित्यादिविषयतैव, इयं चैकैवोपाधिभेदेन प्राच्यादिव्यपदेशं लभते । व्यवहृताश्चास्य भेदा अत्रापि शास्त्रे–"द्युप्रागपागुदक्प्रतीचो यत्" इति सूत्रे । एवमेव कालस्य प्रामाणिककल्पनाप्रसूतत्वमेव, अन्यथा प्रातर्मध्याह्नसायंकालेषु तत्तद्विधीनां विधानमसङ्गतमेव स्यात् । वस्तुत आरब्धद्रव्यस्याकाशस्यैव तत्तदुपाधिभेदेन दिक्कालपदाभ्यां व्यपदेश इति सर्वं सामञ्जस्यम्, स्वीकृताऽप्यस्तीदृशी व्यवस्था दर्शनान्तरे[3] ।

---

1. वा. प. ३।१।२ ।
2. म. भा. १।२।६४ ।
3. सां. प्र. भा. २।१२ ।

आत्मा चेतनो नित्य एकरस आनन्दस्वरूपः श्रुतिषु यथा उक्तः, तथैवात्रापि स्वीकृतः । अस्य दर्शनस्य वेदाना रक्षाद्यर्थमेव प्रवृत्तत्वात् । व्यवहृतश्च भगवता सूत्रकृता तादृशत्वेन – "चित्तवति नित्यम्" इत्यादि सूत्रे । द्विविधोऽप्ययं चेतन आत्मपरमात्मभेदेन वर्णितः – "इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टम्" इति सूत्रे । तत्र हि इन्द्र आत्मा तस्य लिङ्गमिन्द्रियमित्यनेन जीवात्मा गृहीतः । इन्द्रेणात्मना सृष्टम्, दृष्टमित्यादिना परमात्मा गृहीतः । न हि इन्द्रियाणां सर्जने जीवात्मा समर्थः । स्वीय आत्मा तु स्वेन प्रत्यक्षः क्रियत एव, 'अहं सुखी दुःखी' इत्याद्यनुभवबलात् । एकेनैवेन्द्रशब्देन बोधितत्त्वाद् द्वयोरभेदोऽपि सम्मतः ।

मनस्तु मध्यमपरिमाणमन्तरिन्द्रियं सुखदुःखादिसाक्षात्कारे साधनमपवर्गात् प्राक् प्रत्यात्मनियतमिति नाना भवति । तमोऽप्यतिरिक्तं द्रव्यमस्मन्मते ।

अत एव "अपे क्लेशतमसोः"[1] इति सूत्रेण तमोऽपहन्ति इति विग्रहे तमोपहः सूर्य इति प्रयोगः साध्यते, अन्यथा तमसस्तेजोऽभावरूपत्वे तमोऽपहन्ति इति विग्रहः स्वरसतः कथं सङ्गच्छेत? अत्यन्ताभावरूपस्य तमसो नित्यत्वे ध्वंसासम्भवात् । एवं च 'नीलं तमश्चलति' इति प्रत्यक्षप्रतीतिः प्रमैव, न तु भ्रमरूपा, औत्तरकालिकबाधाभावात् । एवमेव छायायाः स्फोटात्मकशब्दस्य च शाब्दिकनये द्रव्यत्वं प्रमितमेव । तत्तत्परमाणूनां परिणामविशेषरूपत्वात् । उक्तं च हरिणा–

**अणवः सर्वशक्तित्वाद् भेदसंसर्गवृत्तयः ।**
**छायातपतमःशब्दभावेन परिणामिनः**[2] ॥ इति ।

## एतेषां पदार्थानामान्तरत्वं शक्तिरूपत्वं च

आचार्येण श्रीभर्तृहरिणा एषां पदार्थानामन्तःकरणधर्मत्वेन शक्तिरूपत्वेन च व्यवहारः कृतोऽस्ति । तथा हि–

**द्यौः क्षमा वायुरादित्यः सागराः सरितो दिशः ।**
**अन्तःकरणधर्मस्य भागा बहिरवस्थिताः**[3] ॥
**शक्तिरूपे पदार्थानामत्यन्तमनवस्थिताः ।**
**दिक् साधनं क्रिया काल इति वस्त्वभिधायिनः**[4] ॥

---

1. पा. सू. ३।२।५० ।
2. वा. प. १।११० ।
3. वा. प. ३।७।४१ ।
4. वा. प. ३।६।१।

परोपाधिरूपाः शक्तयो दिगाद्याः, पारतन्त्र्यं च शक्तिलक्षणमिति क्रियाऽपि द्रव्यपरतन्त्रा शक्तिरिति व्यपदिश्यते । वैशेषिकनये च दिग् द्रव्यं नोपपद्यते, कार्यानुमेयत्वेन पदार्थोपकाररूपस्य शक्तित्वस्य न्याय्यत्वात्" इति हेलाराजः[1] । एवं च दिक्कालक्रियाकारकाणां शक्तिरूपतैवाभ्युपेयते ।

**समवायस्वरूपविमर्शः**

'नित्यसम्बन्धः समवायः' इति न्यायदर्शनम् । अत्र तु शब्दब्रह्मातिरिक्तस्य कस्यचन नित्यत्वं नास्ति, तथापि जातिवन्नित्यत्वमस्यापि भवतु, तावता न काचन हानिः । अयं सम्बन्धोऽत्र व्याकरणदर्शनेऽपि व्यवहृत एव । अत एव "स्वार्थमभिधाय शब्दो निरपेक्षो द्रव्यमाह समवेतम्" इति प्रतिपादितं भाष्यकृता[2] । तत्र च समवेतमित्यस्य समवायसम्बन्धेन वर्तमानमित्यर्थः । न हि समवायसम्बन्धस्वीकारमन्तरेणेयमुक्तिः सङ्गच्छेत । "निमित्तात् कर्मसंयोगे" इति च वार्त्तिके संयोगः सम्बन्धतया व्याख्यातः कैयटेन । उद्द्योतकृता श्रीनागेशभट्टेन तु "संयोग इत्यस्य व्याख्यानं सम्बन्ध इति समवायस्यापि सङ्ग्रहाय" इत्युक्तवता समवायस्य सम्बन्धतया स्वीकारः कृत एव[3] । सिद्धान्तकौमुद्यां श्रीभट्टोजिदीक्षितेन तु वार्त्तिके योग इति पाठं स्वीकृत्य "योगः संयोगसमवायात्मकः" इति स्फुटमुक्तम्[4] ।

एवंरीत्या सम्बन्धत्वेनास्य स्वीकारेऽपि स्वतन्त्रपदार्थोऽयमिति नाभ्युपेयते, सम्बन्धस्य पदार्थयोजनामात्रहेतुत्वात् । अतश्चास्य तादात्म्यरूपतायामपि न काचन हानिः[5] ।

**समवायः प्रत्यक्षविषयो न वा**

न्यायदर्शनरीत्या चक्षुस्त्वग्भ्यां समवायस्य स्वसंयुक्तविशेषणतासन्निकर्षेण प्रत्यक्षं भवत्येव । वैशेषिकनये त्वयमतीन्द्रिय एव । मीमांसानये तु नायं सम्बन्धोऽभ्युपेयते, एतत्स्थाने तादात्म्यमेवाभिषिक्तं तत्र । एवं च तन्नयेऽनुमित्यादिविषयत्वे तु न किञ्चिद् बाधकम् । इयमेव स्थितिरत्र दर्शनेऽपि मन्तव्या ।

---

1. वा. प., प्र. प्र. ३।६।१।
2. म. भा. ५।३।७४ ।
3. म. भा, उ. २।३।६६ ।
4. सि. कौ., का. प्र., सप्तमी विभक्ति. ।
5. वा. प., प्र. प्र. ३।३।१२ ।

**संयोगसमवाययोः सम्बन्धत्वाभावविमर्शः**

यत्तु "संयोगसमवायाविव नेह सम्बन्धः, यथान्येषां च दर्शनानाम्" इति हेलाराजोक्त्याऽनयोरत्र शास्त्रे सर्वथा सम्बन्धत्वं नाङ्गीक्रियत इति तु न भ्रमितव्यम्, शब्दार्थयोः परस्परं सम्बन्धविषय एव तेन तयोस्तत्त्वानङ्गीकारात् । संयोगस्तु कुत्रापि वस्तुतः सम्बन्धत्वेन नाङ्गीक्रियते ।

सम्बन्धस्य पदार्थयोजनामात्रहेतुत्वम् । संयोगस्य तु स्वतः पदार्थत्वमेव, सम्बन्धस्य सांसर्गिकविषयतया षष्ठ्यादिविभक्त्या वाक्येन वा बोध्यता, न तु पदेन इत्यारोपितमेव सम्बन्धत्वं संयोगे स्वीकृत्य "इमौ संयुक्तौ' इत्यादिव्यवहारा उपपादनीयाः[1] ।

संयोगस्य प्रत्यक्षे तु यावदाश्रयप्रत्यक्षमावश्यकम् । प्रतियोग्यनुयोगिनोरन्यतरस्याप्रत्यक्षत्वेऽस्याप्रत्यक्षत्वमेव । अनुमित्यादिविषयत्वे तु न किञ्चिद् बाधकम् । एवमेव वाच्यवाचकभाव-जन्यजनकभाव-स्वरूपतादात्म्यकालिकप्रभृतयः सम्बन्धा अप्यत्र शास्त्रे स्वीक्रियन्त एव । तेषां प्रत्यक्षाप्रत्यक्षत्वविषये यथायोग्यं व्यवस्था करणीया । तत्र जातिगुणक्रियाणां स्वाश्रये समवायः, पुंस्त्वादीनां तु स्वाश्रये स्वरूपमेव सम्बन्धः । नान्तरीयकतया सोऽपि प्रातिपदिकार्थतया स्वीक्रियत एव ।

**॥ इति प्रमेयसमीक्षायां प्रथमं पुष्पम् ॥**

●

---

1. वै. सि. ल. म., विभक्त्यर्थनिरूपणे षष्ठीविभक्तिः ।

## ॥ अथ प्रमेयसमीक्षायां द्वितीयं पुष्पम् ॥

**तत्र गुणस्वरूपसमीक्षा**

> **सत्त्वे निविशतेऽपैति पृथग् जातिषु दृश्यते ।**
> **आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः[1] ॥**

इत्येवं लक्षणलक्षितो गुणोऽत्र शास्त्रे स्वीक्रियते ।

अयं भावः – सत्त्वे लिङ्गसंख्यान्वयिनि द्रव्ये निविशते अन्वेति, अपैति ततो निवर्त्तते, पृथग् भिन्ना जातिर्येषां तेषु भिन्नजातीयेषु दृश्यते । आधेय उत्पाद्यः, अक्रियाजः अनुत्पाद्यः, नित्यानित्योभयनिष्ठपदार्थविभाजकोपाधिमान् इत्यर्थः । असत्त्वमद्रव्यं प्रकृतिः स्वभावो यस्य तादृशो द्रव्यभिन्न इति यावत्, एवं लक्षणेन लक्षितो गुणपदार्थः । यथा शुक्लनीलपीतादिः । स च यस्मिन् घटादौ अन्वेति तत एव पाकादिना निवर्तते, भिन्नजातीयेषु पयोहिमादिषु दृश्यते ।

आकाशगतमहत्त्वादिषु नित्येषु पाकजरूपादिषु अनित्येषु च गुणत्वस्य सत्त्वेन नित्यानित्येत्यंशोऽपि संघटते । द्रव्यभिन्नत्वमपि गुणे वर्तत एव, लक्षणभेदात् ।

अत्र लक्षणे गुणत्वजातिमत्त्वमित्येव लक्षणमस्तु, इतरेषां वैयर्थ्यं दुर्निवारमायातीति प्रकारान्तरेण व्याख्येया इयं कारिका । तथा हि–सत्त्वे द्रव्ये निविशते उत्पद्यते, अपैति नश्यति । अतश्च द्रव्याधिकरणकोत्पत्तिविनाशशालित्वमिति प्रथमं विशेषणं बोध्यम् । जातिषु पृथक् पृथक्त्वमित्यर्थस्तेन जातिभिन्नत्वमिति द्वितीयं विशेषणम् । आधेयश्चाक्रियाजश्चेत्यादि तु पूर्ववद् व्याख्येयम् । तत्र प्रथमविशेषणाभावेऽभावस्य गुणत्वमापद्येत ।तत्रापि उत्पत्तिरूपांशाभावे प्रागभावे विनाशरूपांशाभावे ध्वंसे चातिप्रसङ्गः स्यात् । द्वितीयविशेषणाभावे तत्तद्व्यक्तिवृत्तित्वविशिष्टब्राह्मणत्वादिजातेरपि गुणत्वं स्यात् । इयं च जातिविशिष्टाधिकारप्रयोजकत्वेन ब्राह्मणत्वादिसामान्यव्याप्यतया लाघवात् सिध्यति । संस्कारपातित्यादिना चास्या उत्पादविनाशौ सम्भवत एव । भवति च विशेषणाभावकृतो विशिष्टाभावः । तृतीयविशेषणाभावे क्रियायाम् ।

---

1. म. भा. प्र. उ. ४/१/४४ ।

चतुर्थाभावे अवयविद्रव्ये गुणत्वं प्रसज्येत । एवं चास्य लक्षणान्तरत्वं निर्दुष्टमेव प्रतिपन्नम्[1] । अयमेवार्थः श्लोकान्तरेणाप्युक्तो भाष्ये–

**उपैत्यन्यज्जहात्यन्यद् दृष्टो द्रव्यान्तरेष्वपि ।**
**वाचकः सर्वलिङ्गानां द्रव्यादन्यो गुणः स्मृतः[2] ॥**

'गुणवचनब्राह्मणादिभ्यः कर्मणि च"[3] इत्यादिसूत्रोपयोगि गुणवचनं तु आकडार-[4] सूत्रे भाष्ये निर्दिष्टमस्ति । तत्र हि–जातिसंज्ञाऽव्ययकृदन्ततद्धितान्तसमस्तसर्वनामसंख्या-शब्दातिरिक्तः शब्दो गुणवचनशब्देन गृह्यत इति स्पष्टीकृतमुद्द्योते । सत्त्वे निविशते …… इत्यादिना तु गुणस्य विचारः कृतो "वोतो गुणवचनात्" इति सूत्रे भाष्ये[5] इति न कोऽपि विरोधः ।

उद्द्योतविधात्रा श्रीनागोजिभट्टेन तु–"अत्र वदन्ति गुणो नामेति प्रश्ने नामैकदेश-ग्रहणम्, गुणवचनः कः ? इति प्रश्नः । अत एवोत्तरे वाचकः सर्वलिङ्गानामिति यथाश्रुततयैव सङ्गच्छते । येषां च शब्दानाम् आकडारसूत्रे गुणवचनसंज्ञा उक्ता तेषामेवात्र कथनमित्येवंरूपेण द्वयोर्भाष्ययोरेकवाक्यता क्रियते[6] । गुणस्य क्वचित् प्रवृत्तिनिमित्ततया क्वचिच्चाश्रयतया प्रातिपदिकार्थत्वं बोध्यम् । जात्यंशे द्रव्यांशे यत्प्रमाणं दर्शितं प्रातिपदिकार्थतायाः, तदेवात्रापि द्रष्टव्यमिति न पुनरुल्लिख्यते ।

## गुणभेदसमीक्षा

द्रव्यवद् गुणोऽपि शाब्दिकशास्त्रे द्विविधः – लौकिकः शास्त्रीयश्च । तत्राद्य-स्तावद् रूपरसगन्धस्पर्शशब्दादयो न्यायादिदर्शने प्रसिद्धाः । किञ्च सत्त्वरजस्तमसां परिणामभूताः शब्दस्पर्शरूपरसगन्धतन्मात्रारूपा अतिसूक्ष्मास्तेषामपि परिणामाः स्थूलाः शब्दस्पर्शादयः सांख्यवेदान्तादिशास्त्रे प्रसिद्धाः । लोकेऽप्येषां स्थूलशब्दादीनामेक-रूपेणैव प्रसिद्धिः । व्याकरणेऽपि एते पूरणगुणसुहितार्थ[7]..…. इत्यादौ गृह्यन्त एव । शास्त्रीयस्तु "अदेङ्गुणः" इत्यत्र सङ्केतित अकारादिः । क्वचित्तु विशेषणतया

1. ल. श. शे., दीपकटीका, स्त्रीप्रत्ययप्रकरणम् ।
2. म. भा., प्र. उ. ४/१/४४ ।
3. पा. सू. ५/१/१२४ ।
4. म. भा., उ. १/४/१ ।
5. म. भा. ४/१/४४ ।
6. म. भा., उ. ४/१/४४ ।
7. पा. सू. २/२/११ ।

भासमानो धर्मो गुणपदेन गृह्यते, "तृतीया तत्कृतार्थेन गुणवचनेन"[1] इत्यादौ ।

**गुणभेदा रूपरसादयः**

'सत्त्वे निविशतेऽपैति पृथग् जातिषु दृश्यते' इत्येतल्लक्षणलक्षिता रूपादयो गुणविशेषा अप्यत्र पाणिनीये तन्त्रे बहुशो व्यवहृताः सन्ति । तथा हि–"रसादिभ्यश्च" इति[2] सूत्रे रसग्रहणमस्ति । आदिपदेन रूपगन्धस्पर्शस्नेहप्रभृतयो गृहीताः सन्ति । किञ्च, "सत्त्यापपाशरूपवीणातूलश्लोक." इति सूत्रे[3] रूपग्रहणम् । 'गन्धस्येदुत्पूतिसुरभिभ्यः" इत्यत्र[4] गन्धग्रहणम् । "द्रवमूर्तिस्पर्शयोः श्यः" इत्यत्र[5] स्पर्शशब्दस्य, "शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे" इत्यत्र[6] ध्वनिरूपशब्दस्य, "स्नेहे तैलच्" इत्यत्र[7] स्नेहशब्दस्य, "परिमाणान्तस्यासंज्ञाशाणयोः" इत्यत्र[8] परिमाणशब्दस्य, "संख्याया अतिशदन्तायाः कन्" इत्यत्र[9] संख्याशब्दस्य, "पृथग्विनानानाभिः" इत्यत्र[10] पृथक्शब्दस्य, "तस्य निमित्तं संयोगोत्पातौ" इत्यत्र[11] संयोगस्य, "कालविभागे चानहोरात्राणाम्" इत्यत्र[12] विभागस्य, "परश्च" इत्यत्र[13] परत्वस्य, "पूर्वपरावरदक्षिणोत्तरापराधराणि." इत्यत्र[14] परत्वस्यापरत्वस्य च, "बह्वादिभ्यश्च" इत्यत्र[15] बह्वादिगणे गुरुत्वस्य, "द्रवमूर्तिस्पर्शयोः" इत्यत्र[16] द्रवत्वस्य, "सुखादिभ्यः कर्तृवेदनायाम्" इत्यत्र[17] सुखस्य, "दुःखात्प्रातिलोम्ये" इत्यत्र[18] दुःखस्य, "धातोः कर्मणः समानकर्तृकादिच्छायां वा" इत्यत्रेच्छायाः[19], "क्रुधद्रुहेर्ष्याऽसूयार्थानां यं प्रति कोपः" इत्यत्र[20] कोपस्य, "धर्मं चरति" इत्यत्र[21] धर्मस्य, "अधर्माच्चेति

1. पा. सू. २।१।३० ।
2. पा. सू. ५।२।९५ ।
3. पा. सू. ३।१।२५ ।
4. पा. सू. ५।४।१३५ ।
5. पा. सू. ६।१।२४ ।
6. पा. सू. ३।१।१७ ।
7. म. भा. ५।२।२९
8. पा. सू. ७।३।१७ ।
9. पा. सू. ५।१।२२ ।
10. पा. सू. २।३।३२ ।
11. पा. सू. ५।१।३८ ।
12. पा. सू. ३।३।१३७ ।
13. पा. सू. ३।१।२ ।
14. पा. सू. १।१।३४ ।
15. पा. सू. ४।१।४५ ।
16. पा. सू. ६।१।२४ ।
17. पा. सू. ३।१।१८ ।
18. पा. सू. ५।४।६४ ।
19. पा. सू. ३।१।७ ।
20. पा. सू. १।४।३७ ।
21. पा. सू. ४।४।४१ ।

वक्तव्यम्" इत्यत्राधर्मस्य[1], "भासनोपसंभाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः" इत्यत्र[2] ज्ञानयत्नयोः, "संस्कृतम्" इत्यत्र[3] संस्कारस्य च व्यवहारः । एवमेवान्येषां च तत्र तत्र व्यवहारः कृत एव । यद्यपि अन्तकरणपरिणामरूपा वृत्तिरेव ज्ञानावच्छेदकतया ज्ञानपदेन व्यवह्रियते, सा च द्रव्यमेव, अन्तःकरणस्य द्रव्यतया तत्परिणामस्यापि तत्त्वात् । तथापि वृत्तौ चित्प्रतिबिम्बनं गुणत्वेन बोध्यम्, एतदेव प्रकटता इत्युच्यते । "सुखदुःखयत्नादय आत्मगुणाः" इति न्यायतन्त्रविदः[4] । 'अन्तःकरणस्य गुणाः' इति वेदान्तविदः[5] । अत्रान्त्य एव पक्षोऽभ्युपेतो वैयाकरणैरपि । आत्मनि सर्वविधधर्मस्य श्रुत्या[6] निषिद्धत्वात् ।

## क्रियालक्षणम्

न्यायदर्शने चलनात्मकं कर्म क्रियापदेन व्यवह्रियते । उत्क्षेपणादिभेदेन तत् पञ्चविधम् । तस्य चाक्षुषं भवति । व्याकरणदर्शने तु नहि चलनात्मिकैव क्रिया, अपि तु धातुमात्रस्य वाच्यः फलभिन्नोऽर्थः क्रिया इत्युच्यते । भाष्ये च कारकाणां प्रवृत्तिविशेषः क्रियाशब्देनोक्तः[7]। तत्र च हेलाराजः – "सर्वेषां कारकाणामेकः प्रवृत्तिविशेषः प्रतिकारकं भिन्ना वा प्रवृत्तिरिति विकल्पं कृत्वा आद्ये पक्षे 'भूति-पक्ति' इत्यादीनां फलभूतानां क्रियाणां भिन्नत्वेनासम्भवः । द्वितीये पक्षे इष्टापत्तिः, परन्तु कर्तृकर्मणोरेव लकारोत्पत्त्या तद्व्यापार एव लान्तात् प्रतीयते, इत्येकं मतम्"[8] इत्युक्तवान् । अत्र कर्मणोऽपि व्यापारः क्रियात्वेन गृहीतः, स च फलरूपः । एवं च फलव्यापारयोरुभयोरपि क्रिया इति व्यवहारः, सकलधातुवाच्यता च । अतश्चोक्तम्–"फलव्यापारयोर्धातुः"[9] इति ।

"भूवादयो धातवः" इति सूत्रयता[10] भगवता पाणिनिना उभयोरेव धातुवाच्यत्वं सूचितम् । तथा हि–भूश्च वाश्चेति भूवौ, आदिश्च आदिश्चेत्यादी, भूवौ आदी येषां

---

1. 'धर्मं चरति (४।४।४१) इति सूत्रे वार्त्तिकम् ।
2. पा. सू. १।३।४७ ।
3. पा. सू. ४।४।३ ।
4. न्या. सि. मु., कारि. ८७ ।
5. वे. प., प्र. परि. ।
6. कठोप. ४।१।१।
7. म. भा. १।३।१।
8. वा. प. ३ का., क्रियासमु. ।
9. वै. भू. सा., का. २ ।
10. पा. सू. १।३।१ ।

ते भूवादयः । अत्रैकः आदिशब्दो व्यवस्थावाची अपरश्च प्रकारवाची । तत्र वाप्रकारा ये भूव्यवस्थितास्ते धातव इत्यर्थे प्रकारः सादृश्यं तच्च क्रियावाचित्वेन, वाधातोर्गतिरूपक्रियावाचित्वात् । एवं च क्रियावाचिनो भ्वादयो धातुसंज्ञा इत्यर्थः फलितः ।

भूसदृशा ये वादयस्ते धातव इत्यर्थपक्षे तु भूधातोः सत्तारूपफलवाचकतया फलवाचित्वेन सादृश्यमादाय फलवाचिनो वादयो धातव इत्यर्थः सम्पद्यते । एतदर्थ-लाभाय एकपदोपस्थापितयोरभेदान्वयबोधोऽव्युत्पन्न इति व्युत्पत्तेरानुकूल्याय च भूवा-दयश्च भूवादयश्चेत्येकशेषः कृत इति ।

## क्रियायाः प्रत्यक्षं भवति न वा ?

"क्रियानामेयमत्यन्तापरिदृष्टाऽशक्या पिण्डीभूता निदर्शयितुं यथा गर्भो निर्लु-ठितः" इति भाष्योक्त्या[1] ज्ञायते यदस्याः क्रियायाः प्रत्यक्षं कर्तुं न शक्यते ।

तत्र च बुद्ध्या प्रकल्पितसमूहरूपायास्तस्या अप्रत्यक्षत्वेऽपि 'पश्य मृगो धावति' इत्यादिलोकव्यवहारानुरोधेन एकैकक्षणभाविन्या अवयवभूतायास्तु प्रत्यक्षं भवत्येवेति व्याचष्टे प्रदीपकृत् कैयटः[2] । अत्र श्रीनागोजिभट्टः[3] – अवयवरूपाया अपि प्रत्यक्षं न भवति, अन्यथा समुदायस्यापि तत्त्वमापद्येत । घटावयवस्य कपालस्य तदेकदेशस्य वा प्रत्यक्षत्वे घटस्य प्रत्यक्षत्वव्यवहारवत्, इत्येवंरीत्याऽवयवस्यापि प्रत्यक्षं न सहते । एवं च तन्मते पश्येत्यस्य 'जानीहि' इत्यर्थो बोध्यः ।

अत्र कैयटमतमेव समीचीनं प्रतिभाति, लोकानुभवबलात् । भाष्यं तु कल्पित-समूहाभिप्रायमिति विभाव्यतां सुधीभिर्योग्यतानुसारं प्रत्यक्षत्वाप्रत्यक्षत्वम् ।

## क्रियाया द्वैविध्यम्

इयं च क्रिया क्वचित् कृत्प्रत्ययेन उक्ता सती सत्त्वरूपतां भजन्ती सत्त्वभूता इत्युच्यते[4] । यथा–'पाकः, यागः, भागः, गमनम्, कृतिः, गतिः' इत्यादिषु

---

1. म.भा. १।३।१।
2. म. भा., प्र. १।३।१।
3. म. भा., उ. १।३।१।
4. वै. भू. सा., कारि. १५ ।

लिङ्गसंख्याद्यन्वयितयात्र[1] सत्त्वरूपता स्फुटा एव । क्वचिद् भावकृत्प्रत्ययेन, सर्वत्र तिङ्प्रकृतिभूतधातुना चोपस्थिता सती असत्त्वभूता इत्युच्यते । उक्तं च– "असत्त्वभूतो भावश्च तिङ्पदैरभिधीयते" इति[2] । यथा–'पक्त्वा, पक्तुम्' इत्यादौ कृदन्ते; पचति, यजति' इत्यादौ तिङन्ते लिङ्गाद्यनन्वयितया असत्त्वरूपा स्फुटाऽस्ति । क्रियायाः प्रातिपदिकार्थत्वे गुणवद् व्यवस्था बोध्या । असत्त्वरूपा तु धातुवाच्यैवेत्यन्यत् ।

**लिङ्गस्य प्रातिपदिकार्थत्वे प्रमाणं लक्षणं च**

लिङ्गमपि प्रातिपदिकार्थ इति पूर्वं प्रतिज्ञातम् । इदानीं तत्र प्रमाणनिर्देशपूर्वकं तस्य लक्षणं समीक्ष्यते । तत्र नपुंसकलिङ्गे वर्तमानं यदजन्तं प्रातिपदिकं तस्यान्त्याचो ह्रस्व इत्यर्थकं "ह्रस्वो नपुंसके प्रातिपदिकस्य" इति[3] सूत्रम्, "तस्माच्छसो नः पुंसि"[4] इत्यादिसूत्रं च लिङ्गस्य तदर्थत्वे प्रमाणम् । न चान्वयव्यतिरेकसहचाराभ्यां विभक्तेरेव तद् वाच्यं स्यादिति शङ्क्यम्, 'लिड्, धुग्, रमा, वारि' इत्यादौ विभक्त्यभावेऽपि तद्बोधात्, प्रातिपदिकेनैव तयोः सहचारयोर्योजनीयत्वात् । तत्र पुंस्त्रीनपुंसकान्यतमत्वमेव लिङ्गसामान्यलक्षणं वक्तुं शक्यते । पुमादिलिङ्गविशेषाणां लक्षणानि तु–

**स्तनकेशवती स्त्री स्याल्लोमशः पुरुषः स्मृतः ।**
**उभयोरन्तरं यच्च तदभावे नपुंसकम् ॥**

इत्येवं कथितानि महाभाष्ये[5] । यद्यप्यत्र स्तनपदं योन्यादेः, लोमपदं लिङ्गस्य चोपलक्षणं बोध्यम्, अतश्च कुमार्यादौ नाव्याप्तिः । तथापि खट्वावृक्षतटादिषु चैतेषां विशेषलक्षणानां सर्वथाभाव इति लिङ्गलक्षणविषये कश्चनान्य एव पन्था आश्रयणीयः । उक्तं च तादृश्यामनुपपत्तौ भगवता भाष्यकृतापि[6]–

"तस्मान्न वैयाकरणैः शक्यं लौकिकं लिङ्गमास्थातुम्, अवश्यमेव कश्चित् स्वकृतान्त आस्थेयः" इत्यादिना पूर्वपक्षमवसाय–'संस्त्यानप्रसवौ लिङ्गमास्थेयौ स्वकृतान्ततः'

1. म. भा., प्र. उ. १।४।५७ ।
2. वै. भू. सा., कारि. २ ।
3. पा. सू. १।२।४७ ।
4. पा. सू. ६।१।१०३ ।
5. म. भा. ४।१।३ ।
6. म.भा. ४।१।३।

इत्येवं तल्लक्षणं सिद्धान्तितम् । किं[1] संस्त्यानम् ? कश्च प्रसवः ? इति जिज्ञासायामेतदनुगुणं संग्रहकारोक्त्या प्रमाणितं हेलाराजीयं व्याख्यानमुपस्थाप्यते । "तत्र संस्त्यानं संहननम्, प्रतिलयस्तिरोधानमित्यवस्था स्त्रीत्वम्, प्रसवः प्रवृत्तिराविर्भाव इति पुंस्त्वम्, न स्त्रीपुंसौ नपुंसकमिति स्थितिर्नपुंसकमर्थाल्लक्षितम्"[2] इति । तत्र प्रसव आविर्भावः, प्रकाशः सत्त्वधर्मः प्रवृत्तिः क्रिया रजोधर्मः, वरणं तिरोभावः, स्थितिस्तमोधर्मः, एत एव धर्मा लिङ्गम् । एवं च प्रकाशनिरोधरूपौ यौ सत्त्वतमसोर्धर्मौ तावनुगत आविर्भावो रजोधर्मरूपायाः प्रवृत्तेर्विशेषः पुंस्त्वम् । प्रकाशप्रवृत्तिलक्षणौ यौ सत्त्वरजसोर्धर्मौ तावनुगतस्तिरोभावः स्त्रीत्वम्, सामान्यरूपा प्रवृत्तिः तमोबहुला स्थितिर्नपुंसकमिति लिङ्गत्रयं सार्वत्रिकम् । सत्त्वादीनां गुणानामुपचयापचयस्थितिरूपं लिङ्गत्रयमिदमेव शेखरादिग्रन्थेषूक्तमस्ति[3] ।

## अवस्थाविशेषविशिष्टा गुणा लिङ्गम्, तत्र च सप्त विकल्पाः

अयं विषयो वाक्यपदीये तृतीयकाण्डे लिङ्गसमुद्देशे हेलाराजीये व्याख्याने स्फुटं प्रतिपादितोऽस्ति[4] । तथा हि–"अवस्थाविशेषयुक्ता गुणा एव लिङ्गमत्रैव दर्शने पक्षान्तरम् । ते हि कार्यान्तरवत् स्त्र्याद्यवभासमपि प्रत्ययमुपजनयन्तो भवन्ति लिङ्गव्यपदेश्याः । एकस्यापि वस्तुनः शब्दभेदादर्थो व्यक्तिर्वस्तु इति लिङ्गभेदस्य दर्शनाद् बहिरसन्नेव शब्दैरुत्पादित इव बाह्ये वस्तुनि लिङ्गयोग इति शब्दाभिधेयस्वभावं लिङ्गमिति केचित्" ।

'तटस्तटी तटम्' इत्यभिन्नेनापि शब्देनाभिन्नं वस्तु त्रिलिङ्गं प्रत्याय्यत इति शब्दसंस्कारमात्रं लिङ्गमाश्रितं कैश्चित् । एवमपि च बाह्यत्वेनावसायान्नोदात्तादिधर्मवच्छब्दधर्मत्वं लिङ्गस्य, किन्तु स्त्रियां पुंसि नपुंसक इति शब्दान्वाख्याननिमित्तभावदर्शनाच्छब्दसंस्कारत्वमस्य, "तयोस्तु तत्कृतं दृष्ट्वा यथाऽऽकाशेन ज्योतिषः" इति भाष्ये वर्णितम् ।

अस्यां परिस्थितौ लिङ्गानां ग्रहणे सप्त पक्षाः प्रतिपादिताः सन्ति । तत्र हि विकल्पेन चत्वारः, सन्नियोगेन त्रयः । तथा हि–

---

1. म. भा. ४।१।३ ।
2. वा. प., हेला. टी., ३।१३।२ ।
3. ल. श. शे., स्त्री. प्र., स्त्रियामिति सूत्रम् ।
4. वा. प., हेला. टीका- ३।१३।२ ।

(१) केचित् पुंनपुंसकविषयाः 'शङ्खः, पद्मः, शङ्खम्, पद्मम्' इत्यादयः, "पद्मशङ्खौ निधौ पुंसि स्थितौ पुंसि च तोयजे" इति ।

(२) केचित् स्त्रीनपुंसकनियताः 'भागधेयं भागधेयी, भेषजं भेषजी, अर्चिः', इत्यादयः ।

(३) अन्ये स्त्रीपुंससाधारणाः, यथा—'इषुः, अशनिः, तिथिः' इत्यादयः ।

(४) अपरे त्रिलिङ्गाः – तटस्तटी तटमित्यादयः ।

सन्नियोगो नियमः, तेन त्रयो विकल्पाः –

(१) वृक्षादयः पुंस्येव नियताः । (२) खट्वादयः स्त्रियामेव । (३) दध्यादयो नपुंसक एव ।

**लिङ्गं शब्दनिष्ठमर्थनिष्ठं वा ?**

अथेदं लिङ्गं शब्दनिष्ठमर्थनिष्ठं वेति समीक्ष्यते । तत्र लिङ्गं शब्दनिष्ठो धर्मविशेषः, तमेव भिन्नं धर्ममादाय तटादिशब्दा भिद्यन्ते । केषाञ्चिच्छब्दानामनेकलिङ्गत्वव्यवहारस्तु समानानुपूर्वीकत्वेन शब्दानामभेदारोपादिति सिद्धान्तयन्ति वैयाकरणमूर्धन्या श्रीकौण्डभट्टप्रभृतयः[1] ।

अत्र च 'एकार्थे शब्दान्यत्वाद् दृष्टं लिङ्गान्यत्वम्" इति भाष्यमपि[2] मूलम् । तथा हि—एकार्थे शब्दान्यत्वादिति हेतुना लिङ्गान्यत्वं लिङ्गभेदः साध्यतेऽनेन भाष्यवचनेन । तत्रोद्देश्यबोधकं पदं नास्तीति कृत्वा योग्यस्य तस्याध्याहारः कार्यः । तत्र च शब्दपदमेवाध्याहर्तव्यम्, तादृशस्य हेतोस्तत्र स्वरूपेण वर्तनात्, शब्दशास्त्रे तस्यैव प्राधान्याच्च ।

शाब्दिकशिरोमणयः श्रीनागोजिभट्टास्तु लिङ्गस्यार्थनिष्ठत्वं केवलान्वयित्वं च प्रस्तावयन्ति[3] । तेषामयमाशयः – उक्तभाष्य एकार्थे इति पक्षनिर्देशः, तत्रैव लिङ्गान्यत्वं साध्यम्, शब्दान्यत्वमेव हेतुः । अतश्चैकार्थे लिङ्गान्यत्वं दृष्टम्, शब्दान्यत्वादिति योजना कर्तव्या, 'पुष्यः, तारका, नक्षत्रम्' इति च दृष्टान्तः । अत्र पक्षे शब्दान्यत्वादित्यस्य विभिन्नशब्दादित्यर्थः शक्तिरूपः सम्बन्धो हेतुतानियामको बोद्धव्यः । 'इदं वस्तु, अयं पदार्थः, इयं व्यक्तिः' इति त्रिविधव्यवहारस्य पदार्थमात्रे

---

1. वै. भू. सा., नामार्थनिर्णयः ।
2. म. भा. ४।१।९२ वा. ।
3. ल. श. शे., स्त्रीप्रत्यय-प्रक., स्त्रियामिति सूत्रम् ।

कर्तुं शक्यत्वेनास्य केवलान्वयित्वमपि स्फुटमेव प्रतीयते । व्यापकत्वादयमेव पक्षः समुचित इति प्रतिभाति । यद्यपि पदार्थमात्र इदं लिङ्गत्रयमस्ति, तथापि केनचिच्छब्देन किञ्चिद् वस्तु एकैकलिङ्गविशिष्टमेव, केनचित् पर्य्यायेण लिङ्गद्वयविशिष्टम्, केनचिच्च लिङ्गत्रयविशिष्टं बोध्यत इत्यत्र शब्दतत्त्वविदां शिष्टानां व्यवहार एव शरणीकरणीय इति दिक् ।

**संख्यायाः प्रातिपदिकार्थत्वं स्वरूपं च**

एकत्वादिकाः संख्या अपि प्रातिपदिकार्थतया मन्यन्ते शब्दशास्त्रविद्भिः । अत एव "द्व्येकयोर्द्विवचनैकवचने"[1], "बहुषु बहुवचनम्"[2] इत्यनयोः सार्थक्यम् । न चान्वयव्यतिरेकसहचारमहिम्ना विभक्त्यर्थ एव संख्या इति वाच्यम्,'लिट्, रमा, दधि' इत्यादिषु विभक्तेरभावेऽपि तस्याः प्रतीतेः, प्रातिपदिकेनैव तत्सहचारयोः सङ्गमनात् ।

किञ्च, "द्योतिका वाचिका वा स्युर्द्वित्वादीनां विभक्तयः" इति भाष्योक्त्या पाक्षिकं विभक्तिवाच्यत्वमपि संख्यायां प्रतीयत इत्यन्यत् । संख्यानकरणत्वं संख्याया लक्षणम् । सा चेयं संख्या द्विविधा–एका लौकिकी एकत्वद्वित्वादिका, अपरा बहुगण इत्यादिका शास्त्रीया संख्या । तत्र धर्मधर्मिणोरभेदपक्षे आश्रयादव्यतिरिक्तैव संख्या मन्यते, समवायेन तिरोहितभेदत्वाद् व्यतिरेकानवधारणाच्चेदं मतं सिद्ध्यति । अत्र मते काल्पनिक एव भेदः, अन्यथा अत्यन्तभेदे तद्विशिष्टप्रतीतिः कथमुदियात् ? वाक्यपदीयेऽप्युक्तम्–

**स धर्मो व्यतिरिक्तो वा तेषामात्मैव वा तथा ।**
**भेदहेतुत्वमाश्रित्य संख्येति व्यपदिश्यते**[3] ॥ इति ।

अयं भावः – संख्यालक्षणो धर्मः, तेषां सत्त्वभूतानामात्मैव अभिन्न एव वाऽस्तु व्यतिरिक्तो वाऽस्तु, किमनेन विचारेण ? शब्दार्थस्येह विचारयितुं प्रक्रमात् । ननु यदि द्रव्याश्रिता संख्या, तर्हि कथं गुणादीनां तन्निमित्तो व्यवहार इति चेदुच्यते– अस्माकं मते द्रव्याश्रिताऽपि संख्या आत्मनोऽपि भेदं साधयति 'शतम्, शते, शतानि' इत्यादि । एवं च गौणमुख्यभेदेन संख्याया व्याप्तिः सर्वत्र स्वीक्रियते । अनया रीत्या त्रीणि रूपाणि, षड् रसा इत्यादि व्यवहारोपपत्तये गुणेऽपि तस्याः

1. पा. सू. १।४।२२ ।
2. पा. सू. १।४।२१ ।
3. वा. प. ३।११।२ ।

सत्ता स्वीकार्या । अनया सरण्या सामान्येषु सामान्यम्, विशेषे विशेषः, संख्यासु संख्या, लिङ्गेषु लिङ्गमपि व्यवहारदर्शनेन परिकल्प्यते । उक्तं च "स्त्रियाम्" इति सूत्रे[1] भगवता भाष्यकारेण–"भावो भावेन युज्यते, स्त्रीत्वं स्त्रीत्वेन" इति । अनया रीत्या एकविंशत्यादयो ये संख्यावाचकाः शब्दाः सन्ति, तत्र सा संख्या, न हि संख्या द्व्यारब्धा, किन्त्वन्यैव । स्फुटं द्रष्टव्यमेतत्सर्वं हेलाराजीये व्याख्याने[2] ।

## कारकस्य प्रातिपदिकार्थत्वम्, लक्षणं भेदाश्च

अथ कारकमपि प्रातिपदिकार्थ इति विमृश्यते । "कर्मणि द्वितीया", "कर्तृकरणयोस्तृतीया" इत्यादिशास्त्रप्रामाण्येन कारकमपि प्रातिपदिकार्थ इत्युच्यते । तत्र क्रियाजनकत्वेन विवक्षितत्वमिति कारकस्य लक्षणं शब्दशास्त्रे प्रसिद्धमेव । करोति क्रियां निर्वर्तयति यत्तत्कारकमिति कारकपदीयव्युत्पत्त्यापि इदं लक्षणं समर्थितं भवति । कर्तृत्वकर्मत्वाद्यन्यतमशक्तिरूपमपि कारकमित्यपि एकः पक्षः । अत एव–शक्तिद्वयमध्य इत्याद्यर्थकम्, "सप्तमीपञ्चम्यौ कारकमध्ये" इति सूत्रं सङ्गच्छते । श्रीहरिणाऽप्ययं पक्षः समर्थितः –

**स्वाश्रये समवेतानां तद्वदेवाश्रयान्तरे ।**
**क्रियाणामभिनिष्पत्तौ सामर्थ्यं साधनं विदुः[3] ॥**

इत्यनया कारिकया । क्रियाया आश्रये आश्रयान्तरे वा समवेतानां क्रियाणां सिद्धौ यत् सामर्थ्यं तदेव साधनं ज्ञेयमिति तात्पर्यम् । अत्र सामर्थ्यं शक्तिः, सा च धर्मविशेषः कर्तृत्वादिरूपोऽखण्डोपाधिः ।

## अथ कारकभेदा निरूप्यन्ते

**कर्ता कर्म च करणं च सम्प्रदानं तथैव च ।**
**अपादानाधिकरणे चेत्याहुः कारकाणि षट् ॥**

इत्येवं षट् कारकाणि लोके प्रसिद्धान्येव सन्ति । अत्रेदमवधेयम्–कर्तृकर्मकरणाधिकरणेषु यथा कृधातुरनुस्यूतोऽस्ति, न तथा सम्प्रदानापादानयोः । अतश्च तयोर्न वास्तवं कारकत्वमपि तु कारकत्वप्रयुक्तकार्यसम्पत्त्यर्थं व्यावहारिकमेव । किञ्च यथा कर्तृव्यापाराविवक्षायां कर्मकरणाधिकरणानामपि कर्तृसंज्ञा भवति, न तथा सम्प्रदाना-

---

1. पा. सू. ४।१।३ ।
2. वा. प., प्र. प्र. ३।१३।२-३ ।
3. वा. प. ३।७।१ ।

पादानयोः । न हि भवति–'ब्राह्मणाय ददाति' इत्यर्थे 'ब्राह्मणो ददाति' इति, 'ग्रामादागच्छति' इत्यर्थे 'ग्राम आगच्छति' इति वा । अतोऽपि तयोरौपचारिकं कारकत्वम् । किञ्च सम्प्रदानापादानयोर्व्यापारे धातुर्न वर्तते, शब्दशक्तिस्वभावात् । अत एवापादानस्यावधिभावेनावस्थानं व्यापारः, सम्प्रदानस्यापि अनुमानादिरूपः प्रतीयमानो व्यापारः कारकव्यपदेशनिमित्तं भवतीत्यपि विशेषः । स्पष्टं चैतत्सर्वं महाभाष्यप्रदीपोद्द्योतेषु[1] वाक्यपदीये च[2] ।

## अभावस्यापि प्रातिपदिकार्थत्वम्, लक्षणं भेदाश्च

अभाव-नञ्-नष्ट-ध्वंसेत्यादिप्रातिपदिकैर्बोध्यमानोऽयमभावोऽपि प्रातिपदिकार्थ-कोटौ समाविष्ट एव । अभावत्वं प्रवृत्तिनिमित्तम् । "अव्ययं विभक्ति.[3], नञ्"[4] इत्यादिसूत्रैरस्य प्रातिपदिकार्थत्वं पूर्णतः समर्थितमेवास्ति ।

अस्य लक्षणं यदि 'भावभिन्नत्वे सति पदार्थत्वम्' इत्युच्यते, तर्हि अन्योन्याभावस्य प्रवेशेनात्माश्रयदोषः, अतो नञर्थबोधकपदजन्यप्रतीतिविषयत्वमिति लक्षणमवगन्त-व्यम् । यदि च घटोऽत्र भविष्यतीति प्रतीतिसिद्धस्य प्रागभावस्य नञ्पदजन्यप्रतीति-विषयत्वाभावेन तत्राव्याप्तिरित्युच्यते, तदा प्रतियोगिज्ञानसापेक्षज्ञानविषयत्वमित्यादि-रूपेण तत्स्वरूपं निर्णेयम्[5] । वस्तुतस्तु आकाशत्वादिवदत्र शास्त्रे अभावत्वस्यापि जातिरूपत्वेनाखण्डोपाधित्वेन वा तादृशधर्मत्वमेव लक्षणं सिद्धान्तनीयम् । अभावादि-पदव्यवहार्यत्वं च लक्ष्यतावच्छेदकं स्वीकरणीयम् ।

प्रागभाव-प्रध्वंसाभावात्यन्ताभावान्योन्याभावभेदादस्य चातुर्विध्यमुररीकुर्वन्ति वैशे-षिकाः[6] । तद्वदत्रापि दर्शने यद्यपि स्वीकृतम्, तथापि तन्न मूलतोऽपि तूपाधिभेदतः ।

---

1. म. भा., प्र. उ. १।४।२३ ।
2. वा.प., हेला. टी. च- ३।७।१८ ।
3. पा. सू. २।१।६ ।
4. पा. सू. २।२।६ ।
5. न्या. सि. मु., किर. टी., का. १२ ।
6. न्या. सि. मु.,का. १२-१३ ।

यथा न्यायनये एकमप्याकाशं घटाद्युपाधिभेदाद् भिद्यते–घटाकाशम्, गृहाकाशमिति। एतच्च वाक्यपदीये स्फुटं निर्दिष्टम्–

**चतस्रो हि यथाऽवस्था नीरूपाख्ये प्रकल्पिताः।**
**एवं द्वैविध्यमप्येतद् भावाभावव्यपाश्रयम्**[1] ॥ इति ।

अत्र हेलराजः – "प्रागूध्वंसात्यन्तेतरेतरलक्षणोपाधिवशेन नीरूपस्य रूपाभेदायोगाद् यथा अभावस्य चतुर्धा भेदः काल्पनिकः, तथा भावाभावभेदोऽपि" इति व्याचख्यौ[2]। यद्यप्यत्र भावाभावभेदस्याप्यौपाधिकत्वमेव बोध्यते, तथाप्येतत्परमार्थदृष्ट्या अखिलस्यैव प्रपञ्चस्यात्र दर्शने परमार्थता, औपाधिकत्वात्; अभावस्य चातुर्विध्ये औपाधिकत्वं तु व्यवहारदशायामेव श्रीहरिणाऽत्र कारिकायां दृष्टान्ततयाऽस्योपन्यासादिति विवेकः। "अव्ययं विभक्तिसमीप "[3] इति सूत्रेऽर्थाभावपदेनात्यन्ताभावः, अत्ययपदेन ध्वंसाभावः सङ्केतितः। मक्षिकाणामभावो निर्मक्षिकम्, हिमस्यात्ययोऽतिहिममिति चोदाहरणे[4]।

नञ्सूत्रे त्वभावचतुष्टयपरो नञ्-शब्दः प्रयुक्तः। 'अब्राह्मणः' इत्यत्र भेदस्य, 'अनुपलब्धिः, अविवादः' इत्यादौ अत्यन्ताभावस्य, 'असन्देहः' इत्यत्र सन्देहप्रागभावस्य प्रत्ययात्। यद्यपि असन्देह इत्यत्र प्रागभाव एव प्रदीपकृता नञर्थतया सङ्केतितः, तथापि 'सन्देहस्य प्रागभावोऽत्र द्रष्टव्यः, न तु प्रध्वंसाभावः' इति कथनेन[5] ध्वंसाभावस्यापि ग्रहणयोग्यता सुष्ठु प्रतिपादिता एव। "न धातुलोप आर्धधातुके", "नानोर्ज्ञः"[6] इत्यादिषु असमस्तं नञ्पदमत्यन्ताभावार्थकमेव। इदमेव प्रसज्यप्रतिषेधार्थकमुच्यते[7]।

**धातुरूपप्रकृत्यर्थविमर्शः**

प्रातिपदिकवद्धातोरपि बहवोऽर्था भवन्ति। उक्तं च 'अनेकार्था धातवः' इति। दधाति बहूनर्थानिति धातुरिति योगव्युत्पत्तिरप्यत्रानुकूल्यं भजते। ते चार्थाः क्रियात्व-क्रिया-कारक-संख्या–कालरूपाः पञ्चसंख्याकाः सप्रमाणमुक्ताः शब्देन्दुशेखरे[8]

---

1. वा. प. ३।३।६६।
2. वा. प., हे. टी., ३।३।६६।
3. पा. सू. २।१।६।
4. वै. सि. कौ.,अव्ययीभावप्र.।
5. म. भा., प्र., पस्पशा. १।१।
6. पा. सू. १।१।४।
7. पा. सू. १।३।५८।
8. ल. श. शे., कारकप्र., अनभिहितसूत्रम्।

श्रीनागेशभट्टपादैः । अत्र क्रियापदेन फलं व्यापारश्चेत्युभयमपि ग्राह्यम् । तथा सत्येव "भूवादयः"[1] इति सूत्रं स्वरसतः सङ्गच्छते । अत्र हि वादयो ये भ्वादय इति व्याख्यानेन वासादृश्यं क्रियावाचित्वेन गृहीत्वा व्यापाररूपोऽर्थो लभ्यते, पुनश्च भ्वादयो ये वादय इति व्याख्यानेन भूसादृश्यं फलवाचकत्वेनादाय फलरूपोऽर्थो लभ्यते । अस्मिन् पक्षे वादय इत्यत्र प्रभृत्यर्थकादिशब्देन वाशब्दस्य षष्ठीतत्पुरुषो बहुव्रीहिश्च तन्त्रेण बोध्यः, तेन सकलभ्वादीनां ग्रहणं भविष्यति । अथ च क्रियात्ववत् फलत्वव्याप्या विक्लित्तित्वादिधर्मा अपि फलांशे प्रवृत्तिनिमित्ततया धातोर्वाच्याः । एवमेव कारकसंख्याकालविषयेऽपि तत्तद्धर्मास्तेषां स्वाश्रये सम्बन्धाश्च वाच्यतया अवगन्तव्याः । एवं शब्दस्य स्वरूपम्, तद्वृत्तिधर्मः, शब्दत्वव्याप्यो भूशब्दत्वादिः, तत्सम्बन्धाश्चापि वाच्या एव ।

एवं च सङ्कलनयाऽष्टादशसंख्याका इमे सर्वेऽर्थाः सम्पन्नाः, एषां प्रकारत्वादिविषयता अपि तत्संख्याका इति षट्त्रिंशत्संख्याकाः सम्पद्यन्ते । बाह्यबौद्धभेदतः पुनर्द्वासप्ततिसंख्याकाः समजायन्त । तत्र कारकसंख्याकालादीनां स्वरूपं किञ्चिन्निरूपितमेव, क्रियाया अपि स्वरूपं निरूपितमेव । इयान् विशेषः – प्रातिपदिकवाच्या क्रिया सत्त्वरूपा लिङ्गसंख्यान्वयिनी, धातुवाच्या तु असत्त्वरूपा तयोरनन्वयिनी इति । उक्तं च श्रीहरिणा–"असत्त्वभूतो भावश्च तिङ्पदैरभिधीयते"[2] इति । अत्र तिङ्पदैरित्यस्य तिङ्प्रकृतिभूतधातुपदैरिति व्याख्यानं करणीयम् । अतो न भूवादिसूत्रस्थभाष्यविरोधः[3] । इत्थं चातिसंक्षिप्ता प्रमेयसमीक्षा वेदितव्या ।

**॥ इति प्रमेयसमीक्षायां द्वितीयं पुष्पम् ॥**

●

---

1. पा. सू. १।३।१ ।
2. वै. भू. सा., धात्वर्थ., का. २ ।
3. म. भा. १/३/१ ।

# ग्रन्थोपसंहारः

(अत्र निबन्धे समागतानां विषयविशेषाणां संक्षिप्तनिर्देशः)

## प्रत्यक्षसमीक्षायाम्

**प्रथमे पुष्पे**

अस्यां च प्रमाणसमीक्षायामवान्तरसमीक्षाः षट्संख्याकाः सन्ति । तत्र प्रथमा प्रत्यक्षसमीक्षाऽस्ति । तस्यां च पूर्वं तावत् प्रमाणसामान्यलक्षणं व्याकरणदर्शनरीत्या 'अनिर्ज्ञातार्थस्य साकल्येन ज्ञापकत्वम्' इत्याकारकं प्रणीय प्रमापदार्थगताः प्रकर्षा बहुविधा दर्शिताः, सङ्गमिताश्च । अव्याप्त्यादिदोषाणां वारणप्रकारा लक्षणघटकपदानां व्यावर्त्यानि च सुष्ठु प्रदर्शितानि । षड्विधसूत्रेषु प्रामाण्यसमन्वयः सम्यग् दर्शितः ।

**द्वितीये पुष्पे**

इन्द्रियार्थसन्निकर्षजन्या या चित्तवृत्तिः, सा, तत्प्रतिबिम्बितं चैतन्यं वा प्रत्यक्षप्रमा, तत्करणत्वं प्रत्यक्षप्रमाणस्य लक्षणम् । तत्र वृत्तेः प्रमात्वपक्षे इन्द्रियाणि प्रमाणानि, सन्निकर्षो व्यापारः । प्रतिफलितचैतन्यस्य प्रमात्वकल्पे तु वृत्तेः प्रमाकरणत्वमावरकाज्ञानध्वंसस्य व्यापारत्वम् । प्रत्यक्षप्रमोत्पत्तिक्रमः ।

इन्द्रियस्य सामान्यं लक्षणम्, इन्द्रियविशेषाणां संख्यालक्षणप्राप्यकारित्वादिकम्, परिमाणम्, अधिष्ठानं च, मनस इन्द्रियत्वसमर्थनम्, इन्द्रियार्थयोः सन्निकर्षः, घटादिचाक्षुषेऽपि घटादिशब्दानां विषयता, चाक्षुषादिप्रत्यक्षे बहुविधसहकारिप्रदर्शनम्, तत्र व्यापारत्वमित्येवमादयो विषया विशेषतो द्रष्टव्याः सन्ति ।

**तृतीये पुष्पे**

पुनरपि प्रत्यक्षविषये शब्दशास्त्रीयः कश्चन विशेषः । न्यायदर्शनसम्मतस्य त्रिविधलौकिकसन्निकर्षस्य प्रत्याख्यानप्रकारः, प्रत्यक्षभेदाः, निर्विकल्पकस्यापि शाब्दिकनये अवश्यम्भावः । क्रियायाः प्रत्यक्षं भवति, न वा ? गुणजात्यादिप्रत्यक्षे आचार्यश्रीहरेर्दृष्टिः, सतामपि भावानामप्रत्यक्षत्वे कारणानि विशेषतो द्रष्टव्यानि । पुनश्च 'प्रत्यक्षविषये केचन विशेषाः' इति तु अवश्यं द्रष्टव्यम् । तत्र हि–एकस्येन्द्रियस्य स्वविषयकप्रत्यक्षकरणेऽन्येषामिन्द्रियाणामौदासीन्येन संविधातृत्वरूपं (सहकारित्वम्)

कर्तृत्वं मन्तव्यम्, अत एव वयं पश्याम इति प्रयुज्यते शिष्टैः । इदं च इन्द्रियाणां प्रत्यक्षकार्ये स्वातन्त्र्यविवक्षापक्षे । पारतन्त्र्यलक्षणकरणत्वविवक्षापक्षे तु 'आभ्यां कर्णाभ्यामहं सुष्ठु शृणोमि' इत्यादयः प्रयोगाः । अत्र पक्षेऽहंपदवाच्योऽन्तः-करणावच्छिन्नचिद्रूपो जीवः । पूर्वपक्षे तु शरीर इवेन्द्रियेष्वपि 'अहं काणः, अहं वधिरः' इत्यादिव्यवहारादहन्त्वप्रतीत्या वयमित्यनेनेन्द्रियाणामभिधानं बोध्यम् ।

किञ्चास्मदादीनामिन्द्रियान्तरेण इन्द्रियान्तरविषयाणामपि सामान्यज्ञानं भवति । आम्रफलादौ दृष्टे रसगन्धादिगुणानामपि सामान्यतः प्रत्यक्षं जायत एव । तत्फलदर्शनानन्तरं विशेषजिज्ञासाया उदयात् । अतश्च चाक्षुषादिप्रत्यक्षे सामान्यत इन्द्रियसंयोग-स्यापि हेतुत्वं कल्पनीयम्, अन्यथा प्रत्यक्षसामान्याभावे तद्विशेषाभावकूटस्य हेतुत्वे गौरवं ध्रुवं प्रसज्येत इति । एवं चक्षुषा सह घटैकदेशस्यापि संयोगे घटः प्रत्यक्ष इति व्यवहारोपपत्तिः, प्रत्यक्षप्रमाया गुणजन्यत्वं चेत्यादीनि च द्रष्टव्यानि सन्ति ।

# अनुमानसमीक्षायाम्

### प्रथमे पुष्पे

विशेषतो द्रष्टव्या विषया निरूप्यन्ते । तत्र अनुमानस्य प्रामाण्यम्, प्रत्यक्षपूर्वकत्वरूप-मनुमानसामान्यलक्षणम्, अत्र लक्षणे प्रत्यक्षस्य शाब्दादेरपि उपलक्षणत्वम्, अनुमिति-करणत्वस्यापि लक्षणत्वम् । लिङ्गदर्शनरूपानुमानपक्षे व्याप्तिज्ञानस्य व्यापारता, व्याप्तिज्ञानात्मकानुमानपक्षे तु व्याप्तिविशिष्टपक्षधर्मताज्ञानरूपः परामर्शो व्यापारः, शब्दशास्त्रदृष्ट्या पुनरपि बौद्धपदार्थकल्पेऽनुमानलक्षणम्, अनुमितेर्लक्षणानि, पक्षस्य पक्षतायाश्च लक्षणादिकम्, पक्षभेदाः, हेतुस्वरूपम्, व्याप्तिस्वरूपम्, व्याप्तिभेदास्तल्ल-क्षणानि च, व्याप्तिज्ञानोपायाः, इत्येतत्सर्वं व्याकरणदर्शनदृष्ट्या सुष्ठु विविक्तमस्ति ।

### द्वितीये पुष्पे

अनुमानभेदः, प्रतिज्ञालक्षणम्, हेतुपदं त्रिविधलक्षणपरमित्यत्र हेलाराजः, उदाहरण-स्य लक्षणोदाहरणे, हेतुरहितस्यापि दृष्टान्तता, उपनयनिगमनवाक्ययोर्लक्षणोदाहरणे, अवयवसंख्या, प्रकारान्तरेणानुमानत्रैविध्यम्, केवलान्वयि, केवलव्यतिरेकि च वाक्य-पदीयसम्मतं द्विविधमनुमानम्, तर्कनिरूपणम्, आचार्यश्रीहरिसम्मतं तर्कस्वरूपम्, तर्कभेदानां निरूपणम्, आत्माश्रयान्योन्याश्रयचक्रकानवस्थारूपास्तर्काः, द्वयोश्चक्रकं भवति न वा ? अनवस्थादोषे सति का हानिः ? गौरवादिकमपि तर्क एव. उपाधेर्लक्षणमिति ।

**तृतीये पुष्पे**

हेत्वाभासलक्षणम्, वाक्यपदीयेऽनैकान्तिकम्, विरुद्धसत्प्रतिपक्षौ, दृष्टान्तयोरपि सत्प्रतिपक्षता, असिद्धो हेत्वाभासः, व्याप्यत्वासिद्धिभागासिद्धिबाधितो हेत्वाभासः, पक्षे हेत्वभाव एव बाधः, , स्वरूपासिद्धिर्हेतोरप्रसिद्धिः, अव्याप्त्यतिव्याप्त्यसम्भवानां कुत्रान्तर्भावः? महाभाष्यादौ निग्रहस्थानसङ्केतः, छलम्, जातिः, वादजल्पवितण्डानामप्युपयोगः, प्रत्यक्षानुमानयोर्बलाबलविचारः ।

## शब्दसमीक्षायाम्

**प्रथमे पुष्पे**

शब्दस्य प्रामाण्यसमर्थनम्, स्फोटरूपशब्दाभिव्यक्तिरेव प्रमाणम्, पदनिष्ठवृत्तिग्रहाधीनं पदार्थज्ञानमेव व्यापारः, पदार्थविषयकः संस्कार एवं व्यापार इति श्री नागेशभट्टः, वस्तुतः पूर्वोक्तपदार्थज्ञानमेव स इति निष्कर्षः शाब्दिकाभिमतवृत्तिस्वरूपं तज्ज्ञानस्य शाब्दबोधहेतुता च, वृत्तिभेदा इति ।

**द्वितीये पुष्पे**

शक्तिस्वरूपम्, तादात्म्यस्वरूपम्, न्यायसम्मतशक्तिस्वरूपतिरस्कारः, शक्तिस्वरूपविषये निष्कर्षः अपशब्देऽपि शक्तिः, शक्तिभेदाः, शक्तिनियामकाः, लक्षणानिरूपणम्, लक्षणालक्षणम्, कचतस्त्रस्यति वदनमित्यत्रारोपोपपादनम्, 'गङ्गायां घोषः' इत्यत्र कश्चन विशेषः, आरोपरूपलक्षणायां महर्षिगौतमादिसम्मतिः । ज्ञाप्यसम्बन्धरूपलक्षणापक्षे ज्ञानं कीदृशं ग्राह्यम् ? लक्षणाया बीजं तद्भेदाश्च, 'काकेभ्यो दधि रक्ष्यताम्' इत्यत्र लक्षणास्वरूपम्, व्यञ्जनावृत्तिः, अस्याः स्वरूपविषये श्रीनागेशभट्टस्य महान् विनोदः, अत्र समन्वयः, शक्त्या लक्षणया वा न गतार्थैषा, नानामतनिरासपूर्वकव्यञ्जनास्थापनम्, अनुमानादिनाऽपि सा न गतार्था ।

**तृतीये पुष्पे**

शाब्दबोधे कारणानि—आकाङ्क्षास्वरूपम्, योग्यतास्वरूपम्, शाब्दिकानां मते उक्तसकलयोग्यताज्ञानगतहेतुतानिरासः, बाधनिश्चयेन अप्रामाण्यग्रहजनने दोषाशङ्कानिरासौ, गुरुहरिसम्मता विलक्षणा योग्यता, आसत्तेः शाब्दे हेतुतानिरासः, तात्पर्यस्य नान्वयबोधहेतुता, अत्र विषये भाष्यविरोधपरिहारः, ज्ञानानां तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वेऽपि पदार्थज्ञानाकाङ्क्षाज्ञानादीनां शाब्दबोधे कथं संवलनमिति ।

**चतुर्थे पुष्पे**

शब्दस्य स्वरूपम्, स्फोटध्वनिभेदेन द्वैविध्यम्, स्फोटस्वरूपम्, सूत्रकृन्मते तत्स्वरूपम्, स्फोटसंवादविसंवादयोर्नानामतानि, द्वितीयमतनिरासश्च, स्फोटस्य विभुत्वं नित्यत्वमेकत्वं च, स्फोटस्य द्रव्यत्वम्, गुणत्वं वा ? वस्तुतः स्फोटो न द्रव्यं नापि गुणः, अपि तु भावात्मैव । शब्दब्रह्मणश्चिद्रूपत्वम्, ध्वनिस्वरूपम्, वैखर्य्यां ध्वनिरूपता, ज्ञानस्य परिणामः शब्द इति भाष्यसिद्धान्तः, वायोर्ज्ञानस्य वा परिणामः शब्द इति मतद्वयसमीक्षा, स्फोटभेदाः, वाक्यस्फोटस्य ज्येष्ठत्वम्, शब्द-प्रमाणस्य प्रमाणान्तरापेक्षया बलाबलविचारः, ज्ञानानां यौगपद्यम् । अत्र शब्दप्रमाणे बौद्धस्यार्थस्य यत्र बाह्यार्थेन संवादस्तत्र शब्दः प्रमाणम्, अन्यत्र त्वप्रमाणमित्यादिरपि विशेषः । शाब्दप्रमाया नानुभवत्वम्, अपि तु प्रत्यक्षप्रमाया एवेत्यादिकं सर्वं व्याकरणशास्त्ररीत्या व्याख्यातमस्ति ।

## अर्थापत्तिसमीक्षायाम्

**प्रथमे पुष्पे**

अर्थापत्तिप्रमाणलक्षणम्, अत्र प्रमाणे व्यापारः, प्रमाणे चात्र सूत्रकृदादिसम्मतयः, अर्थापत्तेर्भेदाः, अर्थापत्तेः प्रामाण्ये आक्षेपनिरासौ, श्रीपुरुषोत्तमदेवभैरवमिश्रयोरत्र प्रौढिवादिता इति ।

## प्रत्याख्येयसमीक्षायाम्

**प्रथमे पुष्पे**

उपमानमनुमानगतार्थम्, अनुपलब्धिर्न स्वतन्त्रं मानम्, अपि तु प्रत्यक्षसह-कारिण एव । अत्र भाष्यद्वयीयविरोधपरिहारः, अभावस्यानुमेयत्वादिकमपि निरूपितमस्ति ?

**द्वितीये पुष्पे**

'सोऽयं देवदत्तः' इत्यादिज्ञानस्वरूपायाः प्रत्यभिज्ञाया अपि न स्वतन्त्रं प्रामाण्यम्, अपि तु प्रत्यक्षादिना गतार्थता, अस्या भेदाः । अभ्यासस्यादृष्टस्य प्रतिभा-याश्च हरिसम्मतस्यापि प्रामाण्यस्य क्लृप्तेष्वेव प्रामाण्येष्वन्तर्भावः । लोककोशचेष्टा-सम्भवादीनामपि नं स्वतन्त्रं प्रामाण्यमित्यादयो विषया निरूपिताः सन्ति ।

# प्रमेयसमीक्षायाम्

**प्रथमे पुष्पे**

द्विविधः शब्दोऽर्थः सम्बन्धश्चेत्येवं षट्, फलमपि द्विविधमित्यष्टौ प्रमेयाणि दर्शितानि । तत्र प्रकृतिप्रत्ययान्यतरात्मकशब्दतदर्थनिरूपणप्रसङ्गे प्रातिपदिकरूप-प्रकृत्यर्थः सुष्ठु निरूपितः । तत्रैव जात्यादिप्रवृत्तिनिमित्त-तदाश्रयद्रव्य-तत्सम्बन्धानां समवायादीनामपि निरूपणं द्रष्टव्यमस्ति ।

**द्वितीये पुष्पे**

गुण-क्रिया-लिङ्ग-संख्या-कारकाणां निरूपणम्, धात्वर्थस्य निरूपणं द्रष्टव्यमस्ति । एवंरीत्या ग्रन्थोपसंहारप्रकरणेऽतिसंक्षिप्तं प्रमाणप्रमेयभेदानां विवरणं प्रदर्शितम्, अध्येतृणां सुखबोधायेति शम् ।

**पाणिनीये महाशास्त्रे यत्प्रमाणसमीक्षणम् ।**
**तेन प्रसीदताद् देवो गौरीनाथः सदाशिवः ॥ १ ॥**

**निर्देशनं समधिगम्य विचक्षणश्रीकालीप्रसादगुरुमिश्रवरस्य सम्यक् ।**
**पाण्डेयवंशजनिमद्--रघुनाथशर्मतीर्थातिरागभृतभूरिसहायताञ्च ॥ २ ॥**

**पाणिनीयप्रमाणानां कृतं युक्त्या विवेचनम् ।**
**मुदेऽस्तु विदुषां रामप्रसादेन त्रिपाठिना ॥ ३ ॥**

**निर्गुणं निष्क्रियं नित्यं निरवद्यं निरञ्जनम् ।**
**ब्रह्मैवेत्यक्षरं प्राहुस्तस्मै पूर्णात्मने नमः ॥ ४ ॥**

**॥ शुभम्भूयादिति शम् ॥**

●

# ॥ प्रथमं परिशिष्टम् ॥

## वाक्ये पदविन्यासविमर्शः

एकविशेष्यवाचकपदविशेषणपदयोः समभिव्याहारे विशेष्यवाचकपदेन समान-लिङ्गवचनकं विशेषणपदं साधु, उतासमानलिङ्गवचनकम् ? तथाऽनेकलिङ्ग-वचनकविशेष्यपदेषु विशेषणपदं किं लिङ्गवचनकं साधु ? इति विमृश्यात्र निर्णयो विहितः ।

उद्देश्यविधेयवाचकयोः प्रकृतिविकृतिवाचकयोरारोप्यारोपविशेष्यवाचकयोश्च पदयोर्यत्र वाक्ये समभिव्याहारोऽस्ति तत्र किम् उद्देश्याद्यनुगुणमाख्यातवचनम्, उत विधेयाद्यनुगुणमित्यपि संशयमपाकृत्य निर्णयो विहितः ।

"घटो नीलः" इत्यादिवाक्यस्य केनचिदपि शिष्टेनासाधुत्वानभ्युपगमाद् असति विशेषानुशासने विशेष्यविशेषणवाचकपदयोः समानवचनकत्वमिति नियमः स्वीकृतोऽस्ति । अत एव – 'विंशत्याद्याः सदैकत्वे' इति कोशानुशासनात् 'शतं ब्राह्मणाः' इत्यस्य साधुत्वेऽपि 'वेदाः प्रमाणम्', 'त्रयः समुदिता हेतुः', 'जात्या-कृतिव्यक्तयः पदार्थाः' इत्यादीनां कथं साधुत्वमिति जिज्ञासायां यद्युच्यते –विशेष्य-विशेषणपदयोर्यत्र समानलिङ्गकत्वमस्ति, तत्रैव समानवचनकत्वनियमः, यथा 'घटो नीलः' इत्यादौ । वेदाः प्रमाणमित्यादौ तु समानलिङ्गकत्वाभावेन तन्नियमाप्रसक्त्या न साधुत्वानुपपत्तिरिति तावताऽपि 'प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि', 'पितरो देवताः' इत्यादौ साधुत्वानुपपत्तिरेव । असमानलिङ्गकस्थले विशेष्यवाचकपदा-समानवचनकस्यापि विशेषणपदस्य साधुत्वे तादृशस्थले औत्सर्गिकैकवचनस्यैव सर्वत्र विशेषणपदानन्तरं प्रयोक्तुमुचितत्वात् ।

अत्रोच्यते–यत्र विशेष्यवाचकपदोत्तरविभक्तितात्पर्यविषयसङ्ख्याविरुद्ध-सङ्ख्याया विशेषणवाचकपदोत्तरविभक्त्या अविवक्षा, तत्र विशेष्यविशेषणपदयोः समानवचनकत्वमिति नियमस्वरूपस्वीकारे सर्वमिष्टं संगृहीतमनिष्टं च व्यावृत्तं भविष्यति ।

तथा हि 'घटो नीलः' इत्यत्र विशेष्यवाचकं पदं घट इति पदम्, तदुत्तरविभक्तिस्तत्तात्पर्यविषयसंख्या बहुत्वसंख्या, तद्विरुद्धसंख्या एकत्वादिसंख्या, तस्या विशेषणवाचकनीलपदोत्तरजस्विभक्त्या विवक्षा नास्तीति समानवचन-कत्वनियमस्य तत्रास्ति प्रसक्तिः । एवं प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि, पितरो

देवता इत्यादावपि विशेष्यवाचकं शब्दान्तं पदं पितृपदं च, तदुत्तरजस्विभक्तितात्पर्यविषयीभूतबहुत्वसंख्यातो विरुद्धसंख्यांया अविवक्षितत्वाद् विशेष्यविशेषणवाचकपदयोः समानवचनकत्वं सङ्घटते । वेदाः प्रमाणमित्यत्र तु विशेष्यवाचकवेदपदोत्तरजस्विभक्तितात्पर्यविषयीभूतबहुत्वसंख्यातो विरुद्धाया एकत्वसंख्याया विशेषणवाचकप्रमाणपदोत्तरसुविभक्त्या विवक्षितत्वेनोक्तनियमस्याप्राप्त्या एकत्वबोधकमेकवचनं साध्वेव । ननु प्रमाणपदार्थः प्रमितिकरणम् । एवं च प्रमितिकरणेषु नानावेदेष्वेकत्वरूपस्यैकवचनार्थस्य कथं समन्वयः ? यदि तु प्रकृत्यर्थताऽवच्छेदके प्रमितिकरणत्वे एकत्वान्वय युज्यत इति चेत्, समाधीयते–यथाऽनेकेषु घटेष्वेकमेव घटत्वम्, तथाऽनेकेष्वपि प्रमितिकरणेषु वेदेष्वेकमेव प्रमितिकरणत्वं युक्तमिति नायोग्यताप्रसरः ।

एवं च एकत्वविशिष्टं यत्प्रमितिकरणत्वं तद्वदभिन्ना वेदाः । यावच्छब्दनिष्ठशाब्दप्रमाकरणत्वं च शब्दत्वाऽवच्छिन्नमेकमेव, शब्दत्वजातेरवच्छेदिकाया ऐक्याद् अवच्छेद्ये शाब्दप्रमितिकरणत्वेऽपि लाघवादैक्यमेव स्वीकर्त्तुमुचितम् । यावच्छब्दनिष्ठमित्यत्र यावच्छब्दपदेनाप्तोक्तः प्रमाणभूतशब्द एव ग्राह्यः, अनाप्तशब्देषु प्रमाणत्वानङ्गीकारात् ।

**'त्रयः समुदिता हेतुः'** इत्यत्र समुदिता इति विशेष्यपदम्, हेतुपदं विशेषणपदम् तदुत्तरसुविभक्त्या एकत्वं विवक्षितम् । हेतुपदं च कार्योत्पत्तिप्रयोजकताऽवच्छेदकसमुदायत्वावच्छिन्नपरमिति तादृशसमुदायत्वे सुविभक्त्यर्थैकत्वस्यान्वयः । अन्यथा तृणारणिमणीनां वह्निं प्रति यथा पृथक् पृथगेव हेतुत्वं स्यात्, तच्च नेष्यते, मिलितानामेवैषामत्र हेतुत्वाभ्युपगमात् । एवं चैकत्वविशिष्टं यत् काव्योत्पत्तिप्रयोजकताऽवच्छेदकसमुदायत्वम्, तद्वदभिन्नास्त्रयः । 'जात्याकृतिव्यक्तयः पदार्थाः' इत्यत्र पदार्थपदं विशेषणपदं तदुत्तरसुविभक्तेरेकत्वमर्थो विवक्षितः, तच्चैकत्वं जात्याकृतिव्यक्तिनिष्ठे पदार्थत्वेऽन्वेति, पदार्थत्वं पदवाच्यत्वं पदशक्तिरूपम् । तच्च जात्यादित्रितये एकमेवेति तत्रैकत्वस्यान्वयः सुघटः । एवं चैकत्वविशिष्टं यत्पदार्थत्वम्, तद्वदभिन्ना जात्याकृतिव्यक्तय इति बोध्यम् ।

**'प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि'** इत्यत्र प्रमितिकरणत्वरूपस्य प्रकृत्यर्थताऽवच्छेदकस्य प्रत्यक्षानुमानादिनिष्ठस्यैकताया बाधितत्वेनाविवक्षितत्वाद् विशेषणवाचकप्रमाणपदस्य बहुवचनान्तत्वोपपत्तिः । प्रत्यक्षादीनामिन्द्रियसंयोगादिलक्षणसामग्रीभेदेन प्रमात्वव्याप्यप्रत्यक्षत्वादिजातिभेदेन च तन्निष्ठप्रमाकरणत्वस्यापि भेदात् ।

**'पितरो देवताः'** इत्यत्रापि पितृपितामहादिष्वेकं देवतात्वं नास्तीति पितृपितामहादिषु यद् देवतात्वम्, तत्रैकत्वं नास्तीत्येकत्वस्याविवक्षितत्वाद् विशेषणवाचकं देवतापदे बहुवचनान्तमेव साधु । यतश्च त्यागोद्देश्यतात्वमेव देवतात्वम् । त्यागोद्देश्यता च पित्रादौ वर्त्तते, उद्देश्यताऽवच्छेदकं च पितृत्वपितामहत्वादिकम् । न च पितृत्वपितामहत्वादिकमेकमस्ति – इत्युद्देश्यताऽवच्छेदकपितृत्वादिभेदेनोद्देश्यताया अवश्यं भेदात् । तद्भेदे चोद्देश्यतारूपदेवतात्वस्यापि, अर्थाद् भेदे तत्रैकत्वस्य बाधो बोध्यः । अत एव च **'फलव्यापारयोर्धातुराश्रये तु तिङः स्मृताः'** इति कारिकाया व्याख्यानावसरे उक्तं भूषणसारकृता–**'धातुरित्यत्र स्मृत इति वचनविपरिणामेनान्वयः'** इति । तत्रत्यदर्पणाख्यटीकाकारेण च तादृशविरुद्धसंख्यायाः प्रकृते विवक्षायां बीजाभावं प्रदर्शयता वचनविपरिणामेनैकवचनान्तेन स्मृत इत्येवं रूपेणाभेदान्वयस्य समर्थनं पर्यपोषि ।

उक्तस्यास्य वचननिर्णायकनियमस्य समर्थनं महामुनिना पाणिनिना पतञ्जलिना च बहुशः कृतमस्ति । तथा हि **'तरप्तमपौ घः'**[1], **'क्तक्तवतू निष्ठा'**[2] इत्यादिसूत्रेषु विशेषणवाचकघनिष्ठा इत्यादिपदोत्तरसुविभक्त्या तादृशविरुद्धैकत्वसंख्याया विवक्षाऽस्ति इति कृत्वा समानवचनकत्वाभावः ।

अयं भावः – यथा 'जात्याकृतिव्यक्तयः पदार्थाः' इत्यत्र पदशक्तिरूपस्य पदार्थत्वस्यैकत्वं विवक्षितमस्ति, तथैवात्रापि घनिष्ठा इत्यादिपदशक्तिरूपस्य तत्तद्वाच्यत्वस्यैकत्वं विवक्षितमस्ति । तत्र शक्तता (वाचकता) घपदनिष्ठादिपदनिष्ठा च, तदवच्छेदको धर्मः घपदत्वं निष्ठापदत्वादिकं च । शक्यता च तरप्तमपौ निष्ठा, क्तक्तवतु इत्यादिनिष्ठा च, शक्यतावच्छेदको धर्मोऽन्यतरत्वादिः । यत्र च तादृशविवक्षा नास्ति, तत्र भवति समानवचनकत्वम् । यथा **'प्रादयः'**[3] **'उपसर्गाः क्रियायोगे'**[4] इत्यत्र प्रादय इति विशेष्यपदम्, तद्गुणम् उपसर्गा इति विशेषणपदम् । एवमेव **'स्वतन्त्रः कर्ता'**,[5] **'साधकतमं करणम्'**[6] इत्यादौ बोध्यम् ।

महाभाष्येऽपि–'कानि खलु शब्दानुशासनस्य प्रयोजनानि' इति प्रश्नवाक्ये विशेष्यविशेषणपदयोः समानवचनकत्वमादृतम् । अग्रे–**'रक्षोहागमलघ्वसन्देहाः प्रयोजनम्'** इत्याकारके समाधानवाक्ये तादृशविवक्षावशात् समानवचनकत्वलाभः

---

1. पा. सू. १।१।२२।
2. तदेव- १।१।२६।
3. तदेव–१।४।५८।
4. तदेव–१।४।५९।
5. तदेव–१।४।५४।
6. तदेव–१।४।४२।

समादृतः । तथा हि– विशेषणवाचकप्रयोजनपदोत्तरसुविभक्त्या प्रयोजनशब्दगत-मेकत्वं विवक्षितमस्ति ।

अयं भावः – प्रयोज्यतेऽनेनेति प्रयोजनः, प्रयोजक इत्यर्थः, करणे ल्युट्प्रत्ययः । प्रयोज्यन्ते यानि तानि प्रयोजनानि फलानि इत्यर्थः । कर्मणि ल्युट्प्रत्ययः । प्रकृते प्रयोजन आगमः, स च **'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च'** इत्याकारको व्याकरणाध्ययनस्य प्रयोजक एव, न तु फलात्मकप्रयोजनभूतः । इतराणि रक्षादीनि तु फलात्मकप्रयोजनरूपाणि । पुनः प्रयोजनश्च प्रयोजनानि चेति एकशेषे नपुंसकलिङ्गता पाक्षिकैकवचनान्तता चेति । तत्र यद्यपि प्रयोजनत्वं भिन्नमेव, तथापि प्रयोजनशब्द एक एव । स एव चात्र प्रवृत्तिनिमित्तत्वेनाभ्युपेयते । वैयाकरणनये शब्दस्य शब्देऽर्थे च खण्डशः शक्तिः स्वीक्रियते । 'स्वं रूपं शब्दस्याशब्दसंज्ञा' इति सूत्रमत्रास्ति प्रमाणम् । एवं च शब्दविशिष्टोऽर्थः, अर्थविशिष्टो वा शब्दो भवति शब्दस्यार्थः । तत्र प्रकृते प्रयोजनशब्दस्य विशेषणता, प्रयोजनपदार्थस्य तु विशेष्यता मन्तव्या स्यात् । एवं च विशेषणीभूते प्रयोजनशब्दे स्फोटरूपे एकत्वस्य विवक्षा कर्तुं शक्यते । **'यः शिष्यते स लुप्यमानस्याप्यर्थमभिधत्ते'** इति नियमेनैकस्मिन्नेव शेषभूते प्रयोजनशब्दे तत्तदर्थबोधनसामर्थ्यमवगन्तव्यम् । अतश्च यथा वेदाः प्रमाणमित्यत्र प्रमितिकरणत्वनिष्ठमेकत्वं विवक्षितमस्ति, तथैवात्राप्यखण्डस्फोटरूपप्रयोजनशब्दनिष्ठमेकत्वं विवक्षितमस्ति ।

एतावता–एकविशेष्यवाचकपदविशेषणपदयोः समाहारे विशेष्यवाचकपदसमान-वचनकमथवा तदसमानवचनकं विशेषणपदं साध्विति विमृष्टम् । इदानीं विशेष्यवाचकेष्वनेकेषु च सत्सु विशेषणपदं किं लिङ्गकं किं वचनकं च साधु स्यादिति विमर्शे महाभाष्यकारस्य प्रयोगं दृष्टिपथं कृत्वा किञ्चिदुच्यते ।

तथा हि–इह देवदत्त इत्युक्ते कर्ता निर्दिष्टः, कर्म क्रियागुणौ चानिर्दिष्टौ, गामित्युक्ते कर्म निर्दिष्टम्, कर्ता क्रियागुणौ चानिर्दिष्टौ, अभ्याजेत्युक्ते क्रिया निर्दिष्टा, कर्तृकर्मणी गुणाश्चानिर्दिष्टाः । शुक्लामित्युक्ते गुणो निर्दिष्टः, कर्तृकर्मणी क्रिया चानिर्दिष्टा इत्यर्थवदधातुरिति सूत्रस्थं भाष्यं प्रमाणीकृत्य वक्तुं शक्यते यद् विशेष्यवाचकेषु अनेकेष्वन्तिमं पदं यल्लिङ्गकं च भवति, तदनुगुणं लिङ्गवचनं च विशेषणपदे साधु भवति, वचनविषये तु विशेष्यद्वयादिगतद्वित्वादिविवक्षायां द्विवचनादिकमपि साधु भवति । यथा 'रामः सीता दयावती' इति दयावत्यौ इति वा प्रयोगः साधुः, न तु दयावान् दयावन्तौ इति च । एवमेकं विशेष्यपदम् असमस्तम्, अन्यद् विशेषणपदं च समस्तं द्विवचनान्तं च यदि वर्तते, तदा अन्तिमं विशेष्यपदं

समस्तं चेत् तदा तदनुसारि लिङ्गं वचनं च विशेषणपदे व्यवहरणीयम् । यथा–कृष्णरामौ सीता च दयावती । यदि अन्तिमं विशेष्यपदं समस्तं स्यात्, तत्राप्युत्तरपदं यल्लिङ्गकं तल्लिङ्गकं समस्तपदसमानवचनकं च विशेषणपदं प्रयोक्तव्यम् । यथा सीता रामकृष्णौ च दयावन्तौ, कृष्णो रामसीते च दयावत्यौ इति ।

क्वचित्तु पूर्वोक्तनियमानां बाधे विशेषणपदे सामान्यतो नपुंसकलिङ्गमेकवचनं च भवति । यथा–दृढं भक्तिः यस्य स दृढभक्तिरित्यत्र दृढशब्दे सामान्यतो नपुंसकमेकवचनं सम्प्रयोज्य साधुत्वं विधीयते । अन्यथा दृढा भक्तिर्यस्येति विग्रहे 'स्त्रियाः पुंवदिति' पुंवद्भावो न स्यात्, भक्तिशब्दस्य प्रियादिगणे पाठेनापूरणीप्रियादिषु पुंवद्भावनिषेधः स्यात् । अत्र प्रमाणं तु–'शक्यं चानेन श्वमांसादिभिरपि क्षुत्प्रतिहन्तुमिति' महाभाष्यप्रयोग एव । व्याख्यायते च तत्र प्रदीपकृता–शकेः कर्मसामान्ये लिङ्गसर्वनामनपुंसकयुक्ते कृत्प्रत्ययः । ततः पदान्तरसम्बन्धादुपजायमानमपि स्त्रीकत्वं बहिरङ्गत्वादन्तरङ्गसंस्कारं न बाधत इति शक्यं क्षुदित्युक्तम् । यदा तु पूर्वमेव विशेषविवक्षा, तदा शक्या क्षुदिति भवत्येव । इदानीं यावत् सुब्वचनविषये विमर्शः कृतः, अथ तिङ्वचनविषये किञ्चिद् विम्रष्टुं प्रयत्यते । तत्र वेदाः प्रमाणमस्ति वा सन्ति वा । एवं वृक्षः पञ्च नौका भवति वा, भवन्ति वा । एवमेव एकौ द्वौ ज्ञायते वा ज्ञायेते वा इति किमाख्यातवचनं साधुतां भजत इति संशयमपाकर्तुमुच्यते । अत्र व्युत्पत्तिवादे–'यथा प्रकृतिविकृतिभावस्थले वृक्षः पञ्च नौका भवति–इत्यादौ प्रकृतिभूतवृक्षादेर्विशेष्यतया भावनाऽन्वयित्वात् तद्गतसंख्याबोधकतया प्रकृतिवाचकपदसमानवचनकत्वमाख्यातस्य, एकादिपदार्थस्यारोपविशेष्यतान्वयविशेष्यतया तत्पदसमानवचनत्वमाख्यातस्य' इति ।

अयमाशयः – आख्यातार्थः कृतिः कर्मत्वं वा यत्रान्वेति, तत्रैवाख्यातार्थसंख्यया अन्वय इति कृत्वा आख्यातार्थविशेष्यवाचकपदसमानवचनकत्वमाख्यातस्येति नियमः सम्पद्यते । यथा देवदत्तः पचति–इत्यत्राख्यातार्थकृतेर्देवदत्तेऽन्वयाद् आख्यातार्थकृतिविशेष्यवाचकं यद्देवदत्तपदं तत्समानवचनकत्वमाख्यातस्य । कर्मणि प्रत्यये तु कर्मत्वस्याख्यातार्थतया कर्मण्यन्वयः, तद्वाचकपदसमानवचनकत्वमाख्यातस्य, यथा 'देवदत्तेन तण्डुलः पच्यते' इत्यादौ कर्मत्वस्य तण्डुलेनान्वयात्तत्समानवचनकत्वमाख्यातस्य; परन्तु प्रकृतिविकृतिभावस्थले प्रकृतेर्विकृतेश्चोभयोरपि कर्तृत्वात् किमाख्यातं प्रकृतिवाचकपदेन समानवचनकं स्यात्, विकृतिवाचकपदेन वा–इति संशयो जायते, तस्यापाकरणायायं व्युत्पत्तिवादग्रन्थः प्रवृत्तः ।

तत्र वृक्षः पञ्च नौका भवतीत्यत्र नौकापदार्थस्य स्वकर्तृकत्वसम्बन्धेन भवनक्रियायामन्वयः, भवनान्वितस्याख्यातार्थकर्तृत्वस्य वृक्षेऽन्वयः । एवं च नौकाकर्तृकभवनानुकूलकर्तृत्वाश्रयो वृक्ष इति शाब्दबोधः । अतश्चात्राख्यातार्थकर्तृत्वविशेष्यत्वं प्रकृतिभूतस्य वृक्षस्यैवेति वृक्षपदसमानवचनकत्वमेवाख्यातस्येति 'वृक्षः पञ्च नौका भवति' इत्येव प्रयोगः साधुः, न तु भवन्ति इति एवं 'काष्ठानि भस्म क्रियन्ते' इत्यादौ विकृतेर्भस्मपदार्थस्य कर्मतासम्बन्धेन धात्वर्थेऽन्वयः । आख्यातार्थस्य प्रकृतौ काष्ठपदार्थेऽन्वयः । तथा च भस्मकर्मककृतिकर्मभूतानि काष्ठानीति बोधः । अत्रापि काष्ठानामाख्यातार्थविशेष्यत्वात् काष्ठवाचकपदसमानवचनकत्वमाख्यातस्य साधु इति 'काष्ठानि भस्म क्रियन्ते' इत्येव प्रयोगः साधुः, न तु 'काष्ठानि भस्म क्रियते' इति ।

एवमभेदारोपस्थले 'एको द्वौ ज्ञायते' इत्यादौ आरोपविशेष्यवाचकपदसमानवचनकत्वमाख्यातस्य । एको द्वित्वावच्छिन्नाभेदज्ञानविशेष्य इति तत्राऽन्वयबोधः । अत्राख्यातार्थो विशेष्यत्वम्, तस्यैकशब्दार्थेऽन्वय इति कृत्वाऽऽख्यातार्थान्वयिसमानवचनकत्वमाख्यातस्यात्रापि सम्पन्नम् । **"गृह्णाति वाचकः संख्यां प्रकृतेर्विकृतेर्न हि"** इति वचनमाधृत्येदृशः सिद्धान्तो व्यवस्थापितः श्रीमद्भिर्भट्टाचार्यैः ।

इदमत्रावधेयम्–ईदृशः सिद्धान्तस्तदैव स्याद् यदा प्रथमान्तार्थमुख्यविशेष्यक एव बोधः, आख्यातार्थविशेष्य एव संख्यान्वय इति च सर्वसम्मतः स्यात्; परन्तु शाब्दिकानां मीमांसकानां च मते सर्वकारकाणां धात्वर्थव्यापारे आख्यातार्थभावनायां वाऽन्वयाङ्गीकारे 'वृक्षः पञ्च नौका भवति' इत्यत्र वृक्षकर्तृकं नौकाकर्तृकं च भवनम्, भावनाश्रयत्वमिति वा बोधाभ्युपगमात्पुनरपि पूर्वसंशयस्तदवस्थ एव वर्तते । अतश्चात्र कश्चन सर्वसम्मतः सिद्धान्तोऽन्वेषणीयः ।

अत्र महाभाष्यकाराः – **'पुनरावृत्तः सुवर्णपिण्डः पुनरपरया आकृत्या युक्तः खदिराङ्गारसवर्णे कुण्डले भवतः'** इति प्रयुञ्जानाः प्रकृतिविकृतिभावस्थले विकृतिसमानवचनकत्वमाख्यातस्येति सम्मन्वते ।

इमं भाष्यप्रयोगमेवाश्रित्य 'आन्महतः समानाधिकरणजातीययोः' इति सूत्रे प्रदीपकृता कैयटेनोच्यते–**'यथा च प्रकृतेः कर्त्तृत्वं दृश्यते, तथा विकृतेरपि । सुवर्णपिण्डः खदिराङ्गारसवर्णे कुण्डले भवतः'** इति विकारसंख्याश्रयद्विवचनदर्शनात्, तथा असङ्घो ब्राह्मणः सङ्घः सम्पद्यते । अपटस्तन्तवः पटः सम्पद्यत इति विकारसंख्याश्रयं वचनं दृश्यते ।

च्विविषये हि प्रकृतिः कर्त्री, न विकृतिः, तथा हि 'सङ्घीभवन्ति ब्राह्मणाः, पटीभवन्ति तन्तवः' इति प्रकृतिसंख्याश्रयं वचनं दृश्यते, न विकृतिसंख्याश्रयमिति ।

वाक्यपदीयकारिकयाऽप्ययं विषयः समर्थितो भवति । तथा हि–

**वाक्ये सम्पद्यते कर्ता संघश्च्व्यन्तस्य कथ्यते ।**

**वृत्तौ संघीभवन्तीति ब्राह्मणानां स्वतन्त्रता ।।** इति ।

उद्द्योतकृता श्रीनागेशेनाऽपि अस्य विषयस्य पूर्णं समर्थनं विधीयते । तथा हि भाष्ये–'खदिराङ्गारसवर्णे कुण्डले भवतः' इति प्रयोगाद् अच्व्यन्ते विकृतेः कर्तृत्वं बोध्यमिति तदीयं हार्दम् ।

पुनश्च श्रीहरिणा–**'सुवर्णपिण्डे प्रकृतौ वचनं कुण्डलाश्रयम्'** इत्युक्त्याऽऽख्यातस्य विकृतिवचनानुसारित्वं सुष्ठु अनुमोदितम् । हेलाराजेनापि अत्रैतदेव समर्थितम् । श्रीमद्भगवच्छङ्करपादैरपि उक्तमेवाभ्युपेत्य ईशावास्योपनिषदि प्रयोगः कृतः – **'यस्मिन् सर्वाणि भूतानि आत्मैवाभूद्विजानतः'** इत्यत्र 'यस्मिन् काले यथोक्तात्मनि वा तान्येव भूतानि सर्वाणि परमार्थात्मदर्शनाद् आत्मैवाभूत्, आत्मैव संवृतः' इत्येवं व्याख्यानं व्यधायि ।

तत्र प्रकृतिमनुरुध्य 'आत्मैव संवृतानि' इति नोक्तम् । अनेन विधेयवाचकात्म-शब्दानुरोधेनाख्यातपदस्यैकवचनान्तता स्पष्टमुक्ताऽस्ति ।

यत्तु वैयाकरणभूषणसारस्य दर्पणव्याख्याकृता–'खदिराङ्गारसवर्णे इति विशेषणेन कुण्डलयोः प्रकृतित्वं गम्यते, सिद्धाया विकृतेः पाकानपेक्षणात् । पुनरपरया आकृत्या युक्त इति विशेषणेन तु सुवर्णपिण्डस्य विकृतित्वम् । आकृत्यन्तरयोगस्य प्रकृतित्वा-प्रयोजकत्वात् । पुनरावृत्त इति विशेषणेनापि सुवर्णपिण्डस्य विकृतित्वं गम्यते' इत्यादिरीत्या भाष्यं विवृण्वता आख्यातस्य प्रकृतिसमानवचनकत्वमेव प्रसाधितम् ।

तत्तु पूर्वोक्तकैयटादिग्रन्थविरोधाद् युक्तिविरोधाच्च समीचीनतां नार्हति । तथा हि 'खदिराङ्गारसवर्णे' इति विशेषेण कुण्डलात्मिकाया विकृतेः खदिराङ्गारवद् रक्तवर्णत्वे सति जाज्वल्यमानत्वं द्योत्यते, न तु पाकक्रियाऽपेक्ष्यते, तथा सति 'अङ्गारसवर्णे' इत्येव विशेषणं पर्याप्तं स्यात् । लोके हि खदिराङ्गारस्य रक्तवर्णतया जाज्वल्यमानतया च प्रसिद्धिरस्ति, अतश्च न हि तेन विशेषणेन सुवर्ण-पिण्डस्य विकृतित्वम्, कुण्डलयोः प्रकृतित्वं वक्तुं शक्यते । अनेकावस्थाभाजाऽपि सुवर्णाद् जायमानाऽलङ्कारो जाज्वल्यमान एव भवतीति तस्य विशेषणस्य तात्पर्यं मन्तव्यम् ।

यच्च पुनरपि **'पुनरपरयाऽऽकृत्या युक्तः'** इति तदपि न युक्तिसहम् । तथा हि– 'मृत्कयाचिदाकृत्या युक्तो पिण्डो भवति । पिण्डाकृतिमुपमृद्य घटिकाः क्रियन्ते । घटिकाकृतिमुपमृद्य कुण्डिकाः क्रियन्ते' इति भाष्यग्रन्थोऽस्ति । तत्र कयाचिदाकृत्या युक्ता इति विशेषणेन तथा मृदो विकृतित्वं वक्तुं नाभिप्रेयते; अपि तु काञ्चिदपूर्वामाकृतिमादाय मृत्तिकापिण्डो भवति । तथा सुवर्णमपि कञ्चिद-पूर्वमाकारविशेषं प्राप्तं सत् कुण्डलात्मकं कार्यं भवति । एवं चोपादानकारणभूतं वस्तु आकारविशेषं प्राप्य कार्यं भवतीति भाष्याभिप्रायं मत्वा आकारविशेषं प्राप्तमिति विशेषणस्य प्रकृतित्वगमकत्वमेवेति विचार्यताम् ।

यदपि पुनरावृत्त इति विशेषणेनापि सुवर्णपिण्डस्य विकृतित्वं गम्यत इत्युक्तम्, तदपि न विचारसहम् । तथा हि एतद्विषये महाभाष्यमस्ति–'कटकाकृतिमुपमृद्य स्व-स्तिकाः क्रियन्ते' इति । अत्र पुनरावृत्त इत्यस्य स्वस्तिकाकृतिमुपमृद्य पुनः वर्तुल-सुवर्णपिण्डरूपतां प्राप्त इत्यर्थः । पुनरपरयाऽऽकृत्या युक्त इत्यस्य स्वस्तिकादिपूर्व-निर्दिष्टाकृतिभिन्नां कुण्डलाकृतिं प्राप्त इत्यर्थः । एवञ्च सुवर्णस्य सदास्थितिः 'आकृतिरन्या चान्या च' इति तात्पर्यमत्रालोच्यते । एवञ्चानेकभूषणात्मना क्रमेण परिणतस्य सुवर्णपिण्डस्य पुनः सुवर्णपिण्डत्वावाप्तिः, ततः पुनराकृतिविशेषेण परिणाम इत्युक्तावपि तस्य प्रकृतित्वं न हीयते । मृद्दृष्टान्ते तु पुनर्मृदवस्थायां पर्यवसानं न भवति । सुवर्णे तु भूषणात्मना परिणामे सत्यपि पुनः सुवर्णस्य पूर्वावस्था आगच्छति ।

यदि तु पूर्वपरिणतिपरम्परायाः सुवर्णे पर्यवसानं भाष्यकृत्तात्पर्यविषयः स्यात्, तदा पूर्वस्मिन् भाष्यग्रन्थे 'स्वस्तिकाः क्रियन्ते' इति स्वस्तिकानामेव प्रस्तुतत्वात् 'स्वस्तिका पुनः सुवर्णा भवन्ति' इत्येव वक्तव्यं स्यात्, न तु 'कुण्डले सुवर्णे भवतः' इति, कुण्डलाख्यपरिणामस्य पूर्वमप्रस्तुतत्वात् ।

अतश्चात्र भाष्यग्रन्थे सुवर्णस्य प्रकृतित्वम्, कुण्डलयोर्विकृतित्वमित्येव विवक्षित-मिति निश्चयः कर्तुं शक्यः । तथा च तद्भाष्यतो विकृतिसमानवचनकत्वमाख्यातस्ये-त्येवावगम्यते । किं बहुना नैषधीये महाकाव्ये श्रीहर्षेणापि प्रयुक्तमस्ति–

**विभज्य मेरुर्न यदर्थिसात्कृतः**
**न सिन्धुरुत्सर्गजलैर्मरुः कृतः ।**
**अमानि तत्तेन निजायशोयुगं**
**द्विफालबद्धाश्चिकुराः शिरः स्थितम् ॥** इति ।

अत्र 'तेन द्विफालबद्धाश्चिकुराः शिरःस्थितं निजायशोयुगम् अमानि' इत्यन्वयः । अत्र चिकुरभागद्वये निजायशोयुगत्वमारोपितमस्ति । यत्तु व्युत्पत्तिवादे अयशोद्वयस्य

वास्तवतया चिकुरभागद्वयस्यैवारोप्यत्वमुक्तम्, तत्तु चिन्त्यमेव प्रतिभाति, उभयोरपि वास्तवत्वेन कस्य कुत्रारोप इत्यंशे विचारे क्रियमाणे शिरःस्थितमिति विशेषणाऽन्वयस्वारस्येन कवेरभिप्रेतत्वात् । पूर्वार्द्धे अतिशयोक्तिरूपेणासम्भावितवर्णनयाऽर्थस्यातात्त्विकतया अयशोयुगस्यापि तज्जन्यतयाऽभ्युपेतस्यावास्तवत्वेन तस्यैवारोपार्हत्वाच्च । अतश्चोक्तकाव्यप्रयोगमहिम्ना आख्यातस्यारोप्यवाचकपदसमानवचनकत्वं सिद्ध्यतीति प्रतीयते । तथा च 'एकोऽपि त्रय इव भाति कन्दुकोऽयम्' इत्यादावारोपविशेष्यवाचकपदसमानवचनकत्वमपि आख्यातस्य लभ्यते । अत्र हि एकत्वावच्छिन्ने कन्दुके त्रित्वस्यारोप इति आरोपविशेष्यवाचकमेकपदम्, तदनुसारेण 'भवति' इति एकवचनान्तस्य प्रयोगः । एवं चोभयत्र कामचारः ।

न्यायपरिशुद्धौ[1] वेदान्तदेशिकस्यापि सम्मतिरुद्देश्यविधेयभावस्थले कामचारविषयैव । तथा हि—न चोद्देश्यानुगुणा तिङ्विभक्तिरस्तीति नियमः । उपादेयानुगुणा, लिङ्गवचनादिनिर्देशवदत्रापि विरोधाभावात् । प्रयुञ्जते च पतंञ्जलिप्रभृतयो विधेयानुगुणामपि तिङ्विभक्तिम् । 'स पुनरावृत्तः सुवर्णपिण्डः खदिराङ्गारसवर्णे कुण्डले भवतः' इत्यादिषु ।

अत्रायं निष्कर्षः —प्रकृतिविकृतिभावस्थले आरोपस्थले चाख्यातस्यैकवचनादिकामचारतः प्रयोक्तुं शक्यते । च्व्यन्तस्थले तु प्रकृत्यनुसारेणैव वचनं प्रयोक्तव्यम् । 'चैत्रो मैत्रश्च गच्छतः' इत्यादौ प्रत्येकमेकत्वविवक्षयाऽऽख्यातस्यैकवचनान्तता, उभयगतद्वित्वविवक्षया तु द्विवचनान्तताऽऽख्यातस्य साध्वी ।

एवं च **'वेदाः प्रमाणम्'** इत्यादौ सन्तीत्येव साधुः, तथा 'मैथिली तस्य दारा अस्ति,' 'रुक्मिणी सत्यभामे कृष्णस्य दाराः स्तः' इत्याद्येव च साधु ।

प्रधानं सर्वतो बलवदिति न्यायाद् अभेदस्थलीयविभिन्नवचनकविशुद्धविशेष्यविशेषणवाचकपदसमभिव्याहारे विशेष्यवाचकपदानुसारेणाख्यातवचनं प्रयोक्तव्यमिति सिद्धान्तात्,' एवं च व्युत्पत्तिवादे यः सिद्धान्तो व्यवस्थापितः, स तु 'प्रथमान्तार्थमुख्यविशेष्यको बोधः', 'आख्यातार्थविशेषान्वय एव संख्यान्वयः' इति च नियमद्वयाभ्युपगम एव सम्भवति, न तु 'क्रियामुख्यविशेष्यकबोधवादिनां शाब्दिकादीनां मते' इति सर्वमनवद्यम् ।

●

## ॥ द्वितीयं परिशिष्टम् ॥

### तन्त्रागमशास्त्रदृष्ट्या बौद्धपदार्थविमर्शः

ब्रह्मणो रूपद्वयं प्रसिद्धम्–शब्दब्रह्म अर्थब्रह्म चेति । स्वचरमावस्थायाम् एतद् द्वयमखण्डरूपात्मनि एकाकारतया स्थितं भवति । शक्तिशक्तिमतोरिवोभयोरविनाभावसम्बन्धः प्रतिपाद्यते । तत्रापरप्रणवात्मकं शब्दब्रह्म, परप्रणवात्मकमर्थब्रह्मेति च नाम्नाऽपि प्रसिद्धम् । तान्त्रिकाणां नये इयं सृष्टिः परब्रह्मणः परिणामभूताऽस्ति । परिणतेऽपि ब्रह्मणि नहि कोऽपि विकारः समागच्छति । मूलतः सृष्टेर्द्वौ भागौ स्तः – शब्दमयी सृष्टिः, अर्थमयी सृष्टिश्चेति । चक्रदेहसृष्ट्योरुल्लेखो यत्र तत्र वर्त्तते, किन्तु देहो ब्रह्माण्डस्य लघ्वी प्रतिकृतिः, यत्र स्थूलताया वैभवं विलासश्चेति दृष्टिगोचरो भवति । यथा लौहमये सूक्ष्मगृहे स्थूलगृहस्य निर्माणं सम्पद्यते । तथैव चक्रमयी सृष्टिः, पिण्डब्रह्माण्डसृष्टिश्चेत्यवगन्तव्यम् ।

**शब्दार्थसृष्टेर्युगपत्प्रवृत्तिः –**

शब्दार्थस्वरूपाया द्विविधसृष्टेर्बीजाङ्कुरच्छाययोरिव सहैवोद्भवाभिवर्द्धने जायेते । छायादर्शनाद् वृक्षस्यानुमितिरनुभवसिद्धा । छायायां वृक्ष इवाकृतिमत्ता, वृक्षं विहाय तस्या अनुपपत्तिश्चेत्युभयमपि प्रत्यक्षम् । तद्वद् नार्थविरहितः शब्दः । अत एव शैवदर्शने कृतश्रमः कालिदासः प्राह–

**वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये ।**
**जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ** ॥ इति ॥

एवमन्यत्रापि निरूपितम्–

**याहमित्युदितवाक्परा च सा यः प्रकाशलुलितात्मविग्रहः ।**
**यौ मिथः समुदिताविहोन्मुखौ तौ षडध्वपितरौ श्रये शिवौ ॥**

**शब्दार्थयोरभेदः –**

व्याकरणागमे यथा नार्थः शब्दाद् बहिर्भूतः, तथैवेहापि शब्दार्थयोरभेदः । एवञ्च वाचकतत्त्वात्मकः शक्त्यात्मकः शब्दः, वाच्यतत्त्वात्मकः शिवात्मकोऽर्थश्चेति प्रसिद्धम् । उभयोरभेदो ह्यागमेष्वेवोक्तः –

**शिवशक्तिरिति ह्येकं तत्त्वमाहुर्मनीषिणः ।**
**न शिवेन विना देवी न देव्या च विना शिवः ॥**
**नानयोरन्तरं किञ्चिच्चन्द्रचन्द्रिकयोरिव ॥**

उक्तग्रन्थेन शब्दार्थयोरभेदः सिद्ध्यत्येव । तयोर्यामलं रूपम् ।

**संविदि शब्दार्थयोः समस्फुरणम् –**

तस्यां चान्तःसञ्जल्परूपायां संविदि द्वावपि शब्दार्थौ समं स्फुरतः । अत एव तयोरभेद एव विख्यातः । उक्तं चेह–

**यतः शब्दानुवेधेन न विना प्रत्ययोद्भवः ।**
**यथा तथा जगद्विद्धं सर्वमेव निजात्मना ॥**
**तथाऽऽत्मनाऽनुविद्धेव सर्वतो भाति भारती ॥**

शब्दानुवेधं विना नार्थस्य प्रत्ययो भवति । अत एव शब्दानुवेधपूर्वकमर्थप्रत्ययादुभयोरभेदः, सहैव तयोः स्फुरणं च निश्चीयते । तथा हि–माऽस्त्वक्षरबिन्दुरूपस्यान्तस्सञ्जल्पस्य कारणम् । यतो नादोऽन्तस्सञ्जल्पं जनयति । येन बुद्धिर्बाह्यविषयप्रतिबिम्बमध्यवस्यति । बाह्यो व्यक्तः शब्द आन्तरसञ्जल्पस्य बाह्याकार एव । अतो न परमार्थतोऽर्थो बुद्धिजनकः ।

असंख्येया नादाः । एष्वेकः प्रत्येकं परिमितात्मना सम्बद्धः । स च व्यक्ति-विशेषेष्वन्तस्सञ्जल्पोद्भावको बाह्यविषयस्य सविकल्पग्रहणकाले सञ्जल्पश्च शब्दार्थ-योरैक्यरूपात्मकः । श्रूयमाणा वर्णाः श्रोतृनिष्ठं नादमभिव्यक्तीकुर्वन्ति । अभिव्यक्तो नादः श्रोतृबुद्धेः पुरतः शब्दार्थद्वयात्मकान्तस्सञ्जल्पमुपस्थापयति । श्रोतृबुद्धिः शब्दा-र्थयोः पृथक्करणरूपमध्यवसायं कृत्वायमर्थ इत्यध्यवस्यति ।

अत एवार्थसृष्टिशब्दसृष्ट्योर्युगपदेवाङ्कुरतच्छाययोरिव परस्परसम्पृक्तयोरुत्पत्तिः, पदार्थमात्रस्य शब्दानुविद्धत्वात् ।

**शब्दसृष्ट्यर्थसृष्ट्योर्ज्ञानजनकं मन एव–**

शब्दार्थसृष्ट्योर्ज्ञानजनकं मन एवास्ति । तत्तु शब्दं श्रोत्रेन्द्रियेण गृह्णाति । अर्थस्तु क्वचन साक्षाद् नेत्रादिभिश्च गृह्यते । मनः श्रोत्रञ्चार्थान्तर्गतं मन्यते । अत एव यथा शब्दार्थमयी सृष्टिः स्थूल-सूक्ष्म-सूक्ष्मतर-सूक्ष्मतमभेदैश्चतुर्धा भवति, तथैव श्रोत्रमनसी प्रत्येकमपि चतुर्धा विभज्येते । तत्र स्थूलश्रोत्रेण स्थूलशब्दश्रवणात् स्थूलार्थस्य स्थूलमनसा ज्ञानं भवति । एवमेव सूक्ष्मश्रोत्रेण सूक्ष्मशब्दश्रवणात् सूक्ष्मार्थस्य सूक्ष्ममनसा ज्ञानं जायते । मनःश्रोत्रयोः सूक्ष्मता शास्त्राभ्यासयोगाभ्यासयोः पटुतया सम्पन्ना भवति ।

**सृष्टिद्वयमूलभूतं शब्दब्रह्म –**

वस्तुतः सृष्टिद्वयमूलभूतसूक्ष्मरूपविशेषात्मकत्वाद‌भिन्नशब्दार्थरूपं शब्दब्रह्मेत्यादि-पदनिर्देश्यं परं ब्रह्मैव । तच्च प्रकाशैकस्वरूपम् । 'घटः स्फुरति', 'पटः स्फुरति' इत्यादिप्रत्ययेन पदार्थमात्रे स्फुरणाख्यवस्तुविशेषस्य तत्तदभिन्नस्यानुभवसिद्धत्वात् ।

प्रकाशस्यापि स्फुरणमवश्यं वाच्यम्, 'प्रकाशः स्फुरति' इति प्रत्ययात् । तच्च स्फुरणं शक्तिरित्युच्यते । प्रकाशस्फुरणयोश्च मिलितयोरेव जगत्कारणत्वम् ।

**शब्दार्थयोर्बौद्धत्वप्रतीतिः –**

तन्त्रागमे संविदाख्या परावाक्, यत्र शब्दार्थौ सममेव प्रस्फुरतः । शब्दार्थयो-रभिन्नत्वादुभयात्मिका पराख्या संविदाख्या च चितिः परमेष्ठिनो हृदयं प्रोक्ता । ततः सा वाग्विशिष्टशब्दविशिष्टविवक्षा स्फुरणात्मिका औन्मुख्यतश्चिन्तामयी भवति । ततश्च शब्दात्मकत्वेन विवृतार्थमयी भवति । एवं संवित्स्वरूपस्य सर्वप्रकाशकस्य प्रमैव प्रकाशनशक्तिर्या वागन्तःसञ्जल्परूपा, वर्णपदवाक्यजीवभूता, सैव पदार्थरूपतया बहिर्भवतीति स्वानुभवप्रसिद्धमेव प्रबुद्धानाम् । उक्तञ्च–

**चिदात्मैव हि देवोऽन्तःस्थितमिच्छावशाद् बहिः ।**
**योगीव निरुपादानमर्थजातं प्रकाशयेत्** ॥ इति ।

चिदेव भगवती स्वच्छन्दस्वतन्त्ररूपा तत्तदनन्तजगदात्मना स्फुरतीत्येतावत्पर-मार्थोऽयं कार्यकारणभावः । अत्र कार्यकारणभावे कार्यं कारणाद् भिन्नं भवति । तत्र चितिर्जगत्कारणम्, किन्तु चिज्जगतोरभेदात् कथं जगच्चितेः कार्यं भवितुमर्हति । यतो हि कार्यं कारणाद् भिन्नमिति नियमोऽस्मिन् सिद्धान्तेऽस्ति । तदुच्यते–परमार्थे कार्यकारणभावे क्रमो नास्ति । अत्र चितेः स्फुरणं जगदुन्मेषः । उभयं यौगपद्येन सम्पाद्यते, नास्ति तत्र कश्चित् क्रमः । उक्तञ्च–

**चितिः स्वतन्त्रा विश्वसिद्धिहेतुः'** इति ।

एवञ्च सर्वमपि प्रपञ्चजातं चिदात्मकमेव तन्त्रागमेषु प्रसिद्धम् । तथा हि– चिदात्मैव हि देवोऽन्तःस्थितं प्रपञ्चजातं स्वेच्छया स्वभित्तौ स्वाधारे स्वस्मिन् स्वप्रकाशे च बहिः प्रकाशयति । बहिः प्रकाशनं चान्तरवस्थितस्यैव प्रकटीकरणम् । तत्र यथा योगी सङ्कल्पमात्रेणैव यत्किमपि वस्तु बहिराभासयति । स किमप्युपादानं नापेक्षते, तथैव चितिरपि विनोपादानेनैव अन्तःस्थितम् अर्थजातं बहिराभाासयति । यथा कुम्भकारो मृत्तिकामादायैव घटनिर्माणे समर्थो भवति, तथा नात्र व्यवस्था । अयं बाह्याभासो महेश्वरकल्पनानां बहिः प्रक्षेपमात्रमेवास्ति । ये पदार्था महेश्वरस्य ज्ञानस्वरूपाः सन्ति, ते च तस्येच्छया ज्ञेयरूपात्मनि बहिः प्रकटतां यान्ति । ते चाहंस्वरूपाः सन्ति । ते चेदमात्मनि विश्वस्वरूपे वा आविर्भवन्ति । जीवेभ्यश्च बाह्यरूपे आभासयन्ति । उक्तश्च पदार्थस्योदयक्रमः–

**यत्र यत्र भवेदिच्छा ज्ञानं तत्र प्रवर्तते ।**
**क्रियाकरणसंयोगात् पदार्थस्योदयो भवेत्** ॥ इति ।

**आभासवादो बौद्धपदार्थं व्यनक्ति**–महेश्वरस्य सर्जनदृष्ट्या इदं दर्शनं स्वातन्त्र्यवादे प्रसिद्धम् । तस्याभिव्यक्तिराविर्भावदृष्ट्या चाभासवादात्मनि प्रसिद्धा । यथा मयूरस्य चित्रविचित्रं पिच्छकलापं तस्याण्डेऽभिन्नरूपात्मनि निहितमस्ति, तथैव समस्तं जगद् महेश्वरेऽभिन्नरूपतया विद्यमानम् अस्ति । एतादृशं सादृश्यं दर्शनेऽस्मिन् मयूराण्डरसन्यायेति संज्ञां बिभर्ति । सम्पूर्णविश्वस्याधिष्ठानं चितिः संविदेवास्ति । चित्रविचित्रः परिवर्तनशील आभासश्चितेराविर्भावमात्रमस्ति । यस्य कस्यापि प्राकट्यं भवति । प्रमेयः, प्रमाता, ज्ञानम्, ज्ञानसाधनम्, इन्द्रियाणि चेति समेषां रूपाणि परमचितेराभासमात्रं सन्ति । तथा हि–आभासरूपा एव जडचेतनपदार्था इति । तत्राभासस्यार्थः – ईषत् सङ्कुचितं भासनं प्रकाशनं वा सर्वविधाविर्भावः परिसीमितोऽस्ति यत्किमपि विद्यमानं वर्त्तते, तत्सर्वभासस्य विन्यासमात्रमेवास्ति । उक्तञ्चाभासस्य स्वरूपं यथा–

**दर्पणबिम्बे यद्वन्नगरग्रामादिचित्रमविभागि ।**
**भाति विभागेनैव च परस्परं दर्पणादपि च ॥**
**विमलतमपरामवबोधात् तद्वद् विभागशून्यमपि ।**
**अन्योऽन्यं च ततोऽपि च विभक्तमाभाति जगदेतत्** ॥ इति ।

यथा स्वच्छे दर्पणे चित्रविचित्रनगराणि ग्रामादीनि च प्रतिबिम्बितानि भवन्ति । तेषां प्रतिबिम्बानि दर्पणादभिन्नान्यपि परस्परं दर्पणाद् भिन्नानि प्रतीयन्ते । तथैवेदं जगत् परमशिवस्य (चितेः) अभिन्नमपि परस्परं ततो भिन्नं प्रतीयते, भिन्नं च भासते ।

तत्राभासो दर्पणे प्रतिबिम्बिताकार इवास्ति । यथा दर्पणे प्रतिबिम्बस्तस्मादभिन्नः, तथापि भिन्न इवाभासते । तथैव बाह्याभासतोऽपि शिवादभिन्न एवास्ति, किन्तु भिन्न इव प्रतीयते । यथा दर्पणे प्रतिबिम्बितं नगरं ग्रामो नदी वृक्षाश्च यद्यपि दर्पणादभिन्नानि सन्ति, तथापि भिन्नानीवाभासन्ते । तथैव महेश्वरस्य संविदि प्रतिबिम्बितं जगच्चितेरभिन्नमेवास्ति । एवमेवान्यत्रापि–

**निर्मले मुकुरे यद्वद् भान्ति भूमिजलादयः ।**
**अमिश्रास्तद्वदेकस्मिंश्चिन्मात्रे विश्ववृत्तयः ॥**

अत्र दर्पणोपमायां द्वावपवादौ चिन्तनीयौ–

१. दर्पणे कश्चिद् बाह्यपदार्थः प्रतिबिम्बितो भवति । महेश्वरस्य सार्वभौमचेतनायां तस्यैव सृष्टिकल्पना प्रतिबिम्बिता भवति, न हि कश्चिद् बाह्यपदार्थः । दर्पण एकेन बाह्यप्रकाशेनैव प्रतिबिम्बस्य सम्भवः । महेश्वरस्य चेतनायां स्वस्यैव प्रकाशः, स तु सर्वप्रकाशानां प्रकाशः । तत्र बाह्यस्य कस्यापि प्रकाशस्यावश्यकता नास्ति ।

२. दर्पणोऽचेतनः,तस्य च स्वान्तःस्थितस्य प्रतिबिम्बस्य बोधो नास्ति, किन्तु महेश्वरस्तु चेतनः, तस्य चेतनायाश्च प्रतिबिम्बवत् कल्पनाः प्रकटिता भवन्ति । स तु चेतनत्वात् सर्वं वेत्ति । दर्पणे प्रतिबिम्बितान् पदार्थान् जडत्वाद् दर्पणो न जानाति, इयानेवोभयोर्विशेषः । इदमेवोक्तं यथा–

**अन्तर्विभाति सकलं जगदात्मनीह यद्वद् विचित्ररचनामुकुरान्तराले ।**
**बोधः पुनर्निजविमर्शनसारयुक्त्या विश्वं परामृशति नो मुकुरस्तथावत् ॥**

यथा विभिन्नाः पदार्था दर्पणे प्रकटिता भवन्ति, तथैव परसंविदि जगतः प्राकट्यं भवति । किन्तु परसंविद् विमर्शशक्त्या तं जानाति, मुकुरस्तु स्वस्मिन् प्रतिबिम्बितान् पदार्थान् न जानाति जडत्वात् ।

समुद्रे तरङ्ग इव चेतनायामाभास उत्तिष्ठति । तरङ्गाणाम् उत्थानपतनाभ्यां न हि कोऽपि लाभः, न च हानिः समुद्रस्य, तथैव आभासोत्त्थानपतनाभ्यां परमा चेतना लाभात्मिका हानिग्रस्ता च न भवति । तत्रैव आभासाः प्रकटिता लीनाश्च भवन्ति; किन्तु तदधिष्ठानात्मिकायां चेतनायां न कोऽपि विकारः परिवर्तनञ्च सम्पद्यते ।

एवञ्च स्वच्छदर्पणादेरेवायं प्रभावः, येन वस्त्ववस्तुनोर्विलक्षणमाभासमात्रसारं प्रतिबिम्बनाम्ना प्रतिभासितो भवति । यथा भगवता दर्पणादिष्वाभासमात्रसारात्मकाः पदार्था अवभासन्ते, तथैव संवित्तत्त्वरूपायां चिताविदं विश्वं भासते । न हि संविदः परं तस्य किञ्चिदन्यद् रूपम् । एतादृशे बोधे प्रतिबिम्बिताख्या वर्त्तते । प्रतिबिम्बातिरिक्तो नान्यः पदार्थ आभासविषये भवितुमर्हति । तथा हि भासनसारतैव हि प्रतिबिम्बिता । इहाभासनसारमेव प्रतिबिम्बत्वम् । यथोक्तं तन्त्रालोके–

**न देशो नो रूपो न च समययोगो न परिमा**
**न चान्योन्यासङ्गो न च तदपहानिर्न घनता ।**
**न चावस्तुत्वं स्यान्न च किमपि सारं निजमिति**
**ध्रुवं मोहं साम्यादिति निरदिशद्दर्पणविधिः** ॥ इति ।

एवमाभासमात्रसारं प्रतिबिम्बसतत्त्वं बाह्यार्थवादिनो निश्चितमेव द्वैतप्रथात्मकं संकुचितं ज्ञानं शाम्यतामित्येतदर्थो दर्पणविधिः । कुड्यादिवैलक्षण्येन प्रतिबिम्ब-सहिष्णुवस्तुप्रकारो निरदिशद् निर्दिष्टवान् । एवं च सत्ययमर्थः प्रदर्शितो भवति – यद्विश्वमिदं संविदि दर्पणप्रतिबिम्बन्यायेनावस्थितम्, न तु तदतिरिक्ततया बाह्य-रूपत्वं न वस्तुसदिति न तत्राभिनिवेष्टव्यमिति ।

**आभासवादस्य बौद्धपदार्थत्वे निष्कर्षः –**

आभासो नाम नान्यथाभावः, प्रत्युतान्तःस्थितस्यैव बहिः प्रकाशनमुन्मेषपदाभिधेयम् । उन्मेषश्चायं सांख्यानां विकृतिलक्षणात् परिणामात्, वेदान्तिनामन्यथाप्रथनरूपाद्विवर्ताच्च सर्वथा भिद्यते । प्रकाशो ह्यत्र स्वतन्त्रतायाः संविदः स्वीकृतः, न पुनरचेतनायाः प्रकृतेः । अपि च प्रकृतिपरिणामवादे गुणानां साम्यं वैषम्यमुपैति, अत्र तु स्वतन्त्रा चितिः स्वस्वातन्त्र्येणाविकृता सती तत्तद्रूपेण स्वात्मानं प्रकाशयतीति न वैषम्यावकाशः । अन्तःस्थितस्यैव बाह्यत्वापादनं प्रकाशः । वेदान्तिनां ब्रह्म चेतनं सदपि न स्वेच्छया स्वात्मानं जगदात्मना प्रकाशयेत् । तस्मिन् स्वातन्त्र्याभावात् कर्तृत्वानुपलब्धेः । चितिस्तु स्वतन्त्रा विश्वसिद्धिहेतुः । सा हि–

**जगच्चित्रं समालिख्य स्वात्मतूलिकयात्मनि ।**
**स्वयमेव तदालोक्य प्रीणाति परमेश्वरी ॥**

तस्य प्रकाशकश्च न खल्वन्यथाभावो भ्रमो वा, अपि तु चेतनस्य चेतनत्वेनैव स्वस्वातन्त्र्येण सर्वदा सर्वात्मना भानम् । एव चास्मिन् मते प्रपञ्चस्य संविदेकात्मत्वं सिद्ध्यतीत्याभासवादोऽयं निर्दुष्टत्वाद् वरीयान् परिणामवादविवर्त्तवादाभ्याम् । आभासवादोऽयं प्रतिबिम्बवादनाम्नाऽभिनवगुप्तेन तन्त्रालोके तृतीयाह्निकारम्भे महता संरम्भेण प्रतिपादितः । एवञ्च अन्तःस्थितस्यैव पदार्थस्य बाह्ये भानात् पदार्थानाम् बौद्धत्वं बुद्धिस्थत्वं सुतराम् आयाति ।

**प्रकाशे जगतः स्थितिः, तस्यैव बहिः स्फुरणम्–**

विरूपाक्षपञ्चाशिकायाम् अर्थजातस्य स्थितिः प्रकाश एव प्रतिपादिता । तत्र परमाख्ये शब्दब्रह्मणि प्रकाशविमर्शयोः स्थितिर्भवत्येव । तत्रैव प्रकाशान्तःस्थितानि तेजांसि तमांसि च । तथा हि–

**अहमेकोऽनस्तमितप्रकाशरूपोऽस्मि तेजसां तमसाम् ।**
**अन्तःस्थितो ममान्तस्तेजांसि तमांसि चैकस्य ॥**

अस्यार्थः – अनस्तमितप्रकाशरूपो नित्योदितप्रकाशमयः, एकोऽद्वितीयः, तेजसां तेजस्त्वेनाभिमतानां बुद्ध्यादिकरणानामर्कादिज्योतिषां चान्तःस्थितोऽस्मि, प्रकाशमानत्वेन तेषामन्तरात्मतयाऽहमस्मि । तथा तमस्त्वेन प्रकाशमानत्वात् तमसां बिन्दुमायादीनां चान्तः स्थितोऽस्मि । प्रकाशात्मनि मय्यन्तरवस्थिते तेजस्तेजस्तया तमस्तमस्तया च चकास्यादित्याशयः । तानि तेजांसि तमांसि च ममान्तःस्थितानि प्रकाशात्मकोऽहमेक एव भावाभावात्मकजगद्रूपतया परिस्फुरामि । अत्र प्रकाशात्मके शब्दब्रह्मण्यवस्थितं प्रपञ्चजातं बाह्ये च तस्यैव स्फुरणमित्यनेन पदार्थानां बौद्धत्वमेव सङ्गिरन्ते तन्त्राचार्याः ।

एवञ्च जगतः सृष्टेः चतुर्धा भागः -१. शक्तिः, २. माया, ३. प्रकृतिः, ४. पृथ्वी चेति । तत्र शक्तिर्बिन्दुः, मायया मिश्राध्वात्मकम्, प्रकृत्या शुद्धेतरात्मकम्, पृथिव्या स्थूलभोगायतनादि । एवं चतुर्विभागं यदण्डं यश्चास्य विभागो भुवनादिरूपः, तत्सर्वं प्रकाशे स्थितं वर्त्तते । उक्तञ्च-

**शक्तिर्माया प्रकृतिः पृथ्वीति चतुर्विभागमण्डवत् ।**
**यश्च विभागोऽस्य पुनर्बहुधा सर्वस्थितं मयि सर्वं तत् ॥**

अनेनापि पदार्था अन्तःस्थिताः, न तु बाह्याः ।

**पदार्थानां बहिर्भावेनोत्पत्त्यभावः –**

जगदेतद् द्विविधम्-स्थूलं सूक्ष्मं चेति । स्थूलं व्यक्तमुच्यते । सूक्ष्मं च बिन्द्वात्मकम् । तत्र पदार्थात्मकं यदेतत् तद् नित्यमेव तल्लग्नम् । उदयादिदशासु सर्वदा बिन्दुशक्तिलग्नमेव । यत् पुनरव्यक्तं बिन्द्वात्मकं तदपि तत्र निमज्जति । स्थूलतया सूक्ष्मतया वा प्रतीयमानं यथावदस्ति जगत् तत् सर्वं प्रत्यवमर्शात्मक-चितिबहिर्भावेन नोत्पद्यते । जलबहिर्भावेन तरङ्गादिवदिति यावत् । शब्दब्रह्मणि पदार्था अन्तःस्थिताः । तत्र यदा सङ्कल्पपदवीरूढ उन्मेषो भवति, तदैव बहिः स्फुटो भवति । उक्तञ्च-

**शब्दरूपपदार्थस्य शब्दः स परमः स्मृतः ।**
**सङ्कल्पपदवीरूढः स्फुरत्यन्तःस्थितः स्फुटम् ॥** इति ।

**अन्तःस्थिताः पदार्थाः –**

बहिर्घटपटादयो जडचेतनपदार्था ये च दृश्यन्ते, ते सर्वेऽन्तःस्थिता बौद्धा एव सन्ति । एतत् सर्वं प्रबुद्धानामनुभवसिद्धम् । बौद्धा एव पदार्था बहिराभान्ति । तेषां बाह्यसत्ता नास्ति । तथा हि-

**यत्किञ्चिदाभाति बहिस्तदीश नूनं तवास्त्येव समस्तमन्तः ।**
**निमीलिताक्षा हृदि लक्षयेयुस्तथैव सर्वं कथमन्यथा तत् ॥**

**जाग्रति इव स्वप्नेऽपि अन्तःस्थितस्य पदार्थस्य बाह्याभासनम्–**

यथा जाग्रदवस्थायां स्रष्टाऽऽत्मस्वभाव इच्छया देहाद्यात्मिकयाऽभ्यर्थितो याचितः सन् पुंसो हृदि स्थितानभिमतान् पदार्थान् प्रकाशयति चक्षुरादिष्ववधानेनेत्यर्थः । एतदुक्तं भवति – अनेकार्थसन्निधानेऽपि गणिकानटमल्लप्रेक्षकादिषु यदेव वस्त्वभिमतं तदेव यथा पश्यति, स्वरूपानुप्रवेशाद् । तथा स्वप्नेऽप्यभीष्टानेवार्थान् मध्ये हृदि

स्वरूपभावे स्थितः सन् स्फुटतरं कृत्वा नित्यं सदैव प्रकाश्य दर्शयेत् । कुतः ? प्रणयस्येच्छाभ्यर्थनाया अनतिक्रमात्, अत्यागाच्च । उक्तञ्चैतत् –

**यथेच्छाभ्यर्थितो धाता जाग्रत्यर्थान् हृदि स्थितान् ।**
**सोमसूर्योदयं कृत्वा सम्पादयति देहिनः ॥**
**तथा स्वप्नेऽप्यभीष्टार्थान् प्रणयस्यानतिक्रमात् ।**
**नित्यं स्फुटतरं मध्ये स्थितवद् यं प्रकाशयेत् ॥**

**बाह्यपदार्थस्य अन्तःस्थितेन रूपेणावभासः –**

यथा दूरस्थितः कश्चिदर्थो घटपटादिवस्तुविशेषोऽस्फुटं संदिग्धो द्रष्टुः सावधानेऽप्यन्यव्यापृतेऽप्येकाग्रेऽपि चेतसि सति हि यस्मात् स एवार्थः पुनरात्मप्रयत्नविशेषेण विचारितः, अर्थादन्तःस्थितेन बाह्यवस्तुसंवादात् स दृष्टो घटपटादिर्निःसन्दिग्धोऽवभासते । तथा हि–

**यथाऽर्थोऽस्फुटो दृष्टः सावधानेऽपि चेतने ।**
**भूयः स्फुटतरो भाति स्वबलोद्योगभावितः ॥**
**तथा सत् परमार्थेन येन यत्र यदा स्थितम् ।**
**तत्तथा बलमाक्रम्य न चिरात् सम्प्रवर्त्तते ॥**

अन्यच्च–

**अक्षे योऽर्थग्रहो द्रष्टुस्तज्जाग्रदिति कथ्यते ।**
**स्वरूपतोऽर्थस्मरणं मनसा स्वप्नसंज्ञितम् ॥**
**यथार्थस्मरणे नस्तत् सौषुप्तमुदाहृतम् ।**
**शुद्धबोधैकरूपो योऽवस्थाता सैव तुर्यता ॥** इति ।

प्रपञ्चभूता जडचेतनादयो विकल्पाख्याः, स एव संसारः । तथा हि–सर्वो विकल्पः संसारो नान्यो बन्धो विकल्पत इत्युक्तम् । अत एव शब्दब्रह्मणो जगतश्च न कोऽपि भेदः । तस्मादेव विकल्पस्य संसारस्योत्पादकः शब्दः । शब्दस्यापि विकल्पाख्यः संसारो योनिभूतः, उभयोरभेदात् । तथा हि–सूक्ष्मशब्देभ्यो विकल्पात्मकः संसार उत्पद्यते । विकल्पात्मकसंसाराच्च स्थूलाः शब्दा उत्पद्यन्त इति रीत्या न कोऽपि विरोधः । उक्तञ्च–

**विकल्पयोनयः शब्दाः विकल्पाः शब्दयोनयः ।**
**यथा राहोः शिर इति धारा वा सर्पिषो यथा ॥** इति ।

एवञ्च शब्दब्रह्मणः सङ्कल्पादेव कार्यमुत्पद्यते । विश्ववृत्तेः शब्दः कारणम् ।

**शब्दं विना संसाराख्यः कश्चित् पदार्थो नोदेति–**

वागेवास्याः कारणं विश्ववृत्तेर्न्याय्यं चैतन्नागमः, केवलोऽयं नासङ्कल्पम्, किञ्चिदस्तीह कार्यवाचं विना नहि कल्पोऽस्ति कश्चित् । तथा हि–अन्तःस्थिता पदार्थाः सूक्ष्मसूक्ष्मतरस्थूलस्थूलतरत्वेन च स्फुटा भवन्ति । तथैवं प्रक्रिया–

**निष्कम्पबोधसामान्यरूपो मात्रा पुरा स्वयम् ।**
**ये शब्दजनिता भावाः सूक्ष्मसूक्ष्मतराखिलाः ॥**
**सामान्यबोधशब्दस्य पश्यतस्त्वेकतां गताः ।**
**यदाभिमुखमायान्ति सङ्कल्पादुत्थितस्य च ॥**
**शब्दरूपपदार्थस्य शब्दः स परमः स्मृतः ।**
**सङ्कल्पपदवीरूढः स्फुरत्यन्तःस्थितः स्फुटम् ॥**
**पदार्थोपरमः शब्दो मध्यमं विद्धि तं मुने ।**
**चित्तायुकरणोत्थासु प्रयत्नपदवीषु च ॥**
**वाच्यवाचकभावेनाऽभिव्यक्तः स्थूल उच्यते ।**
**दृश्यादृश्येषु भावेषु योऽभिव्यक्तं प्रयाति च ॥**
**स स्थूलतरश्चैव व्यवहारेऽखिले स्थितः ॥** इति ।

**बाह्याभावेऽपि नित्या एव पदार्था अन्तःस्थिताः –**

अस्मिन् स्पन्दसत्त्वे दशाद्वयं यदस्ति, कार्यकर्तृत्वशब्दितं कार्यकारणसंज्ञितं भोग्यभोक्तृभेदभिन्नदृश्यद्रष्टृभिदावेद्यवेदकरूपम् । तत्र तयोरध्यासाद् या कार्यता, सा क्षयिणी उत्पत्तिविनाशयुक्ता, यत्पुनः कर्तृत्वं तदक्षयम्, निरवधिचित्स्वरूपत्वात् । अस्मिन् कार्ये बाह्येऽर्थे क्षयिणि सति कार्योन्मुखो यो बाह्यकरणव्यापाररूपः स केवलं लुप्यते न लक्ष्यते न्यग्भूयेव स्वात्मन्यास्ते । स्थगितेन्द्रियस्य वा व्यापारासामर्थ्यात् । तस्मिन् प्रयत्ने लुप्ते सति 'अस्मि अहं विलुप्तः' इत्यबुधो जानाति । न तु चिद्रूपस्य विनाशो भवति । उक्तञ्च–

**विज्ञप्तेर्न विनाशोऽस्ति विनष्टेऽपि शरीरके ।**
**अभावे सूर्यकान्तस्य नैवास्ति सवितुः क्षतिः ॥** इति ।

अत एव बाह्येऽविद्यमाना अपि पदार्थाः स्वात्मनि चिदात्मनि अपृथग्भूयेव स्थिता भवन्ति । तथा हि–शब्दार्थयोर्बौद्धत्वेऽयं सिद्धान्तोऽग्रेसरो भवति । एवञ्च देशकालादिविच्छिन्नस्य कार्यस्यैव निवृत्तिः, न तु योऽन्तर्मुखो भावो बहिरप्रसूतेः स्वस्वरूपस्थः स्वस्वभावः सर्वज्ञतादीनां गुणानामाश्रयस्तस्य भावस्य लोपः कदाचित् सम्पद्यते । चिद्रूपस्य पदार्थस्यैव सर्वदोपलब्धिः । एतदुक्तम्–

**देशकालक्रियाकारैरविच्छिन्नेषु वस्तुषु ।**
**अनवच्छिन्नरूपस्त्वं भासितस्य बहिः स्थिते ॥**

एवञ्च चिद्रूपमात्मानं योगिनः सततमनुभवन्ति । तथा हि–

**काऽप्यवस्था न ते साऽस्ति यस्यां संविन्न वर्त्तते ।**
**तेन चिद्घनमेव त्वां योगिनः पर्युपासते ॥** इति ।

**बौद्धार्थस्य बाह्ये स्फुरणप्रकारः –**

यदा अर्थात्मकः शिवः सर्वप्राणिनां चित्ते परिस्फुरति, तदा आत्मा मनसा संयुज्यते, मन इन्द्रियेण, इन्द्रियमर्थेनेति रीत्या तेजसां सूर्यादीनां तमसां घटादीनां जडानामपि प्रकाशमानत्वं चित्ते । चिदात्मनि परमशिवे प्रथमं स्फुरति सत्येव तत्तदिन्द्रियद्वारा तत्तदर्थानां स्फुरणम् । अत्र श्रुतिः – **'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति'** । तस्मात् सर्वतः सर्वस्य विश्वस्य । उक्त लक्षण-स्याविनाभावरूपत्वं विना न भवतीत्यपि न विस्मरणीयम् ।

विश्वमिदं द्रष्टुः सापेक्षप्रतीतिकम् । यथा–सम्प्रतिपन्नो घटो यदि द्रष्टृ-सापेक्षप्रतीतिको न भवति, तदा दृश्यमपि न भवति, यथा–शशविषाण इत्याद्यन्वय-व्यतिरेकसिद्धेनानुमानप्रमाणेनावसीयते । अनेन स्फुरणप्रकारेणार्थानां बौद्धत्वं बुद्धि-स्थत्वम्, आन्तरत्वञ्च सर्वमपि सम्पद्यते । उक्तञ्चैतत्–

**तदा प्रकाशमानत्वं तेजसा तामसामपि ।**
**अविनाभावरूपत्वं तस्माद्विश्वस्य सर्वतः ॥** इति ।

अत्र चिदात्मनि परमशिवे पदार्थानां प्रथमं परिस्फुरणत्वात् तेषां बौद्धत्वं सुतरामायाति । किं वाऽर्थात्मकः शिवः सर्वप्राणिनां चित्ते परिस्फुरति ।

**षडध्वनां चिदात्मनि स्थितत्वात् शब्दार्थयोर्बौद्धत्वम् –**

तत्र वर्ण-पद-मन्त्र-कला-तत्त्व-भुवनात्मकः षडध्वा । तेषु वर्ण-पद-मन्त्रात्मकः प्रमाणाध्वाशब्दात्मकः, कलातत्त्वभुवनात्मकः प्रमेयाध्वाऽर्थात्मकः । वर्णाद्याध्वत्रयं वाचकाध्वा कलाद्यत्रयं च वाच्याध्वा । एवञ्च कलातत्त्वभुवनात्मकमर्थत्रिकं स्थूलम् । वर्णपदमन्त्रात्मकं शब्दत्रिकं सूक्ष्मम् । कलातत्त्वभुवनात्मका रूपाध्वानः, वर्णपद-मन्त्रात्मका नामाध्वान इत्यपि व्यवहारः प्रसिद्धोऽस्ति ।

अत्र पञ्चाशद्वर्णाः सप्तषष्टिवर्णाः कादयो वर्णाः षट्त्रिंशच्चेति नित्या-षोडशिकार्णवे प्रपञ्चिताः । स्थूलसूक्ष्मभेदेन शरीरे वर्णक्रमः संव्यवस्थितः । वर्णक्रमरूपिणी चिच्छक्तिः । वर्णाम्बिकायाः पश्यन्तीरूपम् । अस्याश्च तुरीयं धाम परावाग्रूपम् । पदानि वर्णसंयोगजान्येकाशीत्यादीनि । तानि चानन्तपदव्यापकानि सुप्तिङन्तोपाधिसंकोचितानि सन्ति । वर्णात्मकाश्च मन्त्रा मननत्राणधर्माणश्च । तथा च गर्भीकृतासंख्यातमन्त्रवत् सप्तकोटिमहामन्त्रा व्यापकाः साङ्गब्रह्मशिवाख्या मन्त्रा एकादशेति नामाध्वानोऽपि त्रयः ।

एवमेव हकारोऽन्त्यः कलारूपः कलातद्विवर्तभूतबिन्दुद्वयं शिवशक्तिरूपं चन्द्रसूर्यात्मप्रकाशविमर्शरूपं परमबिन्दुप्रापकम् । तथा हि किञ्चित् कर्तारममुं कलयन्ती कीर्त्यते कलानाम्ना । तत्त्वानि शिवशक्तिसदाशिवेश्वरशुद्धिविद्यामाया-कलाविद्यारागकालनियतिपुरुषप्रकृतिमनोबुद्ध्यहङ्कारश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्पाणि-पायूपस्थशब्दस्पर्शरूपरसगन्धाकाशवायुवह्निसलिलभूमयः । अनाश्रितादिकालाग्नि-रुद्रान्तः कालाग्न्यादिशिवान्तो वा भुवनाध्वा । अनाश्रितादिकालाग्निरुन्द्रातः षट्त्रिंशत्तत्त्वात्मा भुवनानि चतुर्विंशत्यधिके द्वे इति ।

एवञ्च संविदेव भगवती वामकेश्वरदर्शने त्रिपुराभिधाना परब्रह्म-शब्दब्रह्मेति कथ्यते । तत्र त्रिपुरापदस्य नानाविधा व्युत्पत्तयो निरुक्तयश्च दृश्यन्ते । तद्यथा त्रिभ्यः पुरा त्रिपुरा । त्रिबिन्दुत्रितत्त्वेभ्यः पुरा पूर्वं स्थितेति भावः । त्रिपुरा वर्णानामाविर्भूतकारणरूपा । सेयमकारहकारकामकलापर्यायप्रकाशविमर्शरूपाऽपीति यावत् । परमा शक्तिरेकविधैव सती बीजोच्छूनदशायां ज्ञानक्रियेच्छारूपत्रयबिन्दु-रूपेणोह्यमाना त्रैविध्यं गता त्रिपुरा । एवं त्रिशक्तित्रिचक्रत्रिधामत्रिबीजत्रितत्त्वत्रिगुण-त्रिकोणादिभेदत्रयाविर्भावेण त्रिवृत्करणरचनावैचित्रीचतुरा त्रैविध्येन समस्ता-ध्वव्यापिनी त्रिपुरा । धामतत्त्वपीठलिङ्गमातृकादिभ्यस्त्रिभ्योऽपि पुरा या विद्यते सा त्रिपुरा देवी प्रकाशविमर्शसामरस्यरूपिणी । त्रिपुरार्णवे तु–

**नाडीत्रयं तु त्रिपुरा सुषम्णा पिङ्गला इडा ।**
**मनो बुद्धिस्तथा चित्तं पुरत्रयमुदाहृतम् ॥**

इत्युक्तम् । तच्च त्रिपुराभिधानं परं ब्रह्म प्रकाशविमर्शसामरस्यात्मकं बीजावस्थारूपम् । ततो बीजादुच्छूनादिव कलातत्त्वभुवनाभिधेयरूपार्थत्रिकस्य स्थूलस्य वर्णपदमन्त्राभि-धानरूपशब्दत्रिकस्य सूक्ष्मस्य कर्तृकरणकर्मव्युत्पत्त्या लोकलोकनलोक्यात्मनः षट्त्रिंश-त्तत्त्वसमुदायरूपस्य त्रैलोक्यस्योत्पत्तौ कारणभूता स्पन्दशक्तिः सञ्जृम्भते । बीजा-वस्थायामङ्कुरकाण्डपत्रपुष्पफलादिवदस्यां स्पन्दावस्थायामन्तःसदात्मना वर्त्तते षट्त्रिंशत्त-त्त्वग्रामभूतः कार्यरूपः प्रपञ्चः । अस्यां षडध्वस्फारमयषट्त्रिंशत्तत्त्वगर्भमहाहन्ता-परामर्शमहाविभूतिरूपप्रपञ्चात्मना महाविकासभावमापन्नायामेतत् स्थितिव्यति- रिक्तो नापरः कश्चनावतिष्ठते । प्रकाशरूपस्य शिवस्य हि विमर्श एव स्वभावः । उक्तञ्च–

**वर्णकलापदे तत्त्वं मन्त्रो भुवनमेव च ।**
**इत्यध्वषट्कं देवेशि भाति त्वयि चिदात्मनि ॥**

एवञ्च शब्दार्थरूपेषु षडध्वनां परायां चिदात्मनि स्थितत्वात् तेषां बौद्धत्वं बुद्धिस्थत्वञ्च सुतरामायातीति ।

## ॥ तृतीयं परिशिष्टम् ॥

### प्रमात्वस्य ग्रहणे स्वतस्त्वपरतस्त्वविमर्शः

नैयायिकानां प्रामाण्याऽप्रामाण्ये परतोऽग्राह्ये । सांख्ययोगानां स्वतो ग्राह्ये । बौद्धानां प्रामाण्यं परतो ग्राह्यमप्रामाण्यं स्वतो ग्राह्यम् । मीमांसकानां प्रामाण्यं स्वतो ग्राह्यम् । अप्रामाण्यं परतो ग्राह्यम् । जैनानाम् अप्रामाण्यं स्वतः प्रामाण्यं तु परतो ग्राह्यम् । वेदान्तिनां प्रामाण्यं स्वतो ग्राह्यम्, अप्रामाण्यं तु परतः । रामानुजादि-वैष्णवानामप्येतदेव सम्मतम् । विशिष्टब्रह्माद्वैतवादिनस्तु प्रामाण्याऽप्रामाण्ये साक्षिभास्ये इत्यभिनवः पन्थाः । नकुलीशपाशुपतशैवादीनामप्येतत्स्मृतिसमानत्वाभि-हारत्वमिति फलतः समायाति । आगमिकानां स्फुटितार्थानां निगमाभिसम्पन्नानां प्रामाण्येऽप्रामाण्ये स्वतः परतश्चेत्युभयाऽग्राह्ये न त्वेकान्तत इति । अर्थवादिकानाम् ऐतिह्यजुषां चैते परतो ग्राह्याऽग्राह्ये न तु स्वत इति । सत्त्वप्रकर्षितात्मनां तु सार्वज्ञ्योदये सर्वथा प्रामाण्यं स्वत एवेति नेतरदिति सुतरां परमेशस्य स्वप्रामाण्यं शाश्वतिकमिति नाऽस्मिन् ग्राह्याऽग्राह्यत्वप्रस्थानमत्यङ्कुरोऽपि परमात्मज्ञान-प्रामाण्यवदिति । बार्हस्पत्यानां स्वत एव प्रामाण्याप्रामाण्यग्रहः । वैतण्डिकानां तु नैकं नोभयं नाऽन्यतरं वेति ।

नैयायिकानां प्रमात्वस्य परतो ग्राह्यत्वे बीजं तु 'प्रमात्वं' यदि स्वतो ग्राह्यं स्यात् तदाऽनभ्यस्तप्राथमिकस्फटिकादिज्ञानोत्तरदशायां दूरादवलोकिते स्फटिके, 'स्फटिक-ज्ञानं प्रमा न वा' इत्यनुभवसिद्धप्रमात्वसंशयाऽनुपपत्तिः स्यात्, तत्र स्फटिक-ज्ञानप्रामाण्यस्याऽनुव्यवसायेन निश्चितत्वात्, तस्माज्ज्ञानप्रामाण्यमनुमेयम्–'स्फटिक इति ज्ञानम्' प्रमासंवादिप्रवृत्तिजनकत्वात् शुक्तौ रजतज्ञानम्, अप्रमाविसंवादि-प्रवृत्तिजनकत्वाद् इत्येवमनुमितिग्राह्ये प्रामाण्याऽप्रामाण्ये ।

सांख्ययोगानां सत्कार्यवादिनां ज्ञानं कारणे सदेव तद्गतं प्रामाण्यमिति सदेवाऽप्यस्थूलावस्थे ज्ञाने प्रामाण्यं न गृह्यते । कारणकूटेन स्थौल्यापन्ने ज्ञाने तत्प्रामाण्यमप्युद्भूतमनुव्यवसायात्मकपौरुषेयबोधेन फलात्मकेन विषयीक्रियते । एवम-प्रामाण्यमपि, चित्तवृत्तीनां प्रामाणिकानां प्रमात्मकपौरुषेयबोधाऽऽविर्भावकत्वम् । विपर्यस्तसंशयितादीनां तासामप्रमात्मकबोधजनकत्वमिति तेनैव बोधेन प्रमात्वाऽप्रमात्वे गृह्येते । कारणकूटेन स्थौल्यापन्ने ज्ञाने तत्प्रामाण्यमप्युद्भूतमनुव्यवसायात्मक-पौरुषेयबोधेन फलात्मकेन विषयीक्रियते । एवमप्रामाण्यमपि चित्तवृत्तीनां प्रामाणि-

कानां प्रमात्मकपौरुषेयबोधाऽऽविर्भावकत्वम् । विपर्यस्तसंशयितादीनां तासामप्रमात्मकबोधजनकत्वमिति तेनैव बोधेन प्रमात्वाऽप्रमात्वे गृह्येते ।

विशिष्टवादिनां धारावाहिकबुद्धेर्द्वितीयादिज्ञानात्मिकायाः प्रामाण्याऽप्रामाण्ये तदनुव्यवसायात्मकोत्तरोत्तरधारावाहिकविशिष्टज्ञानग्राह्ये यत्रोत्तरोत्तराऽन्यूनाऽनतिरिक्तोत्पन्नानां ज्ञानानां विषयतया पूर्वपूर्वज्ञानानां धर्मात्मकधर्माणां प्रामाण्यादीनामपि तदुत्तरोत्तरज्ञप्तिग्राह्यत्वमेवेति ।

विद्याऽविद्ययोर्ब्रह्मशक्तित्ववादिनां यावदात्मसु संस्थितानां तासां ब्रह्मांशरूपाणां स्वस्वांशे प्रामाण्यमपि बाध्यबाधकभावस्याऽनपह्नवाद् अन्यतराया अप्रामाण्यमिति तासु तासु सदा स्थितमपि प्रामाण्यं तदा तदा स्वाश्रयग्राहकमानसोपासनात्मकस्फुरणादिसामग्रीजन्यविद्याग्रहविषयतया विद्याग्राह्यमेव । एवमप्रामाण्यबोध्याऽविद्यावृत्तितयाऽविद्याग्राहकात्मकाऽऽत्ममानसदोषात्मकसामग्रीजन्याऽविद्याग्रहविषयतयाऽविद्याग्राह्यमेवेति सुस्थिरम् । प्राप्तब्रह्मात्मभावे तु स्वयं स्फुरत्येवेति न तदा ग्राह्यं न वाऽग्राह्यं प्रामाण्यम्, अप्रामाण्यं वा । तदानीं नित्यसार्वज्ञ्यारोहाद् विरोधिभावान्निरपेक्षस्य ग्रहानावश्यकत्वात् प्रतियोग्यनुयोगिभावाभावात् सामग्रीक्लृप्त्यभावाच्च ग्राह्यत्वकल्पनाऽयोगात् ।

हैरण्यगर्भाणां तु संयमस्थितौ 'आकाशे संयमात् सर्वभूतरुतज्ञानम्', 'परकायप्रवेशे परचित्तज्ञानम्' इत्यादिभूमैश्वर्याऽऽगमसम्पत्तौ सत्यां तत्तदीयपरात्मसमवेतज्ञानानां प्रामाण्ये स्वाश्रयग्राहकसंयमात्मकसामग्रीजन्यग्रहविषयत्वं यथा तद्वदप्रामाण्येऽपि तथाविधसंयमोदितग्रहविषयत्वं तदैश्वर्यसिद्धमिति ।

अहं ब्रह्मास्मीत्यपरोक्षात्मकसाक्षात्कारवादिनां तु तदानीं धर्मधर्म्यभेदभावापन्नत्वेन नित्यज्ञानस्य प्रमात्मकस्यैव ग्राह्यग्राहकभावविधुरतया पृथक्सत्ताशून्यस्य प्रामाण्यपदार्थस्य लयादेवाऽग्रहणमिति सुतरां मृषाभूतस्याऽप्रामाण्यस्य ग्रह इति नोभयं ग्रहविषयं तदानीम् ।

औपनिषदानां तु विभिन्नप्रस्थानाऽऽकृष्टतया वेदान्तवारिधिमग्नानां तेषामेकजीववादे सर्वं प्रमाणत्वं स्ववृत्तितया स्वत एव ग्राह्यं नैकविधचैतन्ययोरभेदसामग्रीजन्यग्रहविषयं भवतीति ततस्तेषामप्रामाण्यं त्वन्तःकरणबाहुल्यप्रयोज्यौपाधिकविविधवृत्तिरूपपश्चाद्भाविमृषाऽप्रमागतं त्वनुमाऽर्थापत्त्यादिवित्तिविषयमिति परतो ग्राह्यं सम्भवत्येवेति ।

सर्वथा भेदवादिविविधश्रौतानां तु प्रामाण्यं सर्वविधलौकिकालौकिकसन्निकर्षोत्थप्रमाग्राह्यम् । अप्रामाण्यं त्वनुमेयमेवेति प्रवर्तनाप्तवर्तने तत्र नियामिके अनुसन्धेये ।

ब्रह्मात्मवादिनामौपाधिकानेकजीववादे तु प्रातिभासिकं प्रामाण्यं प्रतिभासामग्रीरूपप्रत्येकपरिच्छिन्नेन्द्रियोद्धारकवृत्त्यवच्छिन्नविषयावच्छिन्नचिदभिन्नतात्मकसामग्रीजन्यव्यावहारिकसत्तान्वितप्रतिभाग्राह्यमेव प्रामाण्यं ततो मृषात्वसाम्येऽपि निवर्तनाफलबलेन मानान्तरग्राह्यम् अप्रामाण्यमेवेति सर्वात्मनां समानम् । स्वाप्नापदार्थानां तदानीं जनितविमर्शपरिभासमानानां पुण्यापुण्यसंस्कारसहकृतानां स्वप्नावस्थायां तज्ज्ञाने प्रामाण्याप्रामाण्ये मानसज्ञानमात्रग्राह्ये, क्वचिदग्राह्ये क्वचिदन्यतरंभासः, क्वचिन्नोभयभासोऽपि । सुषुप्तौ तु स्वात्ममात्रसंविदभिन्नप्रमात्वं तत्संविन्मात्रग्राह्यं न तत्राऽप्रामाण्याऽवभासस्तत्सामग्रीविरहात् । मूर्छायां तूभयस्याऽन्यतरस्य वा ग्रह एव नेति सर्वथाऽग्राह्येते ।

तुर्यावस्थायां पारमार्थिकस्वसंविन्मात्रस्य स्थितेस्तदात्मकप्रामाण्यं तथैव तादात्म्यतया ग्राह्यम् । यद्वा सामग्र्यनङ्गीकारे न तद्ग्रहणस्याऽवकाश इति । अन्यत्र तात्पर्यवतां पुराणसंहितेतिहासार्थवादानां तु प्राथमिकानां मध्यमानां महतां च वाक्यानां प्रशस्तिप्रभृतिपुष्ट्यर्थविषये महार्थबोधात्मके वेदने प्रामाण्यं तत्तत्कारणात्मकाऽऽकाङ्क्षायोग्यताऽऽसत्तितात्पर्यशक्तिलक्षणाऽन्यतमादिसहकृतविविधस्मरणघटितसामग्रीजन्यमानसबोधविषयं स्वतो ग्राह्यं प्रकरणान्तरसमन्वयादिबोधग्राह्यं परतो ग्राह्यं तद्वदप्रामाण्यमपि तदुभयमपि चानुभयमन्यतरद् वा यथायथं सुघटम् । भिन्नप्रस्थानानां भिन्नसामग्रीणां सत्त्वेन नैकत्राऽऽग्रहो ग्रहविषये तस्मिन्निति ।

दिग्भ्रान्तस्य दिशाबोधे प्रामाण्यं दोषजन्यम् । सर्वत्र दिशाया ऐक्यात् प्रामाण्यं तत्र निरुपाधिकं चेत्, स्वतो बोधमात्रग्राह्यम् । सोपाधिकं चेत् तत्तदुपाधिघटितसामग्रीजन्यग्रहविषयम् । तथैव च तत्राऽप्रामाण्यं विसंवादिप्रवृत्त्युत्तरजायमानाभिमतदेशप्राप्त्यादिसहकृतप्रत्यक्षादिना परतो ग्राह्यमिति । अत्रेष्टप्रमात्वम् अनिष्टप्रत्यक्षाद्युत्थाऽप्रमात्वेन बाध्यते ।

ऐन्द्रजालिकानां मानवस्य पारावतीकरणादौ दर्शकानां पारावतदर्शनक्षणे ज्ञाने तदानीन्तनैन्द्रजालिकविद्यापराभूतदृष्ट्यात्मकेऽनवस्थायिप्रामाण्यं तादृशविद्यापराभूततदानीन्तनचित्तवृत्तिप्रभृतिसामग्रीसमुद्भूतग्रहविषयं यच्च मानवज्ञानप्रामाण्यं मानसबोधारूढं तत् तु तदानीन्तनपूर्वसंस्कारसमुद्भूतस्मरणविषयं वा क्षणिकपारावतवेदनेऽप्रामाण्यं प्राक्स्मरणबलात् समनियतस्मरणबलाद् वा पश्चाद्भाविमानवदर्शनबलाद् वा मानसबोधगतं वा दृष्टिगतं वा तत्परतो ग्राह्यमिति । वस्तुतस्तु पारावतदृष्टिर्भ्रान्तिस्तत्र प्रामाण्यं न सम्मतम् । ऐन्द्रजालिकदोषवशात् समुद्भूतदृष्टिविशेषेऽप्रामाण्यमेव मानसस्मरणग्राह्यमिति । वस्तुतस्तु पारावतदृष्टिभ्रान्तिस्तत्र प्रामाण्यं न सम्यक् । ऐन्द्रजालिकदोषवशात् समुद्भूतदृष्टिविशेषेऽप्रामाण्यमेव

मानसस्मरणग्राह्यमिति भूतपिशाचाद्याविष्टस्याहंममतादिव्यवहाररूपस्फुरणादौ पैशाचिकप्रामाण्यं तदाविष्टपिशाचचित्तादिसंवलितसामग्रीगृहविषयं दर्शकानां चेष्टया श्रोतॄणां तु तथाजातीयप्राक्संस्कारोऽथ स्मृतिविशेषण तदानीन्तनं प्रामाण्य समकालीनं गृहाद् इति परतो ग्राह्यं तत् । तदानीन्तनाऽसहालापादिसंवेद्यम् । अप्रामाण्यं तु सर्वथैवानुमेयं परतो ग्राह्यमिति ।

एवमेव कथाकाराणां नाटकीयपात्राणां वा तदानीन्तनतत्तत्प्रतिरूपभावापन्नानां विविधबोधगतं प्रामाण्यं दर्शकानां श्रोतॄणां च तन्निमित्तकनिजबोधीयप्रामाण्यं च तदानीन्तनी या यथायथं सामग्री तज्जन्यबोधग्राह्यं यच्चाऽप्रामाण्यं वेधान्तरस्थितोद्-भूतं वेदनोद्भूतं तदपि क्वचित् स्वतः क्वचित् परतो ग्राह्यमिति, तत्र सत्य-भानस्याऽसत्यभानस्याऽपि च बहुना जायमानत्वादिति।

अभिचारिकाणां मन्त्राराधितदेवताविभावितपराभाष्यशालिविशेषवेदने तु 'निर्माणचितान्यस्मितामात्रात्' इत्यनुसारेण परं प्रति प्रहितराजदूतवत् परव्यक्त्युपर्या-पतितदेविनिर्माणाऽदृष्टप्रतिकृतिसामर्थ्यशालिचित्तवृत्तीर्यच्चेष्टादिसमुद्भावकमान्त्रिक-तुकरजविलासवेदनात्मके वा तस्मिन् प्रामाण्ये तदानीन्तनचित्ततादात्म्यापन्नचित्तीय-निर्मितसामग्रीजन्यग्रहविषयं तदप्रामाण्यमपि तथैव तत् स्वतो ग्राह्यमिति ।

आगमिकस्फोटवादिनां वर्णपदवाक्याखण्डपदवाक्यजनितस्फोटानामर्थप्रकाश-कत्वात् तत्तदर्थबोधगतप्रामाण्यं पूर्वपूर्ववर्णानुभवजनितसंस्कारसहितचरमवर्णश्रावणा-भिव्यक्तस्फोटस्वररूपब्रह्मात्मकैकनित्यसामग्रीजन्यग्रहविषयं मौनिश्लोकादौ बोधे तु तथा संस्काराऽऽहितसामग्रीजनितस्मरणग्राह्यं प्रामाण्यमिति, अध्ययनादिबोधे स्वाप्तताविश्वस्तगुरुवृत्त्यनुगुणवृत्तिसमुन्मेषितमानससामग्रीसहसंस्कृतात्मवृत्त्यभिन्नवृत्त्य-न्तरग्राह्यं प्रामाण्यमिति तत्रोभयप्रामाण्यं त्वनभिव्यक्तस्फोटदशापन्नं स्फुटितबोधेन प्रोहनीयमिति परतो ग्राह्यं तत् ।

अस्फोटवादिनां निगमवेदिनां तु सामग्र्युपहितस्मरणग्राह्यं तादृशबोधग्राह्यं वेति स्वतो वा परतो वा यथायोगं तदिति ।

आलङ्कारिकाणां तत्तत्स्थलीयबोधगतप्रामाण्यं तत्तदलङ्कारेण साक्षात्परम्परया वा समन्विता या या विशिष्टा सामग्री ह्युपमादिसमवधाना तद्ग्रहग्राह्यं तदिति, एवमेव रसादिविशिष्टा तत्तत्सामग्री तदानीन्तना रसिकार्थबोधगतप्रामाण्यग्रहजनिकेति तद्ग्रह-विषयं तत्प्रामाण्यमिति अप्रामाण्यमत्र तत्तद्रसाभाससमवहितसामग्रीजन्यग्रहविषयमिति ।

सौगतानां ज्ञानं जीवस्वरूपम् । ज्ञानमनेकधा । तत्र परमसहायेन केवलज्ञानेन यद्धेतु परिज्ञातं भवति तत्परिज्ञानं प्रत्यक्षम् । वस्तुषु परतो यज्ज्ञानं जायते तत्परोक्षम् । ऐन्द्रियकं सर्वमपि परोक्षम् । तेन नाऽऽत्मसाक्षात्कारः परोक्षे प्रामाण्यम्,

अप्रामाण्यं च, प्रत्यक्षे तु प्रामाण्यमेव । अप्रामाण्यकारित्वाज्ज्ञानस्य सर्वार्थाऽवलोकित्वं भवति, किन्तु प्रतिबन्धकाभावे सति प्रामाण्यं परतो ग्राह्यम्, अपूर्णत्वम्, अप्रामाण्यं स्वतो ग्राह्यम्, परतो ग्राह्यम्, परतो ग्राह्यत्वम् अनुमानग्राह्यत्वम् इति । एवं सार्वज्ञ्यविभूतिकेवलज्ञानिनाऽऽगमोपदेशादागमस्य प्रामाण्यं प्रत्यक्षदर्शिताप्रयोज्यमिति तद्गतप्रामाण्यं प्रत्यक्षदर्शित्वादिनाऽनुमेयम् । अन्येषां स्वस्य तु स्वतो ग्राह्यम् ।

प्रकारान्तरेण सौगतानां ज्ञानस्यार्थक्रियाकारित्वं सत्त्वं तदत्र ज्ञानस्य संवादित्वम् । तादृग् ज्ञानं स्वसंवेदनरूपप्रमाणत्वं गृह्णाति । अप्रामाण्यमपि तदेव गृह्णाति । न चैकत्र द्वयोर्विरोधः, व्यक्तिभेदेन व्यवस्थापनात् । स्वकारणजन्यया ज्ञानगतया मेय–बोधात्मिकया स्वतःप्रमाणया शक्त्या ज्ञानस्य स्वतः प्रामाण्यम् । तादृक्कारणजन्यत्वं प्रमात्वस्योत्पत्तौ स्वतस्त्वम् । एवञ्च निर्विकल्पकस्यैव प्रामाण्यम्, सविकल्पकस्य न प्रामाण्यम् । प्रतिबन्धकाऽभावस्य कारणतावच्छेदकत्वोपममात्रनानाकारणताविभ्रमः । ज्ञानत्वप्रमाणत्वयोरेव ग्राहिका साहसिकी शक्तिरेकैव । सा पूर्वं दोषशङ्काऽनवतारे प्रामाण्यरूपा । पश्चात् यदि दोषशङ्कानाशस्तदापि प्रामाण्यं शक्त्यात्मकं स्वतो ग्राह्यम् । स्वसंवेदनस्यार्थक्रियाज्ञानस्यानुमानस्याभ्यासंदशोत्पन्नज्ञानस्य च स्वतः प्रामाण्यम् । सन्देहविपर्ययादिविषयीभूतस्य तु परितः प्रामाण्यम् । प्रत्ययान्तरापेक्षस्यैव तस्य स्वतःप्रामाण्याद् अनवस्थाप्रसङ्गोऽपि अवयविद्रव्याऽनङ्गीकारेणैकसन्तानवर्तिवस्तुद्वयस्याऽविनाभावादेवाऽन्याऽऽलम्बनमपि ज्ञानमन्यविषयज्ञानस्य प्रामाण्यं गृह्णात्येव । नहि तत्र द्रव्यगतरूपरसगन्धादयो विभक्ताः, एकसामग्र्यधीनत्वात् सन्तानैक्याध्यवसायाद् रूपरसादीनामैक्याऽध्यवसायेन तत्संवाद- सिद्धिः ।

आर्हतानामपि तथैवमेव प्रामाण्यं तेनैव संवेदनेन गृह्यते । अप्रामाण्यमपि तेनैव गृह्यते । अविरोधस्य सौगतवत् स्वीकारात् । आगमार्थेषु विश्वाससापेक्षबोधशक्तिग्राह्यं प्रामाण्यम् । सर्वागमानां नियताधिकारिदेशकालसहकार्यादिनियन्त्रितमेव प्रामाण्यं प्रवाहस्यानादित्वेन सर्वथा प्रामाण्यम् । विश्वासासहकृतसामग्रीजन्यबोधे त्वप्रामाण्यम् । एवम् आविद्यकं सर्वमपि ज्ञानम् अप्रमाणम्, आविद्यकग्रहस्याऽप्रामाण्यग्राहकत्वात् । अविद्यानाशे सति तु प्रपञ्चशून्यताज्ञानं प्रमाणम् । तत्प्रामाण्यं प्रज्ञप्तिग्राह्यमिति । योगिभिः प्रत्यक्षीक्रियते—शून्यगतं प्रामाण्यं योगिधर्मसहकृतसामग्रीग्राह्यम् , अप्रामाण्यं तु निषेधधीविषयमिति तद् अयोगिज्ञानसामग्रीग्राह्यं वदन्ति ।

वेदान्तिनां निर्गुणवादिनां विज्ञानसामग्रीजन्यत्वविशिष्ट-तदतिरिक्तकरणाजन्यत्वं प्रमाणं स्वतस्त्वम्, प्रमात्वं गुणप्रयोज्यम्, अप्रमात्वं दोषप्रयोज्यम् । दोषस्त्वागन्तुकः । कारणानां निर्दोषत्वे ज्ञानस्य प्रामाण्यं स्वाभाविकम् । दोषाभावोऽत्र विरोध्यप्रामाण्य-प्रतिबन्धतया क्षीणसामर्थ्यो हि प्रतिबन्धकाऽभावविधयाऽन्यथासिद्धः । न गुणेन दोषाभावो न दोषाऽभावेन गुणो वाऽन्यथासिद्ध इति सर्वथा निविकल्पकस्य प्रामाण्यं सविकल्पकस्य त्वप्रामाण्यम् ।

पाशुपत-सिद्धान्त-लकुलीश-विशिष्ट-विशेष-नन्दिकेश-रसेश-प्रत्यभिज्ञान-कारुणिक-कापालिकादिशैवानां बोधस्वभावाया विद्यायाः प्रामाण्ये स्वाभिमतयोगसामर्थ्याश्लिष्ट-तारकादिज्ञप्तिसामग्रीजन्यहविष्यत्वं स्वतस्त्वम् । अबोधस्वभावायास्तस्यास्त्व-प्रामाण्यमपि तद्वदेव स्वतो ग्राह्यम् । नन्दिकेशानां त्वयं विशेषो यद् जगतो ज्ञप्तिमात्रत्वेन चित्फलायाः सदा सत्या एव ज्ञप्तिस्वरूपतया ब्रह्मान्वितया तथैव सर्व-प्रामाण्यं सर्वाऽप्रामाण्यं च विषयीक्रियत इति शिवाऽद्वयानां त्वयं विशेषः –शिवः प्रकाशरूपः स्वप्रकाशः स्वभिन्नप्रकाशाऽविषयः, विमर्शशक्त्या विमर्शविषयस्य शिवस्य स्वप्रकाशत्वम् । शिवस्यात्मस्वरूपस्य 'अहम्' इति स्फूर्तिविमर्शशक्तिस्तस्याः प्रामाण्यं स्वतो ग्राह्यम् । अप्रामाण्यं त्वावरणशक्तिपराभूतयावदज्ञानेष्विति तदप्यावरणशक्तिसहकृतसामग्रीग्राह्यम् अप्रामाण्यमपीति । वीरशैवानामपि–स्वतः प्रकाशस्वरूपं ब्रह्मैवेति तदात्मकज्ञप्तेः स्वतोग्राह्यत्वम् । प्रत्यभिज्ञानिनां तु सर्वं ज्ञानं क्षणिकं क्षणिकज्ञानप्रामाण्यं क्षणिकतर्काधीनम्, निश्चय-संशयाऽऽपाद्यापादक-भावसमूहात्मकं ज्ञानं तर्कात्मकं तत्प्रामाण्यं तर्काधीनम्, अप्रामाण्यमपि तर्काऽधीनम्, ज्ञानस्मृत्यपोहनशक्तिः शिवस्यैवेति सर्वस्य ज्ञानस्य प्रत्यभिज्ञानसंविदात्मकतया तदंशस्यापि तदभिन्नतया प्रत्यभिज्ञानप्रामाण्याऽप्रामाण्ये तर्कग्राह्ये । अथ क्रमवादिनामेतेषां सर्वस्य विकल्पात्मकत्वेन तद्गतम् अप्रामाण्यं विकल्पसामग्रीग्राह्यम् । अतः क्रमेण स्फुटस्फुटतरस्फुटतमादिसंविदामपि प्रामाण्यं स्वाश्रयग्रहजनकसामग्री-ग्राह्यम् । अत्र परासंविद्रूपायाः काल्या एव परमतत्त्वरूपत्वात् तदात्मकत्वात् सर्वस्य संविदामयतया ग्राह्यत्वात् तत्प्रामाण्यमपि स्वतो ग्राह्यम् । परेशस्य स्फुरणधारा पञ्चधा–व्योमेश्वरी, खेचरी, दिक्चरी, गोचरी, भूचरी चेति तच्छक्तीनां चिदानन्देच्छा-ज्ञान-क्रियात्मकत्वेन पञ्चविधता । काली स्वान्तर्वर्तिभावजातं बहिरा-भासयति । अवभासितभावजातं सत्, संविदपि सती, तत्प्रामाण्यमपि स्वतो ग्राह्यम्, दोषाभिभूतसंविदप्रामाण्यं दुष्टसंविद्ग्राह्यं स्वत इति । मीमांसकानां दोषाभावादेव मिथ्यात्वसंशयत्वविपर्ययत्वाद्यसत्त्वमेव । अतो ज्ञानसामग्रीमात्रजन्यत्वं ज्ञाने प्रमात्वम् । यदेव ज्ञानकारणम्, तदेव प्रमाकारणम्, तज्जन्यत्वमुत्पत्तौ प्रामाण्यमिति ।

●

## ॥ चतुर्थं परिशिष्टम् ॥

# ग्रन्थे विचारितानां पदवाक्यसूत्राणामनुक्रमणिका

# वर्णानुक्रमेण सहायकग्रन्थसूची

| क्रमसंख्या | ग्रन्थनामानि | ग्रन्थकारनामानि | प्रकाशनस्थानम् | समयः |
|---|---|---|---|---|
| | **दर्शनग्रन्थाः** | | | |
| १ | अद्वैतसिद्धिः (वे.) | श्रीमधुसूदनसरस्वती | बम्बई | १९१७ |
| २ | अष्टसाहस्री (जै.) | श्रीमदकलङ्काचार्यः | मिथिला-विद्यापीठ | सं.२०१६ |
| ३ | जैनदर्शनम् (ज.) (सर्वदर्शनसङ्ग्रहतम्) | श्रीमन्मध्वाचार्यः | बम्बई | सं.१९८२ |
| ४ | जैमिनिसूत्रम् (मी.) | श्रीजैमिनिमुनिः | पूना | सं.१९२९ |
| ५ | तत्त्वबिन्दुः (मी.) | श्रीवाचस्पतिमिश्रः | त्रिचिना-पल्ली | १९३६ |
| ६ | तन्त्रवार्त्तिकम् (मी.) | श्रीकुमारिलभट्टः | बनारस | १९०३ |
| ७ | तर्कभाषा (न्या.) | श्रीकेशवमिश्रः | पूना | १९२४ |
| ८ | तर्कसङ्ग्रहः (न्या.) | श्रीमदन्नम्भट्टः | बम्बई | १९३३ |
| ९ | दर्शनसर्वस्वम् (वे.) | श्रीशङ्करचैतन्यभारती | वाराणसी | १९४८ |
| १० | न्यायकुमुदचन्द्रः (जै.) | श्रीप्रभाचन्द्रः | बम्बई | सं.१९९५ |
| ११ | न्यायकुसुमाञ्जलिः (न्या.) | श्रीमदुदयनाचार्यः | काशी | सं.२०११ |
| १२ | न्यायदर्शनम् (न्या.) | महर्षिगौतमः | काशी | १९२५ |
| १३ | न्यायदीपिका (जै.) | श्रीधर्मभूषणयतिः | बम्बई | सन्१९२६ |
| १४ | न्यायबिन्दुः (बौ.) | श्रीधर्मकीर्तिः | बनारस | सन्१९५४ |
| १५ | न्यायभाष्यम् (न्या.) | महर्षिवात्स्यायनः | काशी | १९२५ |
| १६ | न्यायमञ्जरी (न्या.) | श्रीजयन्तभट्टः | बनारस | १९३४ |
| १७ | न्यायवार्त्तिकतात्पर्यटीका (न्या.) | श्रीवाचस्पतिमिश्रः | काशी | सं.१९५४ |
| १८ | न्यायसिद्धान्तमुक्तावली (किरणावली टीका) (न्या.) | श्रीविश्वनाथपञ्चाननः | बनारस | सन्१९६८ |
| १९ | न्यायसिद्धान्तमुक्तावली (दिनकरी रामरुद्रीटीका) (न्या.) | श्रीविश्वनाथपञ्चाननः | बम्बई | सन्१९६८ |

| | | | | |
|---|---|---|---|---|
| २० | न्यायावतारः (जै.) | श्रीसिद्धसेनदिवाकरः | बम्बई | १९२८ |
| २१ | प्रकरणपञ्जिका (मी.) | श्रीप्रभाकरभट्टः | वाराणसी | १९०४ |
| २२ | प्रमाणमीमांसा (जै.) | श्रीहेमचन्द्राचार्यः | बनारस | सं. १९९५ |
| २३ | प्रमाणवार्त्तिकम् (बौ.) | श्रीधर्मकीर्तिः | पटना | १९५३ |
| २४ | प्रमाणसमुच्चयः (बौ.) | आचार्यदिङ्नागः | मैसूर | १९३० |
| २५ | प्रमेयकमलमार्त्तण्डः (जै.) | श्रीप्रभाचन्द्राचार्यः | बम्बई | १९१२ |
| २६ | प्रशस्तपादभाष्यम् (न्या.) | श्रीप्रशस्तपादाचार्यः | काशी | सं. १९९१ |
| २७ | प्रस्थानरत्नाकरः (वे.) | गोस्वामी श्रीपुरुषोत्तमः | बनारस | १९०९ |
| २८ | ब्रह्मसूत्रम् (वे.) | श्रीवेदव्यासः | बनारस | सं.२००९ |
| २९ | भामती (वे.) | श्रीवाचस्पतिमिश्रः | बम्बई | सन् १९०४ |
| ३० | मानमेयोदयः (मी.) | श्रीनारायणभट्टो नारायणपण्डितश्च | त्रिवेन्द्रम् | १९१२ |
| ३१ | मीमांसादर्शनम् (मी.) | श्रीजैमिनिमुनिः | पूना | सन् १९२९ |
| ३२ | योगदर्शनम् (यो.) | महर्षिपतञ्जलिः | वाराणसी | सन् १९३८ |
| ३३ | योगवासिष्ठः (यो.) | महर्षिवाल्मीकिः | बम्बई | सं. १९९१ |
| ३४ | विशुद्धिमग्गो (बौ.) | श्रीबुद्धघोषः | (पालीटेक्स काशी) बम्बई | सन् १९४० |
| ३५(क) | वेदान्तपरिभाषा (वे.) | श्रीधर्मराजाध्वरीन्द्रः | वाराणसी | सन् १९६७ |
| (ख) | वेदान्तपरिभाषा (वे.) | (मणिप्रभाशिखा-मणियुता) | बम्बई | सं. १९८५ |
| ३६ | वैशेषिकसूत्रम् (न्या.) | महर्षिकणादः | काशी | सं. १९५१ |
| ३७ | व्याप्तिपञ्चकम् (न्या.) | श्रीगङ्गेशोपाध्यायः | बनारस | १९३५ |
| ३८ | व्याप्तिवादः (न्या.) | श्रीगङ्गेशोपाध्यायः | कलकत्ता | शकः १८१४ |
| ३९ | व्युत्पत्तिवादः (न्या.) | श्रीगदाधरभट्टाचार्यः | बम्बई | सं. १९६८ |
| ४० | शक्तिवादः (न्या.) | श्रीगदाधरभट्टाचार्यः | काशी | सं. १९८६ |
| ४१ | शब्दशक्तिप्रकाशिका (न्या.) | श्रीजगदीशतर्कालङ्कारः | बनारस | १८६७ |
| ४२ | शाङ्करभाष्यम् (वे.) | श्रीशङ्कराचार्यपादः | बम्बई | सन् १९०४ |
| ४३ | शाबरभाष्यम् (मी.) | श्रीशबरस्वामी | पूना | सन् १९२९ |
| ४४ | शास्त्रदीपिका (मी.) | श्रीपार्थसारथिमिश्रः | काशी | सं. १९६४ |
| ४५ | श्लोकवार्त्तिकम् (मी.) | श्रीमत्कुमारिलभट्टः | मद्रास | १९४० |
| ४६ | सर्वदर्शनसंग्रहः (द.) | श्रीमन्मध्वाचार्यः | बम्बई | सं. १९८२ |
| ४७ | सर्वार्थसिद्धिः (द.) | पूज्यपादस्वामी | कोल्हापुर | शकः १८२५ |

| | | | | |
|---|---|---|---|---|
| ४८ | सत्प्रतिपक्षगादाधरी (न्या.) | श्रीगदाधरभट्टाचार्यः | वाराणसी | सं. २०१९ |
| ४९ | साङ्ख्यतत्त्वकौमुदी (सां.) | श्रीवाचस्पतिमिश्रः | बम्बई | स. १९८७ |
| ५० | साङ्ख्यप्रवचनभाष्यम् (सां.) | श्रीविज्ञानभिक्षुः | वाराणसी | सं. २०२२ |
| ५१ | सामान्यनिरुक्तिप्रकरणम् (न्या.) | श्रीगदाधरभट्टाचार्यः | वाराणसी | सं. १९९५ |
| ५२ | सामान्यलक्षणाप्रकरणम् (न्या.) | श्रीगङ्गेशोपाध्यायः | काशी | सं.२००९ |
| ५३ | स्याद्वादरत्नाकरः (जै.) | श्रीवादिदेवसूरिः, | पूना | सं. २४५३ |
| ५४ | हेतुबिन्दुः (बौ. हस्तलेखः) (मी.) | एम. ए. | गुजरात | सन् १९४९ |

**व्याकरणग्रन्थाः**

| | | | | |
|---|---|---|---|---|
| १ | काशिकावृत्तिः | वामनजयादित्यौ | बनारस | १८९० |
| २ | ज्ञापकसमुच्चयः | श्रीपुरुषोत्तमदेवः | बंगाल | १९४६ |
| ३ | परिभाषेन्दुशेखरः | श्रीनागेशभट्टः | काशी | सं.२००१ |
| ४ | पाणिनीयसूत्रम् | महर्षिपाणिनिः | बम्बई | सं. २०१५ |
| ५ | प्रौढमनोरमा | श्रीभट्टोजिदीक्षितः | काशी | सन् १९४० |
| ६ | भूतिः (टीका-परिभाषेन्दुशे.) | म. म. कै. तात्याशास्त्री | काशी | सं.२००१ |
| ७ | भैरवी (टीका–परिभाषेन्दुशे.) | श्रीभैरवमिश्रः | बनारस | सन् १९३१ |
| ८ | महाभाष्यम् | महर्षिपतञ्जलिः | काशी | सं. १९९५ |
| ९ | महाभाष्यप्रदीपः | श्रीकैयटः | काशी | सं. १९९५ |
| १० | महाभाष्यप्रदीपोद्द्योतः | श्रीनागेशभट्टः | काशी | सं. १९९५ |
| ११ (क) | लघुमञ्जूषा | श्रीनागेशभट्टः | बम्बई | १९२५ |
| (ख) | लघुमञ्जूषा (कला-कुञ्जिकाटीका) | श्रीनागेशभट्टः | बनारस | सन् १९१६ |
| (ग) | लघुमञ्जूषा (कलाटीका) | श्रीनागेशभट्टः | बनारस | सन् १९२५ |
| १२ | लघुशब्देन्दुशेखरः | श्रीनागेशभट्टः | काशी | १९३६ |
| १३ | वाक्यपदीयम् | श्रीभर्तृहरिः | काशी | १९२८ |

| | | | | |
|---|---|---|---|---|
| १४ | वैयाकरणभूषणसारः | श्रीकौण्डभट्टः | बनारस | १९४७ |
| १५ | शब्दकौस्तुभः | श्रीभट्टोजिदीक्षितः | काशी | सं. १९९५ |
| १६ | शुक्लयजुःप्रातिशाख्यम् | महर्षिकात्यायनः | मद्रास | सन्१९३४ |
| १७ | सिद्धान्तकौमुदी | श्रीभट्टोजिदीक्षितः | बम्बई | सं. २०१५ |
| | **शिक्षाग्रन्थः** | | | |
| १ | पाणिनीयशिक्षा | कश्चिन्महर्षिपाणिनिशिष्यः | काशी | सं. १९९० |
| | **धर्मशास्त्रग्रन्थः** | | | |
| १ | मनुस्मृतिः | महर्षिभृगुः | बनारस | १९३५ |
| | **इतिहासग्रन्थौ** | | | |
| १ | महाभारतम | श्रीवेदव्यासः | गोरखपुर | २०२० |
| २ | बाल्मीकिरामायणम् | महर्षिवाल्मीकिः | गोरखपुर | सं. २०१७ |
| | **पुराणग्रन्थौ** | | | |
| १ | अग्निपुराणम् | महर्षिवेदव्यासः | कलकत्ता | सं. २०१४ |
| २ | श्रीमद्भागवतम् | महर्षिवेदव्यासः | गोरखपुर | सं. २०१८ |
| | **साहित्यग्रन्थाः** | | | |
| १ | काव्यप्रकाश | श्रीमम्मटभट्टः | पुण्यपतनम् | सन्१९११ |
| २ | रसगङ्गाधरः | पण्डितराजजगन्नाथः | वाराणसी | सन् १९५७ |
| ३ | साहित्यदर्पणः | श्रीविश्वनाथः | कलकत्ता | शकः१८६७ |
| | **कोशग्रन्थौ** | | | |
| १ | अभिधर्मकोशः | आचार्य वसुबन्धुः | बनारस | १९८८ |
| २ | अमरकोशः | श्रीमदमरसिंहः | बम्बई | सं.१९६१ |
| | **आयुर्वेदग्रन्थः** | | | |
| १ | चरकसंहिता | महर्षिपतञ्जलिः | वाराणसी | सन्१९६९ |

# परिशिष्टग्रन्थाः

| क्रमसंख्या | ग्रन्थनामानि | ग्रन्थकारनामानि | प्रकाशनस्थानम् | समयः |
|---|---|---|---|---|
| १ | इष्टसिद्धिः | श्रीविमुक्तात्मा | बड़ौदा | १९३३ |
| २ | तत्त्वसंग्रहः | शान्तरक्षितः | वाराणसी | १९६८ |
| ३ | तत्त्वार्थसूत्रम् | आचार्यगृद्धपिच्छः | काशी | संवत् २०१२ |
| ४ | परीक्षामुखसूत्रम् | माणिक्यनन्दी | कलकत्ता | सन् १९०९ |
| ५ | मृगेन्द्रतन्त्रम् | श्रीनारायणकण्ठभट्टः | बम्बई | १९३० |
| ६ | वज्रसूचिकोपनिषद् (सामान्यवेदान्तान्तर्गता) | अ. महादेवशास्त्री | मद्रास | १९२१ । |
| ७ | शिवदृष्टिः | श्रीसोमानन्दनाथः | काश्मीर | १९३४ |
| ८ | ज्ञापकसमुच्चयः | म.म. श्रीपुरुषोत्तमदेवः | बंगाल | १९४६ |

●

